परम श्रद्धेय आचार्य प्रवर श्री नानेश के पच्चीसवें
आचार्यपद के उपलक्ष्य में

# श्रीमज्जवाहर यशोविजयम्

## ( महाकाव्यम् )



परिष्कर्त्ता सत्सन्निधिः

आचार्यः श्रीनानेशः

# श्रीमज्जवाहर यशोविजय

( महाकाव्य )

परिष्कर्ता सत्सन्निधि

आचार्य श्रीनानेश

# श्रीमज्जवाहर यशोविजयम्

## ( महाकाव्यम् )

□

**परिष्कर्त्ता, सत्सन्निधिश्च**

आचार्यः श्रीनानेशः

□

**काव्यकारः—**

श्री काशीनाथपाण्डेयः "चन्द्रमौलिः"

□

**सम्पादकोऽनुदकश्च:—**

श्री शान्तिमुनिः

□

**प्रकाशकः—**

अ. भा. साधुमार्गी जैन-संघः समताभवनम्, रामपुरियामार्गः

बीकानेरम् (राजस्थानम्)

# श्री मज्जवाहर यशोविजय

## ( महाकाव्य )

परिष्कर्त्ता सत्सन्निधि

आचार्य श्री नानेश

काव्यकार:–

श्री काशीनाथ पाण्डेय "चन्द्रमौलि"

सम्पादक–अनुवादक

श्री शांति मुनि

प्रकाशक:–

अ. भा. साधुमार्गी जैन संघ समता भवन रामपुरिया मार्ग

बीकानेर (राजस्थान)

# श्रीमज्जवाहरयशोविजयम्

## ( महाकाव्यम् )

—※—

परिष्कर्त्ता, सत्सन्निधिश्च

**आचार्यः श्रीनानेशः**


※ काव्यकारः

श्री काशीनाथ पाण्डेयः "चन्द्रमौलिः"

※ सम्पादकोऽनुवादकश्चः

श्री शान्तिमुनिः



※ प्रकाशकः

श्री अखिलभारतवर्षीय साधुमार्गि जैनसंघः
समताभवनम् रामपुरिया मार्गः
विक्रमनगरम् (राजस्थानम्)

※ प्रकाशनवर्षः

१५–१०–८५–१९८५
सम्वत् २०४२ आश्विन शुक्ला द्वितीया
युवाचार्यपददिवसः

※ संस्करणम्

प्रथमम्

※ मूल्यम्

५० रूप्यकाणि

※ मुद्रकः

जैन आर्ट मुद्रणालयः
बीकानेर (राजस्थानम्)

# श्रीमज्जवाहर यशोविजय महाकाव्य

● परिष्कर्त्ता सत्सन्निधि

आचार्य श्री नानेश

● काव्यकार

काशीनाथ पाण्डेय "चन्द्रमौलि"

● सम्पादक अनुवादक

श्री शांति मुनि

● प्रकाशक

अखिल भारतवर्षीय साधुमार्गी जैन संघ
समता भवन रामपुरिया मार्ग
बीकानेर (राज.)

● प्रकाशन वर्ष

१५-१०-८५—१९८५
संवत् २०४२ आश्विन शुक्ला द्वितीया
"युवाचार्य पद दिवस"

● संस्करण

प्रथम

● मूल्य

पचास रु.

● मुद्रक

जैन आर्ट प्रेस, बीकानेर।

# ॥ हृदयोद्गारः ॥

प्रातःस्मरणीयपूज्यप्रवरश्रीमज्जवाहराचार्यमहाभागानां जीवनं निखिल-मानवानां कृते सर्वथानुकरणीयमास्ते । आगमशास्त्राणां ते पारगता मनीषिण आसन् । ज्ञानस्य सर्वोत्कृष्टाराधनया साकं ते धर्मक्रियापरिपालनेऽपि महान्तो दृढव्रता इति स्वर्णे सुगन्धिरिवतज्जीवनस्य महती विशेषतासीत् । अनेकान्त-वादिदृष्टिकोणेन तेषा सदाचरणेषु सुकुमारता, कोमलता, सहजता निरन्तरप्रवृत्ति-श्चाभवत् । ते जन्मजातव्याख्यातारः, शास्त्रप्रणेतारः प्रतिवादिनिषेद्धारः, महा-कवयो, दिव्यप्रतिभालकृताःयुगप्रवर्तकाः, युगद्रष्टारो, महात्मानश्चासन् । तेषां महिमा यावच्चन्द्रदिवाकरं स्थास्यतीति दूरदर्शिविद्वज्जनाना वेविद्यते मान्यता ।

प्रस्तुतमहाकाव्ये कोमलकान्तपदावलिमाध्यमेन वैदर्भीरीत्या आचार्य-वर्यस्यधर्मोद्योतकशान्तिनिर्वेदवैराग्योत्प्रेरकजीवनेन सहापेक्षितदार्शनिकविषया अपि यथास्थान सन्निविष्टाः विराजन्ते । यत्र कविना प्रशंसनीया सफलतासादि तास्ति ।

अतलस्पर्शिज्ञाननिष्ठाचार्यप्रवरस्य जीवनदर्शनं कृतित्वं च यत् प्राञ्जल-शैल्या कविः महाकाव्यविषयतामुपनीतवान् तन्नियत स्तुत्यर्हमास्ते । संस्कृतमह-नीयग्रन्थेषु नव्य भव्यमिदं महाकाव्यम् । विविधविषयैः सज्जा सम्पादितात्रेति सन्तोषास्पदम् । इयमाशा विधीयते यत् येनोद्देश्येनास्य नूतनमौलिकमहाकाव्यस्य प्रणयनं जातम्, तदनुसार प्रतिजनं प्रसरेदिदम् । अपरिमिताः पाठकाः आचार्यवर्यस्य जीवनपरिचित्या साकमेव स्वकीयसंस्कृतबोधस्य श्रीवृद्धिमपि विधास्यन्ति समभ्य-सेनास्य । ग्रन्थकारस्य कवेः दयापालनशुभाशंसां कामयमान आशासे भारतसुर-भारत्याः सेवापि सदाशयैः साधु सम्पद्येत । किमधिकं विज्ञेषु ।

श्रीनानेशाचार्यवर्याणाम्
चरणानुगः
इन्द्रो मुनिः

---

(१) धान्तृमान्तृपदविभूषितशासनप्रभावककर्मठसेवाभावी १००७ श्री इन्द्रचन्द जी म. सा. द्वारा ममाग्रहे प्रकटितहृदयोद्गारसंकलनम् ।

"चन्द्रमौलि।"

# सम्पादकीयम्

प्रस्तुतमहाकाव्ये तत्रभवतां भवतां, युगीनचेतनासंवाहकानाँ धर्मधुरा-धौरेयाणां, वादिमानविमर्दकानां, लौकोत्तरमहिमशालिनां श्री मज्जवाहराचार्याणां जीवनदर्शनविषये व्यक्तित्वकर्तृत्वविषये च या विवेचनोट्टंकिता कविना सा प्रसादयत्यैव मानसमिति निश्चप्रचम् ।

आचार्यवर्याणाँ जीवनमतीववैशिष्ट्यपूर्णमासीत् । युगपुरुषाणामाधीयमानाः सर्वे गुणाः तेषां विराजन्तेस्म । तेषां महापुरुषाणांसर्वथोद्दामोन्नतव्यक्तित्वधारिणां महत्त्वमल्पीयसा सम्पादकीयनिवेदनेन वर्णयितुन्नो पार्यते । अयं प्रयासः इमाँसूक्तिमेवानुसरति । "यत् कञ्चित्महोदधिं लघुकुम्भे भर्त्तुं प्रयत्नः कृतः।" तथाप्ययंप्रयासः एतदर्थं सफलतामञ्चति यदस्मिन्ग्रन्थे युगपुरुषाणां व्यक्तित्वं यत्किञ्चिद्रूपेणावतारयितुं सफलोजातः कविः ।

विशालकायस्यास्यग्रन्थस्य रचना समतादर्शनप्रणेतॄणां जिनशासनप्रद्योतकानां, धर्मपालप्रबोधकानां नव्यमव्यसमीक्षणध्यानस्यानुसन्धायकानां मम जीवनस्य विधातॄणां महामहोपकारिणाम् श्रीमज्जैनाचार्याणाम् श्रीनानेशाभिधानां सत्सन्निधौ परिष्कारदिशानिर्देशेन च विहिता कविकुलकिरीटेनाचार्यचन्द्रमौलिना ।

आचार्यवर्यस्य यः सन्निधिरुपलब्धोऽस्मिन्ग्रन्थे सोऽवर्णनीय एवास्ते । यद्यप्याचार्यवर्यमहाप्रभोः सविधे आध्यात्मिकमार्गे समाजोन्नयनकारकाः विविधाः कार्यक्रमाः विद्यन्ते । विशिष्टञ्चोत्तरदायित्व वरीवर्ति तेषामुपरि समाजसंघ-कल्याणस्य। तथापि स्वकीयानां गुरुपितामहानां कृते याश्रद्धास्ति महनीयमानसे तस्या एवेयं फलश्रुतिर्गन्थरूपेणाविभूता चकास्तिस्म । यो हिबहुमूल्यकालो ग्रन्थावलोकननिर्देशयोराचार्यप्रभुणार्पितस्तत्तेषां महत्त्वमेव व्यनक्ति । अनेन करुणालवेन विदुषो जनसामान्यान् च प्रति श्रीमताचार्यमहाप्रभुणा महोपकार एवकृतो विभाति । आचार्यदेवस्यस्मिन्ग्रन्थे विलग्नस्य सम्यक्श्रमस्य व्यावर्णनेऽसमर्थैव मदीया लेखनी ।

ऐदयुगीने समये संस्कृतभाषायाः या दुःस्थितिरवलोक्यते सा निश्चितरूपेण सहृदयानां विदुषां चेतांसिदूनयत्येव । वर्तमानानेहसि पदे-पदे संस्कृतभाषायाः अपमानमवतरति दृष्टिपथे । या भाषास्ति संस्कृतेः महोपकारिणी । यत्र चावतरति भारतीयतायाः गौरवम् । यत्कारणादेव भारतीयानां गौरवंवरीवर्ति वि स्मिन् विश्वमानसे । या चैतिहासिकप्रागैतिहासिक वस्तुस्थितिं प्रकटयति

वर्षस्य । तस्याः अवनति दर्शं–दर्शं कोहि सचेता ना नो क्लेशमाप्नुयात् । एत-त्परिस्थितौ वातावरणे चाभिनवसंस्कृतमहाकाव्यस्य प्रणयनं प्रीणयत्येव विप-श्चितां चेतांसि ।

ममोपरि प्रदत्तश्च भार आचार्यमहाप्रभुणाऽस्यग्रन्थस्य भाषाभाष्यानुवाद-करणार्थम् । कविना च सूचितोऽहमस्य ग्रन्थस्य सम्पादनाय । यद्यपि मदीयोऽय प्रथमायास आस्ते । कस्यापि संस्कृतग्रन्थस्य सम्पादनानुवादकर्मणि । तथाप्या-चार्यमहाप्रभुकृपाकटाक्षेण प्रभावितोऽहं यत् किंचित्कार्यनिर्वाहको जातस्तत्तस्यैव प्रसादप्रभावमनुभवामि, मदीयः कर्तृत्वभावस्त्वस्मिन् कोपि नास्त्येव ।

आशासेऽनेन महाकाव्यग्रन्थेन संस्कृतभाषाध्येतारो लाभान्विता भवेयुः । तेषां भाषासमृद्ध्या सहाध्यात्मरसस्याप्यनुभवः प्रवर्द्धेत । आत्मोन्नतिविधायके पथि च ते प्रभवेयुरिति शम् ।

श्रीनानेशचरणचञ्चरीकः
शान्तिः मुनिः

## ॥ समर्पणम् ॥

समतादर्शनप्रवर्तकानां, चारित्रचूडामणीनां, बालब्रह्मचारिणाम्, अध्यात्मसाधन-सुधासिन्धूनां, धर्मपालप्रतिबोधकानां, जिनशासनप्रद्योतकानां समीक्षणध्याना-वस्थितानां प्रथितयशसां, प्रातःस्मरणीयानां परमश्रद्धास्पदानांश्रीमज्जैना-चार्याणां १००८ श्री नानालालजी गुरुवर्याणां पावनपादपद्मेषु वन्दन प्रणतिपुरस्सरं 'श्रीमज्जवाहरयशोविजयं महाकाव्यं" सनुति सभक्तिसविनयं समर्पयति गुणगणसौरभचटुला चंचरीकः आचार्यश्चन्द्रमौलिः काव्यकारः ।

## ॥ समर्पणम् ॥

—०— —०— —०—

श्री स्थानकवासिसमयसौरभसमन्वितसरसिजविकासकानां, द्रवितदयार्द्रद्रुतसान्द्रसुधाशीकराणां, तपःपरिपूतसमर्चितचरितानां, स्वपरकल्याणबद्धपरिकराणामध्यात्मविपिनविहरणशीलकेशरिकल्पानां,सत्साम्प्रदायसत्प्रवृत्तिपरायणानां,साप्ताचार्याणां, पादपद्मेषु सार्मपितमिदम् ।

संयम देदीप्यमानज्योतिष्काणां,विशिष्टक्रियोद्धारकाणा,दीर्घतरतपस्विनां, श्रीहुक्मीचन्दजी महाराजानां, शिवपथानुयायिनाँ प्रकाण्डविद्वत्तल्लजानां श्रीशिवलालजीवगुरुवर्याणाँ, विरक्तादर्शानां, पावनचरितानामाचार्यवर्याणामुदयसागरजी महाभागाना, महाक्रियावतां सशक्तसंयमपरिपालकानां, भव्यजनमानससमर्चितानाँ, चतुर्दिग्दिगन्त प्रसृतयशस्कानां, श्रीचौथमलजीविश्वविश्रुतानां सुरासुरेन्द्रदुर्जयकामविजयिना, श्रुतश्रीसमाजितानां, भव्यभावसंभूषितानां, श्रीश्रीलालजी महोदयानां, विशिष्टकान्तक्रान्तिकारिणाँ विविधवादिमानसम्मर्दकानां, युगप्रवर्तकानां, ज्योतिर्धराणां, श्रीमज्जवाहराचार्यवर्याणा, शान्तक्रान्तिजन्मदायकानां, सुललितभाषाभाषकाणा, श्रमणसंघोपाचार्याणां, आचार्यश्रीगणेशिलालगणाधिपानां, मत्पूर्वजानांप्रशस्तपरिपूतानासप्ताचार्यवर्याणा, कलितकमनीयवन्दनीयाभिनन्दनीयपादपद्मेषु, सर्वजनहिताय सर्वजनसुखाय, सविनयं समर्पितमिदम् 'श्रीमज्जवाहरयशोविजयं महाकाव्यम्' भावत्केनैव नानेशेनेति ।

---

(१) समताविभूतिआचार्यश्रीनानेशद्वारा पूर्वाचार्यान् प्रति कृतं संकलितं मसर्पणम् ।

## ॥ प्रकाशकीयम् ॥

विश्वस्य समस्तसंस्कृतिषु भारतीयसंस्कृतिसभ्यतयोर्महत्त्वपूर्णमनुपम-मञ्चस्थानमास्ते । तत्र निर्ग्रन्थश्रमणसंस्कृतौ किमपि कथनन्नावशिष्यते ? सा सर्वोच्चस्थाने परिगणिता जायते तदा काप्यतिशयोक्तिर्नो भवितुमर्हति । अस्यां वीतरागचतुर्विंशतितीर्थंकराणांवाचामेव सर्वोत्कृष्टं महत्त्वं परिदीयते ।

निर्ग्रन्थश्रमणसंस्कृतिसाधका भौतिकताया अपसृत्य त्यागवैराग्य महासागरेऽवगाहन्ते । फलस्वरूपे जीवनस्य सत्यगाम्भीर्ययोरवतीर्य स्वपरहित-साधनापथ प्रकाशयन्ते । ते स्वकीयजीवन विशुद्धं विधातुं पञ्चमहाव्रतानि सम्यगनुपालयन्ति । तदेव च स्वपरमकर्त्तव्यमवबुध्यन्ते । ते स्वाध्यायध्यान चिन्तनमननैरात्मकल्याणैः सहैव मुमुक्षभव्यात्मकल्याणार्थमुपदेशस्य पावनधारा-मपि प्रवाहयन्ते । यामात्मसात्कृत्यानेकभव्यात्मनां संबोधस्य प्राप्तिर्जायते । तथा तेऽपि स्वजीवनं विशुद्धिपथेऽग्रेसर विदधति ।

निर्ग्रन्थसाधकपरम्परायां जाज्वल्यमाननक्षत्रस्य स्वनामधन्यस्य महतः क्रियोद्धारकस्य विशिष्टतपस्विनः स्वः आचार्यस्य श्री हुक्मीचन्द्रजी महाराजस्य जीवनमेक प्रखरतमप्रकाशपुञ्जमिवासीत । योहि स्वकीयात्मानमेव नो प्रकाशतेस्म, प्रत्युत योऽपि तस्य सान्निध्यमागतस्सोपि सर्वथालोकितोऽभवत् । आचार्यदेवः संयमितजीवनस्य श्रमणसंस्कृतेश्चमहान् समर्थकोऽस्तिस्म । यदा स शिथिलाचार-स्य विपरीतमशब्दयत । स्वसिद्धान्तेऽग्रेपदाधान विहितवान् तदा तात्कालिक-साधकाः भवन्तं धर्मपथात् विचालयितुमचेष्टन्त । किन्तु भवान् सुमेरुरिवाचलो-ऽतिष्ठत् । स्वजीवन एव च निर्ग्रन्थपरम्परायाः भव्यतमस्वरूपं साक्षात्कृतवान् । तस्यामेव भव्यतमनिर्ग्रन्थश्रमणपरम्पराया युगद्रष्टुः युगस्रष्टुः महतो ज्योतिर्धर-स्याचार्य श्रीजवाहरलालजीमहाराजस्य वर्चस्व सादर स्वीकृतमासीत्, अस्ति, भविष्यति च ।

तस्य व्यक्तित्वकर्तृत्वकृतित्वैश्च सामान्य—व्यक्तेरारभ्य प्रबुद्धसाधक-पर्यन्तम्, ग्रामात्प्रभृतिसम्पूर्णराष्ट्रं यावत् प्रभावः कोऽप्याश्चर्यजनकोनासीत् । यतस्तस्यवाचि महदोजः सदाचरण आसीत्तिग्मतेजश्च । प्रत्येकक्रियाकलापे मैत्री-भावस्य सन्देश आसीत् । स चिरादागतकतिपयबद्धमूलभ्रान्तधारणानां स विधाय जनमानसेभ्योऽभिनवसम्यक्दिशावबोधं प्रादात् । स केवलं वि प्रस्तुतिकरणमेव नाजानात् प्रत्युत जीवनधरातले विकीर्णमपि ज

"यथाकथनन्तथाचरणम्' तस्याचरणस्य प्रमुखाधार आसीत् । आचारविचार-सम्यक्दृष्टिकोणं स स्वप्रवचनै. जनसमक्षं प्रास्तौत् । योऽद्य मन्दमति-प्रखर-मतीनां मानवाना कृते प्रकाशस्तम्भायते । आचार्यदेवस्य प्रवचनसाहित्यं मौलिक-मनुभूतिगम्यञ्चास्ति । यस्यसमताऽन्यत्रदुर्लभास्ते । विविधविषयेषु प्रभावात्मक-सरलसरसगम्भीरविवेचनम् "जवाहरकिरणावलिषु" प्रभूतभागेषु प्रकाशितं विभाति । यत्सर्वजनकल्याणसाधने सहायकं सिद्धमजायत ।

एतादृशस्य युगद्रष्टुर्महापुरुषस्य जीवनं विविधरूपेषु व्याख्यातुमेकंविशिष्टं कार्यमास्ते । राष्ट्रभाषायामाचार्यदेवस्य जीवनवृत्तं पूर्वमेव प्रकाशितं जातम् । किन्तु संस्कृतभाषायान्तत्प्रकाशमानेतुं सम्प्रतीदंमहत्तमश्रेष्ठतमकार्यं सम्पादितंभवदस्ति ।

यद्यपि वर्तमानयुगे संस्कृतमहाकाव्यानां महद्दुष्करं कार्यं प्रतीयते । तथाप्यत्यन्तप्रमोदस्य विषयोऽस्ति । यज्ज्योतिर्धराचार्यदेवस्य पट्टधरः शान्त-क्रान्तिजन्मदातोद्भटविद्वान् सरलसौम्यनिर्मलव्यक्तित्वस्यधनी स्व. श्रीगणेशिलाल-जीमहाराजः स्वकीयमानापमान सम्मानपदप्रतिष्ठासर्वस्वत्यागंविधाय श्रमणसंस्कृतेः सुरक्षायाः महत्कार्यं चकार । यस्य सुफलंवयमद्य सर्वत्र पश्यामः ।

तस्यैव योग्यतमसुशिष्यस्य, समताविभूतेः, विद्वत्शिरोमणेः जिन-शासनप्रद्योतकस्य धर्मपालप्रतिबोधकस्याचार्यनानालालजीमहाराजस्य सत्-सान्निध्ये स्वर्गीयाचार्यदेवस्य जीवनवृत्तस्यालेखनं जातमास्ते समताविभूतिराचार्य-प्रवरो महाकाव्यस्य सर्वांगीणतायां स्वकीयममूल्यमहनीययोगमदात् । यं कथमपि विस्मृतं कर्त्तुं नो पार्यते । भवतः प्रतिभैवेदं काव्यं सज्जीकृत्य संस्कृत्य परिष्कृत्य च संस्कृतसाहित्यश्रियोऽभिवृद्धि चक्रे । आचार्यदेवस्यसान्निध्ये तन्निर्देशेऽस्य-महाकाव्यस्य प्रणेता काव्यकारोऽस्ति—विद्वद्वरेण्योराजस्थानशासनपुरष्कृतः स्वर्णपदकप्राप्तो नव्यव्याकरणाचार्यः (वाराणसी) सरदारशहरचातुर्मास्यप्रसंगे आचार्यवर श्रीनानालालजी महाराजात् समकितधारो, पाण्डेयोपाह्वः पं. श्रीमान् काशीनाथ जी शास्त्री 'चन्द्रमौलिः" ।

पण्डितमहोदयोविगतानेकवर्षेभ्यः संघस्य मुमुक्षुविरागिभ्रातृभगिनीनां श्रमणश्रमणीनाञ्चाध्यापने मनोयोगपूर्वकं सततं व्यापृतोऽस्ति । तत्रभवान् आचार्य-देवस्य भावस्य, संशोधनस्य, परिवर्धनस्य, परिष्करणस्य च यथावत्प्रणयन कृत्वा महाकाव्यस्यमाकारं संघटितवान् । तदर्थं संघः आचार्यभगवतोऽनन्तोपकृति तथा पण्डितप्रवरस्याश्रान्तपरिश्रमं प्रति अतिशयित ऋणी तथा आभारोचास्ते ।

यद्यपि महाकाव्यस्यानेकाः विशेषताः सन्ति यासामनुभवमध्येतारः करिष्यन्त्येव । तथापि संक्षेपतोवक्तुं शक्यते । अस्य महाकाव्यस्य प्रथमे सर्गे तीर्थंकराणांस्तुतिः विस्तृतमङ्गलात्मिका निर्मिता चकास्ति । षष्ठ पट्टधरस्य जीवनं-महाकाव्ये रूपायितं विहितमास्ते । अत्रैकविंशतिः सर्गाः सन्ति । प्रत्येकसर्गस्य कथानकं भिन्नं भिन्नं चास्ते । शान्तरसप्रधानमहाकाव्येऽन्यरसानामपि समावेशोऽस्ति सहैव धर्मदर्शनयोः पुट दत्त्वैतदुपयोगिनिर्मितं जातमास्ते । प्रसगतोऽनेकोपयोगिविषयाणामपि महत्त्वपूर्णः सन्निवेशोऽस्ति । प्रायः पद्यस्य माध्यमेनैकत्र पाठकानां धर्मदर्शनसुरुचिपूण परिचयः प्राप्तुं शक्यते । प्रारम्भे चरितनायकस्य संस्कृते संक्षिप्तजीवनी सन्निविष्टा वर्तते । या संस्कृतपाठकानाँ कृते सग्रहणीया भविष्यति । मूलमहाकाव्यस्य संस्कृते सत्वात् तत्सुगमसम्यगर्थबोधाय संस्कृते तदन्वयस्यापि प्रयोगो विहितोऽस्ति । येन समीहितलाभस्यैव सम्भावना वेविद्यते-तमाम् ।

काव्यकारप्रस्तुतसंक्षिप्तप्रस्तावनया प्राचीनसंस्कृत प्राकृतमहाकाव्यविषयेऽपेक्षितं ज्ञानं सुलभं भवितुमर्हति ।

अस्य विशालकायस्यहृदयग्राहिणोग्रन्थस्य पाठककरेषु सम्प्रेषणीयतायां सत्प्रकाशने च श्रीमज्जवाहराचार्यस्यानन्यभक्तस्य जवाहरस्मृतिसाहित्यनिधि संस्थापकस्यमद्रास वास्तव्यस्य श्री जुगराज जी धोका महोदयस्य श्रेष्ठिवर्यस्य महान् सहयोगः प्राप्तोऽस्ति । उल्लेखनीयमस्ति यत् श्री जुगराज जी धोका स्व. श्रीजवाहराचार्यस्य तेजोमयजीवनस्यप्रत्यक्षद्रष्टा वर्तते । जवाहरसाहित्यस्य व्यापकप्रचारप्रसारयोरदम्याकाक्षोत्प्रेरितो धर्मनिष्ठः संघनिष्ठः श्री धोका महोदयः सत्संकल्पपूर्वकं श्री जवाहराचार्यप्रकाशननिधेः स्थापनांकृतवानस्ति । अनेन निधिना जवाहरसाहित्यस्य पच लघुपुस्तिकाः क्रमशः श्रीजवाहराचार्यजीवनव्यक्तित्वम्, शिक्षासमाजराष्ट्रधर्मसूक्तिशीर्षकेण प्रकाशिताः जाताः सन्ति । अनेनैवनिधिना श्रीमज्जवाहरस्य जीवनचरितस्य पुनर्मुद्रणमपि कृतं विभाति । तेनानुकम्पाविचारोपिप्रकाशितोविद्यते ।

श्री धोकाद्वारा स्थापितेनानेन श्रीमज्जवाहरयशोविजयमहाकाव्यस्य-प्रकाशनेन अपारहर्षस्योद्रेको जायते । अस्य सहयोगस्य कृते वयं श्रेष्ठिवर श्री जुगराज धोका महोदयं तथा तत्तरुणतनूजं श्री [illegible] धोका महोदयं [illegible] हृदयेनाभारं मन्यामहे ।

प्रस्तुतमहाकाव्यस्य [illegible]

एम. ए. बी. एड. पी. एच. डी., प्रो. श्री डूंगरमहाविद्यालयबीकानेरस्य प्रस्तुतीकृतोवरीवर्ति । एतदर्थं वयं तस्याभारिणोवर्त्तामहे । अस्य मुद्रणे जैन आर्ट प्रेस विक्रमनगरस्याधिकारिणः कार्यकर्त्तारश्चविशेषाभिरुचिमादाय सक्रियसहयोगंदत्तवन्तः सन्ति । तदर्थं ते धन्यवादार्हाः सन्ति ।

वर्षेभ्यो निःस्वार्थसेवापरायणः संघस्याप्रतिमसक्रियकार्यकर्त्ता श्री चम्पालाल डागा कार्यालयकार्यसुचारुसंचालको महाकाव्यस्य प्रकाशनसम्बन्धिसर्वकार्येषु स्वकीय सक्रियसहयोगं ददौ । अतः संघसस्तस्याभारं मन्यते ।

आशास्तेऽनेन साहित्यस्य भावुकमनीषिणां प्रेरणा मिलिष्यति । ते चापिदिशायामस्यां प्रयत्य सत्प्रयासं नः सफलयिष्यन्ति ।

| गुमानमल चोरड़िया | धनराज बेताला | दीपचन्द भूरा |
|---|---|---|
| सयोजक, साहित्य समिति | मन्त्री | अध्यक्ष |

अखिल भारतवर्षीय साधुमार्गिजैनसंघः विक्रमनगरम् ।

# प्रकाशकीय

विश्व की समस्त संस्कृतियों में भारतीय संस्कृति का एवं उसकी सभ्यता का महत्त्वपूर्ण तथा अनूठा स्थान रहा है। उसमें भी निर्ग्रन्थ श्रमण संस्कृति का तो कहना ही क्या ? निर्ग्रन्थ श्रमण संस्कृति को सर्वोच्च स्थान पर परिगणित किया जाय तो कोई अतिशयोक्ति की बात नही होगी। इस निर्ग्रन्थ श्रमण संस्कृति में वीतराग चतुर्विशति तीर्थकरों की वाणी को ही सर्वोत्कृष्ट महत्त्व दिया जाता है।

निर्ग्रन्थ श्रमण संस्कृति के साधक भौतिकता से परे हटकर त्याग और वैराग्य के महासागर में अवगाहन करते है। फलस्वरूप जीवन की सच्चाई और गहराई में उतर कर स्व पर की हित साधना का पथ उजागर करते हैं। निर्ग्रन्थ साधक अपने जीवन को विशुद्ध बनाने के लिए पंच महाव्रतों का परिपूर्ण अनुपालन करना ही अपना परम एवं चरम कर्त्तव्य समझते हैं। वे स्वाध्याय–ध्यान, चिन्तन, मनन एवं आत्म–कल्याण के साथ–साथ मुमुक्षु भव्य आत्माओं के कल्याणार्थ उपदेश की पावन धारा भी प्रवाहित करते है। जिसको आत्मसात् करके अनेक भव्य आत्माओं को सम्बोध की प्राप्ति होती है और वे भी अपना जीवन–विशुद्धि के पथ पर अग्रसर करते है।

निर्ग्रन्थ साधक परम्परा में जाज्वल्यमान नक्षत्र स्वनाम धन्य, महान् क्रियोद्धारक विशिष्ट तपस्वी स्व. आचार्य श्री हुक्मीचन्द जी म. सा. का जीवन एक प्रखर प्रकाश पुञ्ज सा था। जिन्होने अपनी आत्मा को ही प्रकाशित नहीं किया वरन् जो भी उनके सान्निध्य में आया वह आलोकित हुआ। आचार्यदेव संयमित जीवन एवं श्रमण संस्कृति के कट्टर हिमायती थे। जब उन्होंने शिथिलाचार के विपरीत अपनी आवाज बुलन्द की और अपने चरण आगे गतिमान किये, उस समय तत्कालिक साधकों ने आपको अपने पथ से विचलित करने के लिए कोई कमी (कसर) नही रखी। लेकिन आप सुमेरु की तरह अटल रहे और अपने जीवन में ही निर्ग्रन्थ परम्परा के भव्यतम स्वरूप का साक्षात्कार कर लिया।

उसी भव्यतम निर्ग्रन्थ श्रमण परम्परा में युगद्रष्टा युगस्रष्टा ज्योतिर्धर आचार्य श्री जवाहरलाल जी म. सा. का वर्चस्व सादर

किया जाता रहा है । और किया जाता रहेगा ।

उनके व्यक्तित्व एवं कर्त्तृत्व से सामान्य व्यक्ति से लेकर प्रबुद्ध साधक तक, ग्राम से लेकर पूरे राष्ट्र तक का प्रभावित हो जाना कोई आश्चर्यजनक नही था । क्योंकि उनकी वाणी में ओज था, आचरण में तेज था। हर क्रिया–कलाप मे मैत्री–भाव का सन्देश था । उन्होंने युगों–युगों से चली आ रही कई बद्धमूल, भ्रात धारणाओं का समूलोच्छेदन कर जन–मानस को अभिनव सम्यग् दिशा बोध प्रदान किया । वे केवल विचारों को ही प्रस्तुत करना ही नही जानते थे, प्रत्युत उन्हे जीवन के धरातल पर भी ढालना जानते थे । "जैसा कहना वैसा रहना" उनके आचार का प्रमुख आधार था । आचार एव विचार के सम्यक् दृष्टिकोण को उन्होंने अपने प्रवचनों के द्वारा जनसमुदाय के समक्ष प्रस्तुत किया । जो आज मन्दमति और प्रखरमति सभी के लिए प्रकाश का काम कर रहा है । आचार्यदेव का प्रवचन साहित्य इतना मौलिक एवं अनुभूति गम्य है कि जिसकी समानता अन्यत्र दुर्लभ है । विविध विषयो पर प्रभावात्मक सरल, सरस एव गम्भीर विवेचन जवाहर किरणावलि के नाम से अनेक भागों में प्रकाशित हुआ है । जो कि सर्व जनकल्याण साधन में सहायक सिद्ध हुआ है ।

ऐसे युगद्रष्टा महापुरुष के जीवन को विविध रूपों में व्याख्यापित करना अपने आप में एक विशिष्ट कार्य है ।

राष्ट्र भाषा में तो आचार्यदेव का जीवन वृत्त पूर्व में प्रकाशित हो चुका है, पर सस्कृत–भाषा मे उसको उजागर करने का यह महत्तम श्रेष्ठतम कार्य सम्पादित हो रहा है ।

यद्यपि वर्तमान युग मे सस्कृत भाषा एव सस्कृत–महाकाव्यों का प्रणयन करना अत्यन्त दुष्कर कार्य है । फिर भी अत्यन्त प्रमोद की बात है कि ज्योतिर्धर आचार्यदेव के पट्टधर शान्त क्रान्ति के जन्मदाता उद्भट विद्वान्, सरल सौम्य एव निर्मल व्यक्तित्व के धनी स्वर्गीय आचार्य श्री गणेशीलाल जी म. सा. जिन्होंने अपना मान, सम्मान, पद, प्रतिष्ठा सर्वस्व का त्याग करके श्रमण सस्कृति की सुरक्षा का जो महान् कार्य किया, जिसका सुफल आज हम सभी देख रहे हैं ।

उन्हीं के योग्यतम सुशिष्य, समताविभूति, विद्वद् शिरोमणि, जिनशासन–प्रद्योतक, धर्मपाल–प्रतिबोधक आचार्य श्री नानालाल जी म. सा. के

सत्सान्निध्य में स्वर्गीय आचार्यदेव के जीवनवृत्तों का आलेखन हुआ है। समता विभूति आचार्यप्रवर ने महाकाव्य की सर्वांगीणता में अपना अमूल्य महनीय योग दिया है, जिसको कथमपि विस्मृत नहीं किया जा सकता। आपकी प्रतिभा ने ही इस महाकाव्य को सजाया, संवारा, परिष्कृत किया और संस्कृत साहित्य की श्री में अभिवृद्धि की। आचार्यदेव के सान्निध्य में उन्हीं के निर्देशन में इस महाकाव्य के काव्यकार हैं—विद्वद् वरेण्य राजस्थान सरकार से पुरस्कृत स्वर्णपदक प्राप्त नव्यव्याकरणाचार्य (वाराणसी) सरदारशहर चातुर्मास के प्रसंग पर आचार्य श्री नानालाल जी म. सा. से समकित धारी पं श्रीमान् काशीनाथ जी शास्त्री चन्द्रमौलि।

पण्डित जी विगत वर्षो से संघ के मुमुक्षु, वैरागी भाई, वहिनों, श्रमण, श्रमणियों के अध्यापन में मनोयोगपूर्वक लगे हुए है। आपने आचार्यदेव के भावनो का उनके संशोधनों, परिवर्धनों, परिकरणों का यथावत् प्रणयन कर महाकाव्य का जो आकार संघटित किया उसके लिए संघ आचार्य भगवन् की अनन्त उपकृति का तथा पण्डित जी के अथक परिश्रम के प्रति अत्यन्त ऋणी एव आभारी है।

महाकाव्य की अनेक विशेषताएं है, जिनका अध्येता अनुभव करेंगे फिर भी सक्षेप में इस महाकाव्य के प्रथम सर्ग में चौवीस तीर्थकरों की स्तुति विस्तृत मंगलाचरण के रूप में निर्मित की गई है। षष्ठपट्टधर के जीवन को महाकाव्य का रूप दिया गया है। इसमें सव २१ सर्ग है। प्रत्येक सर्ग का कथानक भिन्न-भिन्न है। शान्तरस प्रधान महाकाव्य होते हुए भी अन्यान्य रसों का भी समावेश हुआ है। साथ में धर्म के साथ दर्शन का पुट देकर इसे उपयोगी वनाया गया है। प्रसंग मे अनेक उपयोगी विषयों का सन्निवेश भी महत्त्वपूर्ण है। प्राय: पद्य के माध्यम से एकत्र ही पाठकों को धर्म तथा दर्शन का सुरुचिपूर्ण परिचय प्राप्त हो सकता है। प्रारम्भ में चरित नायक की संस्कृत मे संक्षिप्त जीवनी भी दी गई है, जो संस्कृत पाठको के लिए संग्रहणीय होगी। मूल महाकाव्य संस्कृत में होने से उसके सुगम तथा सम्यक् अर्थ वोध के लिए संस्कृत में अन्वय का भी उपयोग किया गया है। जिससे समीहित लाभ की ही सम्भावना है।

संक्षिप्त प्रस्तावना काव्यकार द्वारा प्रस्तुत करने से प्राचीन संस्कृत प्राकृत महाकाव्यों के विषय में अपेक्षित जानकारी सुलभ हो सकती है।

इस विशालकाय और हृदयग्राही ग्रन्थ को पाठकों के हाथों

पहुंचाने और इसके प्रकाशन को सम्भव बनाने में श्रीमद् जवाहराचार्य जी के अनन्य भक्त और जवाहर स्मृति साहित्य निधि के संस्थापक श्री जुगराज जी धोका मद्रास का महान् सहयोग रहा है। उल्लेखनीय है कि श्री जुगराज जी धोका स्व० श्री जवाहराचार्य जी के तेजोमय जीवन के प्रत्यक्ष द्रष्टा रहे है। जवाहर साहित्य के व्यापक प्रचार–प्रसार की अदम्य आकांक्षा से उत्प्रेरित होकर धर्मनिष्ठ, सघनिष्ठ, साहित्य प्रेमी, श्री धोका जी ने सत् संकल्प पूर्वक श्री जवाहराचार्य प्रकाशन निधि की स्थापना की है। इस निधि से अब तक जवाहर साहित्य की ५ पॉकेट बुक्स क्रमशः जवाहराचार्य जीवन और व्यक्तित्व, शिक्षा, समाज, राष्ट्र धर्म तथा सूक्तियां शीर्षक से प्रकाशित हो चुकी है। इसी निधि से श्रीमद् जवाहराचार्य जी के जीवन चरित्र का पुनर्मुद्रण भी किया जा चुका है। आपके प्रशस्त सहयोग से अनुकम्पा विचार भाग १ एव भाग २ प्रकाशित हो चुके है।

श्री धोका जी द्वारा स्थापित इस निधि से "श्री मज्जवाहर यशोविजयं महाकाव्यम्" को प्रकाशित करते हुए हमे अपार हर्ष हो रहा है। इस सहयोग के लिए हम सेठ श्री जुगराज जी धोका और उनके तरुण पुत्र श्री मांगीलाल जी धोका के प्रति हृदय से आभारी हैं।

प्रस्तुत महाकाव्य का वस्तुतत्त्वदृष्ट्या विमर्श डॉ० ईश्वरानन्द शास्त्री एम. ए. बी. एड. पी. एच. डी. प्रो० श्री डूंगर महाविद्यालय बीकानेर (राज.) द्वारा प्रस्तुत किया गया है। इसके लिए हम उनके आभारी हैं। इसके मुद्रण में जैन आर्ट प्रेस बीकानेर ने विशेष रुचि लेकर सक्रिय सहयोग प्रदान किया है इसके लिए हम धन्यवाद ज्ञापित करते है।

वर्षों से निःस्वार्थ रूप से सेवा करने वाले सघ के अप्रतिम सक्रिय कार्यकर्त्ता श्री चम्पालाल जी डागा जो कि कार्यालय के कार्यों का बहुत अच्छी तरह संचालन कर रहे है, महाकाव्य के प्रकाशन सम्बन्धी सभी कार्यों में अपना सक्रिय योगदान किया है। इसके लिए संघ श्री डागा का अत्यन्त आभारी है।

आशा है इससे साहित्य के भावुक मनीषियों को प्रेरणा मिलेगी और वे भी इस दिशा मे प्रयत्नशील होकर हमारे प्रयास को सफल बनायेंगे।

| दीपचन्द भूरा<br>अध्यक्ष | धनराज बेताला<br>मन्त्री | गुमानमल चोरड़िया<br>संयोजक, साहित्य समिति |
|---|---|---|

श्री अ. भा. साधुमार्गी जैन संघ, बीकानेर।

# श्रीमज्जवाहर यशोविजयम्

## ( महाकाव्यम् )

# श्री मज्जवाहर यशोविजयं महाकाव्म्

## विषयानुक्रमः

विषये सम्यक्त्वदिशि प्रेरयितु सन्नह्यते । स एव सर्वेषां विशेपरूपेण हित-चिन्तको भूत्वा कीर्ति लभते । एतादृशा महान्त: साधक–पुरुषा: सौख्यशान्ति-शाश्वत साम्राज्य संस्थापयितुं प्रभवन्ति । तत्प्रदर्शितादर्शपथमनुसरन्तो मानवा: कमप्यनन्तनिधि नो समोहन्ते । ते सर्वथा स्वप्रयत्नेनान्यानात्मवोरान् विधातुं यतन्ते । तत्र च सफला अपि जायन्ते । सर्वान् परोषहोपसर्गान् सोढुं तत्परास्ति-ष्ठन्ति । एतादृशमहापुरुषाणा गिर:प्रतियुगं जनताया: मार्गदर्शनं सम्पादयितुमो-शते । सस्मृति–शिलालेखपटले च स्वर्णाक्षरैर्नामाकित तेषा विभाति । तेषा दैव-सम्पत्तिसमन्विताना नृणा मञ्जुमानसे प्रेमशान्तिसन्तोषधारा: अनारत प्रवहन्ति । तेषा सूक्ष्मा अन्त प्रवेशिनो दृष्टि: आत्मन्यवतिष्ठते । ते सासारिकमोहनिद्रा प्रसुतप्तान् जनानत्यर्थ जागरयन्ति । स्वमात्मानं निर्दोष विदधति । परान्नपि तथैव कर्तुमाचरन्ति । निकषोपले परिशुद्धा: ते कर्मक्षेत्रेषु कार्तस्वरायन्ते । तस्माज्जन-कल्याणं प्रसरति । युगधारा परिवर्तिता सती प्रवर्तते । इमे एव विश्वशान्ति सम्पादयितुं सर्वतोभावेन समर्था: भवन्ति । नाम च तेषामजरामरवत् तिग्मा-शुरिव नभसि विद्योतते ।

अत्र प्रसगे सर्वभूतात्मभूत: श्रीजवाहराचार्यवर्य: कामपि स्वकीयामा-त्मविशिष्टि परिरक्षति । तस्य सम्बन्ध: प्राणिमात्रै: सार्ध संस्थापित आसीत् । स अनन्तानन्तमानवमानसै: पूजितोऽभवत् । संसारत्यागो भूत्वापि स जगतो महा-न्तमुपकारमाचचार । तस्य जीवनविषये किंचित्प्रस्तूयते:—

भारतवर्षे हृदय कल्पस्य मालवप्रान्तस्य वरीवर्ति महत्त्वपूर्णमास्पदम् । विश्वविख्यात विक्रमादित्योदयनभोजमहाराजादीना आसीदियमेव भूमि: कमनीय-क्रीडास्थली । मालवस्य विशिष्टोर्वराधरावाचीनेऽपिकाले युगप्रवर्तकाना महामहिम-शालिनामनेकेषा सता प्रसवित्री मन्यते । अस्या: समाकर्षक नैसर्गिक सौन्दर्यम् । शस्यश्यामला–रूप समावर्जति सचेतमा चेतासि । अत्रैव झाबुआ मण्डलान्तर्गत थादलाभिधानाग्रामे नागपर्वत–श्रेणि समाकलिते घोडपुर सरित् पावन सलिलसि-ञ्चिते परित. शाद्वलसमन्विते आदिजनजाति वसतिपरिवेष्ठिते ओसवाल जाति शिरोमणि कवाडगोत्रीय ऋषभदासात्मज सात्विक–सदाचार–सम्पन्न–जीवराज जीव वेश्मनि नाथी देव्या कार्तिक शुक्ला चतुर्थ्यां १९३२ वै. संवत्सरे चरितना-यको विशिष्टदुर्लभमानवजनिमाप । योऽय भागवतीदीक्षां समाश्रित्यासख्यमानव-माननविनायको विकृतप्रसृताज्ञानान्धकार देशनाभिरपाचक्रे । सूनुरत्न समासाद्य पितरावानन्दातिरेकस्य नासीत्पराकाष्ठा । विशिष्ट–सुषमासम्पत्ति–समन्वितस्य प्रथमस्य आननस्य जातकस्य सुधांशोरिव काप्यनिर्वचनीयेवाभिख्यासीत् । "भविष्णो: पादपस्य भवन्ति मसृणानि पत्राणीनि" लोकोक्तेरनुसार पितरो जवात् वेगेन

दर्शनमात्रादेव आहरति जनमनांसि विषयावगतिमिति, दर्शन–मात्रेण दर्शकाणां मनोहरति, श्रवण–मात्रेणैव कर्त्तव्याकर्त्तव्यनिश्चयं च करोति इति कारणात् तस्य नाम जवाहरेति चक्रतुः । यदग्रे विश्वमण्डले गुणगणगरिम्णा प्रथितम् जातम् । तदा नो कस्यावबोधो बभूव, यदयमेव कुरीतिकुसंस्कारान्धकारे पतता जनानाम् प्रकाशस्तम्भायितो जनिष्यते । स्वकीय ज्ञानरोचिषा च प्रकाम सर्वजनोपकार विधाय महनीया युगप्रवर्तकपदवीमेष्यति ।

## शैशवम्:–

प्रायः सर्वेषां महापुरुषाणाम् जीवनविकासस्यैतिह्य सकष्टपूर्णमेवारभ्यते । संघर्षे यथा तत् चकास्ति, नैव सुख–सुविधा–परिपूर्णपरिस्थितौ । सुख साम्राज्ये चात्मनो विभिन्ना. स्वाभाविकशक्तयः शिथिला· सत्यः शेरत इव । यत्प्राचुर्ये मानवा· अशक्ततामेवाकलयन्ति इव । एतद्विपरीतम् दु·खसंघर्षः आत्मशक्तिविकासे प्रभूतं साहाय्यम् आचरति । तदा यदि सन्निधौ । दीनतायाः आधान नो जायते, विजयिनी वैजयन्तीव वीरता संघर्ष–संगरे आक्रामति, तदा अनादिकाल–प्रसुप्त–सहजशक्तयः शाणायिता इव सर्वथा जाग्रति । अतएवमहा पुरुषा प्रारम्भत एव सुखसुविधा पराङ्मुखाः जायन्ते । यथागमः–"आयावयाही इति" सुकुमारता जहीहि । अयमेव सुखस्य पन्था· । इदमागमवाक्यम् विशालानुभवस्थ फलम् वक्तु शक्यते । केवल स्वयमागतकष्टानां सहनमेव नो वरम् प्रत्युत स्वयमुत्पाद्यापि तत् सहनीयं मन्यते । इदमेव जीवने लोकोत्तर–विकासस्य विद्यते रहस्यम् । अतोनिश्चप्रचम् नान्यः पन्था विद्यतेऽनाय । स्वेच्छया कष्टसहनेनैच लभ्यते सर्वदात्मविजयः । यदासाधको दुःखदावादुर्विपाकैर्नो व्यथते नो विलितो जायते, तदा तस्याग्रेवर्धमाना विकाशदिशि प्रगतिःकदापि नावरुद्धा सलक्ष्यते । आत्मोन्नतेरादर्शोद्देश्येप्रेरित–मानवो यदर्थ चेष्टते । तत्सर्व वातावरणम् चरितनायकस्य कृते प्रकृत्या स्वयमेवोपहृतम् ।।

प्रारम्भत एवास्या प्रकृतिप्रदत्तपरिस्थितौ स समभ्यस्तो बभूव । यया सासारिक–मोहजालपरिभेदने समर्थोऽजायत । द्वितीय–वर्ष–वयस्के जाते जननी प्रवाहिका प्रकोपेण कीर्तिशेषाऽजायत । येन मातृ–स्नेहस्य जीवनेऽपेक्षितोपि पीयूषरसप्रवाहः शुष्कतामुपगतः । इत्थ यद्यपि प्रकृत्या जीवनस्याद्वितीयानिवार्यं प्रगाढबन्धनम् सर्वथा छिन्नम्, तथापि जीवन पर्यन्तं मातृभक्तिविषये आदर्शरूपो विचार प्रवाहो निरन्तरं प्रवहमान एव तस्थौ ।।

महापुरुषेषु शैशवकालिक–संस्कार· पल्लवितोभूत्वा विशाल–रूपताम् एति । स सर्वदा जीवने विद्यमानो भवति । येन ते जगत्कल्याणानि सावय-

न्त्यजस्रम् । स स्वकीयं–वास्तविकं स्वरूपं संरक्षन् उत्तरोत्तरं विकासमापद्यते । नैसर्गिकप्रकृतिस्नेहः पूततामाकलयन् सहैवसीमानमतिक्राम्यति । ससमान–रूपे सर्वत्र व्याप्नोति । सकुचितः सीमापरिबद्धश्च नो भवति ।

अस्माकं चरित नायकस्य मातरं प्रति निर्मल–प्रेम–सस्कारो विकासितो भूत्वा मातृजाति–महत्ता–रूपे परिणतोऽजायत । तेन प्रतिमहिलं, स मातृत्व-दर्शनात्मको वभूव । मातृसादर सस्कारः जीवनपर्यन्तमेकरूपेणातिष्ठत् । नाप्य-जायत तत्र कथचनापि विकारलेशः । स्त्रीत्वजातेः कृते तत्रभवतामासीत् सर्व-थोदात्तभावना । अत एव यत्र तत्र भवद्दुद्दिष्टदेशनायाम् मातृत्वस्य आदर्श रूपमवलोक्यते ।

मातुरभावे तस्य लालनपालनस्य सर्वविधभारः पितृहस्तयोरापतितः । अत्र दिशि जनकेन तथा चेष्टितम् यथा न किमपि जातमसौविध्यम् । पितरि एव मातृत्वमपि केनापिरूपेण परिणतमजनिष्ट । प्रकृतिरिदमपि द्रष्टुं न शशाक । तस्याः कठोररूपस्य तदा नग्नदर्शनं लब्धं जनैर्यदा पंचमवर्षे पितुरपि संरक्षणं समाप्तम् । पचवर्षवयस्क एव स्वावलम्बनस्य पाठ समभ्यस्तवान् । बाह्यदृष्ट्या वक्तु पार्यते यत्प्रकृतेः चरितनायकं प्रति क्रूरतमो व्यवहारोऽजायत । तस्याः निर्दयतायाः सीमैव नासीत् । परमान्तरिकदृष्ट्या यज्जातं तत्सर्व श्रेयसे । जग-तोवास्तविकं रूपं समक्षमाविर्भूतम् । इत्थमपि चरितनायकस्य दिव्यधर्माचार्यत्व निर्माणे प्रकृतेः साहाय्यम् न विस्मरणीयम् आस्ते । तस्याः चमत्कृतिं वेत्तुं को हि प्रभवेत् । सर्वथापेक्षिताश्रयाभावे आत्मैवाश्रयणीयो मतः । महापुरुषा नान्येपामाश्रयमुपजीव्य जीवन्ति । ते जगतामाश्रयाः भवन्ति । ते तु जगतां सर्वा आपत्ती. हसन्त एव परिसहन्ते ।

पितरिदिवगते निजमातुलस्य सदने समाश्रयं लेभे । ज्येष्ठपितृव्येन स्व-सन्निधौ निवासाय प्रभूत प्रयतितम् । तथापि भगिनीवात्सल्यकारणात् मातुले-नाय रक्तनिध एव संस्थापितः । सप्रतिष्ठितव्यक्तिरासीत् । तस्य वस्त्र विपणि-रभवत् । बालकस्तत्रैवोवास ।

## विद्यार्थि जीवनम्:–

महापुरुषाणां विद्यार्थिजीवनम् कस्मिंश्चिदेकस्थाने कालविशेषे च नो समाप्नोति । प्रत्येकस्थानं पाठशाला, प्रत्येकक्षणं च भवत्यध्ययनकालः । आज-न्म नवनवोन्मेषविशिष्टं बोधं प्राप्नुवन्ति । स्वजीवने च तस्य यथोचितमुपयोग-माचरन्ति । प्रयोगात्मकरूपे च स्वकीयजीवने तमुत्तारयन्ति च । इदमेव ज्ञानं

वास्तविकशिक्षोच्यते । अनेनैव जीवन सुसस्कृतमुन्नतंन्च जाजायते । एतेषां कृते सम्पूर्णविश्वमेवानावृत्तपुस्तकम् । प्रत्येकघटना प्रत्येकं परिवर्तनम् प्रत्येक स्पन्दनंच तत्समीपे नवीन पाठमुपस्थापयति, । येन भवति च जीवने नवीनबोधोन्मेष· ।

अस्माक चरितनेतु: कृत्रिमपाठशालापेक्षया प्राकृतिक विद्यालये ऽधिकमध्ययन सम्पन्नम् "स्वकीयजीवनानुभवाधारे एव तैरुक्तम् आसीत्" प्रकृतिविद्यालयेषु यद् ज्ञानमुपलभ्यते सहजम् तत् मानवनिर्मितेषु विद्यास्थानेषु प्राप्तुं नो शक्यते" । प्रकृति प्रत्येकरचनाया ते किमपि स्वयमासदयन्त्येव । तत्र भवतां विद्यार्थिजीवनमाजन्म स्थितम् । जीवनावसानक्षणेऽपि प्रकृतेर्नवीनविचार समाहार: विद्यमानोऽभवत् । यद्यपि भवत्सु क्षयोपशमजन्यानुभवज्ञानम् प्रचुर मात्राया विद्यमानमासीत्, तथापि साहित्यिकमध्ययनगाम्भीर्यसमन्वितमविद्यत । जैनागमसाहित्यैः साकमेव उपनिषद्–गीता–सन्तसाहित्य–गान्धिसाहित्यादीनामपि सम्यगध्ययनं चक्रिरे । ; आसीदिय विशेषतायत्तेऽधीत–विषयाणामात्मसात्कृतिम् धेनुमिव सर्वथा समपादयन् । तदुपदेशनाभिरिद तथ्यमवबुध्ययेयत् तेषामध्ययन कियत् तात्विकम् मार्मिक सम्यक्दृष्टिपूर्णञ्चासीत् ।

भगवता जन्मभूमि: उपगुर्जरप्रान्तम् वरीवर्ति । तत्रत्यभाषायां गुर्जरभाषाया:पूर्ण प्रभाव: परिलक्ष्यते । इतस्ततोनिवासिनो भिल्लास्तथान्ये नरा: गुर्जरमिश्रिता भाषामेव व्यवहरन्तिस्म । प्रारम्भिक पाठशालासु च गुर्जर भाषाऽध्याप्यतेस्म । तदा ते तत्रैव ईसाई मिशनरी संचालित प्रारम्भिक पाठशालायाम् प्रवेशं जगृहु: । परन्तु विद्यालयस्य नीरसवातावरणमाकर्षकं नो जातम् । कतिपय–मात्राया गुर्जर–हिन्दी–गणित–विषयं प्रशिक्ष्योपरेमु: । विद्यालयीय जीवन च प्राय: समाप्तिमितम् ।

## साहस-संकष्ट-समय :–

साधारणमानवा: विपत्ति–सम्भावना–मात्रेण वेपमाना बिभ्यति । परं महापुरुषा: विपत्तावुल्लासमनुभवन्ति । विकटविकटशत्रुसेनाकलिते संगरे शूरवीरा इव ते विपत्तिसमाक्रमणे उद्यता: सन्त सर्वथा नि:शंक विजयन्ते । स्वकीय वर्चस्वञ्च प्रदर्शयन्ति । सर्वविधिपरिस्थितिसमाधानार्थ बद्धपरिकरा इव तिष्ठन्ति । संकल्पधनास्ते स्वयमेव स्वकीय–जीवनेतिहासनिर्मातारो जायन्ते । येनोत्तरवर्तिनो जीवधारिणस्तत्पादलक्ष्म दर्शदर्श कार्यक्षेत्रे गन्तुमीशते । अस्माकं चरितनायके महापुरुषाणामिमानि लक्षणानि शैशवादेव वैविद्यन्तेतराम् ।

अत्रविषये एकमुदाहरण दातुमुत्सहे –एकदेमे कतिपयात्मीयै:

शकटेन यात्रा विदधाना आसन् । पार्वत्यप्रदेशस्य पन्था: वक्रोच्चावचश्चागत.। उन्नतप्रस्तरै शकटस्य गतिर्विपद्यमाना आसीत् । तस्यविध्वंशस्य सम्भावना प्रतिपदमनुभूयतेस्म । कव्चिन्मार्ग. सकीर्णस्तथाकुत्रचिच्च पातालतलस्पर्शातिशायिगम्भीर गर्तोऽन्यत्रैकदिशि हिमालयसहोदराचलो नग: । अल्पेनापि प्रमाद–लवेन–गर्तनिपातोऽवश्य भावी, जीवितव्य विनाशकारी ।। प्रतिपदं प्राणानाम् मुख व्याददान सकष्टम् ।

शकटारूढा· सर्वेसहयायिनोभयभीता: सन्त: शकटादवतेरु: । तेपदातय एव चलितु मगल मेनिरे । आश्चर्यमिदमासीत् यदस्माक चरित–नायका:शान्तद्वन्द्वभावेन तत्रारूढाएवास्थु. । पलायन ते नाजानन् । परिस्थितिसमक्षमानति नो चक्रु: । कादर्य नावलम्बितम् । तन्मानसे अपायातको नो पदमादधौ । येन केनापि प्रकारेण शकटमग्रे चैधमानमासीत् । यदा तदुत्तारे समागतम् । तदाऽनड्वाहौ वेगेन धावितुमारब्धौ । शाकटिको वशीकर्ततौत्तु प्रभू प्रयतितवान् पर साफल्य नो लेभे । स मनसिकृतवान् नाद्य कुशलमत्र केपाचिदपि । शकटमिदं परिवर्तितं भविप्यत्यथवागर्ते क्वचिन्निपतिप्यति । तदा सोऽनडुद्चिन्ताविहीन: स्वचिन्ताचक्रमारूढ: स्व प्राणान् परिपातु तस्मादुत्प्लुत्य चुकूर्दे । वृषभौ स्वातन्त्र्यमुपलभ्य निरकुशौ वेगेनोपदुद्रुवतु: । तत्रापि प्राण संकष्टे कालेऽपि चरितनायक: स्वस्थो भूत्वा पूर्ववत् तस्थौ । स्वमत्या विमृश्य शाकटिकस्थानं जगृहे । प्रग्रहमादाय करे सतावरोद्धु चेप्टतेस्म । सहसा घातेनं स युगोपरि संपपात । तत्रैव लम्बमानो वभूव । शनै: शनै: तद्गतेरवरोधो जात: । सर्वेप्रकामं सुरक्षिता: । परिणामोऽयं तदगाधधैर्यासीमसाहसयो· । अवसाने सनिदिष्टस्थानमुपाजगाम ।

एकदा स कस्यचित्सदनस्य भित्तिसन्निधौ स्थित्वा वार्ता कुर्वन्नासीत्। परस्परालापसमाप्तेरनन्तर यदा तत्र भवान् ततोऽपगत: काकतालीयन्यायेन भित्तिर्वेगेन पतिता । सा तदपसृतेरेव काल प्रतीक्षत इव । महापुरुषाणा जीवने विशेप रूपेणेत्थदुर्घटना. सघटन्ते एव । शैशवेवहुवारं सन्निपातसदृशा: भीतिप्रदा रुजोप्यभवन्, परन्तु आयुप्यकर्मण: प्रवलतयाथवा भव्यजीवानां पुण्यप्रभावैश्चेमे समग्रसकटेभ्यो रक्षिता: । सन्तोमृत्यु जयतामापु: । एतादृशगंभीर प्रसगेप्वपि भवताश्चित्तवृत्तिर्विक्षेपरूपेण शान्तिमिता ददृशे । नैसर्गिक–शान्ति–सहन–शीलते शनै: शनै: विकासमित इति जीवनैतिह्यैर्दृ प्टिपथ सगच्छेते ।

## व्यापार प्रवृत्ति :–

एकादशवर्ष वयस्का: श्रीमन्तो विद्यालयाध्ययन विहाय स्वमातुलेनसाकं वस्त्र–विक्रयकार्ये व्यापृता: सजाता: । पूर्ण मनोयोगनेद कार्य शिक्षितम् येना-

त्रविषये तीक्ष्णबुद्धिप्रतिभाप्रभावेण नैपुण्यमासादितम् । मातुलोपि सन्तोषेण स्वस्थो भूत्वा वस्त्रव्यवसायकर्माण्येषा विधाने समर्पितवान् । सर्वविधवसन परिचये शेमुषी पारगता जाता । बालकस्यास्मिन् विषये योग्यता दृष्ट्वा जन्मजातसिद्धव्यापारिणोपि विस्मय गताः । येषा त्यागे सहज प्रवृत्ति र्भवति ते व्यापारादिलौकिकविधाने आध्यात्मिक मनोवृत्तित्वात् विशेष रूपेण सफला नो भवन्ति । अत्र महापुरुषाणा जीवनचरितानि दृष्टान्तरूपेणोपस्थाप्यन्ते, किन्तु चरितनायकस्य जीवनमत्रापवादरूपमेव मन्यते । भवता जोवन विकास पद्धत्याऽनुभूयते दृश्यते च यत्प्रतिभायाः एकाङ्गिविकासः सर्वथा सर्वांशे सत्यापितो नो वरीवर्ति । कतिपय महापुरुषाणा जीवन क्रम विकासो बहुमुखी अपि परिलक्ष्यते । ते विशिष्टप्रतिभा—वैभवा अपि प्रतिपदं लभ्यते । सर्वदिक्षुसजायते विद्युत्प्रवाहप्रभावः । यथेमे व्यापारिकक्षेत्रे समासादितसाफल्यास्तथैवाध्यात्मिकपरिवेशेऽपि नैपुण्यमाप्ताः । यथा सफलव्यापारास्तथैव धर्माचार्याअपि सिद्धाः संजाताः ।

यत्र प्रतिभया साहसमनोयोगावपि समन्वितौ भवतः । तत्र सफलता प्राप्तौ न जायते विलम्बः । त्रिपुटोय भवति सफलताजननो । यत्रेय यावन्मात्रायां भवति तावत्येव निपुणता परिलभ्यते । इयं त्यागेन सह संमिश्र्य मनुष्यं धर्मात्मानं निर्माति । प्रतिभया जीवनस्य पन्थाः आप्यते । साहसेन विपत्तिषु धैयर्मवलम्ब्यते । मनोयोगेन च स्थास्नुता लभ्यते । तदा विकासे कापि बाधा नायाति । मनोयोगस्य विकसितशक्तया च योगिनो विस्मयजनकसिद्धिसमासादने क्षमन्ते । अस्माकं चरितनेतृषु पूर्वोक्त त्रयाणा गुणानामपि भावकारणात् साफल्यमागतम् । तेषां जीवनविकासस्येदमेवमूलमन्त्र मन्तव्यम् ।

## धार्मिक जीवनस्य प्रभातम्:—

जैनसस्कृतौ यस्यक्रियाकाण्डस्य वर्णनमुपलभ्यते तत्सर्वस्य मूल सम्यक्त्वमस्ति । अस्य विद्यमानतायामेव चरितमात्मशुद्धेश्च निमित्त निर्मीयते । अस्याभावे सर्वोपि समादृशः क्रियाकलापः संसारपरिभ्रमणस्य कारणं जायते । सम्यक्त्वेन क्रियाकाण्डं सजीवतामुपगच्छति । तत्र प्राणाः सचरन्ति । केवलमिदमेव नो किन्तु गाम्भीर्यपूर्णज्ञानमपि सम्यक्त्वमन्तरेण मिथ्याज्ञानमेव तिष्ठति । सम्यक्त्वं मोक्षसौधस्य प्रथम सोपानम् । मुमुक्षुजीवस्य मोक्षपथोऽस्मादेवारभ्यते । वस्तुतो दृष्टिनैर्मल्यं विना वस्तुनो वास्तविकं स्वरूप ज्ञातुं नो परिशक्यते । इद नैर्मल्य धर्मश्रद्धयोत्पद्यते । अतएव धर्मश्रद्धास्वीकार एव व्यवहारेण सम्यक्त्वगृहीतिरुच्यते । समयक्त्वग्रहणकाले प्रतिसज्ञायते अहमस्मात् वीतरागदेवमेव स्वदेवं मस्ये । अहिसादि पंचमहाव्रतधारिणः साधूनेव स्वगुरून् ज्ञास्यामि । तथा वीत-

रागप्रदिष्टदयामयधर्ममुरीकरिष्यामि ।

कस्यापि मतस्य परीक्षा करणस्य सर्वोत्तमसरलोपायोऽयमेव यत्तस्य देव-गुरुधर्माणा परीक्षाँ विदधीत । यस्य देवोवीतरागोन भवति तन्मतमात्मकल्याण-साधक नो भवितुमर्हति । तथैव यस्यमतस्य साधवः काचनकामिनी–परिलुब्धाः प्राणिरक्षामात्रेपु समभाव नो रक्षन्ति । हिसादिदोषैः सर्वथानो रहिताः सन्ति । तन्मतम् मुमुक्षुजीवेभ्योहित कारक कदापि नो मान्यम् । इत्थ यत्र समग्रभूतेभ्यो दयायाः नोपदेशः, प्रत्युत प्रकारान्तरेण हिसायाः विधानम्, दयानुकम्पादि निषेध-स्तदपि मोक्षार्थिनां कृते नोपादेयतामचति । सम्यक्त्वग्रहणस्य स्वरूपम् गुण-पूजकता भवति । तदा स इमामेवप्रतिज्ञा विदधाति, यदह निर्दोपदेवगुरुधर्मान् एव स्वीकरोमि ।

यदेमे चरितनायकाः विपणिकार्ये व्यापृताअभवन् तदैव तत्र श्रीगिरिधारी लाल जी महाराजाः समवसृताः । मुनिश्रीणा व्याख्यानानि श्रावश्रावं धर्मविषये नवीन जागरणमजनिमानसक्षेत्रे । तदैवसस्थितेरुत्थाय सम्यक्त्वमग्रहिपुः ।

कस्यापि मानवस्यासाधारणो विकासो भवति प्राक्तनजन्मसस्कारैरेव । शैशवे धर्म प्रतिताहशप्रीतिजनन निश्चितं पूर्व–जन्म–सस्कार–परिणाम–विपाक एव । ततः साधर्मभावना प्रतिपच्चान्द्रमसी लेखेव निरन्तरमेधमानैवादर्शि । धर्म-श्रद्धा फलस्वरूपमेव तैर्महद्गौरवमाप्तम् । धर्माचार्यप्रतिष्ठासमधिगता । आत्म-शुध्देश्चाधिकारिणो ऽभवन् । सम्यक्त्वग्रहणस्य पश्चात् भवतामिहलौकिकं धार्मिक-जीवनं प्रारब्धम् । मातुलमोहपाशच्छेदनेऽपि प्रकृतिर्व्यापृता । जीवनस्य त्रयोदशे वर्षे मातुलोपि देवनिकेतनातिथिरजनिष्ट । सर्वाभावे लब्धोऽयमप्याश्रयः विलुप्ति-मासमाद । घटनयानया भवता मानसमत्यर्थ दुदूये । मातुलवियोगेन सर्वमुत्तरदा-यित्व समापतितमुपरि । नवीनवैधव्यसमाकुला मातुलानी तथा तत्तनूजोपि तत्र-भवतामाश्रये एव समागताः । लौकिक समग्रमुत्तरदायित्वं स्वयमेव तत्रैवापेदे ।

मातुलस्याकालमृत्युना निद्राजागरण जातम् । ससारस्य दुःखवाहुल्यस्य नवीनबोधोऽभवत् । मनसिव्यचिन्तयन्ः—"जीवन पयोवुद्वुदमिव क्षणभंगुरम् । समीरस्य लघुप्रभावोऽपि तद् विनाशयति । तथापि मानवाः आशाभिः सप्रेरिताः मनः गगने वायुगोधं निरन्तरं रचयन्ति । धनतनुभवनस्वजनाः तिष्ठन्त्यत्रैव [illegible] निर्यान्ति । तदा प्राणिनः परकीयवस्तुमोहे कथं निपतेयुः । शरीर-[illegible] विदधाति । आत्मा च सहते शरीरसम्बन्धिवेदनानिचयानुभूतिम् । [illegible] न [illegible] माया [illegible] विमोक्षः" ??

## वैराग्योद्रेक :—

चरितनायकस्यान्तर्जगति महता वेगेनाध्यात्मिक विचारा आगन्तुं प्रारेभिरे। "चैतन्य ! तव गम्भीरेयं विस्मृतिरेव। यदध्यावधि स्व नो परिचिचयिथ। परमात्मस्वरूपमाप्तु सन्निधेहि ! परमात्मसारूप्यमेव सम्प्रति भवेतो लक्ष्यम्। त्वं स्वयमेव कर्तासि जगतामितरपदार्थास्ते साहाय्यरूपाः मताः। त्व तेषा प्रेरकः स्वामी। परन्त्वया विस्मृतमास्ते सर्वम्। येषात्व स्वामी असि तेषामेव ते मुखापेक्षित्व सम्पन्नम्। तदधीनतायामानन्दसन्दोह मनुषे। अतः स्वकीयम् ज्ञानं परिचित्य पूचायत्ते साधनानि त्वा कीदृश कण्टकाकीर्णपथमुपनयन्ति। अज्ञानोपरतौ दिव्यप्रकाशः ते स्वागताय यतिष्यते। तदा परम–कल्याण–मार्गः स्वयमेव प्रदर्शितो भविष्यति।

अनन्तानन्तसमयो व्यतीतः पुनरपित्वया धर्मस्यविशिष्टाराधना नो सम-पादि। इत्थत्व सिद्धस्वरूपः पिको भूत्वापि ससारिजीव रूपः काकः सम्पन्नोऽसि। सम्प्रति सम्प्राप्तोऽनुकूलोऽवसरः। अय पुनः पुनः नो लब्धु शक्यते। इदानी स्व-शक्तिमुपयुक्ष्व पुरुषार्थ सदाधेहि। यदि नो समाश्रयिष्यसि सम्पत्तिमुत्साहस्य तर्हि यस्या स्थितौ पतितोऽसि तस्यामेव चिर विवशः स्थास्यसि। इद सर्व विचारजात तत्र भवता भवतां पीयूषपूर्तिसवलितोऽन्तरात्मनो नैसर्गिकोद्गारः। अयमस्ति मुमुक्षुपुरुषस्यान्तर्नादः। स्यादय वाणी रूपता दीक्षाग्रहणानन्तरमेव गतो भवेत्। परससारवैराग्य समकाल मानसप्रदेशे सर्वथोत्पत्तिरस्य सम्भाव्यते।

यदन्तस्तद्बहिरिति नियमानुसार तेषां वैराग्य भावनानुदिन प्रवर्धमानैवाजायत। पूर्व कार्यक्षेत्रव्यापृत भावनया सचालिते व्यापणे मानस नोपरतम्। सदनधर्मशालेव प्रतीयमान जातम्। सर्वथाससार एव नोपरमरमणीयो मान्यः। मानवाः स्वकीय महायात्राया अपि विषये किमपि चिन्तयेयु। जागतिक सर्वाभावो मानसेसदा जजागार, परन्तुसम्प्रति ससारप्रपचपरित्यागे एव समारूढा हार्दिक–केन्द्रीय–भव्यभावना। व्यापार कार्यकलापेभ्यः क्रमशः उपरतिरजायत। चिन्ताचक्रमारूढास्ते। उदासीनतामेवावलम्बयन्। किन्तु ना अपि निजायतिविषये निर्णेतु नापारयन्। किंकर्तव्यमिति दोलायमानमेव मानसं सम्पन्नम्। हृदि जिज्ञासामहोर्मिरूपतामाससाद। अस्मात् कारणात् मानसमस्वास्थ्यमरूरु वस्तुतः कस्यापि सद्गुरोरभावेजिज्ञासानिर्झरिन्यस्सदकोटिमाटीन्ते।

## सद्गुरुसम्प्राप्ति :

न भवति भवे किमपि ज्ञान गुरुसम्पर्क विना । इति नियमानुसारं पथप्रदर्शकान्वेषणप्राज्ञैर्विधेयमेव । यथा दीप प्रकाशे न भ्रमन्ति मानवा: निविडान्धकारे । तथैवगुरुसम्पर्कमासाद्य नरोपि लभन्ते, स्वसमीहितसर्वसिद्धिम् । आत्मकल्याणस्यैतदतिरिक्तो नो विद्यते अयनाय कोपि पन्था: ।

सौभाग्यवशात् तेषा जन्म भूमो कतिपये समभ्यर्चित जैन साधव: समवसृता: तेषा दर्शनार्थ ते भक्तिभावनया गता: । तेषा प्रवचनमपि श्रुतम् । यथान्वेषणमासीत् गुरुपादानाम् तथैव ते सर्वे समुपलब्धा: । ते संसार मुक्ति मार्ग व्याख्याय मुनिधर्मस्वरूप च विशेषतो विवेचितवन्त: । दीक्षामार्ग लब्धि प्रकाशे ते तथा हर्षमुपगता:; यथाकान्तरे पथभ्रान्तयात्रिण: सरणिमुपलभ्य मोमुदति । ते मुनिव्रतमादातु मनसा निश्चिति परिजग्मु: । पुण्यशालि पुरुषाणां कृतेऽल्पोपि धर्मोपदेशो हितकरो भवतीति विषये प्राचोनैतिह्य प्रमाणभूतमासाद्यते । चरितनायकस्य सद्गुरुप्राप्तिसमीहा साफल्यमुपगता ।

## ससमाधानं मानसिक द्वैविध्यम् :—

मुनि—दीक्षा—स्वीकृति—विचारे निश्चितेऽपि चरितनायकस्य समक्षमेका वाधा समुपस्थाय नगायितेव परिलक्ष्यतेस्म । इय स्वत एवात्मजगत एवोद्भूता जाता । इय विशेषत: कर्तव्यपथमेवानुरुरोध । यथा पथिको द्विपथे स्थितो नो निर्णेतु शक्नोति केन मार्गेण गन्तव्यमिति तथैवतेपि समाधातु नो शेकु: । तथापि चरितनायकेनैत्र निर्णयो व्यधायि । द्वैविध्य पूर्णेऽपिविषये । इदमासीद्वैविध्यम् । एकत्र ससारपरित्यागरूपदीक्षाग्रहणप्रसग:, अन्यत्र च विविध महोपकारिमातुलतनयस्य परिरक्षाकर्तव्यपूरणम् ।

अस्यसमाधानमात्मनोऽन्तर्ध्वनिना सम्पन्नम् पलमात्रेणैव । तेन लोकोत्तर प्रकाशोऽलाभिध्व । ससारेकोपि कस्मिन्नपि नो निर्भर: । सर्वे स्वस्वभाग्यानि गृहेव नयन्ति । अन्य परिपोषकत्वमान्यता ऽहकारमेवोपचिनोति । कोपि कस्यापि भाग्यविधाता न भवति । आत्मान्तर्द्वन्द्वनिर्णयानुसारमविलम्बमात्मकल्याणपथप्रस्थानमेव निर्णयो जात: । शैशवात्प्रभृति गम्भीर प्रकृतिका: तत्रभवन्त: स्वकीय निर्णय सहसा विभावयितुमुचित नो मेनिरे । तदा तेन प्रतिदिन साधु-प्रवचन श्रोतु गच्छन्ति स्म । तत्सगति विदधति । समयमधिक ज्ञाने ध्याने चैवयापयन्ति स्म । दीक्षा ग्रहणानुमतये समवयस्का: सन्नद्धा आसन्; परन्तेषां साभावना गगनारविन्दमिता, परन्तेषा वैराग्यभावना प्रतिदिनं क्रमश एवमानैवाजायत । दृढ-

स्थायिनिश्चयो भवति सफलतायाः प्रधान कारणम् । महापुरुषाः स्वकीय हिताहितविषये विमृश्य कृत निश्चय कदापि नो जहति । विघ्नबाधाश्च तान्-निश्चयमार्गात् पातयितु न क्षमन्ते । विपत्तयश्च कर्तव्य-पथात् विचलितान् कर्तुं नो शक्ताः भवन्ति । नो स्वप्नेपि रोधकता व्रजन्ति । अपरिवर्तनीय सकल्प-हेतो : सफलतासदैव पादौ स्नेहेन परिचुम्बति । यदा चरितनायकाः दीक्षाग्रहण-सकल्प मनसा चक्रुस्तदा कापि शक्ति-स्तत्पथमवरोध्दु न शेके ।

## निकषोपले परीक्षा :

यदा तैर्विचारिम् । अस्माक मानसिक तत्परता पूर्तिमितास्ते । तदा विलम्बस्य न विद्यते कापि आवश्यकता । तदनन्तर तैः स्वकीयभावना ज्येष्ठ-पितृव्यश्रीधनराजसमक्ष प्रस्ताविता । तेन स साश्चर्यो दुःखितोऽपि बभूव । स तेषां विचार गाम्भीर्येण नो परिगृहीतवान् । व्यचिन्तयच्चाज्ञानी बालकोऽस्ति । साधूना प्रतारणायामागतोऽस्ति । भर्त्स्यमानो मार्गाश्रितो भविष्यति । इत्थ विचार्य स भापयतेस्म । तेन ते मौनमेवाकलितवन्त. । परन्तस्यावरोधस्य किमपिफल नो जातम् । ते स्वविचारे नगायिता एवातिष्ठन् सफलताऽभावे स साधुसमीपे तेषा गमनमेव निषिषेध । निरीक्षणार्थं तनयद्वयमपि नियुक्तवान् । कठोरतया निर्दिष्टम् "अयम् साधूनाँ समीपे कदापि नो यायादिति" युवाभ्याम् सावधानतयाऽवधेयम्" ।

एतत्प्रतिवन्धकारणात् कतिपय दिनेभ्यः तेषाँ साधुसगतिरवरुद्धाभवत् । परन्तु प्रतिवन्ध शैथिल्ये तत्र गमनागमने भूयोपि प्रारब्धे । साधुसगतेरभावेपि तेषाँविचारे किमपि शैथिल्य नागतम् । ते पूर्ववत् बद्धपरिकरा एवासन् । तदैव तैश्च सचित्तजलपानपरिहृतम् ।

धनराजेन यदा दृष्ट साधु सगतौ गमनावरोधेऽपि जवाहरस्य विचारप-रिवर्तन नो जातम् । तदा तेन प्रतारणपथो गृहीतः । ग्रामस्य जना. तस्य दीक्षा-ग्रहणविचारै.परिचिता एवासन् । धनराजेन स्वात्मीय परिचिताः सर्वे निर्दिष्टा अभवन् यत्.यदा यदा जवाहरो मिलेत्तदातदा तत्समक्ष साधुनिन्दामवश्यमेव कुर्युः । साधुभ्यस्तंभयभीतमपि विदध्युः । साधुरूपस्य भयंकर चित्रणेन तस्य मानसपरिवर्तन सर्वथा विधेयमेव तन्निर्देशानुसार ते जवाहरसविधे सदैव साधूनाँ गर्हणाँकृतवन्तः । कोऽपि वदतिस्म शिशो ! त्वम् साधुर्माभवेः । साधवो बाल-कानादाय गहने वने त्यजन्ति । तत्सामग्रग्रीमपि गृह्णन्ति । आलंकारिक भाषया च कोपि वक्तिः—ते साधवो मार मारं तान् सयावान् विदधति । तप्ततैलपूर्ण-कटाहे पातयित्वोत्कालयन्ति च । इत्थ प्रतिमुख विभिन्नाः वाचः श्रूयन्तेस्म ।

पर जवाहरोमनरिवतया कस्यापिप्रतारणे नागतः । स्वनिश्चये निश्चलो जातः। यथा यथा चिकित्सित तथा तथा रोगवृद्धिरजायतेति तस्य विचाराः द्रढिमान मेवोपगता. । सर्वैः सांसारिक बुद्धिमद्भिः बहुधावरोधाय चेष्टितं पर कैरपि साफल्य नासादितम् । मुद्गशैलायितो महाभागः समानरसे निमग्न एवातिष्ठत् । सामदान दण्ड विभेदाः सर्वा एव नीतयोऽत्र स्वयमेव पराजिताः । शालीनतया प्रत्युत्तर विनयेन नयेन च समर्यादमेव ददौ । दीक्षा ग्रहणानुमतौ तस्य सन्देह-लेशावकाशोऽपि नाभवत् । नैसर्गिकरूपेणास्थावानसो जज्ञे । तस्यस्वसंकल्पे ऽसीमविश्वास आसीत् । कस्त विचालयितुं क्षमः ?? सर्वथात्मविश्वासेनैव जगज्जीयते । इत्थवनराजस्य सर्वविधान्यस्त्रशस्त्राणि कुण्ठितानि जातानि । अत्र विषये तस्य सर्वोपि प्रयासो वैफल्य जगाम ।

अखण्ड ब्रह्मचर्येऽद्भुता शक्तिरवलोक्यते । अनेन सकलमपि संसाधयितुं शक्यते । तदर्थमिन्द्रियनिग्रहोपि विधीयते । जवाहरस्य शैशवकाले एव सर्वाणीन्द्रियाणि सर्वथा निगृहीतान्यासन् । वैराग्यावस्थातस्त्यागभावना विवर्धमाना दृश्यतेस्म । सचित्तजलपान पूर्वमवत्यक्त जातम् । तदनन्तर तेन सचित्त वनस्पति भक्षण रात्रि भोजनचापि त्यक्तम् । शनैः शनैः रसनेन्द्रिये निगृहीते तेनाजन्माऽखण्डब्रह्मचर्य प्रतिश्रुतम् । यथा निर्दिष्टमास्ते शास्त्रेषु जयोद्घोष पूर्वकम्:—

अगनवेदी वसुधा, कुल्या जलधिः, स्थलीच पातालम् ॥
वल्मीकश्च सुमेरुः कृत–प्रतिज्ञस्य वीरस्य ॥

आत्मोन्नतौ त्यागशीलता बहुधाऽपेक्षिता जायते । सर्व दर्शनेषु चेयं समान रूपेणस्वीकृता विभाति । जैनधर्मस्य तु वर्तत इयमाधारशिलैव । अनयात्मनि द्रढिमाऽऽसाद्यते । एकस्मिन् सत्यागिते सर्व समाधित भवतीति । यैः रसनेन्द्रिय जितम् तै सर्वमेव विजितम् । एन विना ब्रह्मचर्यपालनं दुष्करमेव । यथा कथने सारल्य तथावर्णितयैव परिपालने काठिन्यानुभूतिरेव करायिता जायते । ब्रह्मचर्यस्य महिम्ना वर्णन कर्तुं नो पार्यते । धार्मिकसामाजिकसमग्रक्षेत्रेषु सर्वाधिष्ठितिभिरिन्द्रियसयमा जीवन विकासस्यकृते परमोपयोगो आस्ते । यथा यथा [illegible] जातम् तथैव तस्यानरतिः परिवाराज्जाता । [illegible] गृहे भोजनमपि त्यक्तम् । अन्य श्रावक सदनेष्वेवाभ्यवहर्तुमुपचक्रमे । [illegible] वैराग्यवर्धन साधुगोष्ठ [illegible] जातम् ।

## शैशव प्रतिभाः–

[illegible] जन्मजातम् । तद्दायभागे [illegible] मन्तव्यम् । स शश-

वादेव तीव्र प्रतिभासम्पन्नः प्रत्युत्पन्नमतिरास्ते: कस्यापि कथमपि प्रश्नस्योत्तर प्रदानं भवतोविशिष्टाविशेषतासीत् । अत्रविषये उदाहरणमेकं पर्याप्तं भविष्यति ।

एकदा स विप्रपण्डितस्य भवने प्रपद्य स्वजन्मपत्री दर्शयामास । तदैवतत्र पण्डितात्माराम आजगाम । स राज्यस्यासीत् विशिष्टाधिकारी । मातुलस्य मित्रकारणात् जवाहर: पूर्ण तं परिचिनोतिस्म ।

जवाहर:—कमपि विशिष्ट ग्रहं निर्दिशन्तु भवन्तो यो हि मम भागवतीदीक्षायाँ सहायको भवेत् ।

आत्माराम:—/सव्यग्य/ कि त्व "ढूंढिया" साधुर्भवितुमिच्छसि ? किं त्वं जानासि तेषामुत्पत्ति. कथ जाता ?

जवाहर:— बाढम् ? अहतथैव भवितुं वाच्छामि । ब्रुवन्तु श्रीमन्त: तेषां समुत्पत्तिम् ??

आत्माराम:—महात्मनो गोरक्षनाथस्य शिष्यद्वयमभवत् । एकस्य नाम मच्छेन्द्रनाथोऽपरस्याभिधान पारसनाथ: । एकदा गुरुः शिष्यद्वयं भक्ष्यमाहर्तु प्रैषयन् । तौप्रभूतमभ्रमताम्, किन्तु भिक्षा नैवासादिता । एकत्र वणिक् पक्तिरभवत् । पारसनाथ: आयातस्तत्र भैक्ष्य चायाचत । पक्तिसविधे एकामृता वत्सतरी पतितासीत् । वणिग्भिरुक्त मृताम्इमा कर्ष्ट्वा दूरमपनय । तुभ्य शोभन पक्वान्नं मिलिष्यति ।

तदा पारसनाथ· तामन्यत्र निनाय । तदनन्तरं वैश्यै: प्रभूत पक्वान्नं दत्तं यदादाय पारसनाथो गुरुसमक्षमाययौ ।

ततोमच्छेन्द्रनाथो रिक्तहस्त: प्रत्यावृत्त: । गुरुगोरक्षनाथेन स वहुधिक्कृत: । पारसनाथश्च प्रभूतं प्रशसित: । तदैव मच्छेन्द्रनाथेन पारसनाथश्य रहस्यम्उद्घाटितम् । वत्सतरीवृत्तान्तं श्रुत्वा गुरुभि: पारसनाथो निष्कासितो निजमडलीत: । शापोऽपिदत्त. । त्वया येषा वत्सतरी समाकृष्टा । तेषामेव त्वया गुरुणा भाव्यम् । तदनन्तरमेव "ढूंढिया" मतं लोके प्रवर्तितम् । अस्या: घटनाया: स्मृतिस्वरूपे ते साधवोहस्तयो: गोपुच्छसमानं रजोहरणम् तथान्भतुल्यं पात्र रक्षन्ति । कि त्व तस्य पारसनाथस्य शिष्योभवितुममिलषसि ??

जवाहर:—पण्डित महोदय ! त्वमपूर्णामेव कथा कथयसि । अत्र कथायावहुवृत्तमवशिष्टम् । यदिभवेदाज्ञातदाहं तत्सर्वं पूरयित्वा कथयानि । पण्डितमहोदयस्य पर्यनुयोगे स उवाच । आसीच्च वत्सतरी गौरवपूर्णा । पारसनाथस्तां समाक्रष्टुमेकाकी नो वभूव क्षम: । तत्र सहायकं मच्छेन्द्रनाथं विदधौ । पक्वान्नलोभे सोऽप्यागत्य कर्षणेलग्न. । मच्छेन्द्रो मुखदिशि तथा पारस: पुच्छप्रदेशे गृहीत्वा दूरमपनीतवन्तौ । आगतयोर्वणिजोऽवदन् । अस्माभि: केवलं पारसनाथायैव पक्वान्नं प्रदातुं प्रतिश्रुतम् । मच्छेन्द्रनाथाय नेति । इत्थं कथयित्वा तै: तस्मै पक्वान्नं नैव दत्तम् । अनेन मच्छेन्द्रनाथोऽप्रसन्नो जात: । स गुरुसमीपमागत्य

निन्दन चकार । क्रुद्धं गुरुं दृष्टवा पारसनाथेनापि तस्य सर्व रहस्यमुद्घाटितम्। गुरुर्मच्छेन्द्रोऽपि चुकोप । अद्यारम्य त्वं ब्राह्मणाना गुरुः सम्पन्नः । अस्मात् पापात् तव हस्ते जपकाले गोमुखी भविष्यति । तस्या अन्त्राण्येव यज्ञोपवीतरूपे गले धारयिष्यसि । स्नानकाले च दुर्गन्धिमपनेतुमेव स्वकीयं यज्ञोपवीत नितरा प्रक्षालयन्ति च । गवा पुच्छेत्रयस्त्रिशत् कोटि देवानानिवासोमतोविप्रैः । तस्या अन्त्रेषु अमृतस्थान परिकल्पितम् । एतदगद्वय गोशरीरे परमपवित्रं मन्यते । एतत् विपरीतम् तस्याः मुखमपवित्रमेव मन्यते । येन साऽमेध्यपदार्थानपि भुङ्क्ते । अन्त्राणि अपूतानि सन्त्येव । एतद्द्वयम् विप्राणा दायभागे—समुपलब्धमिति भवन्त एव विमृशन्तु द्वयोरशोभन किमिति ।

तस्य प्रत्युत्पन्नमतित्वेनोत्तर श्राव श्रावम् अवागभवदात्मारामः । यद्यपीय कल्पिताकथास्ते । नास्त्यत्र किमपि तथ्यम् । पर जवाहरस्य कल्पनाशक्ते प्रतिभाया अनयानुमान कर्तुं शक्यते । शैशवे तथाकथित महता पुरस्तात् किमपि कथन साहसस्यैव महत्कार्यम् । अत्रोत्तरप्रदाने स्वकीया नैसर्गिकप्रतिभैव तेन व्यक्तीकृता । इष्टिकाया उत्तर प्रस्तरैर्दातव्यमिति स कलया जानीतेस्म ।

जीवनोन्नतेरिदमेव रहस्यं ज्ञातव्यम् । पद्मपलाशमिव स गृहे न्यवसत्। परं तस्य वर्तमान परिस्थितौ सन्तुष्टिर्नासितरम । अगारादनगारता प्राप्तु कस्यचिदुपायस्यान्वेषणे कटिबद्ध आसीत् ।

एकदा स पितृव्यतनयेनोदयराजेन सार्ध दमोहनगरे प्रस्थितवान् । शाकटिकोप्यासीत् । पथि अनायासमापगाऽगता । तत्र प्राप्तौ सत्यामन्धकारः प्रावर्तिष्ट । नद्या वृषभौ अवातीर्णौ; किन्तु तत्तर्तुं नो शेकाते । सर्वोपिप्रयत्नः व्यर्थोजात. । पार्वत्यापगाया तदानी वारिनोऽभवत्; किन्तु प्रस्तरबाहुल्यम् आसीत्। भयावह विपिनम् ? तिमिरततिसमन्विता रजनी विस्तृतासीत् ? प्रस्तरमयमार्गे प्रतिपद शकटस्खलनस्य सभावना विद्यते स्म । जवाहरः पचदशवर्षीय आसीत्। शाकटिकोऽपि समवयस्कएव । पल्लीवसतिकारणात् लुण्ठनस्य भयविरतिर्नाभवन् । शकट निरसारणे त्रयोऽपि अत्यन्त प्रयतितवन्तः; किन्तु साफल्य नैवासादितम् । जवाहरमन्तरेण तौ तारस्वरेण रोदितुमारब्धवन्तौ; किन्तु जवाहरस्तु जीवने रोदितुं नाशिक्षत । विपत्तौ तस्य सर्वथा धैर्यमेव जनैरदृश्यत । सः सर्वथा शान्तः सन् नर्याः धैर्यमेवाधारयत् । कथितवान् च व्याकुलतायाः नायमवसरः ? शकटम् अत्रैव नो स्थास्यति । तत् निरसरिष्यति शीघ्रमेव निस्सरिष्यति । इति उक्त्वा वस्त्रं परिधाय यष्टिका परिभ्रामयन् भिरलवसतिमुपाजगाम । तत्र तस्य परिचित एकोभिल्लो न्यवसत् । तमेव आहूवातुम् एकाकी अन्धकारे प्रस्थितः ।

हिंसकपशुसमाकीर्णभयानके विपिने रात्रिसमये अर्धगव्यूति यावत् निर्भये परिगते भिल्लवसतिमासादितवान् । परिचितभिल्लः उच्चैराहूतः । त स्ववृत्तान्तम् अश्रावयत् । पारिश्रमिकं प्रदातु प्रतिश्रुत्य सहैव तमानिनाय । परिचितभिल्लेन सह अन्ये कतिपये भिल्लाः आगताः। तेषा साहाय्येन शकट सरिदुत्तारे आसीत् । रात्रौ तत्रैव विश्रम्य द्वितीय दिवसे तेदमोहनगर समायाताः ।

सहयायी स्वकीय कार्य परिपूर्य प्रत्यावृत्तः । जवाहरो लिमड़ी स्थानेमुनिराज द्रष्टु समगमत् । चातुर्येण तदर्थम् एक पत्रम् पितृव्यः शाहजी प्यारचन्द सरपच द्वारा प्रेषितवान् । "त्व थादलां प्रत्यावर्तस्व । दीक्षार्थमाज्ञा प्रदानस्योत्तरदायित्व मदीयमेवास्ते । साभिप्रायिकं पत्रमुपलभ्य स जन्मभूमिप्रदेशमागतः । यदा स दीक्षार्थमाज्ञा ययाचे । तदा तेन सर्वथा प्रतिषिद्धम् । प्रतिभूरपि किमपिकर्तुं नो शशाक । विवशो भूत्वा जवाहरोऽवसरं प्रतीक्षमाणस्तस्थौ तत्रैव । अल्पीयसी निराशा प्रादुर्भूता; किन्तु सत्संकल्पे कापि न्यूनता नागता ।

## पुनः पलायनम्:–

ग्रामे कस्यचिद्रजकस्य गृहे पालितोऽश्वोऽभवत् । जवाहरो ग्रामान्निर्गन्तुं पचभीरूप्यकैः तं भाटकरूपे चकार । तेन प्रतिश्रुतं स आमध्याह्नं नौगावा सस्तिट प्राप्नुयात् तत्रैव जवाहरोपि चातुर्येणावसरमुपलभ्य समेष्यति । दिवाकर प्रकाशमये दिवसे स गृहतत्याज । प्रस्थितः सन् पन्थानं विस्मृतवान् । अन्य दिशिच गमन जातम् । मार्गे मिलितेन केनचित् परिचितेन पन्थाः प्रदर्शितस्ततो जगाम स प्रतिश्रुतस्थाने । आपगामुपसृत्याश्वमारुह्य लक्ष्यं प्रति प्रतस्थे । कियद्दूरे गतेसति रविरस्तं गतः । पार्वत्यप्रदेशस्य सकटाकीर्णं लघुमार्गम्विहाय लम्बमार्गमनुसर्तुमेव निश्चिकाय । मार्गे कस्यचित् क्षेत्रे रात्रौ विश्रम्य प्रातः काले पुनरग्रेसरो बभूव । यदा सगन्तव्य स्थलमाप तदातत्र धनराजःपूर्वत एवोपस्थितोऽभवत् । स वारवारं निषिषेध । परं कोपि प्रभावो नो जज्ञे । भूयोपि स इत्थं निवेदयामास । पश्याहं वृद्धः संजातः । तव मातुलस्य सदने कोपि कार्यकारी पुरुषो नावशिष्यते । तस्य परिवारस्य भारः कस्योपरि भविष्यति । मातुलस्यावोध तनय कस्याधिकारे दत्वा प्रव्रजसि ? तस्योत्तरदायित्वं सर्वथा त्वयि वर्तते । तं विहाय पलायनन्तु कायरतेवास्ते । धर्मस्तत् नो शिक्षयति । यदा ससूनुः स्वावलम्बी भवेत् । अहंच कीनाशनिकेतनातिथिर्भवेम तदा तव स्वेच्छया प्रवज्या समीचीना भवितुमर्हति । अतो भद्र पुरुष ! ममवचांसि मत्वाद्दुराग्रह च परित्यज्य भवनं प्रत्यावर्तस्व । इत्थं तेन प्रभूतं निवेदितम्, किन्तु तस्य कृतसंकल्पे कोपि प्रभावो नो पतित. । तेनेत्थं प्रत्युत्तरितम्:–

गार्हस्थ्यप्रपन्चे पतितुमहं नोऽभिलषामि । प्रव्रजितुं ममवर्तते सर्वथा नगायितोऽभिलाषः । ममदृष्टौ सासारिक वैभवं सर्व तृणायितम् । जीवनमपि नास्ति विश्वसनीयम् । अद्यास्ते श्वो नो भविष्यति । माता पश्यतो मे गता । तातपादोपि कीर्तिशेषोऽजनिष्ट । मातुलोऽपि तावनुजगाम । इमाः सर्वा घटनाः ममसमक्षमेव जाताः । जीवने कथं विश्वसीमि । अस्या परिस्थितौ क्षणमात्रमपि समयहापनमसह्यमेव । यावदेव मानवो निजकल्याणेव्याप्रियेत तावदेवात्मकल्याणाय श्रेयस्कर मन्तव्यम् । मातुले दिवंगते तदात्मजस्य पालनपोषणेऽभवतामेवाग्रेऽपि तेभविष्यतः । सम्प्रति चाहं दीक्षामेव गृह्णानि । यदि मम निधनं जायेत तदा तस्य सरक्षा कः करिष्यति ? वस्तुतः कोपि कुत्रापि निर्भरोनास्ति । सर्वे स्वकृतकर्मणा भोगमासादयन्ति । अयन्तु नृणामस्ति महानहकारो यत्ते स्वान् पालकानभिमन्यन्ते । कोपि कस्यापिदैव परिवर्तितुन्नालम् । ममास विचारः क्षणिको नास्ति; प्रत्युत दृढात्दृढतरः । तत्र परिवर्तन कर्तुं प्रयासो निष्फलः । विवेकि पुरुषाणा कृते ससारे नास्ति किमप्याकर्षणम् इदं सर्व नीरसम् दु.खमयम्, क्षणिकञ्चेति । भवतामुचितमस्ति यद्भवन्तोऽवश्यमेव ममदीक्षार्थस्वकीयामाज्ञाम् प्रयच्छन्तु । अन्यथाहं ससारे स्थित्वा साधुजीवनमेव जीविष्यामि । वर्तते मम निश्चयोऽपरिवर्तनीयः । अशोभनमह किमपि कार्यं कर्तुन्नो सन्नद्धोऽस्मि ।

## साधुताभ्यास:—

आसीद्धनराजस्य जवाहरे सहजः स्नेहः । अस्मात्कारणादेवाद्यावधि दीक्षादान निषिद्धम् । अन्ते तस्य हस्ते निराशैव परिगता । तस्य प्रेम यदा राजसमासीत् । तदैव जवाहरस्य तत् सात्विकम् । अवसाने तस्य विजयो जातः । निराशोभूत्वा स थादला प्रति प्रतस्थे । जवाहरश्च साधु वृत्तिसमभ्यासं प्रारब्धवान् । सम्प्रति कस्यापिगृहे नोऽभुक्त । गोचरीसमाचारमेव नियतरूपेण विदधौ । शास्त्रीयमूलपाठमस्मरत् । स्तवकादीनामपि समभ्यासः सहैव प्राचलत् । कतिपय दिवसानन्तरमन्ये साधवस्ततो व्यवहरन्; किन्तु चरितनायकः तत्रैव स्थित्वा. मन् साधुसमाचारीकल्पेनैवाष्टौमासान्यावत् व्यतीयाय ।

## साफल्योपलधि:—

स तस्मिन्समये सततमित्थं चिन्तनमकार्षीत् । आत्मन् ! तवान्तरिकशत्रव आत्ममग्न विश्राम्यन्ति । तदा त्वं कातरोनो भविष्यसि । तत्परोभव । त्वदीयमनन्त बलम् वर्तते । क्षमतेयमनन्ता । संसारस्य सर्वाः शक्तयस्ते क्षमतासमक्षं नो स्थातुमलम् । तवशत्रवः तथ्यंप्रबलाः सन्ति किन्तु अजेयाः कदापि नो सन्ति । तान् जेतुं प्रयतस्व । विजयस्ते नितरां भविष्यति । उत्तिष्ठ, जागृहि प्राप्य वरान्

निबोध । आन्तरिकशत्रुनिवहविजये चालौकिकविभवसम्प्राप्तिर्भविष्यति । त्वं सनातन साम्राज्यस्य स्वामी सम्पत्स्यसे ।

अष्टमासं साधुवृत्तिसमाश्रयणानन्तरमपि यदाज्ञापत्र नोपरिलेभे तदात्मीय-स्वजनपरिजनसम्बन्धिना सकाशे पत्राणि प्राहिणोत् । यत्राज्ञाप्रदानाय निवेदन कृतमासीत् । पत्राणि सप्राप्य ते सर्वे चिन्ताचक्रमारूढाः जाताः । तदा सर्वे मिलित्वा पचायतन कृत्वा निश्चकुराज्ञाप्रदानाय । तदनन्तर धनराजेन बहुविमृश्याज्ञापत्रं प्रदातुं निश्चिकाय । पचायतने एवलिखितं जातमाज्ञापत्रम् । लिखित्वा च जवाहरान्तिके प्रेषितम् ।

## दीक्षा सस्कारः—

कर्मरहितावस्थाप्राप्तिः स्वकराधीनैव । संयमः केनापि रूपेणार्तिकरो नो, किन्तु सौख्यदायकोऽस्ति । विवेकपूर्वक सयमस्यपालनेन स चेहामुष्मिकलोके च शक्तिदायकोमतः । यदा तेनाज्ञापत्र प्राप्तम् तदा तस्यानन्दस्य पराकाष्ठा नासीत् । "शुभस्य शीघ्रमिति" न्यायानुसार मार्गशीर्ष शुक्ल द्वितीया स. /१९४७/ दीक्षाधारणमुहूर्तस्य कृते नियता विहिता । तदामन्त्रणपत्रादिक प्रहितम् । सहस्राधिकाः श्रावकास्तत्रसम्मिलिताः । महान् महोत्सवो जातः । धनराजः सम्मिलितः स्वय नाभवत् । तस्यात्मज उदयराज आगतः । नियतसमये अपारजनता-समूहे-मुनिः श्री घासीलाल जी महाराजः शिर.केशलुंचन पूर्वक महाव्रतान्युच्चार्य तस्मै दीक्षा ददौ । तदा स श्री मगनलाल जी महाराजस्य शिष्योऽभवत् । इत्थ चरितनायकस्य चिरकालिकाभिलाषः पूर्तिमगात् । मुनिस्वरूपमाधाय स स्वंकृतकृत्यं मेने । मानवजीवनस्य साफल्यद्वारमुद्घाटितं जातम् । शिरसि चिरान्निहितोभारो लाघवं परिजगाम । तस्य सयमसप्राप्ती रकस्य निधितुल्याऽर्जनि । दरिद्रस्य सदने कल्पपादपागमनमिव जातम् । हृदय सन्तुष्टि गतम् । अन्तरात्मनश्चापूर्वं शान्तिलाभः । एतदनन्तरमेव चरितनायकस्य जीवनस्य नवीन—प्रभातं जातम् ।

## प्रभुनिर्भयाँके:—

दीक्षानन्तर चरितनायकस्य जीवने आमूलचूलंपरिवर्तनमजायत । अत्र का भावना कार्यकारिणी क्षमासीत् । सा परोक्षरूपा यत्र तत्रागतैव । तस्याः स्पष्टीकरणमत्रविधीयते । मुनिजीवनधारणे तस्यासीत् किमुद्देश्यमिति तच्छब्देनैवाभिव्यज्यते:—

प्रभो ! यावन्मयि विद्यमानास्ते रिक्ततामयी काप्यपूर्णता तावन्मम

गार्हस्थ्यप्रपंन्चे पतितुमहं नोऽभिलषामि । प्रव्रजितुं ममवर्तते सर्वथा नगायितोऽभिलाष: । ममदृष्टौ सांसारिक वैभवं सर्व तृणायितम् । जीवनमपि नास्ति विश्वसनीयम् । अद्यास्ते श्वो नो भविष्यति । माता पश्यतो मे गता । तातपादोपि कीर्तिशेषोऽजनिष्ट । मातुलोऽपि तावनुजगाम । इमा: सर्वा घटना: ममसमक्षमेव जाता: । जीवने कथं विश्वसीमि । अस्या परिस्थितौ क्षणमात्रमपि समयहापनमसह्यमेव । यावदेव मानवो निजकल्याणेव्याप्रियेत तावदेवात्मकल्याणाय श्रेयस्कर मन्तव्यम् । मातुले दिवंगते तदात्मजस्य पालनपोषणेऽभवतामेवाग्रेऽपि तेभविष्यत: । सम्प्रति चाहं दीक्षामेव गृह्णानि । यदि मम निधन जायेत तदा तस्य संरक्षा क: करिष्यति ? वस्तुत: कोपि कुत्रापि निर्भरोनास्ति । सर्वे स्वकृतकर्मणा भोगमासादयन्ति । अयन्तु नृणामस्ति महानहंकारो यत्ते स्वान् पालकानभिमन्यन्ते । कोपि कस्यापिदैव परिवर्तितुन्नालम् । ममास विचार: क्षणिको नास्ति, प्रत्युत दृढात्दृढतर: । तत्र परिवर्तनं कर्तुं प्रयासो निष्फल: । विवेकि पुरुषाणा कृते संसारे नास्ति किमप्याकर्षणम् इदं सर्व नीरसम् दु:खमयम्, क्षणिकञ्चेति । भवतामुचितमस्ति यद्भवन्तोऽवश्यमेव ममदीक्षार्थस्वकीयामाज्ञाम् प्रयच्छन्तु । अन्यथाहं ससारे स्थित्वा साधुजीवनमेव जीविष्यामि । वर्तते मम निश्चयोऽपरिवर्तनीय: । अशोभनमहं किमपि कार्यं कर्तुन्नो सन्नद्धोऽस्मि ।

## साधुताभ्यास:—

आसीद्धनराजस्य जवाहरे सहज: स्नेह: । अस्मात्कारणादेवाद्यावधि दीक्षादानं निषिद्धम् । अन्ते तस्य हस्ते निराशैव परिगता । तस्य प्रेम यदा राजसमासीत् । तदैव जवाहरस्य तत् सात्विकम् । अवसाने तस्य विजयो जात: । निराशोभूत्वा स थादलां प्रति प्रतस्थे । जवाहरश्च साधु वृत्तिसमभ्यासं प्रारब्धवान् । सम्प्रति कस्यापिगृहे नोऽभुंक्त । गोचरीसमाचारमेव नियतरूपेण विदधौ । शास्त्रीयमूलपाठमस्मरत् । स्तवकादीनामपि समभ्यास: सहैव प्राचलत् । कतिपय दिवसानन्तरमन्ये साधवस्ततो व्यवहरन्; किन्तु चरितनायक: तत्रैव स्थित: सन् साधुसमाचारीकल्पेनैवाष्टौमासान्यावत् व्यतीयाय ।

## साफल्योपलब्धि:—

न तस्मिन्समये सततमित्थं चिन्तनमकार्षीत् । आत्मन् ! तवान्तरिकशत्रव आक्रमणं विधास्यन्ति । तदा त्वं कातरोनो भविष्यसि । तत्परोभव । त्वदीयमनन्त [illegible] वर्तते । क्षमतेयमनन्ता । संसारस्य सर्वा: शक्तयस्ते क्षमतासमक्ष [illegible] । नवशत्रव: तथ्यंप्रबला: सन्ति किन्तु अजेया: कदापि नो सन्ति । [illegible] प्रयतस्व । विजयस्ते नितरा भविष्यति । उतिष्ठ, जागृहि प्राप्य वरान्

निबोध । आन्तरिकशत्रुनिवहविजये चालौकिकविभवसम्प्राप्तिर्भविष्यति । त्व सनातन साम्राज्यस्य स्वामी समृपत्स्यसे ।

अष्टमास साधुवृत्तिसमाश्रयणानन्तरमपि यदाज्ञापत्र नोपरिलेभे तदात्मीय-स्वजनपरिजनसम्बन्धिना सकाशे पत्राणि प्राहिणोत् । यत्राज्ञाप्रदानाय निवेदन कृतमासीत् । पत्राणि संप्राप्य ते सर्वे चिन्ताचक्रमारूढाः जाताः । तदा सर्वे मिलित्वा पचायतन कृत्वा निश्चक्रुराज्ञाप्रदानाय । तदनन्तर धनराजेन बहुविमृश्याज्ञापत्रं प्रदातुं निश्चिकाय । पचायतने एवंलिखितं जातमाज्ञापत्रम् । लिखित्वा च जवाहरान्तिके प्रेषितम् ।

## दीक्षा सस्कारः-

कर्मरहितावस्थाप्राप्तिः स्वकराधीनैव । संयम केनापि रूपेणार्तिकरो नो, किन्तु सौख्यदायकोऽस्ति । विवेकपूर्वक सयमस्यपालनेन स चेहामुष्मिकलोके च शक्तिदायकोमतः । यदा तेनाज्ञापत्रं प्राप्तम् तदा तस्यानन्दस्य पराकाष्टा नासीत् । "शुभस्य शीघ्रमिति" न्यायानुसारं मार्गशीर्ष शुक्ल द्वितीया स. /१९४७/ दीक्षाधारणमुहूर्तस्य कृते नियता विहिता । तदामन्त्रणपत्रादिक प्रहितम् । सहस्राधिकाः श्रावकास्तत्रसम्मिलिताः । महान् महोत्सवो जातः । धनराजः सम्मिलितः स्वयं नाभवत् । तस्यात्मज उदयराज आगतः । नियतसमये अपारजनता-समूहे- मुनिः श्री घासीलाल जी महाराजः शिर केशलु चन पूर्वक महाव्रतान्युचार्य तस्मै दीक्षा ददौ । तदा स श्री मगनलाल जी महाराजस्य शिष्योऽभवत् । इत्थ चरितनायकस्य चिरकालिकाभिलाषः पूर्तिमगात् । मुनिस्वरूपमाधाय स स्वंकृतकृत्य मेने । मानवजीवनस्य साफल्यद्वारमुद्घाटितं जातम् । शिरसि चिरान्निहितोभारो लाघव परिजगाम । तस्य सयमसप्राप्ती रकस्य निधितुल्याऽर्जनि । दरिद्रस्य सदने कल्पपादपागमनमिव जातम् । हृदय सन्तुष्टि गतम् । अन्तरात्मनश्चापूर्व शान्तिलाभः । एतदनन्तरमेव चरितनायकस्य जीवनस्य नवीन–प्रभात जातम् ।

## प्रभुनिर्भयाँकेः-

दीक्षानन्तर चरितनायकस्य जीवने आमूलचूलंपरिवर्तनमजायत । अत्र का भावना कार्यकारिणी क्षमासीत् । सा परोक्षरूपा यत्र तत्रागतैव । तस्याः स्पष्टीकरणमत्रविधीयते । मुनिजीवनधारणं तस्यासीत् किमुद्देश्यमिति तच्छब्देनैवाभिव्यज्यते:—

प्रभो ! यावन्मयि विद्यमानास्ते रिक्ततामयी काप्यपूर्णता तावन्मम

विद्यते महती आवश्यकता भवदीयपादपोतस्य । यदाश्रयेणाहं संसारसागरात्पारं गन्तु समीहे ।

प्रभो ! ममाशां पूरयितुं त्वमेवालम् । त्वदतिरिक्तः कोपि न पूरयितुं समर्थः । अतस्त्वच्छरणागतिमाप्तः । त्वत्स्वरूपं परिज्ञायैव त्वां हृदये स्थापितवानस्मि । मानसंच मनोज्ञमन्दिरं विदधे । प्रपलाय्याहंते चरण शरणमुररीचकार । विकारविषधरेभ्यो नितरा परिपाहि । स्वमूर्ध्वगामिनं द्रष्टुं समीहा। प्रगतिमहालक्ष्यदिशि निरन्तरं प्रयाणमभिकामये । मयि तादृशी शक्तिमाधेहि यया ऽधोगामी नो भवानि । तथा च प्रलोभनैराकृष्टोपि नो भवेयम् । यदि भवान् मम कायस्यकवचस्थानीयो भूयात्तदा मम दैवं द्वेषविषयतां यायात् । संसारवासना कामनाः मां सर्वदा परिकर्षन्ति । ततोऽवनाय भगवच्छरणमेवाद्वितीयोपायः । यदि त्व मा निजशरणे संरक्षेस्तदा मम कुतोऽपि भूरिभीतर्नोस्यात्। त्वमसि प्राणाना प्राणाः । सर्वातिशायीपरमप्रेयान् । तवयदिमहतो महन्महो मयि निपतेत् तदाहमनन्त शक्तिशालीभवितुं शक्नोमि । तदैव सांसारिकाः वासनाः मूलतोऽपगच्छेयुः । स्वकोयान् कानपिरश्मीन् ममदिशि निक्षिपेः । यैर्ममान्तःकरणमुद्भासितं जायेत । पूर्वोक्तप्रदर्शितविशिष्टभावनाभिः प्रभोरंकमेवासादितुं चरितनायकः कामयांचक्रे ।

## मुनिजीवनारम्भः—

परीषहोपसर्गेषु विजयासादनं मुनिधर्मस्य प्रधानमंगमास्ते । शैत्यातपबुभुक्षापिपासादयो नितरां परीषहाः साधुजीवने पर्यायेण युगपच्चायान्त्येव । तैरर्दितो व्याकुलितो मुनिर्धर्मस्य परिपालनं विधातुन्नालम् । मुनिजवाहरेण दीक्षाग्रहणानन्तरमेव परीषहसहनं प्रारब्धम् । दीक्षादिवसेऽपि तस्य स्वास्थ्यं समीचीनं नासीत् । नवीनसाधुजीवनगुरुताविचार—कारणात् मस्तिष्कं भारायितं भवेन्नाम।

दीक्षाग्रहणदिने एवान्यसाधुभिः साकं विहृत्य ग्रामाद्बहिर्महादेव—मन्दिरेऽतिष्ठत् । शैत्यं सम्यक् परिमाणे प्रारब्धमेवासीत् । मन्दिरस्थानप्रकोष्ठमनावृत्तमासीत् । सन्निधावेव प्रसरन्ती सरित् । शीतलसमीरैः संश्लिष्टशरीरं सर्वेपथुसम्पन्नम् । दीक्षायाः प्रथमो दिवसोऽभवत् । वलीयस्यप्यात्मनि वर्ष्मसौकुमार्यविलसिनम् । पुनर्हैमन्तवातैस्तच्चकम्पे । महोच्चाभिप्रायकारणात् गृहीतदीक्षो बालकोमुनिर्नोव्याकुलितो विव्यथे । व्यचिन्तयच्च । संयमिजीवनस्य वरीवर्ति प्रथमा परीक्षा । सामयायतिकृते सहर्ष सोढव्या । एभिरेवावसरैः परीषहसहने आत्मा व्याप्रियते । द्रढिमानंच लभते । स प्रथम परीक्षां साधुसमुत्तीर्णः ।

## अध्ययन विहारौः—

दीक्षितो मुनिः स्वकीयगुरोः श्री मगनलाल महाराजात् शास्त्राध्ययन

प्रारब्धवान् । तीव्रमनीषया शास्त्रीय विषयगाम्भीर्ये शीघ्रमेव प्राविशत् । रमरणशक्ति वैशिष्ट्यात् प्रभूता: शास्त्रीयगाथा: कण्ठस्थीचकार । तीक्ष्णबुद्धिस्मरणशक्तयोरनन्यनिष्ठाविनयशीलतयो: सम्मिश्रणमासीत् । हेतुभिरेभि र्ज्ञानवृद्धिनिरन्तरमजायत । ध्यान योगेन, श्रवणेन, विषयाधिकार: समजनि । साधुसेवायामासीत् नैसर्गिकी प्रवृत्ति: । एकाग्रबुद्धिशालिताम् भवत: सेवावृत्ति च दृष्ट्वा सर्वे साधवस्तत्र प्रसन्ना एवाभवन् । गुरुभक्तिरपियथाक्रमं समेधितैव जाता । ततोपि विहृत्यान्यान्यस्थानेषु क्रमश: सम्प्राप्तो जात: ।

## भगवत्स्मरणस्य दिव्यस्रोत:—

भगवन्नामस्मरण जीवने सर्वथा व्याप्तम् । तदेव—तस्य सर्वदा सर्वथा आत्मोन्नतिकारकमजायत । नामस्मरणमपूर्वशक्तिस्रोत: । आत्मन्यनन्तशक्तयो विद्यमाना: सन्ति । यदाता अविकसितावस्थाया भवन्ति तदा नामस्मरणं सहायक जायते । तदात्मविकासमामन्त्रयति । नामस्मरणमात्मिक—शक्ति—समुद्बोधनम् । यतोहि पूर्णविकसितात्मैव परमात्मा सम्पद्यते । तस्य जीवने नामस्मरण सदा जागरूकमतिष्ठत् । प्रातरुत्थायेश्वरस्मरणं भवतो नित्यकर्माभवत् । दैनिकप्रवचनारम्भे भक्तितन्मयतया प्रार्थनायां समाहितमानसो जायतेस्म । तदेत्थ ज्ञायतेस्म । यत् स तदेश्वरे सर्वथा समर्पित इव राजमानोऽभवत् । आत्मनिपरमात्मबलाधानेन हृदयदौर्बल्यमपगच्छति । आत्मज्योतिरेवाविर्भवति । चरितनायके सर्वदा सर्वथाऽनन्द दिव्य स्रोत: प्रवहमानम् आसीत् ।

ततो विहृत्यान्यत्र गमनेऽपि सदात्मचिन्तनं भवदासीत् । मस्तिष्क वेदनाभिभूते मानसेऽनेक प्रकारविचारा आगच्छन्तिस्म; किन्तु सदामर्यादाया: ध्यानमासीत् । कस्यापि पीडनकरमाचरणं कदापि नो विहितम् । शिरस: पाश्चात्यभागे केशापनयनस्यावश्यकता जाता । तदर्थ नापितो ऽप्याहूत; किन्तु सनापितद्वारा केशकर्तन कल्पानुसारं साधुन मेने । स्वयमेव लुचनं विधाय तत् सम्पादितम् । दीक्षानन्तरमासीदयं प्रथमलोच. । परं न जातम् किमपि काठिन्यम् । सर्वं कार्य सुगमतया सम्पादितम् । स्वयमेव सयमपालनस्य समीहा महती गाम्भीर्यपूर्णाऽसीत् । तदा तस्य धर्मदृढता सयमश्रद्धां च दृष्ट्वा तत्रत्या: समुपस्थिता: जनता: आश्चर्यचकिता: जाता: । नियतशिरोभागे प्लास्टरात्मकोपचार: कृत: । तदास स्थैर्येण शान्त: स्थितोऽभवत् । शिरस: सेटिकात्रयं पानीयं निस्सृतम् । तेन स मूर्च्छितोऽभवत् । शनै: शनै: सामूर्च्छा व्यपगता । क्रमश: दुर्बलतापि नष्टा । स्वस्थताऽयाता । मानसिकावस्थापि नीरोगा जाता । तेन सर्वेषामानन्दोर्मय: अजनिषत । मुनिश्रीमोतीलाल जी महाराजस्य हेतोरेव जवाहरस्य ज्योतिर्व-

लितम् । जवाहर निर्माणे ऽस्य मुनेर्वर्तते महान् योगः । यथायं मुनिरुच्चकोटि-तपस्वी साधुरासीत् तथैव सेवाभावी चापि । भवतः सेवापरायणतोच्चादर्शं स्थापयति । जवाहर मस्तिष्क वेदना समये श्रावकैर्निवेदितमासीत् । भगवन् ! एकाकी असि कथं करिष्यसि सेवाम् । असौविध्यं भविष्यति । अस्माक करे देहि जवाहरम् । वयम् नीरोगं कृत्वा पुनर्भवद्हस्ते दास्याम एनमिति । परन्तेनादिष्टम् यावन्ममदेहे, प्राणाः सन्ति । तावदस्य सेवाँ विधास्यामि । अन्यत्र समपर्णस्य कापि कथैव नास्ति । अस्यैवमुनेरधिकारेऽस्य रक्षा जाता । कठिनपरिस्थितावपि ससर्वथाविश्वस्तः सन् दृढ आसात् अस्य महानुभावस्य कृतज्ञतापूर्वकं चर्चां चरितनायकः सदाकुर्वन्नासोत् । इत्थं वर्तते तस्य स्वीकृतिरत्रविषये । तपस्वि-श्री मोतीलाल जी महाराजस्य मयि वर्तन्तेऽसीमोपकाराः ।

## प्रथम चातुर्मास्यम्ः—

यदा स नीरोगो जातः । मस्तिष्कं स्वस्थं सम्पन्नम् । तदा प्रथमचातुर्मास्यम् धारनगरे निश्चितम् । ततोऽध्ययनमपि समारब्धम् । शास्त्राभ्यासो जातः। सैव धारानगरीयम् यत्र भोजराजोऽजनि । तत्समयेतत्र शारदानिवास आसीत् । साधारणमानवा अपि काव्य कर्मणि व्यापृता आसन् । तत् क्षेत्रे चरितनायकोपि कविता कलां प्रति समाकृष्टो जातस्तदा नास्तिकिमप्याश्चर्यम् ?? तदा तत्र तेन जम्बूस्वामिविपये तथा महापुरुषाणां स्तुतावपि अनेकानि पद्यानि निर्मितानि । अनेनापि तस्यानन्दवर्धनंजातम् । सत्यमास्ते । काव्य—शास्त्र—विनोदेन महतां कालो गच्छति । एकत्रधर्मशास्त्राध्ययनमपरत्र च भाषाकाव्यनिर्माणास्वादनम् । भवानल्पीयसैव कालेन शोभनकाव्य—रचना—प्रकारे सफलो जातः । प्रतिभा काव्यनिर्माणे प्रधानं भवति कारणम् । सा चरितनायके पर्याप्तमात्रायामासीदेव । तथैव भवान् सरसमुगममंजुलकाव्य निर्माणे क्षमते स्म । तत्र जन्मजातेन प्रतिभावैभवेन तदापि चाशुकवित्व लेभे । कदाचित् व्याख्यान प्रसंगेऽपि स्व विरचितकविताभिः श्रावकानानन्दयतिस्म । भवतः सर्वा रचनाः भक्तिभावनापूर्णाः सन्ति, किन्तु शेषान्यान्यरसानामपि वर्तते समावेशः । पुस्तकोयज्ञानातिशयाभावेऽपि प्रकृतिपाठशालायां गम्भीरमध्ययनं विहितमासीत् । कवितायाः सम्बोधो वस्तुत आन्तरिकानुभूतिभिः सहैवास्ते । तत्रासीत् सर्वविधानुभूतेः साम्राज्यम् । महापुरुषेषु भवति चास्याः अनिवार्यरूपता । इयमेवानुभूतिशक्तिः कविषु, धर्माचार्येषु, राष्ट्रनेतृषु, समाज सुधारकेषु, दार्शनिकेषु, साहित्यकारेषु च विशेषतः कार्यविधायिनी मन्यते ।

## उग्रविहारः प्रकृतिदर्शनंच:—

जीवननिर्माणे यात्राया: महत्वपूर्णमास्पदम् । इयं शिक्षायाः प्रधानमंगं मता । साहसिकयात्राकारणादेव बहूनां यात्रिणां नामेतिहासेऽमरमजरं च विराजते । तेषां यात्रावर्णनं साहित्यस्यामूल्या सम्पत्तिरस्ति । भारतीयसंस्कृतौ यात्राध्यात्मिकपवित्रात्मिका स्मर्यतेस्म । श्रमणसंस्कृतौ तु तस्याः प्रभूतं महत्त्व कीर्तितं विद्यते । उग्रविहरण श्रमणानां कर्तव्य मतमास्ते । चातुर्मास्यातिरिक्तमेकस्थाने स्थितिः साधूना निषिद्धा वर्तते । विशेषावश्यकभाष्ये निदिष्टमास्ते । यद्भावी भविष्णुराचार्यो विभिन्नप्रान्तेषु विहरेत् । यात्रायाः महान् लाभ आध्यात्मिकविकासः । तत्रानेकाः परिस्थितयो विदधति पदाधान । समक्षक्वचिन्नगाः कुत्रचित् कलकलनिनादिन्य, आपगाः, कुत्रचित् शस्यश्यामलाधराः । अन्यत्र च गहनं विपिनम् । एकत्र सघनपादपालिः, परत्रच अत्यर्थ शुष्का मरुस्थली । यथैव श्रद्धा—भक्तिभारानता ग्रामीणाः जनास्तथैव नितरां क्रूरकर्माणो दस्यवोऽपि । यथासिंहव्याध्रादिश्वापदा मिलन्ति । तथैव वियति प्रभूत धराया स्तोकमुत्पतन्तो मृगशावकाः । एतैः दृश्यैर्भवति भूरिप्रकृतिज्ञानम्, समभावस्य भावना च । पदातिभ्रमणे प्रकृतिदृश्यं सूक्ष्मेक्षिकयानिरीक्षितुं लभ्यते महर्घोऽवसरः । प्रकृतिनिरीक्षणस्य परिणामेन प्रपातविषये भवतः सदुक्तिः सर्वथा ध्यातव्या ।

यदाहं निर्झरस्य समीपेनागतोऽभवम् यदा चोपैमि । यदा च ततोऽपैष्यामि सर्वदा तेन झर झर ध्वनिरुदीर्यते । राजा रंकः कोप्यागच्छेत्, प्रशंसेत्, निन्देत् च सतुसमरसेन स्वकीयव्यापारेऽनारत तिष्ठति । तत्र नो जायते किमपि परिवर्तनम् । तथैवाहमपि । स्वधर्म नो पर्यवर्ते । अत्र नोवर्तते रागद्वेषलेशाव काशः, तथैव मय्यपि भूयात् । धाराप्रवाहोप्यस्य महान् गुणः । सदा सर्वथा सा समानैव तिष्ठति; किन्तु मानवजीवने नो तादृशी स्थितिरिति महदाश्चर्यम् ? अन्याप्येका विशेषता वर्तते निर्झरे । या सर्वेपाकृते विशेषोपादेयास्ते । स सर्वं स्वकीयं जीवनं जीवेभ्योददानः सरिते समर्पयति । तथैव सहेत्वा सागरे च विलीयते । तत्र गत्वा स्वकीयं नामापि नो रक्षति । तथैव महापुरुषसंगत्या परमात्मप्राप्तिरपि सर्वैः समीहयताम् । चरितनायकेन साधारणप्रपातात् कर्तव्य—समता—भाव—धर्मपरायणता परमात्मस्वरूपस्यशिक्षा जगृहे । प्रकृतिः सदा समानरूपेण साहाय्यं विदधती तिष्ठति । इति साधिकारं वस्तुं पार्यते ।

पदातिविहारेण प्रकृत्या सहात्मीयभावना जागर्ति । बहुविषयकं ज्ञानं लभ्यते । प्राणिनां सदुपदेशदानस्य प्राप्यते स्वर्णावसरः । आसाद्यते च मानव स्वभावस्य पूर्णः परिचयः । भाषाजनस्वभावसमस्य—परिज्ञान जायते । पदाति—

भ्रमणेन कुरीतिनिरसनपूर्वकं सद्धर्मप्रचारः पार्यते । चारित्र्य दृष्ट्यापि तथा विधानमनिवार्यताकोटिमाटीकते । सर्वदैकस्थानेस्थित्या विशेषतो मोहजागर्तिरेवासाद्यते । अतएव जैनसाधूना कृते नवकल्पिविहारः अनिवार्यो मतोऽस्ति ।

धारचातुर्मास्यसमाप्त्यनन्तरं प्रारब्धश्चोग्रविहारः । स्वसाधुजीवन-समये मरुस्थली-मेदपाट-मालव-मध्यभारत-गुर्जर-सौराष्ट्र-महाराष्ट्र प्रान्तान् पावयामास । हरियाणेन्द्रप्रस्थोत्तरप्रदेशेषु च पावनदेशनाधाराः विशेषतः प्रवाहिताः। जैनसाधु कठोर मर्यादा पालन-पूर्वकं इयान् विस्तृतोग्रविहारः भवादृशकर्मधर्मवीराणामेव कार्यमस्ति । अनेन भवत्साहसिकता, सहिष्णुता, विषयेऽनुमातुं शक्यते ।

## आचार्याशीर्वचोग्रहणम्:-

रतलाम नगरे श्री श्री १००८ पूज्य श्री उदय सागर जी महाराजाः व्यराजन्त । चरितनायकस्तेषा दर्शन विधाय स्वं भाग्यशालिनममंस्त । पूज्या भवतः कविताः श्रुत्वा व्याख्यानशैली प्रतिभा च दृष्ट्वा ऽत्यर्थमुमुदिरे । तैरित्थमाशाप्रकटिता । अय मुनिरग्रे सर्वथोत्कृष्टसाधुर्भविष्यतीति पूज्याशा वरदानरूपायितासती चरितार्थाऽजायत । निरन्तरप्रगतिकारणात् स संसारे सर्वथा दिदीपे । पूज्यपादाः इत्थं प्रभाविताः संजाता यत् शास्त्रज्ञस्थविरमुनीनां विद्यमानतायामपिभवन्तमेव व्याख्यातुमामन्त्रयन्तिस्म । गुणैरेव पूज्यते नरः न विद्यया नापि पौरुषै. न च लिगै र्नचवयोभिः । भवतो बुद्धिमत्तां, तर्कशक्तिं, प्रतिभा च विलोक्य भाविन आचार्याः मुनिश्रीचौथमल जी महाराजाः कथितवन्त आसन् । अय बालको महान्प्रतिभाशाली भविष्णुरास्ते ।

रामपुरा (होल्करस्टेट) साधुभिः सहविहृत्य गत्वा शास्त्रज्ञश्रावकात् श्रीकेशरीमल जी सकाशात् आगमानामध्ययन प्रारब्धम् । अल्पेनैव समयेन दशवैकालिकोत्तराध्ययनाचारांगसूत्रकृताङ्गप्रश्नव्याकरणानि सूत्राणि सार्थानि पठितानि । अस्मिन्नेवानेहसि श्रावकसमाजे भवत. ख्यातिः पप्रथे । समये समये स्वव्याख्यानैरपि भवान् श्रावकसमाज सम्यक् प्रभावयामास । तदावधि व्याख्यातु सामान्यतया सम्यगभ्यासोऽजनि । भवतो वाचि स्वाभाविकं माधुर्य तथाऽजस्रासीत् । स्वतन्त्ररूपेणापि दैनिकव्याख्यानं प्रारब्धम् । तत्र नूतन शैली प्रारब्धा कृता तेन । प्राचीन-शैली-समर्थकाः रूढिगतवृद्धाः, नवीन विचारोद्भावना [illegible], नवयुवानश्च भवतोव्याख्यान समानरूपेणाभिलपन्ति । सर्वत्र धार्मिकप्रवचन श्रोतुं प्रभूतमात्रायां श्रोतारः समुपस्थिताः समभवन् । श्रावकास्तदर्थमाकृष्टाः जाताः । इदं सर्व प्रतिभा-चमत्कार आसीत् ।

नैवसह रोगापगमोपि जातः अनेनोपवासस्यमाहात्म्यं प्रकटितं जातम् । भवता नवीनानुभवउपवासस्य व्याख्यानप्रसगेन यदा कदाऽविर्भावितः । तपोऽग्नौ समग्रापवित्रता कल्मषमलीनता भस्मसात् जायते । तदग्निना तप्तात्मा हेमायते । अतस्तपोधर्मस्य वर्ततेपारो महिमा । यथाहारः शरीररक्षणार्थमावश्यकस्तथैवोपवासोपि तदर्थमनिवार्यः । उपवासेन कायकृशतायामपि तस्य कापि हानिर्नो जायते । तेन बहवो रोगा अपि निर्मूलमपगच्छन्ति । स धर्म साधनायाः प्रवलं साधनम् । अनेनेन्द्रिय निग्रहो भवितुं शक्नोति । भोजने नो प्रमदितव्यम् । अन्यथा तदर्थ दण्डाप्तिर्लभ्यते । अस्य व्याख्यानेऽनुभूतेरासीत्प्राधान्यम् । अनुभवे गम्भीरता तेजस्विता दृढता चाभिव्यज्यतेस्म ।

पूज्य श्री चौथमल जी महाराजः यदाचार्यपदं स्वीचकार । तदा सवयोवृद्ध आसीत् । नेत्रज्योतिः क्षीणमासीत् । विहर्तुमपि नाशक्नोत् । अतस्तेन विशाल सम्प्रदाय सचालनाय तथा निरीक्षणाय चत्वारः साधवोनियुक्ताः । यत्रास्माक चरितनायकोपि गृहीतः । प्रतिभा—सयम—परायणता—व्यवस्था शक्तियोग्यताकारणात् भवतो अत्र दिशिनिर्वाचनमभवत् । अल्पायुपि चेत्थ पद प्राप्तुं न शक्यते । तदापि स साधुसामाचारी विषयस्यपूर्ण ज्ञाता मन्येत स्म । उत्सर्गापवादमार्गयोः रहस्य पूर्णरूपेणाजानात् । व्यवस्था विषय—कौशलम् पर्याप्त प्राप्तमासीत् । आगमानुसार सयमपालनप्रतीतिः सर्वैर्लब्धैव जातासीत् ।

## नवीनाचार्यमहोदयस्यदर्शनम्:—

पूज्य श्री चौथमल जी महाराजस्याचार्यवर्यस्स निर्वाणेसति तत्पदे श्री श्री लाल जी युवाचार्याः आचार्य पद प्रपेदिरे । तेऽनेकस्थानेषुधर्मोपदेश विदधानाः इन्दौर नगरमुपागता. । चरितनायका अपि नियतचातुर्मास्यसमाप्य तत्रैवायाताः । नवीनाचार्यमहोदयस्य दर्शनेन सोऽत्यर्थ मुमुदे । तदनन्तरमाचार्यवर्यो धर्मजागर्तिकरणायोदयपुर प्राप्ताः । तत्र भवतां प्रभावशालिप्रवचनैरनेकधार्मिक कार्याणि सम्पन्नानिजातानि । भवता सदुपदेशैरेव मेदपाटस्य तत्कालिक—प्रधानमन्त्रिमहोदयः कोठारी श्री वलवन्त सिंहो जैनाधर्मं स्वीचकार । सर्वैर्विनयो विहितस्तत्रैवचातुर्मास्यसम्पादनार्थ, किन्तु आचार्यवर्येणोक्तम् । अस्माक चातुर्मास्यमत्रोचितन्नोप्रतीयते । वय भवतां कृते रत्न—पेटिकामिवमुनिजवाहरं प्रेषयिष्यामः । तदागमनेनात्रानन्दमगलानि जनिष्यन्ते । सर्वेराचार्यवर्यस्यादेश मेनिरे । धन्योऽस्मिमुनिजवाहर. । स्वकीय योग्यताप्रतिभाभिः आचार्यवर्यस्य मुखारविन्दात् प्रशंसापात्रं जातः । आचार्यवर्या अपिवन्याः येलघुसतः सद्गुणज्ञानुप्रशंसन्ति उत्साहयन्ति च । सत्यं सतां स्वभावो भद्रकुसुमकोमलानिर्वचनीयो भवति ।

आचार्यस्यादेशेन त्रिभिः साधुभि सहतस्य जातुर्मास्यमुदयपुरे जातम् । प्रतिदिनं प्रभावशालिप्रवचनैः श्रोतारः प्रभाविताः कृताः । यत्र श्रोतुममृतवचांसि जैनाः जैनेतरे हिन्दवो यवनाः पुरुषाः महिलाः बाला. वृद्धाः सर्वे समानरूपेण सस्नेहमायान्तिस्म । किसनगढ निवासी एको यवनवन्धुस्तु श्रोतुमुपदेश नियत-रूपेण प्रतिदिनमायातिस्म । भवतः प्रवचन प्रभावेण ससनातनो भवतोऽज्जनि । अहो ! आश्चर्यम् साम्प्रदायिकयुगेपि वर्तते कोपि सत्कारपूर्णः पक्षपातरहितः गुणग्राही ! तस्य यावती प्रशंसा कृता भवेत् सा सर्वाप्यल्पेव । तदा वातावरणे सदानन्दातिरेको बभूव । तत्रत्या प्रवचनश्रवणपरायणा धार्मिकी जनताऽमन्यत यज् जवाहरो वस्तुतोरत्नपेटिकास्ते । अत्रैव प्रसगे चरितनायकः श्री गणेशीलाल जी महाराजस्य कृते सम्यक्त्वरत्न ददौ । योहि भविष्यत्काले शासन-प्रद्योतको जातः । कस्येदं ज्ञानमासीद् यदय सम्यक्त्वधारी आयतौ कथ भविष्यतीति ।

तदनन्तरं ते सर्वे साधवो विहारे समभवन् । पथि पश्यतोहरा दस्यवो मिलिताः । साधूनाँ समीपे किमपि द्रव्यजातं नो भवति । ते भिक्षित्वा जीवनं निर्वहन्ति । संसारसम्पत्ति सर्पमिवभयावहा मन्यन्ते । अद्यादायापरदिनस्य कृते किमपिन रक्षन्ति । ते सर्वथा अकिचना एवभवन्ति । सविधे भवति सामग्री कियन्ति काष्ठपात्राणि, परिमितानि वसनानि शास्त्राणि च । तान् लुण्ठाकान् विलोक्य ते साधवो भयभीताः सन्तो नोऽकल्पन्त; किन्तु प्रकृतिस्था एवाजायन्त । यस्ययत्कार्य भवति सतु तदाचरत्येव तैरपि स्वकीयोधर्मः पालितः । साधूनाँ सामग्री यथाशक्यम् आत्मसात् चक्रुः । तदा कोमलवाचा चरितनायको जैनधर्मस्य तेषां कृते सम्यक् परिचयोदत्त । वय स्मो जैन-साधवः । किमपि धनादिकं नो रक्षामः । भिक्षामटित्वा जीवननिर्वाह कुर्महे । भिक्षार्थं पात्राणि, लोकलज्जा-निवारणार्थमेव वस्त्राणि, पठितुंच वहामः शास्त्राणि । एतदतिरिक्तमस्माकं समीपे किमपि नो वेविद्यते । भ्रातरः ! अस्मान् लुण्ठित्वा भवन्तः किं करिष्य-न्ति ? किंचलप्स्यन्ते ? अग्रे भवतां समीहा" ! मुनिप्रबोधेनेकोऽपह्तचोलपरम-ददात् । किमपि वासोगृहीत्वा तेऽन्यत्र दिशि गताः । साधवोपिनिर्भयाः सन्तः स्वसमीहितदिक्षु प्रस्थिता अभवन् ।

## वादप्रतिवादाधिकारः—

स्थानकवासिसम्प्रदायस्य विरोधी सम्प्रदायो वर्तते तेरहपन्थ इति । अस्य-मूलप्रवर्तको भिक्षुस्वामी कथ्यते । आरम्भे स स्थानकवासि सम्प्रदायस्याचार्यपूज्य-वर्यश्री रघुनाथ जी महाभागस्य शिष्योऽभवत् । कर्मोदयवैचित्र्येण तस्य मस्तिष्के कापि मिथ्याधारणा उदिता । तदपनोदायाचार्येण बहुप्रयतितं, पर किमप

प्रयोजन सिद्ध नो जातम् । अन्तेस सघात् पृथक कृतः । "मुण्डे मुण्डे मतिर्भिन्नेति" नवीनस्य सम्प्रदायस्योदयोऽजनि । एतस्मात्कारणादेव भारते मतपथसम्प्रदायाः अपरिमिताः वर्तन्ते । अयं सम्प्रदायो धर्मस्य मूलभूततत्त्व दयादाने नो मन्यते। मानवता विरुद्धविद्रोहमाचरति : अय भगवन्त महावीरस्वामिनम पि भ्रान्तं स्वीकरोति । जीवरक्षाविषयेऽपि वर्ततेऽवैज्ञानिको दृष्टिकोणः । जीवरक्षणं पापं मत्वा स धर्ममधर्मरूपे परिवर्तयति । अस्य सम्प्रदायस्याचरणेन चरितनायकस्य मानसं प्रभूत दून जातम् । अतएवास्य सम्प्रदायस्य मान्यतायाः विरोधं कर्तुं निश्चयं चक्रे । तत्सम्प्रदायस्य मुख्यग्रन्थ भ्रमविध्वंसनस्य 'सूक्ष्मेक्षिकयावलोकनं कृतवान्। निश्चय च चकार यदि जैन धर्मस्य वास्तविकं सिद्धान्त जनतासमक्षे आनयामि। तदा स सम्प्रदायो जैनशास्त्रविरुद्धसिद्धो भविष्यति । तदाकोपि कलंकपंको जैनधर्मस्य नाम्नि नोस्थास्यति । स्वोद्देश्यपूर्तिहेतवे परस्पर वादचर्चायाः विचारोऽजनिष्ट । परस्पर शास्त्रार्थेन वादे वादे जायते तत्त्वबोधस्योक्तिरपि चरितार्थभविष्यति । तदा चरित्रनायकेन सप्त प्रश्नाः प्रस्ताविताः । तानादाय श्रावकैः विज्ञप्तिः प्रकाशिता । ते च प्रश्नाः इमे सन्तिः—

१—दीक्षितं भगवन्त महावीरं भ्रान्तं भवन्तोवदन्तीति कश्चात्र शास्त्रीयपाठः ?

२—तेरहपथ साधु भिन्नाः अन्ये साधवः कुपात्राणि भवन्ति । एतेभ्यो दानमेकान्तपापमस्त्ति अत्र पाठः प्रदर्शनीयः ?

३—द्विचत्वारिंशत् दोषान् विहायाहारगृहीतृभ्यः प्रतिमा धारिश्रावकेभ्यः दोषरहिताहारप्रदाने पापमस्तीति विषये प्रमाण देयम् ?

४—साधोः कोपिमृत्युपाश ददौ । कोपि दयावान् तं मुमोच । त्वं द्वावपि पापे मनुपे । श्रद्दधासि चेति । अत्रविषये आगमपाठः प्रदर्शनीयः ?

५—गोभिरवरुद्ध किमपि स्थानम् । तत्र केनापि अग्निर्दीपितः । केनापि दयावता कपाटमनावृतम् । गावो वहिर्निर्गताः । तेषां तासां च प्राणाः सुरक्षिताः। त्व द्वितयमपि पापमन्यसे । अत्र पाठः निर्देष्टव्यः ??

६—असंयतिपोषणं पचदशं कर्मादानम् वदसि । शिक्षसे चेति पाठ आगमस्य प्रस्तोतव्यः ??

७—असंयतेः जीवनं नो एपितव्यमत्र पाठः उपस्थापयितव्यः ।

एतेषां प्रश्नानामुत्तरमर्हनायदेयम् । एतदतिरिक्ता अपि अनेके प्रश्नाः सार्वाजनिकाः ।

अन्ततो वादचर्चायै ते सन्नद्धाः नो संजाताः । प्रश्नानामुत्तराणि चापिनो प्रहितानि । वहोः कालादनन्तर प्रश्नोत्तरसमीक्षा नामकः पुस्तक प्रकाशितं तेरह-पन्थानुयायिभिः । यत्र सप्तप्रश्नानामुत्तराणि दातु चेष्टा कृतासीत् । यत्र दया-दानस्य निरसनमेवसमर्थितमासीत् तद् पुस्तकं दृष्ट्वाचरितनायकेन प्रत्युत्तर समीक्षा नामकं पुस्तक विवृतम् । श्रावकैः च प्राकाश्यं नीतम् । यत्र तेरह पन्थीय भ्रममयधारणायाः विस्तारपूर्वकं निरसन कृतं जातम् । अस्य पुस्तकस्य प्रतिविधानमद्यावधितैः नोकृतम् ।

तदनन्तर वालोत्तराग्रामेऽपि शास्त्रचर्चायाः अवसर आगतः, किन्तु ते ततोपि चातुर्येण पलायिताः । शास्त्रार्थे दीनात्मान कोहि पातयेत् । चरितनाय-कस्य प्रवचनात् धर्म रहस्यं परिज्ञय जनतानां कृते प्रभूतो बोधो जातः । बहु-भिस्त्यागप्रत्याख्यानादिक कृतम । कतिपयैस्तधर्मगुरु मत्वा कृतज्ञताऽविष्कृता । तदनन्तरमजयमेरुनगरेपि प्रतिपक्षिभिः सह चर्चाया आशा मजाता; किन्तु तदर्थ सयोगोनाभवत् । चौराणा कुतोभवति पादस्थैर्यशक्तिः ?

व्यावरनगरे चातुर्मास्य समाप्य चरितनायको मुनिश्रीः जयतारण स्थान-मुपागतः । तत्र द्वयोः वादप्रवर्तन जात । तत्रविजयश्रियमुपवृत्य स अनेक स्थानेषु-धर्मप्रचारमाचर्य वीकानेरोपनगर भीनासरमाजगाम । तदासएकोर्नात्रिशत् वर्षीय आसीत् । स्वभावतः शरीर सुन्दरम्, यौवनब्रह्मचर्यप्रभावैः तत्राद्भुततेजोलाव-ण्याभा विराजतेस्म । तपोभिः प्रभावः पराकाष्ठा गतोऽभूत् । भवति चाभूत पूर्वाऽकर्षण शक्तिरुत्पन्नासीत् । गौरोवर्णः, विशाले दीप्तिसमन्विते लोचने, उन्नत प्रकाशतेजोमय भालम्, सौम्य मुखमण्डलम् सर्वदा विराजमानमासीत् । तदेत्थमुपमीयतेस्म सूर्यस्य समग्ररश्मीनादाय कोपि राजकुमार एव दीक्षितो विभाति ।

शरीरसम्पदा सहैव भवतो वाचि पीयूषमाधुर्यसभृतमर्वातिष्ट । विचारे च मौलिकतासीत् । विषयप्रतिपादनस्यशैली रोचकसरलभावपरिपूर्णा मनोहारिणी चासीत् । कथानककथनस्यरीतिः सर्वथा नवीनासादिता । एतद्माध्यमेन सर्वो-च्चतत्त्वमपि वोधगम्य विधातु स सर्वथा समर्थोऽभवत् । अत्र यतिभि. सह विचारो मूर्तिपूजाविषये जात· । अनेन स्वपक्षस्थापन विधाय परपक्षस्य खण्डन साधु विहितम् । तत्कालिकसाधुश्रावकदृष्टौ चरितनायक. स्वसम्प्रदाये सर्वा-धिकतेजस्वी महापुरुष आसीत् । तत्र प्रमुख तेरापन्थिश्रावका अपि मुनिश्री-सविधे तत्त्वचर्चायै आगच्छन्त आसन् । कतिपयदिवसानन्तरम् तेषां ज्ञान जातम् । स्वसम्प्रदायस्य विस्मृतिमजानन् । ततस्ते तद्भक्ता अजायन्त । सयत्रैवोपाज-

गाम । तत्रैव सामायिकपोपधव्रतदानप्रत्याख्यानादिधर्मकार्यं प्रवृत्तमेवाभवत्। योहि तपस्तपति तस्य वाणी पवित्रा प्रिया समाकर्षिका च जायते । सभयोत्पादककक्लेशजनकपीडाकारकवाणीं नोच्चारयति । तद्वाचिभवत्यमृतमाधुर्यम् । तपसा मानस शारदेन्दुरिव निर्मल जायते । चक्रवर्तिभरतमहाराजस्य समीपे सर्वं बलानामासीत् साम्राज्यम्, किन्तु यदा स योध्दुमगात् तदा तपश्चरणं विधायैव। तपोबलेन सर्वंबलमतिरिच्यते । तपश्चरणेन देवा अपि पराजीयन्ते । तत्तपोऽभिभूतै र्जीवादैरपि व्रतमहिसाया: स्वीचक्रे । तदर्थ प्रतिश्रुतच । मुनिश्रियोऽप्रतिहतः प्रभावो बभूव । अस्य प्रवचनैः प्रभावितो भूत्वा श्री गणेशिलालो दीक्षा जग्राह। तद्रूपे तस्योत्तराधिकारिणः प्राप्तिरजनिष्ट । दीक्षानन्तरं मुनिश्रीः संस्कृतभाषाजैनशास्त्राणामध्ययनच प्रारेभे । यावनी भाषा पूर्वत एवजज्ञे । विशेष परिचयोऽग्रे सम्भवतो दास्यते ।

एकदा स चरितनायको विहृत्य भिल्लानां वसतिमुपाजगाम । तेषु सुरामॉस प्रचारः प्रभूतः आसीत् । ते देवीदेवानामुपासका अभवन् । नवरात्रप्रसंगे अजामहिषबलिदानमकुर्वन् । व्याख्यानं तत्र प्रारब्धम् । तत् श्रोतुं सप्ततिग्रामाणांग्रामण्यो नियतमायाताः । व्याख्यानस्य महान् प्रभावः पतितः । प्रभाविताः भूत्वा ते प्रतिश्रृतवन्तः । वयम् विजयदशमीसमये देवीदेवतासविधेऽजामहिपबलिदातं नो करिष्यामहे । अन्येषामपि तथाकरणात् निरोधमाचरिष्यामः । सर्वे ग्रामण्यः अंगुष्ठाक्षराणि दत्तवन्तः । प्रतिज्ञापत्राणि श्रावकेभ्यो विधिवत् समर्पितानि । तदा श्रावकाः एतत्पवित्रप्रतिज्ञासत्काराय सर्वेषा पटेलानां शिरःसु उप्णीषाणि बद्ध्वा प्रस्थापयामासुः । अनेन प्रवचनेनैकत्रानेकजीवाः परिरक्षिताः ।

श्वेताम्बरस्थानकवासिजैनसभायाः द्वितीयेऽधिवेशने भवतैतिहासिक प्रवचनमदायि । यस्य स्मृतिः मानसपटले अकिता विभाति । "भारतीयसाहित्ये कामधेनुकल्पना प्राचीन कालतएव विहिता वर्तते । तस्या वास्तविकं स्वरूपन्तु ज्ञातुं नो शक्यते यतो हिसा प्रत्यक्षनो दृश्यते । अतः प्रत्यक्ष कामधेनुविपये ध्यान देयम् । प्रत्यक्षमुपेक्ष्यान्धकारमयेऽतीते भ्रमण लाभदायक तो भवति । कामधेनुः चतुर्पु पादेपु स्थिताभवति तथैवास्माक सघोऽपि साधुसाध्वीश्रावकश्राविकासुचतुर्पु पादेपुचावलम्बितो वर्तते । एकपादस्याभावे तस्याः स्थितिः समीचीना नो तिष्ठति । तथैव एकस्य रुग्णेजाते सघोपि खजोभवितुमर्हति । प्रगतिहेतवे चत्वारोपि पादाः अनिवार्याः सन्ति। चत्वारोपि परस्परं सहायकाः सन्ति । यथा चतुर्भिः पादैः धेनुर्गतिमती भवति । तथैव सघोपि । कामधेनौ सामर्थ्यं भवति, यथा तृणानिजग्ध्वापि समीहित गोरस प्रयच्छति । तथैव संघोपि करोति ।

सत्यसुधारकरूपे यत् किमपि उवाच तत् सर्वथा मननीयमास्ते । यदापि भवतो व्याख्यानधारा प्रावहत, लोकामन्त्रमुग्धा इव सजाताः । शनैः शनैः तेजस्विव्याख्यातृरूपे समाजे स विख्यातोऽभवत् । स्थाने स्थानेमृगयामासाहारस्यप्रत्याख्यानं कृतंजातम् । इयमासीदभूतपूर्वालब्धिः ।

एकदा मुनिश्रीः कतिपयसाधुभिः सह विजहार । पथि क्रीडारताः बालकाः आसन्. । ततोनिस्सरत्सु साधुषु बालेनैकेन प्रस्तरमाक्षिप्यत । समीपस्थितेनैकेन नरेण दृष्ट्वाग्रामे सूचितम् । कतिपये श्रावका :तत् बालकस्यगृहं गत्वा तमानयन् । अभिभावकाः चिन्तामारुढाः । पचैः स बालकः दण्डयितुं निश्चितः । यदा मुनिश्रीः शुश्राव तदा प्राबोधयत् । अय बालको यदि वृक्षे प्रस्तरमक्षेप्स्यत् तदा फलप्राप्स्यत् । अस्मासु अश्मप्रक्षेपेण तस्य किमपि नोमिलितम् । इयमेव व्यथायाः कथा । इम यदि दण्डयेत् तदास्माक कृते तन् लज्जास्पदमेवभविष्यति । भवतां पचानाम् भावनेय प्रशस्ता । पर ममसमीहास्ति यदयबालः मोचनीयः । अहमस्य बालस्यात्मनः सुधारं कामये । चरितनायकस्योदारतायाः जनतायां महान् प्रभावो जातः । तत्रबालेऽपि जातः प्रभावः । येन मुनीन् प्रतितत्र श्रद्धा महती उत्पेदे । अपराधदण्डसौविध्येपि तददान महात्मना लक्षणमास्ते ।

## उरगस्य घटना

एकदा पर्युषण पर्वणि श्रावकैः पोषधाचरणं कृतम् । ते रात्रौ शयाना आसनुपाश्रये एव । अपर्याप्ते स्थाने सति तेऽन्यात्रापि स्वापमालेभिरे । तदा कृष्णसर्पस्तत्रागतः । श्रावकसविधे स्थितोऽभवत् । तिमिरेऽस्यागतस्यातिथेः कस्यापि ज्ञान नो जातम् । कस्यापि श्रावकस्य शिरःसन्निधौ सस्वागमनमसूचयत् । किन्तु स श्वशावक मत्वा सन्निकटे स्थितेन रजोहरणेनापाचकार । कस्यापि दृष्टिः तत्र न पपात । सस्वकीयमनादर मत्वापि न बभूवाप्रसन्नस्तस्मिन् । तिरस्कृतोपि तत्रैव नेदीयान् स्थितो जातः । यावत्प्रत्यूषमासनमास्थात् । कल्ये तत्र यातायादृष्टौ सर्वे भयान्विताः जाताः । सर्वे दूर गताः । परन्तु सर्पराजः शान्तोऽतिष्ठत् । कियत्कालानन्तर स अन्यत्रापसृतः । कोहिजानातु स क्वगतः । इमां घटनामादाय चरितनायकेन प्रवचने व्याख्यातम् । पर्युषण पावनावसरे विशेषतः पोषधप्रसगे भवतांजीवमात्रे समभावो भविष्यति । हृदयं द्वेषमालिन्यरहित भवेत् । अस्य प्रभावोऽहावपि पतितः । स भवता सन्निधावागत्य द्वेषवृत्तिं जहौ । यदा हृदये विपरीतभावना भवति तदैव तत्प्रतीकारमन्ये विद्वति । प्रेमपरिप्लवे जाते हृदये अपरस्यापि सावृत्तिः शाम्यति । इयमेवाहिंसाभावनास्ते ।

अस्यामेवेदृक्षी शक्तिरास्ते यया शाश्वतिकविरोधोपि शममेति । "अहिंसा प्रतिष्ठायां वैरत्यागः ।" यत्राहिंसा भवति तत्रवैरत्यागो विधीयते ।

## कृतान्तास्थे:—

एकदा विहारे चरितनायको रुजाकान्तो जात: प्रथमन्तुज्वराक्रान्तस्तदनन्तरं विषूचिकयार्दितोऽभवत् । प्रतिदिनमगणितवमनविरेचनानि प्रादुरभूवन् । नवदिनपर्यन्तमियमेव स्थितिरासीत् । कापि चिकित्सा सफला नो जाता । श्रावकै. सर्वैः जीविताशा त्यक्ताभवत् । अन्त्येष्टि सस्कारस्यापि प्रबन्धो विहितोभवत् । सर्वै. साधुभि. चारुरूपेण सेवा सम्पादिता । रोगवृत्त सर्वत्रैव विद्युत्प्रभेव प्रसृतम् । सर्वोऽप्युपचारो विफलताँगत: । दैवसयोगात् तत्र ग्रामे थादला-निवासी कोप्यगदकारो मिलित. । स अवोधयत् यन्मुनिश्रीर्मम ग्रामे चलेत्तदाहं सप्रतिश्रुत निरोग करिष्यामि । मुनिश्री: प्रभूतरूपेणनिर्वलोऽभवत् । चलितु नो शेके । कल्पानुसारवाहनेन गमन नैव विधीयते । अत. तत्रगन्तु शनै: शनैर्गमनमारब्धवान् । गणेशिलाल जी महाराजस्य साहाय्येन स्थित्वास्थित्वा चचाल । पादपस्याधस्तात् विश्रम्य विश्रम्य चाव्रजत् । मुनिद्वयस्य सेवावृत्या द्वितीयस्मिन् दिने चरितःनायक. थांदलाग्राममापत् । क्रमश: सार्धैकमास पर्यन्त भेषजसेवनै: सस्वस्थोऽभवत् । तेन सर्वे प्रासीदन् । कथयितु पार्यते यन्मुनिश्री. कृतान्तास्यादेव बहिराजगाम ।

स्वास्थ्यलाभानन्तरं विजहार भूयोपि । मार्गे स्वप्रवचनै कोलभिल्लकिरातानुगृह्णन् विविधग्रामानुग्राममुपदिशन् अग्रे अग्रे एव विजहार । सर्वप्रकारा. जनता: भवद्देशनाभि: लाभान्विताः संजाता । स यत्रैव प्रयातस्तत्रैव जनसम्मर्दोऽभवत् । व्याख्याने सर्वै: सह जीवादा अपि आयान्तिस्म । तेषामुपरि प्रभावोऽजायत । एकेन चतुर्दश्यामेकेनैकादश्यां जीवहिंसात्याग. प्रतिश्रुत: । तदा जीवदयानिमित्त कतिपयद्रव्यसग्रहोऽपि समाचारि श्रावकव्रजै: ।

## धर्मसंकटप्रसंगेऽपि दृढता:—

एकदा कस्यापि महाविद्यालयस्य चत्वार छात्रा: मुनिश्रीव्याख्यानप्रभावेण दीक्षां ग्रहीतुमुद्यता: जाता: । एतदर्थ मुनिश्रीसविधे वारं वारं प्रार्थना कृता । चरितनायकेनोक्तम्.—नियमग्रहण सुगममस्ति, किन्तु तत्पालन कठोरात्कठोरतमम् । ब्रह्मचर्यादिव्रतं श्रेयस्करमास्ते । तेनात्मकल्याणमपि सम्पाद्यते, किन्तु तत पूर्वं विमर्शनीय भवति यत्कृता प्रतिज्ञा परिपालयितु शक्यते नो वा । ईदृशोऽस्मात्तु कार्यकरणे पश्चात्पश्चात्ताप एव समाश्रीयते । महाविद्यालयस्यैष नियम आसीत्, यत् 'नियतसमयात्पूर्वं विद्यालयपरित्यागेन तदर्थ जातस्य सर्वस्यापि-

व्ययस्य प्रत्यावर्तनमनिवार्यमास्ते । एतदतिरिक्तं कोऽप्युपायो निर्गमनस्य नासीत् । एकेन पूर्णोऽपि व्ययः प्रत्यावर्तितः । अन्ये त्रयस्तथा कर्तुं नो समर्थाः जाताः । अतो निषिद्धा अपि ततो नियतं पलायिताः । तेन चरित्रनायकस्याप-वादो समाजेऽजनिष्ट । परन्तेन समनागपि विचलितो नो जातः ।

इद वृतान्त समाचारपत्रेऽपि प्रकाशित जातम् । अस्यां परिस्थितावपि मुनिश्रीर्विचलितो न। जातः । स्वकार्यनयमपालने सदा निरतो ऽभवत् । प्रबल विरोधेनापिचिन्ता नोसमजनि । तेन सहैव मुनीनामपि निन्दया द्वितीयो धर्म-सकटः समुपस्थितः । तदा स ऐच्छत् । "इन्दोरश्रमंसघो" पराक्ष्य निर्णय देयात् । येन मुनिजनापवादो विगतो भवेत् । श्रावकैस्तथैव कृतम् । सघेन निर्णयाऽदायि । मुनिश्रीर्निदोष एवासीत् । तथैव प्रमाणितापि जातः । स एको वारात्मासीत् । धर्मो भवति वीराणामेव नतु कदर्याणामिति । तस्य धर्मस्थैर्यस्य पक्षपातराहित्य-स्यापूर्वमेवोदाहरणमिदम् ।

अस्मिन्नेव काले महाराष्ट्रीय भाषायाः अध्ययनं सुसम्पन्नम् जातम् । इतोधर्मप्रभावनां सतत विधाय दाक्षिणात्यप्रदेशे गमनं विधातुं तत्परोऽभवत् ।

## दाक्षिणात्यप्रदेशप्रस्थानम्:—

दाक्षिणात्यप्रदेशे विहर्तुं श्रावकः भूयसो प्रार्थना कृतासीत् । भवतोऽपिसमोहासीत् तत्र विहर्तुम् । अतः स तत्र दिशि प्रस्थित । तदा भारते वर्षे आग्लाना क्रूरशासनमासीत् । ते स्वार्थपरायणाः लाभाभिभूताश्चासन् । घृणा-दृष्ट्या भारतीयानपश्यन् । नवीन जागरणस्य विराविनाशयास्थितिस्थापका एवाभवन् । भारतीयाः कामपिदशां गच्छेयुः स्वकीयहितसाधने कापि बाधाना-गच्छेत् । विश्वेतिहासेपि तादृश किमपि दृष्टान्तं नासीत् । वराकाः बुभुक्षिताः वानरसन्तानानि पदसात् कर्तुमेव पाटच्चराः देशमभिजग्मुन्तिस्म । तेषामत्याचारैः गगनमपि साश्रुजातम् । न्यायस्यासीत् नो कापि मार्गः । स्वार्थ परायणता जघन्या-दिदोषे । तदा भारते नवीना क्रान्तिरागता । राष्ट्रीय महासभायाः स्थापना जातासीत् । तस्याः कार्यविधौ जनतासहयोगः पर्याप्त आसीत् । तत् एव निसृत्य भारतीयक्रान्तिकारिदलमपि देशस्वतन्त्रतायाः कृते प्रभूतं सचेष्टं जातम् । पद्दलितो भूत्वापि देशः जागरितुमारब्धवान् । क्रान्तिकारिणा बलमपि समेधमानं वरीव-र्तिस्म । सुप्रसिद्ध क्रान्तिकारिवोरखुदीराम बोस महोदयद्वारागोलिकाप्रचालनैः देशेऽत्याचारस्य जनिरासीत् । शासकावैदेशिका पश्यतोहराः भयभीताः सन्तोऽत्-याचारपथे प्रवृत्ता अभवन् । देशस्य नवीनं जागरणं तेभ्योनो रुरुचे । इयं घटना अप्रत्याशितैवाभवत् । महदाश्चर्यं शासकानां मस्तिष्के बभूव । यत् सर्वेयाऽज्ञान

लोके निमग्नानां निर्धनानां भारतीयानां मध्ये एतादृशी साहस सम्पत्तिशक्तिः कुत उदिता । ते शिवस्वरूपात् केशरिणो जाताः कथम् । देशे सर्वथाऽशांतिवातावरणम् जातम् । आरक्षिणो विशेषरूपेण सतर्काः आसन् । चतुर्दिक्षु वातमजा इवाभ्रमन् । ते सर्वत्र सर्वान् खुदीरामबोसप्रतिबिम्बितान् इव ददृशुः ।

स्थानकवासिसाधवो दाक्षिणात्यप्रदेशस्य कृते सर्वथा नवीना एवासन् । भिन्नवेशं दृष्ट्वा शासकीया रक्षिणः निवासाहारादिविषये चरित्रनायकस्यासौविध्यमेव जातम् । परचिन्तामन्तरेण पदंपदमग्रे एवैधमानो जातः । स स्वकीयसिध्दान्ते नगायित आसीत् । विहारेनासीदवरोधः कथचनापि । आरक्षिप्रश्नानामासीदेकमेवोत्तर अनगाराणां नामान्तरेणापरं कि भवति सकेत स्थानम् ? पथि बहवोऽन्य सम्प्रदायविशिष्टसाधवो मिलिताः । तस्मात् सम्पन्नम् प्रमोदसन्तोषवातावरणम् । मध्ये कतिपये प्राडविबाकाः सम्यक् प्रबोधिताः । सूत्रकृतागसूत्रवाचनया तेषां जैनदर्शनज्ञानम् सम्पन्नम् । विविध शकाना समाधानं सम्पन्नम् । ते जैनधर्मानुयायिनोऽभवन् । चरितनायकस्य समुचिततार्किक युक्तिाभिरेव तेषां समाधान सम्पन्नम् । भवत: प्रभाव: सर्वजनेषु पपात । शिवाजी महाराजस्य जन्मभूमौ जुन्नेरनगरमपि स्वकीयपदाधानेन विभूषितवान् ।

## संस्कृतशिक्षाः—

स्थानकवासि सम्प्रदायेऽद्यावधि सरस्कृतभाषायाः पठनपाठने सम्यक् नो प्रचलिते आस्ताम् । व्याकरण साहित्य दर्शनाध्ययनेन विश्रुतपाण्डित्यसम्पादने रुचिर्नोदिता । बहवो विरोधिनोपि आसन् । प्राचीनरुढिग्रस्ताः श्रावकाः अनुकूला नासन् । अस्माक चरितनायकायेद नो रुरुचे । तस्य दृष्टौ मौलिकता प्रवाह आसीत् । कुरीतिरूढसस्कारैराकृतिः प्रकृतिविरुद्धैवासीत् । सयममर्यादापालने यथा कठोरोऽभवत् तथैव निराधार—कुरीति—समाश्रये कोप्यादरोपिनासीत् । अतएव तद् विचारे नवयुगस्याधानमजनिष्ट । जनताविवेकजागरणपूर्वक प्रकाशप्रदानम् कृतम् । सम्प्रदाये विद्वदाविर्भावनेन सामाजिकविरोधे सत्यपि स्वशिष्यान् सस्कृत पाठयितु प्रवचन्व । प्रत्येकोदर्कविशिष्टस्य नवीनस्योपादेयस्य विधेर्विरोधोऽज्ञानिभिः क्रियतेएव । पश्चात् सर्व साधु सम्पद्यते । । यदि श्रावको न मिलेत्तदा वेतनभोगिविद्वद्भिः कथं पठनीयम् इति प्रश्नः सदा समक्षमभवत् । परं तेन मुनिना सम्यक् समाहितोऽय प्रश्नः । त्यागी भूत्वा ज्ञानमर्जयेत् । अज्ञानेन नो किमपि सिध्यति । दीक्षा गृहीत्वा सम्यक् ज्ञानेन चरितपालने प्रवीणो भवितु शक्यते । साधुनामक्षणार्थ समाजोन्नतयेच त्यागिना ज्ञानमावश्यकम् मन्तव्यम् । स्वधर्मपालनार्थंम् प्रतिवादिप्रश्नाना समाधानं कर्त्तव्यमितिसंस्कृतज्ञानं परमोपादेयमास्ते । आगमेपि "अन्नाणी कि का ही किवा नाही सेय पावकम्" अज्ञानी वराकः किं

कर्तु शक्नोति। स कल्याणाकल्याणं, कर्त्तव्याकर्त्तव्यम्, धर्माधर्म च कथं जानीयात्। अध्ययनाध्यापने केऽपि सावद्ये कर्मणो नोस्तः। मर्यादया यदि गृहस्थादप्यध्ययनं कुर्यात्तदा मूर्खापेक्षयातत्र अल्पीयांस दोषाः सन्ति। प्रायश्चित्तादिभिः शुद्धिरपि विधातुं शक्नुयात्। यत्र भगवान् गृहस्थानां स्वकीयकार्यनियोगं न्यषेधत्। तत्र अल्पज्ञाना स्थितिविषयेऽपि तथैवास्ते। यथा बुभुक्षया मरणापेक्षया अल्पमृण कृत्वा जीवननिर्वाह उचितस्तथैव परतः पठित्वा विद्वद्भवनं तदर्थ प्रायश्चित्तग्रहण च साधूनामपिकर्त्तव्यमास्ते। समर्यतां नवागतनवीन युगस्य विशिष्ट विशेषतामज्ञाय धर्मसमाजयोः रक्षां कर्तुं नालम्। तदर्थमज्ञाननिवारण येनकेन प्रकारेणावश्यकम्। प्रवचनस्यास्य साधुप्रभावोजातः। स्वीययोः शिष्ययोः पाठनविषये निश्चयेन तयोः विद्याभ्यासोनिरन्तर चचाल।

समाजसुधारकार्य चरितनायकस्य कृतं विधानं प्राधान्यमुपगच्छति। तत्र भूतपिशाचदृष्टिदोषस्य मान्यतासीत्। अत्र विषये मुनिश्रीव्याख्यानं कार्यकारि सम्पन्नम्। वस्तुतो लोकाभिमतभूतादि किमपि वस्तु नास्ति। मानसिको भ्रम एव। अत्र भ्रमनिपातेन धर्मश्रध्दाच्युतिरेव लप्स्यते। कृतकर्मान्तरेण किमपि कर्तुं नो प्रभवति। धर्मश्रद्धोहि देवीदेवताभूतादिभ्यो भयस्य नो कापि वार्ता। व्याख्यानेन जनानां मानसिकभयमपगतम्। अत्र विषये बहूनि दृष्टान्तानि सन्ति येषामुल्लेखो नापेक्ष्यते।

## राजनेतॄणाँ सम्पर्कः—

सेनापतिबापटमहोदयस्य तत्रभवति भवति महतीश्रद्धासीत्। स परम देशभक्तस्तथा ब्रिटिश–वैदेशिक–शासनस्य विरोधी आसीत्। शासनं तस्मात्सर्वदा बिभ्यदासीत्। विदेशेऽधीत्य बैरिस्टर पदवीमाप। राजसेवानिस्पृहोभूत्वा जनसेवासमापृक्तो जातः। आग्नेयास्त्रनिर्माणं शिक्षित्वा भारते आगत्य बहवः शिक्षिताः तन्निर्माणम्। अतएव शासनस्य दृष्टिः सर्वदा तत्रासीत्। स मुनि महोदयस्य व्याख्यान नियमेन श्रुतवान्। तस्येत्थं विचार आसीत्। यदीयं ममधर्मपत्नी नो भवेत्तदाहं मुनेरस्य शिष्यतां यायाम्। तस्य दैनिकचर्यापि सेवाभावभृताऽभवत्। सेनापतेः सेवावृत्ति, देशभक्ति सारल्यं, प्रतिभां चविलोक्य मुनिमानसं मोमोत्तिस्म।

लोकमान्य–तिलक–महोदयः अहमदनगरे मुनिदर्शनार्थमागतः। तदास कारागारान्मुक्तोऽभवत्। ‘स्वराज्यमस्माकं जन्मसिद्धाधिकारोऽस्ति” इतिसिंहगर्जनाऽस्यैव महानुभावस्यास्ते। याभारतीयानां पथप्रदर्शिका सम्पन्ना। “गीतारहस्य” नामक ग्रन्थे जैनधर्मविषयेऽनेन निर्दिष्टम्:—गृहस्थो मोक्षं नो गच्छति। पूर्णज्ञानं प्राप्तुं संसारत्यागोऽनिवार्योऽस्ति। जीवनस्य लक्ष्यम् गार्हस्थ्यजीवनं

विहायैकमात्रं साधुजीवनस्वीकृतिरेवभवेत् । मुनीनाँ कृते सर्वथा निवृत्तिरेव मता। विधेयाचरणीयम् किमपि नास्ति । अत्र जैनधर्मस्य मूलदृष्टिकोणोस्पृष्ट एव स्थित: अत्र मुनिना व्याख्यातम् ।

नास्ति जैनधर्मो निवृत्तिप्रधान: सर्वथा । अस्य प्रकृतिरनासक्तयात्मिका वेषबाह्याचारा: वृतिरिव स्थिता: । वेशोनो मुक्तिकारणम् । कस्मिन्नपिवेशे-स्थितोऽनासक्तो मुक्तिसौधं व्रजति । निवृत्तिमार्गस्याभ्यासो विमुक्तिकारणम्। अत: "स्वलिंग सिद्धोपि" भवतीत्युक्तम् शास्त्रे । अनासक्तेरभ्यासाय साधुधर्मो निवृत्तिमार्गश्चास्ते । गृहस्थजीवनेऽपि योहि महापुरुष: आसक्तेरतीत: सर्वथा, स गृहस्थलिगे एव मुक्तिप्राप्तेरधिकारी भवति । मुक्तेर्यथा निवृत्तिरनिवार्या तथैव शुद्धप्रवृत्तिरपि । साधुवेशाभावेऽपि मोक्षा भवितुं शक्नोति । भरत महाराजचक्रवर्ती सम्राट् अन्त:पुरादर्शभवनेऽपिकेवलज्ञानं लेभे। तथैव मरुदेवी अपि । एतद् विषयेऽनेकान्युदाहरणानि सन्ति । येगृहस्थलिगा: सिद्धा: संजाताआसते । तत्रान्तरिकभावना प्रकर्षस्यैव परिणाम: । मोक्षगामिजीवेषु अन्यलिंगसिद्धभेदोपि वर्णित आस्ते । पूर्णाऽनासक्तिनिर्मोहावस्थां प्राप्त: कस्मिन्नपि वेशे कैवल्यप्राप्तुं शक्यते । अनासक्तेभावेनैव निवृत्ति: । अत: सर्वथा निवृत्तिस्वरूपे जैनधर्मस्य पूर्णपरिचयो नो लब्धुं शक्यते। जैनधर्मस्य मूलरहस्यं श्रावं श्रावं तिलक महोदय: परमप्रमोदमाप्त: । तेन तत: स्वभाषणे कथितम् । जैनवैदिकधर्मो द्वावपि परमप्राचीनौ । अहिंसाधर्मस्य प्रणेता जैनधर्मोऽस्ति। तस्य मुद्रा सर्वत्रांकिता विभाति। वैदिकधर्मेऽपि जैनधर्मो विजयी वर्तते । मुनिश्रीव्याख्यानेन मम महान् लाभो जात: ।

## मुनि—परीक्षणम्:—

यदा संघद्वारा पाठकमुनीनां विषये जिज्ञासाऽरब्धा । यत् तेषां पठनस्यपरीक्षापि स्यात् । तदा चरितनायकेन सास्वीकृता। नियतसमये तयो: शिष्ययो: व्याकरणे साहित्ये च विशिष्टप्राज्ञै: परीक्षाकृता । ताभ्याम् व्याकरणे महती सफलताप्ता । साहित्येऽपि प्रथमश्रेणी मिलिता । मौखिकपरीक्षाया शतप्रतिशतम् अंका: समासादिता: । सर्वै: तयो: सभाजना विहिता । अनया परीक्षया मुनीनां पाठनस्य पाठकस्य च सदुपयोगसिद्धि: श्रावकसमक्षे मता ।

## दुष्काल—साहाय्यम्

तदा दाक्षिणात्यप्रदेशे भयावहं दुष्कालमापतितम् । सहैव व्याधिप्रकोपोपि जात: । प्रतिदिनं बुभुक्षया तथा व्याधिना मानवानां मरणम् प्रारब्धम्। अस्य

विषयस्य करुणकथा मुनिमहोदस्य श्रुतिविषयतां प्राप्ता । कतिपयं त्यक्त्वा सर्वे मुनयोपिरुजाक्रान्ताः समभवन् । तदा तेषा सेवाभारः सर्वोपि चरितनायके तथा पन्नालाल जी महाराजे च स्वतः एवागतः । अहोरात्र स रोगिणा सेवायाम् तत्परो जातः । प्रभूतपरिश्रमेण मुनयो मुदा परिचरिताः । एकस्यपरिवारस्य सर्वैः जनैः बुभुक्षयार्दितैः सद्भिः विवशैः भूत्वा कूपनिपातेनात्महत्याविहिता । इत्थमनेके समाचाराः मुनिश्रुतिपुटमागताः अभवन् । तदा श्रुतेय हृदयविदारकघटना मुनिना व्याख्याने श्राविता । निर्धनानाँ करुणदशाया वर्णन–पुरस्सर दयादानस्योपदेशना विहिता । परिणामस्वरुपम् अन्यत आगतश्रावकैस्तथा स्थानीयैश्च प्रभूतो द्रव्यराशिरेकत्रीकृतः । तदर्थमन्नदानमपि पर्याप्तम् लब्धम् । अन्यापि विविधा सहायता समुपलब्धा । तत्र सर्वेषाँ सहयोगोमिलितः । तेन दुष्कालपीडितानाँ कृते भोजनालयः प्रारब्धः । निःस्वानाँ कृते निशुल्क भोजनं दीयमान जातम् । समोपस्थग्रामेषुघोषणा तदर्थ विहिता । प्रतिसमयं सम्भवतः सार्धशतद्वयस्य भोजनव्यवस्था कृताऽभवत् । वहवो दुष्कालपीडिताः नराः भोक्तुमायान्ति स्म । येषु कतिपये सप्ताहादेव भोजनविरहिता अभवन् । इत्थ समाजसेवापि मुनिना स्वकल्पानुसारभाचरिता ।

## युवाचार्य–पदवी–प्रदानम्ः–

तदा पूज्यश्रीश्रीलाल जी महाराजानाँ चातुर्मास्यमुदयपुरे समभवत् । रोगप्रकोपस्तत्रापि आसीत् । ते तीव्रज्वराकान्ता जाताः । तत्रापि तैः स्वदैनिककृत्यं कल्पानुसारं विहितमासीत् । महापुरुषाः स्वापेक्षयाऽश्रितानां चिन्ताँ विशेषरूपेण विदधति । तदा तैर्विमृष्टम् जीवनस्य कोहि विश्वासः । स्वल्पमेकमेव रुजाक्रमणमात्मसात् कर्तु सर्वथा क्षमते । रोगातिरिक्तमपि प्रभूतं साधन निधनस्य विद्यमानमास्ते । अस्मासुवर्तते सम्प्रदायस्य समागतोभारः । अतः कोपि योग्योत्तराधिकारी निश्चेतव्यः । येन सम्प्रदायो रक्षितो भवेत् । चतुर्विधसघस्य च साधना निर्विघ्नं प्रचलेत् । तदा तेषा दृष्टिः सर्वतोभावेन चरितनायके निपतिता । अयम् चिरकालात् दक्षिणात्यप्रदेशेषु विहरमाण आसीत् । कीर्तिश्च सर्वप्रान्तेषु प्रसृताभवत् । तैः युवाचार्य–निर्वाचनं मनसि धारितम् । श्रीसघसविधे स्वकीयविचारः प्रस्तुतः । यो हिसर्वैः श्रावकैः हृदाऽभिनन्दितः ।

अस्माक चरितनायकस्य समाख्यातिः सर्वत्र प्रसृता जाता । तस्य ज्ञानं दर्शनचारित्रम् च प्रसृतमासीत् । ओजस्विन्यावाचा, प्रखर–प्रतिभया, सयमेन विभिन्नगुणैश्च सर्वेपरिचिताः अभवन् । व्यक्तित्व चासाधारणमासीदेव । शारीरिकसम्पत्तिरपि सदेर्ष्याविषया ।

दाक्षिणात्यप्रदेशेषु यथाशिववीरस्य विजयवैजयन्ती दोधूयमाना जाता तथैव मुनिनापि धर्मपताकोद्दोलिता । ययानादिकालिक कुरीतयो जिता: । यदा युवाचार्यपदप्राप्ते: सूचना तडित्पत्रेण श्रावकैः समासादिता । तदा तत्र महती गम्भीरता दृष्टिपथमायाता । श्रीसघानुरोधेन दीयमानं महत्त्वपूर्णपदं स्वीचक्रे । युवाचार्यमहोत्सवस्य निश्चिततिथि:-रक्षितः । तत्र संमिलितुमनेके श्रावका: अन्यतोऽपिसमायाता: । अपर्याप्तेऽपि स्थाने सर्वे यथास्थान स्थिता: ।

## जातं तत्राचार्यश्रीणामुद्बोधनम्:-

प्राणिमात्रस्य जावनं क्षणभगुरमस्ति । कोऽपि स्व नित्य चिरस्थायिन नो वक्तु पारयति । वृद्धावस्थाया प्रत्येकव्यक्ति: तत्परो भवेत् प्रस्थातुम् । अद्यावधि निर्वाहितमुत्तरदायित्व परस्मैदत्त्वा सर्वान्सम्बन्धान् त्रोटयित्वा च ससाराद् गच्छेत् । उदयपुर चातुर्मास्यसमये रुजाक्रमणं जातम् मे शरीरे । तदैवाहमजानाम् यत् प्रस्थातुम् आह्वानमागतमास्ते । सन्नद्धोभवेयम् । दीक्षाकाले एव अस्माभि: सर्वोऽपि सम्बन्धो त्यज्यते जागतिकः । शरीरत्यागः साधूनां कृते ऽमगलस्य वार्तानास्ति । महाप्रस्थानस्य सदास्वागतमेव विधेयम् ।

ज्ञानदर्शनचारित्र समुन्नतये चतुर्विधसघ: सस्थापितो भगवता महावीरेण । संसारत्यागपूर्वक तत्र धर्मपरिवारे प्रवेशो विधीयते । तदाऽस्मासु किमप्युत्तरदायित्वमप्यापतति । यस्य समाजस्यान्नपानीये गृहीत्वा वयं धर्ममाराधयाम: । ये स्वकल्याणकामनयाऽस्माक भक्तिं विदधति । येषामाध्यात्मिकविकासोऽस्मासु निर्भरः तान् व्यवस्थापयितु सत्यमार्गनिर्देशनम्अनिवार्य कर्तव्यमास्तेऽस्माकमेव । भावियुवाचार्य ! ममविश्वासोऽस्ति यत्भवान् कर्तव्यनिष्ठया, ओजस्विवचोभि: प्रतिभया, प्रभावशालिव्यक्तित्वेनोत्तरदायित्वं निर्वोढु समर्थोऽसि । कारणेन च भवतोऽहिंसाधर्मस्य महत्व वर्धिष्यते । एतदर्थमेव भवन्तं युवाचार्य विधातुमुपक्रान्तम् । इत्यभिधाय स्वकीयंप्रावरणं तस्मायुपकल्पितम् । उपस्थितमुनिभिरपि तत्रकरावलम्वनं दत्तम् । आचार्ययुवाचार्यजयजयनादेन समग्रा संसद् गुंजिताभवत् । इत्य युवाचार्यपदप्रदाने जातम् ।

## युवाचार्यप्रवचनम्:-

प्रत्युत्तरे युवाचार्येणेत्थं प्रोक्तम्:-

आचार्यवर्येण समस्तश्रीसंघेन मयि योहि गुरुतमभारो कृपयाहितः । तस्यमहत्तया वहनं साधारणं कार्य नास्ते । विशाल-सम्प्रदायशासन-भारनिर्वाहः मादृशाल्पज्ञानिनस्य कृते दुरूहतम एव । तथापि संघसाहाय्येन तन्निर्वाहे यत्नं

विधास्यामि । मुनिमण्डलसहयोगमन्तरेण किमपि विधेयमनुष्ठातु कठिनमेव अतस्तेषां साहाय्यं विशेषरूपेणाभिकामये । अनयाशया, विश्वासेन चाचार्यवर्यस्य-समस्तश्रीसंघस्य चाज्ञां शिरसावहामि ।

"व्यवहारे युवाचार्यपदं सम्मानार्हम् मन्यते । धार्मिकक्षेत्रेऽपि वर्ततेऽस्य महत्तीयता । परन्तु स्वदृष्ट्याहतत् सेवकपदमेव निश्चिनोमि । अस्यपदस्य नेवा-निर्वाहिणात्मानं गौरवशालिनं मंस्ये । श्रीसंघदृष्ट्याऽहंकोपि भवेयम्; किन्तु स्व-दृष्ट्या केवलं संघसेवकमेव स्वं मन्ये । आचार्यवर्यस्यवर्तते मयि महानुपकार । यस्मान्मम कदापि नो भविष्यति मुक्तिसम्भावना । शास्त्राध्ययनस्य सर्वापि सुविधा मत्कृते दीयमानाभवत् । मम जीवनोन्नयनेभवता वरीवर्ति महत्वपूर्णो मनोयोगः । अत्रप्रसगे सत्यापयामि यत् श्रीसघस्य कल्याणं जिनशासनस्य सेवैव मम जीवनस्यैकमात्रं भविष्यति ध्येयम् । पावनसम्प्रदायस्य गौरवरक्षार्थं मनोयोगेन सर्वथा सदैवोद्यतः स्थास्यामि । इत्थं सम्पन्नः सुचारुरूपेण युवाचार्यमहोत्सवः ।

## पूज्य श्री श्रीलाल जी महाराजस्य महाप्रयाणम्:—

आसाढमासस्य अमावस्यादिवसे आचार्यवर्य—श्रीश्रीलालजीमहाराजस्य व्याख्यानकाले सहसा नेत्रज्योतिरवरुद्धम् । शिरसि वेदनाभवत् । अग्रिमप्रतिपदि-तिथौसर्वान् मुनीनाह्वयत् स्व—समीपे । शिरस्सु कराधानपूर्वकम् गदितवान् । मुनयः ! सयमदीप्तिरेव प्रधानं कर्म । परस्परं स्नेहेन भविष्यति युस्माक निवासः । युवाचार्यस्यादेशे विचरिष्यथ सुदृढधर्मा विशिष्टसयमी स वर्तते । मत्तोप्यधिक युस्माकं योगक्षेमकारकः । सः अह च एकस्यैव स्वरूपस्य स्वः । इत्थं परिध्येयम् । तस्य सेवा मनसा विधेया । सम्प्रदायस्य स्वरूपमक्षुण्णम् सस्थापनीयम् । शासनस्य शोभा सतत परिवर्धनीया । आत्मकल्याण सर्वथा सर्वदा समक्षं परिभावनीयम् ।

पूज्यश्रीः वदन्नेव विरराम । समीपस्थितानां मुनीना नेत्राणि जाता-न्यश्रुपूर्णानि । मृत्यु महोत्सव मन्वानाः मुनयोपि सरलहृदयसुयोग्यधर्मनायकस्ये-मांस्थिति विलोक्यैकबार विचलिता इव जाताः धर्मानुरागश्च चक्रेएतान् विह्व-लान् । तेष्वेको जगाद ।

पूज्य महाराज ! भवत आदेशोऽस्माक कृते सदा शिरोधार्यं एवाभवत् । सम्प्रत्यपि तथैवस्थास्यति । भवेन्नाम भवान्निश्चितः । अस्मान्बालकान् भवान् क्षमापयते । वयमेव भवन्तं क्षमापयामहे । प्रत्युपकारे किमपि सेवाजातमस्मा-भिर्नाचरितम् भवतः । भवान् वर्तते महापुरुषः । अविनयाशातनाकृते नियतं क्षन्तव्यम् भवता ।

क्षमापनाविधेरादानप्रदानस्म पश्चात् स स्वमनोयोगं पूर्ण विनिवृत्यो

त्तराध्ययनस्येमांगाथाम् उच्चचार ।

सुत्तेसु यावि पडिवुद्ध जीवो, न वीससे पंडिए आसुपण्णे ॥
घोरा मुहुत्ता अलं शरीरं, भारण्डपक्षीव चरेऽपमत्तो ॥

सदा जागर्तिशीलो विवेकी शीघ्रमतिः नरः जीवन नो विश्वसेत् । कालो भयावहः शरीरच निर्बलमास्ते । तस्यैकेनैवाक्रमणेन तत् छिन्न भिन्न च जाजायते । इद विज्ञायभारण्डपक्षीव प्रतिक्षणमप्रमत्तभावेन विचरेत् । पूज्यश्रीरित्थ स्वाध्याय विधाय आत्मनि लीनो भवन्नासीत् । अन्यमुनयोऽपि सहैव स्वाध्याये सम्पृक्ताः जाताः । विषादस्थाने गम्भीरशान्तेः वातावरणं विस्तृतमास्ते । आषाढ़ शुक्लाद्वितीयाया व्याधिरधिकांवृद्धिमुपागतः । अस्मिन् दिने स प्रतिक्रमणादिनियम पारयितु नो शेके । ततो मुनयो महत्या चिन्तयाश्लिष्टाः तस्या रात्रौ मारणान्तिकसलेखना पारिता । रात्रे-रवसाने प्रहरे ब्राह्ममुहूर्ते पूज्यश्रीरौदारिकशरीरवन्धन विहाय दिवंगतः । तज्जन्यशोकपारावरः सर्वतो दिशि महोर्मिलोऽजनि । युवाचार्यमहोदय एवाशाकेन्द्रीभूतस्तदा कर्णधार इव व्यराजत । स निजाचार्यस्वर्गवासवृत्तान्तं भीनासर नगरेऽधिजगाम । तस्याकस्मिकावसानेन तस्य महद्‌दुःख जज्ञे । सम्प्रदायस्य गुरुतममुत्तरदायित्वमागतम् । भवान् स्वजीवनस्यैकस्मिन्नवीनाध्याये प्रविष्टः ।

## "आचार्यजीवनम्"

पूज्याचार्यवर्यो भीनासरतः शोकाकुल उपावासावस्थायामेव वीकानेरनगरमुपागतः । तत्रैव च तद्वार्षिकचातुर्मास्यम् सम्पादितम् पूर्वनिश्चयानुसारम् ।

अज्ञान निवारणस्य प्रधानपथम् सुशिक्षाप्रचार मत्वा गुरुकुलयोजना समादिष्टा । तदर्थ वातावरणसमायोजनार्थ प्रवचनादिक विहितम् । तदनन्तरं जायमानाया श्रीसवसभायाम् गुरुकुलयोजना पारिताऽभवत् । तदर्थमेनेके सचालनात्मकप्रस्तावा अपि स्वीकृताः । उपादेयद्रव्यराशिरपि संचितः ।

## ::साम्प्रदायिक साधुसम्मेलनम्::

आचार्यवर्यं सम्प्रदायस्य साधूनेकत्रीकृत्य भाविसमुन्नते रूपरेखा निर्धारयितुमिच्छतिस्म । साधुसामाचारी पुनः व्यवस्थीकृत्य तत् सम्बन्धिनियमाः ध्यान [illegible]मानीता भवेयुः । चातुर्मास्यसमाप्तेरनन्तरं सम्मेलनमुदयपुरनगरे निश्चितम् [illegible]ानम् । सर्वे यथावसर संसूचिता । विहृत्य तत्र चत्वारिशंत् साधवः सम[illegible] [illegible]भवन् । मुनिश्रीगणेशीलालजी महाराजः दाक्षिणात्यप्रदेशतस्तत्राजगाम ।

आचार्यवर्योपि ग्रामानुग्रामं धर्मप्रचार्योदयपुरं सम्प्राप्तः । तत्रागत्य स साधुसामाचारी नियमान् तथान्यनियमांश्च बबन्ध । यान् सर्वे साधवः स्नेहेन मनसा च स्वीचक्रुः ।

## ।। यान्त्रिकवस्त्र–परिहारः ।।

आचार्यवर्योयदाऽजानात् यान्त्रिकवसनेषु वसा प्रयुज्यते । तदातेन न तद् निषिषेध । सर्वथा त्याज्य मत्वा तत्स्थाने हस्तनिर्मितपरिशुद्धखादिवस्त्रमुधृतम्, धारितम् च । इयं व्यवस्थाऽजीवन स्थिता । एतदर्थमनेकवारं स्वकीयप्रवचने चर्चितम् । यस्य समाजे महान् प्रभावः प्रपतितः। गौरांगभक्ताः बहवो भारतीया अपि स्वदेशिवस्त्रस्य वैरिणआसन् । येषु रतलामनरेशोप्यभवत् । इयं भारतीय जनमानससमापतनस्यासीत्पराकाष्ठा तस्मिन्नब्दे चातुर्मास्य रतलाम नगरे सम्पन्नम् । तत्राचार्यवर्यस्य धाराप्रवाहरूपेण प्रवचनंप्रारब्धम् । श्रोतुं रतलाम नरेशोप्यागात् । आचार्यवर्यस्य प्रभावशालिव्याख्यानं श्रुत्वा स विस्मितो जातः । स प्रभावशालिभिः शब्दैः वसानिर्मितवस्त्राणा हेयता. हस्तनिर्मितवसनानांचोपादेयताविषये व्याचख्यौ । तेन तन्नरेशस्य हृदयपरिवर्तनं जातम् । महात्मानः कि कर्तुन्नो क्षमन्ते । नरेशेनैतद्विषये स्वकीयाश्वासनमपि प्रदत्तम् । व्याख्यानंचभूरि भूरिभूयो भूयोपि प्रशसितम् । इत्थमुत्तरभारते विहृत्य तेनधर्म प्रचार्य च दाक्षिणात्यप्रदेशेषु पुनः प्रस्थानमकारि । पथि बहुधा परीषहसहनं जातम् ।

## ।। तत्र विविधाः उपदेशनाः ।।:–

सर्वबलेषु श्रेष्ठमास्त आत्मबलम् । इदमेव सत्यं बलम् । यस्य सविधे इदम् भवति । तस्यान्यस्य कस्यापि बलस्यनैव भवत्यावश्यकता । तदर्थमपेक्ष्यतेऽन्तःकरणस्यशुद्धिः । एतदर्थमहंकार दूरीकृत्य परमात्मशरणमुपगन्तव्यम् । ततः प्राप्तमेव बलम् भवति स्वात्मबलम् । आत्मबलिनः साहाय्य प्रकृति विदधाति । अनेकत्रस्थलेषु भवतः प्रवचनैः सार्वजनिकजीवदया मण्डलानि सस्थापितानि । गोपालनविषये भवतः प्रवचनमभूतपूर्वमेव जायतेस्म । तस्य करुणा भावना मानवसमाजस्यसीमानमतिक्रम्य प्राणिमात्रपर्यन्त परिव्याप्ताऽजायत । श्रीकृष्णः सर्वसम्पद्भिः परिपूर्णोऽभवत् । तथापि गोचारणव्रतं तेनधारितम् । इदमेवास्माक दृष्टान्तं भवेत् ।

भवतः प्रेरणया श्रीसंघेनैका एकता विज्ञप्तिः प्रकाशिता । प्रत्येकसमाजः स्वकल्पानुसारं सुधारपूर्वकमग्रे वर्धमानो विलोक्यते । साधुमार्गिसमाजेऽपि समुन्नतिकृते प्रयासः कार्यंएव । अत्र साधूनामपि स्वयमुपस्थितम् जायते उत्तरदायि-

त्वम् । अतः सर्वे प्रेमभावनया तदर्थमेकतां रक्षेयुः ।

## अ·पृश्यता–निवारण–प्रयासः :–

नासिकनगरे भवतो व्याख्यानम् अस्पृश्यतानिवारणविषयेऽत्यन्तप्रभावशालि सम्पन्नम् । धर्मभावनायाः वैशिष्ट्यमिद यत् मनुष्यमात्रं भ्रातृत्व मन्वीत । मनुष्याः परस्परं मन्यन्ताम् सहायकान् । द्विजातय इव शूद्राः अपि वर्तन्ते समाजस्योपादेयान्यगानि । तत्र घृणा कदापि नैव कार्या । समाजस्य सत्यसेवकाः कदापि प्रतारण नो लभेरन् । नो कदापि भवेदपमानं स्वकीयस्यैव महत्वपूर्णस्यागस्य । शूद्रा अपि भवन्ति समाजस्याधारशिलाः । एतेषामभावे नो स्थिरं स्थास्यति सर्वदा सर्वथा समाजप्रासादः । अन्त्यजा अपि स्वस्थाने सम्मानपूर्वकं रक्षणीयाः। तान् प्रतिदुर्व्यवहारः धर्मस्य सर्वथोलघनमेव । भवतो व्याख्यानेनान्त्यजैः सह घृणापूर्णव्यवहारोऽपगतः ।

कर्मविपाकात् वहुबारं भवान् रोगाक्रान्तोऽपि जातः । किन्तु समाजसौभाग्यात् नैरुज्यमपि अलभत । एकदामधुमेहस्य प्रकोपो जातः । तस्मात् कोपि स्फोटोप्याविर्बभूव । शल्यचिकित्सया स्फोटो विलयं गतः । मधुमेहस्यापि चिकित्सा विहिता । साफल्यमधिगतम् । तस्मिन्समये शून्यताकारिभेषजसेवनन्तथा मस्तिष्कमूर्च्छा विधातृप्रयोगमन्तरेण सम्पादितायाम् शल्यचिकित्सायामाचार्यवर्यस्य धैर्यमभूतपूर्वमेवादृश्यत । तदानुमीयतेस्म, यन्नासीत् शरीर विषयिणी कापि ममताऽवशिष्टा ।

आचार्यवर्ये वहवो विशेषताः आसन् । भवतः व्याख्याने नो भवतिस्म । कस्यापि सम्प्रदायस्यनिन्दाक्षेपः । विचारे जायते समतायाः समुद्धोपः । अतएव सर्वप्रवचनेन लाभान्विता. अजायन्त । सर्वत्रच जातो यशोविस्तरः । समाजसुधारविपयेपिभवता वहुव्याख्यातम् । वालवृद्धविवाहे, विधवाविषये, व्यर्थव्ययनिवारणे आभूपरणवस्त्रादिपु, अस्पृशोध्दारे चानेकत्र स्थलेषु व्याख्यातम्; पर साधुमर्यादायाः अतिक्रमरण कुत्रापि कदापि नो जातम् । जैनसमाजेऽपि भवान् सुधारस्य पक्षपाती आसीत् । धर्मविपये प्रसृतभ्रान्त प्रचारस्य भावान् सर्वथा विरोधकर्त्तासीत् । भवान् धार्मिकनुधारकः, समाजसुधारकः. धर्मप्रचारकश्चासीत् ।

## ।। मार्मिकवचसॉ प्रभावः ।।

साधुचर्या महती कठिनास्ते । निर्दोप–सयमपालनपूर्वक मुनीनां सर्वत्रविहारः नास्ति सुगमकार्यम् । तत्र पदातिगमन, द्विचत्वारिशत् दोपविवर्जनपूर्वकम् प्रासुकाहारादिग्रहणम्, समितिगुप्तिपालनम् सर्वत्र कठिनतमम् । तथापि साधवः

एतादृशस्थानेषुविहरन्ति । परीषहान्सहन्ते आनन्दयन्ति च । परम् विदुषां साधूनां वर्तते न्यूनता । तत्रापि अपरिचितस्थानेषु विहर्तृणां परिगणिता एव विद्यन्ते संख्या: । परिणामस्वरूपे वहूनि क्षेत्राणि तैरस्पृष्टान्येव तिष्ठन्ति । यत्र धर्मचर्चा कदापि नो जायते । एतदर्थं समाजे वर्तते आवश्यकता सुयोग्यविदुषां महाशील-गृहस्थोपदेशकानाम् ये स्थाने ग्रामंग्रामं धर्मप्रचारं कर्तुं शक्नुवन्ति । तथा जैनान् अधार्मिकभवनात् रक्षिष्यन्ति । जैन धर्मस्यमार्मिकस्वरूपं परिज्ञाय जनता-समक्ष स्थापनस्य वर्तते महती आवश्यकताऽस्मिन्युगे । एतद्विना धर्मप्रभावनायाः विशेषाशा कथ कर्तुं युज्यते ।

पूज्यश्रीणां व्याख्यानस्य विषय आसीत्:— श्रावकाणा द्वादश—व्रतानि. अस्पृश्यतानिवारणम्, वसायुक्तवसनपरिहार:, महारम्भिवस्तूना निषेध: ब्रह्म-चर्यमित्यादीनि । यैः व्यवतीना जीवनमुन्नत भवेत् । समाजस्य राष्ट्रस्य च परम कल्याण जायेत । इत्थं विश्वकल्याणमपि ससाधयितुं शक्यते । भवता व्याख्यान श्रोतुम् अन्त्यजा अपि आयान्तिस्म । व्याख्यानस्थाने तेषां सर्वे. सहस्थानुं स्था-नम् दत्तम् । प्रसगत: मांसाहारमदिरापानपरिहार विषये व्याख्यानं जातम् । तेन निष्ठ्यैः तद्व्यसनादिक सर्वथा परित्यक्तम् । महाविद्यालयीया: छात्रा: राजकर्म-चारिण:, राजवशीया:, च महतोत्साहेन तेषां व्याख्याने सम्मिलिता भवन्तिस्म तत् श्रोतुम् ।

एकदा भवतां व्याख्यानम् बीकानेरस्थराजकुमार विद्यालये (सम्प्रति पब्लिकस्कूल) विद्यार्थिनां समक्षे ब्रह्मचर्यविषयेऽभवत् । उपदेश: प्रभावशाली तथा मार्मिक आसीत् । तस्य श्रोतृषु गम्भीर: प्रभाव: पपात । स इत्थमासीत् । ब्रह्मचर्यस्य नो भवति सकुचितोऽर्थ· किन्तु निरुक्ति द्वारा तस्यार्थ: विस्तृतोऽस्ति । इद लक्ष्य मत्वा अखण्ड ब्रह्मचर्य मन्यते । सम्प्रति इद सर्वत्र दुर्लभमास्ते । तत्रा-द्भुता शक्तिर्भवति । अखण्डब्रह्मचारी कि कर्तुं नो शक्नोति । स सर्वाणीन्द्रि-याणि मनश्च वशमानयति । स द्राक् ब्रह्म साक्षात्करोति । अत्र सर्वथा वीर्य रक्ष्यते । अत्रैव सर्वशरीरमाश्रित्य वर्तते । नेत्रे वीर्यम्, कर्णौवीर्यम्, नासिका वीर्यम्, हस्तपादौवीर्यम् इत्थ सकलमेव शरीरं वीर्यम् । तस्य शक्तिर्नो विद्यते साधारणी । कथितमास्ते "मरण बिन्दुपातेन जीवनं बिन्दुधारणात्" । वीर्याधारे जीवन वीर्यनाशस्य फलं निधनमेव । योहि वीर्यम् वशमानयति । स सर्वमेवात्म-सात् विदधाति । तस्यमुखमण्डले विशिष्ट तेजो विराजते । तत्र कापि विशिष्टा क्षमता परिलक्ष्यते । "ब्रह्मचर्येण देवामृत्युमपाघ्नत" । ब्रह्मचर्यबलेन देवाअजरा अमरा: च अजायन्त । एतद्व्रतधारिणो मानवा: विलासपूर्णवसनाभूषणैः विर-

हिता एव तिष्ठेयुः । मस्तिष्के कुविचारपूर्णभावना सर्जकाणां साहित्यानामध्ययनाध्यापनं सर्वथा वर्जनीयम् । अस्य व्याख्यानस्य प्रभावो विद्यार्थिषु तथा अध्यापकेषु च यथासमीहितो जातः । सर्वत्र यथावसरं दीयमानं व्याख्यानं पूर्णरूपेणैतिह्यमेव सम्पन्नमास्ते । किं किं लिखाम । तेषां सर्वमेवानुकरणीयम्, व्यवहरणीयम्, अभिनन्दनीयम्, वन्दनीयं च । निष्कर्षो वर्तते व्याख्यानानाम्:—यदि वर्तते सत्यकल्याणसमीहा तदा वस्तुभ्यः स्वकीयममत्वमपगमनीयम् । इदं मम इतिबुद्धिरेव पापोत्पादयित्री । अस्याः हेतोरेव मानवैरीश्वरास्तित्वम् विस्मृतमास्ते । इदन्न ममेतिकथयित्वा स्वसर्वस्वस्य सर्वथा प्रदानेन अपगमेन च अहंकारस्य विलयो जायते । आत्मनिचापूर्वभाया उदयो भवति ।"

## राजनेतृसाक्षात्कारः—

समये समये भारतस्य राजनेतारः शासकाः लेखकाः कवयश्चाचार्यवर्यस्य प्रवचनस्य श्रवणेन लाभान्विताः जाताः । येषु श्री मदनमोहन मालवीय महाभागाः, सरमन्नु भाई मेहता महोदयाः, रामनरेश त्रिपाठिनः, सेनापति वापट महाशयाः सरदार वल्लभ भाईपटेलाश्चानेके शिक्षाशास्त्रिणो विद्वान्सः समाजसेवकाः लोकविश्रुता आसन् । कतिपयंवार तेरापंथिसाधुभिरपि तेषां सम्पर्को जातः । तेषां धार्मिकासंगतमान्यतासुधारार्थं सद्धर्ममण्डनार्थं यथासम्भवं प्रयत्नमपि चक्रिरे । वालोतरा—जयतारण—सुजानगढेत्यादिस्थानेषु तैः सह शास्त्रार्थं कृत्वा तथा व्याख्यानैश्च उपदिश्य तान् सन्मार्गमानेतुं बहुशस्तैः प्रयतितम्; परन्तु तदनुयायिनामश्रद्धां विलोक्याश्चर्यचकिता अपि बहुशोऽजायन्त ।

भावरुजाक्रान्तेषु करुणोद्रेकोऽपि भवन्नासीत् । पूज्यश्रीणां नवनीतसमकोमल मानसं दयादान विरोधिनां तथाकथितजैन मतावलम्बिनामज्ञानं दृष्ट्वा द्रवितं बभूव । तैस्तदुद्धाराय विचारितम् । परमिद कार्यं सरलं नासीत् । तदर्थमज्ञानान्धकारनिमग्नजनतासमुद्बोधोऽनिवार्यं आसीत् ।

स्थली प्रदेशस्तेषां रंगस्थली । अभेद्य दुर्गञ्चास्ते । पूर्वमेव निश्चितमासीत् यत्र गमने आगमिष्यन्ति प्रभूताः कठिनताः । पुनरपि जनकल्याणार्थं प्रेरिताः भूत्वाचार्यवर्याः तत्र प्रवेष्टुं निश्चिक्युः । एकदा भगवान् महावीरोपि विहृत्य अनार्यप्रदेशमुपाजगाम । महानुभावाः स्वकीयसुखदुःखादिकमुपेक्ष्य परोपकारायैव प्रयतन्तेऽस्म । स्थली प्रदेशोनास्त्यनार्यदेशः । तथापि तत्रत्याः तेरापंथानुयायिनो जनाः दयादानपरमेवापरोपकारादिकमधर्ममेव मन्यन्ते । आचार्यं वर्यास्तद् वसु-

वाकलंकपंकमपनेतुं समीहन्तेस्म । तत्रत्यानांकतिपयधर्मप्रेमिभ्रातृणामपि तदर्थमाग्रहोऽभवत् । तत्रत्याः स्वनामधन्याः अनेके श्रेष्ठिनोप्यागत्य तत्र विहारार्थं प्रार्थयांचक्रिरे । अतः ते तत्र महतोत्साहेन प्रस्थिताः । तत्र विहरणमशक्यप्रायमेव । विशुद्धमरुस्थलीयम् । सर्वतः सैकतराशिरेव प्रसृतो विभाति । सर्वर्तुषु वर्ततेऽत्रविविकटो विहारः । सर्वत्राप्रतिहतसमीरोऽपरिमित बालुकापुंज एव च मरुभूमिपथिकान्सत्कर्त्तुं सन्नद्धस्तिष्ठति । मध्यान्हे तस्य रूपमभूतपूर्वमेव जागर्ति । रवेरनावृतातपेन वालुका तप्तासती सर्वामेवस्वकीयामुष्णतां पथिकचरणयोः समर्पयितुमभिलषति । पदातीनां पथिकानां कृते तु किं वक्तव्यमवशिष्यते ।

स्थलीप्रदेशमुपागतेषु तेषुतान् प्रतारयितुं प्रभूताः योजनाः कल्पिताः परैः । परतासु किमपि साफल्यं नो भेजे । यथायथा विरोधोऽजायत तथा तथाचार्यवर्याणां वर्चस्वंदेदीप्यमानमवर्तत । समभावेन ते समानरूपेण गृहेषु भैक्ष्यमादातुमगच्छन् । परं कतिपयपाषाणहृदयैः तेरापथानुयायिभिः भिक्षायां प्रस्तरादिकमुपकल्पितम् । अपराणि जघन्यकृत्यान्याचरितानि । 'कथापिखलु पापानामलमश्रेयसे यतः" । तैः ख्यापितं यद्वयं वचसैवनो किन्तु व्यवहारेणापि दयादानपरोपकारसेवाविरोधिनः स्मः । स्थलीप्रदेशविहारे तैरनेकविधानि कष्टानि सोढानि । किन्तु "अंगीकृत सुकृतिनः परिपालयन्ति" इत्यनुसारं तेषां विहारे कापि बाधा सफला नो जाता । यथांधकारेण रवेर्महत्त्वं देदीप्यते । काचसन्निधाने मणिश्चकास्ति । तथैव खलसमीपे सन्तः पुरुषा अपि गरिमाणं सम्यक् लभन्ते । क्रयविक्रयवेलायाम् काचःकाचो मणिर्मणिरिति भणित्यनुसारं स्थलीजनतासमक्षे आचार्य वर्याणाम् महत्त्व जागरितम् । तत्रत्यैः जनैः सर्वथास्वीकृतमपि । तेषामुपदेशश्रवणे समीचीनोपस्थितिरजायत । गुणसमाकृष्टाभिर्जनताभिस्तेषामाचार विचारा. सर्वथाऽभिवन्दिताः । तेषां तपश्चर्या प्रारब्धासीत् । ते तेषामसभ्यशब्दावली स्तुति, तथा परीषहान् जीवनसाधनागानिमन्यन्ते । "लंकायां सर्वे रावणसमाना एव नासन्" । विभीषणानुकृतयोप्यासन् । तेषां व्याख्यानेन सरलहृदयाः जनताः विशेषरूपेण प्रभाविताः समभवन् । तेरापंथिनोपि सम्यक्त्वमाभेजिरे । जैनैतरेऽपि विशेषरूपेण प्रभाविताः समभवन् । जैनधर्मस्य सम्यक्प्रचारेण तस्य वास्तविकं महत्वमपि ज्ञातम् सर्वैः ।

स्थलीप्रदेशविहारानन्तरं भिवानी–रोहतक मार्गेण इन्द्रप्रस्थं प्रति प्रतस्थिरे । चिरात्तत्र सर्वाः जनताः प्रतीक्षमाणाआसन् । भक्त–भावनयाकृष्टाः सन्त-आचार्यवर्यास्तत्र समाजग्मुः । तत्र हायने तत्रैव चातुर्मास्यवासः सम्पादितः । तेन तत्रत्यसंघे कापि नवीनैव जागर्तिरायाता । उल्लासमयं वातावरणम् सर्वत्र

प्रसृतम् । देहली नगरमैतिहासिकं महत्त्व परिरक्षति । राजनीतेः केन्द्ररूपे तस्य ख्यातिर्जागर्तिस्म । तन्नगरं भारतीयवीराणां वीरतां दृष्टवत् । मुगलशासकाना वैभव विलास ददर्श । पाश्चात्याग्ल्न कूटनीतेरपि रंगस्थलीवभूव । तत् भारतस्य शासकमास्ते । राज्यशासनादेशस्ततएव निर्जगाम । तादृशानां जैनाचार्यवर्याणाम् तत्र चातुर्मास्य विशिष्टाघटनासीत् । तत्रत्यो वर्षाप्रवासोविशिष्टमहत्वं परिरक्षति । भवतां प्रवचनेन सर्वदैव जनसम्मर्दोऽजायत । प्रभावशालिव्याख्यानेन नगरे तत्र-भवतां भवतां कीर्तिश्चतुर्दिक्षु प्रसृता जाता । अनेकेराजनेतारोपि प्रवचनेषु समुपस्थिताः जाताः । येन तैः सर्वैः नवीनैव कापि प्रेरणा समुपलब्धा । तदानीं क्रान्तिलहरिका देशे सर्वत्र उद्वेलिताऽजायत । तदाऽसहयोगपूर्वकं सत्याग्रहान्दोलनम महात्मगान्धिमहोदयस्य नेतृत्वे महता वेगेन चलदासीत् । आचार्यवर्याः दूरदर्शिनस्तत्परिणामजानन् । तत्र तेषाँ शुभाशंसाशीर्ववाँसि च सलग्नानि आसन् ।

राष्ट्रीयान्दोलनस्य साफल्येऽहिसाधर्मस्य अभूतपूर्वो विजयो जनिष्यते । इति आसीत् तेषा द्रढीयान् विश्वासः । अस्मात् कारणात् ते स्वप्रवचनेषु राष्ट्रधर्मस्य साधुमर्यादया प्रभावशालिशब्दैः प्रतिपादन विदधाना आसन् । तेषा युगदर्शकतीक्ष्ण दृष्टेः सम्यक्परिज्ञान जायते । निःसन्देहं भवतां सदामरोपदेशश्चिरकालं भारतीयजनतानां पथप्रदर्शकः स्थास्यति । समग्रराष्ट्रेणसहैव स्थानकवासिसमाजेऽपि जागर्तेः नवीना लहरिका उद्वेलतिस्म । तदैवैतिहासिकं साधुसम्मेलनमपि सम्पन्नम् । तत्राचार्यवर्येण निर्दिष्टम् ।

सम्प्रति साधुसमाजे निरंकुशताप्रचारः दृश्यते । दीक्षासम्बन्धिनियमानापालन विधिवदेवकर्तव्यम् । अन्यथा नियमहीनतायाः दुष्परिणामोऽवश्य भविता । अत्रकारणमास्ते साधुहस्ते एव समाजसुधारस्य कार्यम् । अतः वस्तुतः समाजसुधाराय सर्वोऽपि अधिकारः कस्यापि तृतीयवर्गस्यैव अधीनतायां नियोजनीयः । अवश्यकरणीयमास्ते समाजसुधार–जातम् । साधुतापि सम्यक्पालनीयैव । तदा वर्तते "इतो व्याघ्रस्ततस्तटी" । साधोरपेक्षया समाजसुधारस्य कार्यम् श्रावकवर्गस्य हस्तेऽपि न निधेयम्; किन्तु तृतीयवर्गस्य हस्ते एव सम्यक् प्रकारेण देयम् । येन कार्यं सुचारुरूपेण चलिष्यति । अय वर्गः साधुमर्यादया परिवद्धो नोभविष्यति । नैव च श्रावककार्यवाहुल्यपरिदेवितोऽपि । अतः समाजसुधारकार्यं स्वतन्त्ररूपेण निर्वक्ष्यति । इय कापि विशाला योजनासीत् परं; पश्चात् समये अत्रविषयेऽस्मिन्नधिकं कार्यं नो जातम् । योजनेयं सदाजरामरा च स्थास्यति । अस्य प्रवचनस्य प्रभावः साधु पतितः । प्रवचनस्य सर्वत्र साधीयसी चर्चा प्रसृता । आचार्यवर्यस्य कृते दिल्लीजैननवेन जैनसाहित्यचिन्तामणिः, जैनन्यायदिवाकरः इति उपा-

धिद्वयं दातुं प्रभूतं निवेदितम्; किन्तु पूज्य श्रीद्वारा अस्वीकृतिरेवविहिता ।

यदाचार्यवर्यो दिल्ली नगर्यामासीत् तदा पारेयमुनं मानवाः सेवायाँ समुपस्थाय स्वक्षेत्रे पादानाधातुं प्रार्थयन्तेस्म । तत्रभवता भवतोरीकृतम् चातुर्मास्यसमाप्त्यनन्तरं तत्रदिशि विजह्रे । तदाराष्ट्रियान्दोलस्य वेगेन प्रगतिरासीत् । प्राय: सर्वेराजनेतारो निबद्धाः जाताः कारागारेषु । आचार्यवर्यस्य व्याख्यानानिराष्ट्रियतारागरन्जितानि सन्ति । धार्मिकतामयानिजातानि । श्रोतृषु जैनतदितरभेदभावोनाभवत् । सर्वविधाः जनताः व्याख्यानानि श्रोतुमायान्तिस्म । विशुद्धखादी परिधानम्, राष्ट्रियताञ्चितवाच. असीमजनतामानसेषु प्रभावान् च दर्शदर्श तत्कालिकगौरांगशासनं विशेषतो भयभीतमिवाजनि । आचार्यवर्यस्यरूपं नव्यभव्यनूतनराजनेता शानसनेत्रयोर्नो–अरोचत । शासनगुप्तचराः आचार्यवर्यस्य सेवायामनुजग्मुर्निरन्तरम् । इमा विषमपरिस्थितिम् ज्ञात्वा प्रभूनैः श्रावकैः प्राथितम् । भवताँ व्याख्यानम् केवलधार्मिकमेव जायेत । राष्ट्रियताकारणात् शासनं सदिग्धे । स्यादित्थ न भवेत् यद्राजद्रोहाभियोगे वन्धन सम्पद्येत । येन साधुकल्पे चिन्ताऽगच्छेत् । श्रावकजन मनसाँसम्भावनामाकर्ण्य आचार्यवर्याणाँ नादइत्थ प्रादुर्बभूव । अह स्वकर्तव्यम् सम्यक् निर्वहे । निजोत्तरदायित्वस्यापि वर्तते परिभानम् । अह जानामि धर्मः कोऽस्ति । अहमस्मि साधुः । अधर्ममार्गं नो परिसरामि । अहं स्वव्याख्याने प्रत्येकवाक्य विमृश्यैव मर्यादित वदानि । इत्थमपि यदि राजशासन माँ परिबन्धाति । तदा भयेनालम् । कर्तव्यपालने कस्माद्भीतिः । साधुः सर्वविध–परीषहोपसर्गान् सहेत । स्वकर्तव्यात् कदापि विचलितो नो भवेत् । सर्वपरिस्थितिषु धर्मरक्षापथोऽस्ति ज्ञातः । यदि कर्तव्यपालन कुर्वन् जैनसमाजस्याचार्योनियम्यते राजशासनैस्तदा जैनसमाजस्यापमानस्य कापि वार्ता नास्ति । अनेन तु सर्वसमक्षमत्याचारिणोऽत्याचारा एवायान्ति ।

श्रीपूज्यस्य वीरतापूर्णमुत्तर श्राव श्राव भयभीताः प्रार्थनाविधातारः श्रावकाः मौनमास्थिताः । तद् व्याख्यानाजस्रधारा निर्बाधरूपेण तथैव प्रवाहिता जाता । अनेन तस्यविचारदार्ढ्यम् परिलक्ष्यते । यमुनापारे श्रीपूज्य गुरुदेवस्य उदात्तचारित्र्येण, तेजस्विवक्तृत्वेन स्पृहणीयव्यक्तित्वेन चासीमोपकारोऽजनिष्टोपेक्षित प्रान्तस्य । ततो विहृत्य मरुप्रान्ते च पदाधानमजायत ।

जैनसाधुसम्मेलनावसरे सघसाधुभिरेकमात्रप्रतिनिधिरूपे पूज्यश्रिय एव निर्वाचिताः । प्रार्थना चेत्थम् "श्रीमताँ (निजपरशास्त्रसिद्धान्ततत्वरत्नाकराणाम् विद्वन्मुकुटचिन्तामणीनाँ, भव्यजनमानसराजहंसानाम् भवतजनकमलविकासनप्रभा–

कराणाम्, वाणीसुधापुधाकराणाम्, गाम्भीर्य–धैर्य–माधुर्योदार्यशान्तिदयादाक्षिण्यादिसद्गुण गणपरिपूर्णानाम्, रमणीयविशालभवनैक्येच्छुक शिरोमणीनाम् ज्ञानादिरत्नत्रयसरक्षकाणाम्, मुकुटमणिजैनाचार्य पूज्यपाद श्री १००८ श्री श्री जवाहर लाल जी महाराजानां चरणकमलेषु सर्वसम्भोगिमुनिमण्डलस्य सविनयेय प्रार्थनास्ते । यद्भवन्तो जिनशासनस्योत्थानाय जैनसाधुसम्मेलने अजयमेरुनगरे पदाधान कृत्वा यत् किमपि कार्य करिष्यन्ति सर्वथास्माभिर्मान्यं भविष्यति । अत्रोपस्थितसाधूना हस्ताक्षराणि वेविद्यन्ते ।

तत्र सम्मेलने आचार्यवर्येण श्री वर्धमानसंघयोजना प्रस्ताविता । प्रस्तावनावाच इत्थम्–वर्तमानकालिकसम्प्रदायानाँ प्रवृत्तेः विभिन्न प्रणालीहेतोः शासनसघटनमस्तव्यस्तमिव प्रतिभाति । येन श्रद्धाचारव्यवस्था प्ररूपणाशतमुखीव प्रदृश्यते । आपत्तिमिमां दूरीकर्तु सरल सुगमोपायश्चायमास्ते । यदेकस्यैतादृशसघस्यनिर्माणं भवेत् । यत्र सम्मिलिताः सन्त आत्मार्थिनो मुनय एकस्यां प्रणाल्यां गन्तु शक्नुयु । एतदर्थ वर्धमानसंघस्य स्थापना समायोजिता भविष्यति । अत्र सम्मिलनेन सर्वेषाँ गौरव भविष्यति । तथा जैनशासनस्यापि गरिमा भविता । वर्धमानसंघ इति अभिधानमेव महत् कल्याणकारि चास्ते । अत्र भगवन्महावीरस्य जिनस्य मुद्रांकिता विभाति । अत्रान्यस्य सघस्य, कस्याश्चिद्व्यक्तेः सम्प्रदायविशेषस्य च नाम नास्ति । अतोऽत्रविषये कस्यापि तर्कवितर्कस्य स्थानं नास्ति । अस्य सघस्य नियमादिकमपि सहैव निर्मितमभवत् ।

एकत्र स्थाने तेन भगवता कथितम्:–यदा समाजव्यवस्था प्रारब्धा । तदैकस्य वर्गस्य कृते सेवाभारः प्रदत्तः । यदि स वर्गः सेवाँ विदधाति तदाऽशोभन किं भवति ?? एकत्र छत्रचमरधारिणी कापि महिला विद्यते । अपरत्र च सेवाकारिणी केवला महत्तरा । अनयोः द्वयोः मध्ये जनसाधारणस्य कृते उपयोगिनी कास्ते ? महत्तरैव जनसामान्यस्य कृते परमोपादेया । अस्यां दशायाँ यदि भवद्भ्यः चमरधारिणी एव विशेषरूपेण रोचते, तदा वक्तव्यम् इदमकार्य वास्तविकतायाः दूरे वर्तते । अत्रविजृम्भते सर्वथाऽज्ञानमेव । सेवाभाविनी महत्तरानालिकाँ स्वच्छयति । सा जनताः रोगेभ्यो रक्षति । सा नागरिक जनतायाः प्राणानवति । तस्याः सेवा कामपि विशिष्टताँ पालयति । ताँ नीचामवमाँ मन्यमानाः आत्मविस्मृताः एव सन्ति । तदाचरणमज्ञानं कृतज्ञताविरुद्धं चेति । उदारतया ममग्रसेवाभाविनीं महत्तराँ मानवतावाददृष्टिकोणेन पश्येत् । तयासहमानवोचितम्च व्यवहरेत्, किन्तु समाजे विपरीता स्थितिरवलोक्यते । तत्रास्पृश्यताँ मत्वा घृणास्पद व्यवह्रियते । जैन–दृष्ट्याचाण्डालकुलोत्पन्नोपि मुनिर्भवितुं

शक्नोति । इत्थं समये समये यत्र तत्र सर्वत्र दीयमानोपदेशैः अस्पृश्यतानिवारणे साहाय्यमासादितम् ।

## युवाचार्यपदमहोत्सवः–

ऐतिहासिकजावदनगरे फाल्गुन शुक्ल तृतीयायां १९९० वर्षे श्री गणेशिलाल जी म. सा कृते युवाचार्य–पदवी–प्रदानस्य समयो निश्चितो जातः । एतदर्थं विशालमेकं क्षेत्रं निश्चितम् । तत्रैव प्रतिदिवस व्याख्यानमभवत् । प्रतिपदि भावियुवाचार्यस्य भाषण जातम् । तदनन्तरमाचार्यवर्याणामपि प्रभावशालिरोचकं व्याख्यानमजायत:–यदा रवेरसंख्यकिरणैः तमो विलीयते तदा दीपकस्य न भवत्यावश्यकता । तदभावे सासारिकजनाना दीपकेनैव व्यवहारकार्यं प्रचलति । द्वयोरन्तरमिदम् सूर्यः स्वयं प्रकाशमयः स नो कमप्यपेक्षते । तस्य प्रकाशः प्रशस्तः । दीपकश्चनो प्रकाशमयः । तस्य स सापेक्षोऽप्रशस्तश्च । तत्र तैलवर्तिकानलादीनामपेक्षा जायते । भगवान् तीर्थंकरः सूर्यसंकाशः । सकेवलज्ञानी अन्तर्यामी, घट घट भावपरिज्ञाता च भवति । वर्तमानकाले तीर्थंकरो भारतवर्षे नो वेविद्यते । अतस्तदभावे च चतुर्विध सघस्यकृते सम्प्रत्याचार्यादय एवाधारः । भगवत्तीर्थंकराचार्ययोर्वर्ततेऽन्तर तथा यथा रविदीपयोरस्ति । पूर्णज्ञानिनस्तीर्थंकरस्य कस्याप्यपेक्षा न भवति, किन्तु भवत्यपेक्षाचार्यस्य चतुर्विधसंघस्य । आचार्यकार्यं चतुर्विधसघसारणावारणा धारणा चोयणा पचोयणादि करणमास्ते । अत्र चतुर्विध सघसहायताऽभावे काठिन्य भवितुमर्हत्याचार्यस्य । तथा तत्पदस्य गौरवमपि नो तिष्ठेत् ।

शुभे समय आचार्यवर्यास्तथा साधवश्च सहैव नवकारमन्त्रं पेठुः । भगवन्तं शातिनाथ च प्रार्थयाँचक्रिरे । मंगला–चरणानन्तरमाचार्यवर्यस्य प्रवचन सजातम् । तस्य सक्षिप्तोऽभिप्रायः–शास्त्रानुसार धर्माचार्ये त्रयो गुणाः अपेक्षिताः । सूत्रार्थ परिज्ञानम् प्रमादराहित्यम्, सघसुव्यवस्था करणचेति । एतत्पूर्वोक्तगुणत्रयविशिष्टो मुनिराचार्यो भवितुमर्हति । आचार्यपदवीप्राप्तोपि पूर्वोक्त गुणत्रयाणामभावे आचार्यपदात्पृथक् कर्तुं शक्यते । भगवतामहावीरेण स्वाधिकारः सुधर्मस्वामिने ददे । तेन च समये जम्मूस्वामिने । तदारभ्येयमाचार्यपरम्परा प्राचलत् । अस्यामेव परम्परायामुग्रविहारी तपोधन आत्मोत्थानकारी श्री हुक्मी मुनिरभवत् । तन्नाम्नायसम्प्रदायः सम्प्रति प्रचलन्नवलोक्यते । अत्र सस्थिताः साधवस्तपसः प्रासादाः सन्ति । व्याख्यानपूर्णतानन्तरं समर्थनानुमोदनपुरस्सरं युवाचार्य-आचार्यवर्यस्य समक्षं स्थित आगत्य । आचार्यवर्याः नन्दीसूत्रमपठन् । स्वकोयमुत्त-

कराणाम्, वाणीसुधापुधाकराणाम्, गाम्भीर्य—धैर्य—माधुर्योदार्यशान्तिदयादाक्षिण्यादिसद्गुण गणपरिपूर्णानाम्, रमणीयविशालभवनैक्येच्छुक शिरोमणीनाम् ज्ञानादिरत्नत्रयसरक्षकाणाम्, मुकुटमणिजैनाचार्य पूज्यपाद श्री १००८ श्री श्री जवाहर लाल जी महाराजानां चरणकमलेषु सर्वसम्भोगिमुनिमण्डलस्य सविनयेय प्रार्थनास्ते । यद्भवन्तो जिनशासनस्योत्थानाय जैनसाधुसम्मेलने अजयमेरुनगरे पदाधान कृत्वा यत् किमपि कार्य करिष्यन्ति सर्वथास्माभिर्मान्यं भविष्यति । अत्रोपस्थितसाधूनां हस्ताक्षराणि वेविद्यन्ते ।

तत्र सम्मेलने आचार्यवर्येण श्री वर्धमानसघयोजना प्रस्ताविता । प्रस्तावनावाच इत्थम् —वर्तमानकालिकसम्प्रदायानाँ प्रवृत्तेः विभिन्न प्रणालीहेतोः शासनसघटनमस्तव्यस्तमिव प्रतिभाति । येन श्रद्धाचारव्यवस्था प्ररूपणाशतमुखीव प्रदृश्यते । आपत्तिमिमा दूरीकर्तु सरल सुगमोपायश्चायमास्ते । यदेकस्यैतादृशसघस्यनिर्माण भवेत् । यत्र सम्मिलिताः सन्त आत्मार्थिनो मुनय एकस्यां प्रणाल्या गन्तु शक्नुयुः । एतदर्थं वर्धमानसघस्य स्थापना समायोजिता भविष्यति । अत्र सम्मिलनेन सर्वेषाँ गौरव भविष्यति । तथा जैनशासनस्यापि गरिमा भविता । वर्धमानसघ इति अभिधानमेव महत् कल्याणकारि चास्ते । अत्र भगवन्महावीरस्य जिनस्य मुद्रांकिता विभाति । अत्रान्यस्य सघस्य, कस्याश्चिद्व्यक्तेः सम्प्रदायविशेषस्य च नाम नास्ति । अतोऽत्रविषये कस्यापि तर्कवितर्कस्य स्थान नास्ति । अस्य सघस्य नियमादिकमपि सहैव निर्मितमभवत् ।

एकत्र स्थाने तेन भगवता कथितम्:—यदा समाजव्यवस्था प्रारब्धा । तदैकस्य वर्गस्य कृते सेवाभारः प्रदत्त. । यदि स वर्गः सेवाँ विदधाति तदाऽशोभन कि भवति ?? एकत्र छत्रचमरधारिणी कापि महिला विद्यते । अपरत्र च सेवाकारिणी केवला महत्तरा । अनयौः द्वयोः मध्ये जनसाधारणस्य कृते उपयोगिनी कास्ते ? महत्तरैव जनसामान्यस्य कृते परमोपादेया । अस्यां दशायाँ यदि भवद्भ्यः चमरधारिणी एव विशेषरूपेण रोचते, तदा वक्तव्यम् इदमुकार्यं वास्तविकतायाः दूरे वर्तते । अत्रविजृम्भते सर्वथाऽज्ञानमेव । सेवाभाविनी महत्तरानालिकां स्वच्छयति । सा जनताः रोगेभ्यो रक्षति । सा नागरिक जनतायाः प्राणानवति । तस्याः सेवा कामपि विशिष्टताँ पालयति । ताँ नीचामधमाँ मन्यमानाः आत्मविस्मृताः एव सन्ति । तदाचरणमज्ञानं कृतज्ञताविरुद्धं चेति । उदारतया समग्रसेवाभाविनी महत्तराँ मानवतावाददृष्टिकोणेन पश्येत् । तयासहमानवोचितव्यवहरन्तु; किन्तु समाजे विपरीता स्थितिरवलोक्यते । तत्रास्पृश्यतां मत्वा घृणास्पद व्यवह्रियते । जैन—दृष्ट्याचाण्डालकुलोत्पन्नोपि मुनिर्भवितु

शक्नोति । इत्थं समये समये यत्र तत्र सर्वत्र दीयमानोपदेशैः अस्पृश्यतानिवारणे साहाय्यमासादितम् ।

## युवाचार्यपदमहोत्सवः—

ऐतिहासिकजावदनगरे फाल्गुन शुक्ल तृतीयायां १९९० वर्षे श्री गणेशिलाल जी म. सा. कृते युवाचार्य—पदवी—प्रदानस्य समयो निश्चितो जातः। एतदर्थं विशालमेकं क्षेत्रं निश्चितम् । तत्रैव प्रतिदिवस व्याख्यानमभवत् । प्रतिपदि भावियुवाचार्यस्य भाषणं जातम् । तदनन्तरमाचार्यवर्याणामपि प्रभावशालिरोचकं व्याख्यानमजायत:—यदा रवेरसख्यकिरणैः तमो विलीयते तदा दीपकस्य न भवत्यावश्यकता । तदभावे सांसारिकजनाना दीपकेनैव व्यवहारकार्य प्रचलति । द्वयोरन्तरमिदम् सूर्यः स्वय प्रकाशमयः स नो कमप्यपेक्षते । तस्य प्रकाशः प्रशस्तः । दीपकश्चनो प्रकाशमयः । तस्य स सापेक्षोऽप्रशस्तश्च । तत्र तैलवर्तिकानलादीनामपेक्षा जायते । भगवान् तीर्थंकरः सूर्यसकाशः । सकेवलज्ञानी अन्तर्यामी, घट घट भावपरिज्ञाता च भवति। वर्तमानकाले तीर्थंकरो भारतवर्षे नो वेविद्यते । अतस्तदभावे च चतुर्विध सघस्यकृते सम्प्रत्याचार्यादय एवाधारः। भगवत्तीर्थंकराचार्ययोर्वर्ततेऽन्तर तथा यथा रविदीपयोरस्ति । पूर्णज्ञानिनस्तीर्थंकरस्य कस्याप्यपेक्षा न भवति; किन्तु भवत्यपेक्षाचार्यस्य चतुर्विधसंघस्य । आचार्यकार्य चतुर्विर्धसघसारणावारणा धारणा चोयणा पचोयणादि करणमास्ते । अत्र चतुर्विध सघसहायताऽभावे काठिन्य भवितुमर्हत्याचार्यस्य । तथा तत्पदस्य गौरवमपि नो तिष्ठेत् ।

शुभे समय आचार्यवर्यास्तथा साधवश्च सहैव नवकारमन्त्रं पेठुः। भगवन्तं शांतिनाथ च प्रार्थयाँचक्रिरे । मगला—चरणानन्तरमाचार्यवर्यस्य प्रवचन सजातम् । तस्य सक्षिप्तोऽभिप्रायः—शास्त्रानुसार धर्माचार्ये त्रयो गुणाः अपेक्षिताः । सूत्रार्थ परिज्ञानम् प्रमादराहित्यम्, सघसुव्यवस्था करणंचेति । एतत्पूर्वोक्तगुणत्रयविशिष्टो मुनिराचार्वो भवितुमर्हति । आचार्यपदवीप्राप्तोपि पूर्वोक्त गुणत्रयाणामभावे आचार्यपदात्पृथक् कर्तु शक्यते । भगवतामहावीरेण स्वाधिकारः सुधर्मस्वामिने ददे । तेन च समये जम्मूस्वामिने । तदारभ्येयमाचार्यपरम्परा प्राचलत् । अस्यामेव परम्परायामुग्रविहारी तपोधन आत्मोत्थानकारी श्री हुक्मी मुनिरभवत् । तन्नाम्नायंसम्प्रदायः सम्प्रति प्रचलन्नवलोक्यते । अत्र सस्थिताः साधवन्तपसः प्रासादाः सन्ति । व्याख्यानपूर्णतानन्तरं समर्थनानुमोदनपुरस्सर युवाचार्यआचार्यवर्यस्य समक्षं स्थित आगत्य । आचार्यवर्याः नन्दीसूत्रमपठन् । स्वकोयमुत्त-

रीयंन्चोत्तार्य युवाचार्यस्य शरीर प्रावरयन्तिस्म । अत्र कर्मणि मुनयोऽन्येपि सहयोग ददु: । जयनादपूर्वक जनताभिरभिनन्दितः । तदनन्तरमाचार्यवर्येण नवकारमन्त्र: श्रावित । चतुर्विधसघो युवाचार्यं ववन्दे । तदनन्तरम् पूज्यश्रियआपेक्षिक सक्षिप्त भाषण जातम् । तदनन्तरम् युवाचार्योऽप्यवादीत्:—अह परमात्मानं प्रार्थये यत् समहूय शक्ति प्रदध्यात् । यासकल जनहितकारिणी भवेत् । अद्यप्रदत्तोत्तरदायित्व यया शक्तयैव वोढुमल भवेयम् । अह सदैव भावनामिमा रक्षामि । यज्जीवनपर्यन्तम् आचार्यप्राप्ताज्ञापरिपालन करिष्ये । सततंचमुनीन् सेविष्ये । आचार्यवर्यस्य कृपया तत्प्रदत्तभार वोढुं क्षमो भवामीति ।मम द्रढीयान् विश्वास:। तदा उपस्थितजनतानामानन्दसन्दोहस्य पराकाष्ठा नासीत् ।

## भूकम्प पीडितसाहाय्यम्:—

तदा विहारप्रान्ते भयकराभूतपूर्वभूकम्पकारणात् प्रभूताः मानवाः निराश्रया: सन्तोऽपीपिडन् । अनेकशोमृताः । तत्रत्या दशा हृदयविदारिकासीत् । परदु:खकातरा पूज्यश्रियोपि कारुणिक वृत्तान्त श्रुत्वाऽत्यर्थ क्षुब्धाः सजाताः । समुचितावसर प्राप्य तत्रत्याः करुणकथाः उपस्थितश्रावकान् भृश श्रावितवन्त. । तेषाँ कर्तव्यावबोध च स्मारितवन्तः । स चेत्थम् ।

शुभावसरे श्रावका: अनेकशो जीवेभ्योऽभयदान प्रयच्छन्ति । सम्प्रतिभारते भूकम्पप्रकोपोऽजनि । विहारे दृश्यते प्रलयदृश्यम् । वहुशोदिवंगताः । अवशिष्टा अपि खाद्यसामग्रीवसनादिरहिता: कष्टपरम्परामनुभवन्ति । मनुष्यशरीरमीश्वरस्य विशिष्टप्रतिमास्ते । मनुष्य ईश्वरस्य प्रतिनिधि: सर्वोत्कृष्टप्राणी वर्तते। अतो मनुष्यपरिरक्षण प्रत्येक मानवस्य विद्यते प्रधान कर्तव्यम् । भूकम्पहेतोर्मानवाना कोटिश: सम्पत्तयः भूमिगर्भे विलीना: जाता: । दैवात् ये नो निहतास्ते कष्टपयोधौ निमज्जन्ति । आश्रयविहीनाश्च सन्ति । तेपा साहाय्यभारस्तेपु अस्ति । ये सम्प्रतिनिरापदाः सन्ति । मनुष्या: परस्परं सम्बद्धास्तथापि भवन्तो जैना. सन्ति । जैनधर्मानुयायिनोध्रुव स्व निपात्यापि कष्टेऽपरेपा रक्षा सहायनाच कुर्वन्ति । सकटग्रस्तदेहिना रक्षाविधानं नृणाँ वर्तते प्रधानं कर्तव्यम् । समारनिनमेनन् कर्तव्यं कदापि नो विस्मर्तव्यम् । अन्येपां सेवाकरणे एव भवतां सामर्थ्यस्य द्रव्यस्य च सार्थकतास्ते । इत्थमाचार्यवर्या: सामाजिकसमाधानावसर कदापिनोउपेक्षन्ते । साधुमर्यादां निर्वहन्तोपि सामाजिकजनतानाँ कृते धार्मिकपथप्रदर्शन सर्वथा चक्रु: ।

अनेकप्रान्तेषु विहृत्य गुर्जर प्रान्तेपि समागमनमभवत् । सर्वत्र मानव-

धर्मब्रह्मचर्यसन्ततिनियमनविषये भवतां व्याख्यानं प्रवृत्तम् ।

## महात्मगान्धि साक्षात्कारः—

यदाचार्यवर्याः राजकोटनगरे व्यराजन्त । तदा महात्मागान्धी अपि कार्य-वशात् तत्रैवागतः । पूज्यश्रियउपदेशशैल्या उत्कृष्टोदारविचारैः उच्चश्रेणिसयम-परायणतया च महात्मान. प्रथमत एव परिचिता. आसन् । तत्र प्रस्थानसमये एव तैः मिलितुं धारणा मनसि स्थापिता । महात्मन इतस्ततोनिस्सरणं कठिनं भवतिस्म । तदा जनता जानीयात् यत्तस्यामुकस्थानेऽमुक समये पदार्पणमस्ति कार्यक्रमश्च तदा तत्रापारजनसम्मर्दः एकत्र भवन्नासीत् । गुप्तरीत्याचार्यश्रिया मिलितुं सूचना कारिता । समये चागता महात्मानः । जन सम्मर्दाभावे द्वयोर्मे-लनं साधु सम्पन्नम् । महात्मनाभिहितम् चिरकालात् मिलितुं समीहासीत् । अत्रागत्य मेलनं विना गन्तुं नो क्षमः । मम समीहा भवति च भवतां प्रवचनं श्रोतुम्; किन्तु जनसम्मर्दकारणात् तत् सफलं नो जायते । पूज्यश्रियापि समया-नुकूलं साधुप्रोक्तम् । महात्माचार्य सम्मेलनं सर्वथैतिहासिकं सम्पन्नम् । मिलित्वा सप्रसन्न मुद्रया राष्ट्र कार्य व्यापृतः प्रत्यावृत्तः ।

सरदारपटेलोपि दर्शनार्थमागतः । विदित्वानेकाः जनता अपि सम्मि-लिताः । तदानीं गान्धिसप्ताहः प्रचलन्नासीत् । तदा तद्विषये आचार्यवर्येण निर्दिष्टम् । महात्मगान्धि मौखिकयशोगानेन सप्ताहः सफलोनो जनिष्यते । किन्तु महात्मना खादी वसन संधार्य देशं समृद्धं विधातु योऽनुकूलोपायः सर्दशितः तद्ग्रहणेनैव सप्ताहस्य पूर्णता सम्भाव्यते । इत्थ विधानेन महारम्भात् सुरक्षा जायते धर्मस्यापि जायते समाराधना । इत्थ समन्वय पूर्वकम् देशसेवाधर्मं सेवा-विषये संक्षिप्त साँरगर्भितंच भाषण ददे । प्रत्युत्तरे सरदारेणापि कथितम्:—भव-न्तोधन्याः सन्ति । येषामेतादृशाः महात्मानो मिलिताः सन्ति । यतोहि नित्य-मेवैतादृशं व्याख्यानं श्रोतुं मिलति । श्रवणं तदैव सफलं जायते यदा तत् जीवने उत्तार्यते । इत्थ प्रोच्यसोपि देश सेवाविधाने सम्पृक्तो जातः । इत्थ समयेसमये राजनेतारोपि पूज्यश्रियो दर्शनार्थमागच्छन्तिस्म । दर्शनप्रवचनश्रवणादिभिः कृत-कृत्याः बभूवुः । इत्थम् आदिवसं दिवाकरः पूर्णप्रतापैः तप्त्वा सायमस्तमुपगन्तुं प्रचक्रमे ।

## जीवन सन्ध्याः—

य आरोहति सोऽवरोहत्यपि । एषोऽस्ति प्राकृतिकोनियमः । शनैः शनै-

राचार्यवर्यस्यापि जीवन सन्ध्या प्रारब्धा । दीक्षा ग्रहणानन्तरं सूर्यइव दिदीपे। भारतस्य प्रान्तेषु प्रतिभा प्रभावः प्रदर्शितः । स्थलीवालुकाकणेपि स्वकीयामरमुद्राॅऽकिता । सैकत नीरस ग्रामनगरेषु दयादानस्यामृतवर्षा विहिता । मरुस्थली हरित भरितोद्यान रूपे परावर्तितवान् । सौराष्ट्रादिक प्रान्तेषु जैन धर्म प्रचारः कामपिविशिष्टतां रक्षति । तत्कालिक राजवर्गेषुजैनधर्मबीजमुप्तवान् । राजानोरकाः, विबुधाः, साधारणगृहस्थाः, वैज्ञानिकाः, अध्यात्मवादिनः आधुनिकशिक्षा सस्कार सस्कृता; रूढिप्रियाः वृद्धाश्चोज्जवलतेजोमयव्यक्तित्वेन सर्वथा प्रभाविताः आसन् ।

खादिवसनमादकद्रव्यनिषेध अस्पृश्यतानिवारणगोरक्षा–कुरीतिनिवारणेत्यादिविषये धार्मिक दृष्टिकोणेन सुन्दरतमं प्रभावशालि प्रवचन विहितम्। धार्मिकतया सह स्वसामाजिक प्रवचनस्य समन्वयं चकार । येन तस्य सिद्धान्तज्ञानकौशलम् दृश्यते । सहैव दूरदर्शिता व्यवहारपटुतापि परिलक्ष्यते । तस्य साम्प्रदायिकता विशालता सम्भृतासीत् । तेन स्वजीवनेसर्वदेद साधितम् । यत् विशुद्ध साम्प्रदायिकोपि विश्वहितं साधयितुं शक्नोति । एतैरेव भद्रकारणैः तस्य जीवन सर्वथा सफलमजनि । अन्येषामपि जीवनं तद्दिशि प्रैरयत् ।

तज्जीवनं संयममयम् बभूव । रुजाभिभवेऽन्नग्रहणपरित्यक्तम् । केवल दुग्धाहारादि पथ्यमेवगृहीतम् । वृद्धावस्थारोगाणाँचप्रबलाक्रमणैः शोचनीया दशा जाता ।स्थिरवासायभीनासर बीकानेर स्थानम् निर्णीतम् । आचार्यवर्यास्तत्रागताः । व्याख्यानादि कार्य युवाचार्यमहोदय एवाकरोत् । तदैव जवाहर किरणावलिप्रकाशनमपि श्रावकैः सम्पादितम् । यैरप्येकवारमपि दर्शनं विधाय प्रवचनं श्रुतं तस्य वाचाँ प्रभावः तेषुपपात । तत्रादम्योत्साहः, प्रखरप्रतिभा, गम्भीरतर्कशक्तिः, मोहिनी वाणी चाभवत् । स सर्वत्राहिंसा धर्मस्य प्रचारं चकार । भयावह कष्टानेककाठिन्यैरपि सत्यधर्ममबोधयत् । पाखण्डिमतखण्डनं चविदधे । भवत उपदशैरेवानेकाहिंसा प्रवर्तिका संस्थाऽनावृता जाता । तत्रतत्र स्थानेषु । बहवो राजनेतारो धार्मिकाः समाजसेविनः प्रवचनैः लाभान्विताः सम्भूताः । जैनाः जैनेतराः जनताः समानरूपेण प्रभाविताः । स्याद्वादस्य शिर उन्नतिमितम् । अस्य शासनस्य पंन्चाशत्वर्ष पूर्तौ स्वर्ण महोत्सवोऽप्यायोजितः । यत्र गुणग्राहिणी जनता यथोचित भागं जग्राह । सर्वत्र यशोगानंसम्पन्नम् ।

## "क्षमादान प्रदाने"

जीवन सन्ध्यां विलोक्य सर्वैः प्राणिभिः सह तेन क्षमायाचना विहिता । तया सर्वथा आत्म विशुद्धिः सम्पन्ना । अजरामरात्मनः कृते नश्वरशरीरस्य

ममतां जहौ । पक्षाघातस्य स्थितावेव विषाक्त व्रणोपिजज्ञे । विशेषकष्टानुभूति-रेवासीत् । जीवनव्यापिसंयमसाधन परीक्षायाम् स सर्वथा समुत्तीर्णः । तेन पण्डि-तमरणमासादितम् । तदा काप्यनिर्वचनीयैव सौम्यता, भव्यता, शान्तिरासीदिति दर्शनार्थिन एव परिज्ञातुं क्षमाः ।

## उपसंहारः—

अज्ञातानादि समयात् प्रवहमानामन्दमन्दाकिनीव परमपूताचार्यवर्यस्य जीवनयात्रा साधना संवलसंभृताताविन्निर्बाधरूपेण गतिशीलाऽसीत् । यावत्स्पृहणीय-चरमसत्यागाधसागरेऽनन्तानन्तकालाय विश्रान्ति नोपाजगाम । महामहिमाचार्य-श्रीणाँ व्यक्तित्वंसहस्रदलांचित कुशेशयसमानं मनोहारि सौरभपूर्णतायुतम-भवत् । व्यष्टिसमष्टिप्रतिरूपपंकजस्य प्रत्येक दलं स्व व्यक्तित्वमहत्वमादधान-मपि स्वस्य समवायात्मकैक्यसमष्टिसमस्थितिमपि व्यनक्ति । तस्य दलवैभिन्यम् बाह्यमेवरूपम् । आत्मनः चास्ति तस्यैक्यम् ।

आचार्यदेवस्य समग्रं जीवनविशालोदधिरिव बभूव । तस्माज्जलधेः कियन्तो दिव्य मुक्तामया निस्सारिताः इति कथन मम कृते काठिन्यमवलम्बते । तत्रागणिताः अमितमहर्घरत्नराशयो भवन्ति । निमज्जनोन्मज्जने व्यापृतः किय-दासादयतीति याकाप्युपलब्धिः सा सर्वं समक्षं सादर प्रस्तुतेव विभाति ।

"आचार्यश्री नानेशः"

# —: प्रस्तावना :—

मानव-सभ्यतायाः विकासेन सहैव महाकाव्यस्यापि विकासोऽजनिष्टेति वक्तुं पार्यते । तस्य परिभाषां सर्वप्रथमं प्राचीनतमालंकारिकाचार्यो "भामहो" निश्चिकाय । यस्यानेहाः पचमशताब्दी अस्ति । तदनुसारं "लम्बमान कथानकं महाचरित्राश्रितं नाटकीयपचसन्धियुत महोत्कृष्टालंकृतशैलीनिर्मितं जीवनविविध-रूपे कार्यवर्णनपरायणं सर्गबद्धम् सुखान्तंन्च महाकाव्यम्" /१/ १ "दण्डिन" /२/ महाकाव्यस्य स्थूल बाह्यलक्षणेषु प्रभूतो दृश्यते पक्षपातः । तस्य लक्षणं चेत्थम्:- "यस्य कथानक कथेतिहासाद्भूतं नायकश्चतुर उदात्तश्च: उद्देश्यं चतुर्वर्गफल प्राप्तिः, सालकारं भावरसादिसम्भृत, वृहदाकारं, सर्गबद्धम्, पंचसन्धियुतन्च भवति । दण्डिना महाकाव्यस्य प्रारम्भे वर्णनीयवस्तुव्यापारे, सर्गे, छन्दसि च विशिष्टं ध्यानं दत्तम् । अनेन स्पष्टं प्रतीयते यत् तस्य लक्ष्यग्रन्थाः महाभारतरामायणे नोस्तः । प्रत्युताश्वघोषकालीदासादीनां महाकाव्यानि आसन् । तथैव परिभाषापरिवर्तिकालेऽधिकप्रचलिता संजाता । हेमचन्द्रविश्वनाथकविराजादयः । तामेव किमपि परिवर्ध्य स्वकीयं लक्षणं निर्मितवन्तः । हेमचन्द्रस्य /३/ दृष्टिःरामायणमहाभारतयोर्नासीत् । यथा पद्य प्रायः सस्कृतप्राकृतापभ्रंशग्राम्यभाषानिवद्धभिन्नान्त्यवृत्तसर्गाश्वाससन्ध्यवस्कंधकबन्धं सत्सन्धिशब्दार्थवैचित्र्यं महाकाव्यम् इति लक्षणम् तेन /४/ विहितम् । इयम् परिभाषा दण्डिपरिभाषयाधिकं भिन्ना नोवरीवर्ति । तस्य परिभाषायामियती /५/ नवीनतास्ते यत्सा शब्दार्थोभयवैचित्र्यरसानुरूपसन्दर्भा, अर्थानुरूप छन्दस्का, लोकरंजकतासंवलिता च भवेत् । तेन देशकालपात्रचेष्टाकथान्तरानुषंगजम् उक्तवा महाकाव्येषु जीवनस्य व्यापकानुभवस्य कार्यस्य च चित्रणमावश्यकम् मतम् । सम्भवत इदं लक्षणन्तेन प्राकृतापभ्रंश-

---

१—काव्यालंकार—१ : १६ : २१ भामह ।
२—दण्डी—काव्यादर्श: १ . १४ : १६ षष्ठी शताब्दी ।
३—द्वादश शताब्दी ।
४—हेमचन्द्र काव्यानुशासन अ० ६ ।
५.—हेमचन्द्र काव्यानुशासन अ० ८ ।

संस्कृतानां पौराणिकैतिहासिकरोमांसिकशैलीनिबद्धमहाकाव्यानिध्यात्वा निर्धारितम् । विश्वनाथः /६/ पूर्ववर्तिनामाचार्याणां मतानि समाहृत्य विशेषतो दण्डिपरिभाषाऽधारे स्वकीयं लक्षण निर्ममौ । तस्यादर्शग्रन्थाः माघभारविश्रीहर्षाणां महाकाव्यानि सन्ति । अतएव तेन स्वपरिभाषाया महाकाव्यस्य वाह्यस्थायिलक्षणानामेव प्रभूतो निर्देशो विहितः । तस्य मूलतत्त्वेषु समाधारित स्थायिलक्षणानाँ नो । इदमपि पणायितम् यन् महाकाव्यस्य नायकः कुलीनक्षत्रियो देवता वा भवेत् । तत्र अष्टौ तदधिकाः वासर्गाः भवेयुः ।

रुद्रटस्य /७/ महाकाव्यसम्बन्धिमान्यता उपर्युक्तसर्वाचार्यमान्यतायाः अधिका व्यापिका वर्तते । तेन संस्कृतस्य परवर्तिमहाकाव्यातिरिक्तानि रामायण महाभारत प्राकृताऽपभ्रंशसस्कृतपौराणिकमहाकाव्यानि ध्याय-२ लक्षण निर्धारितम् । तेन पद्यबद्ध कथायाः उत्पाद्यानुत्पाद्ये लघुमहन्तौ द्वौभेदौ विधाय केवलं महत्प्रबन्धमेव महाकाव्यमुक्तम् । ख्यातस्य कथा उत्पाद्यानुत्पाध्यावेवेति । तेन अवान्तरकथाऽनिवार्यतया सह युगजीवनस्य विविध रूपाणि पक्ष घटनादीनाँ चित्रणानि च स्पष्ट रूपेणविस्तरेण च स्वीकृतानि । तदनुसारं महाकाव्यस्य नायकः द्विजकुलोत्पन्नः सर्वगुणसम्पन्नः महान् वीरः विजिगीषुः शक्तिमान् नीतिज्ञः कुशलः राजाभवति । स एव विजयते । सहैव महाकाव्ये प्रतिनायकस्य तत्कुलस्य च वर्णनं जायते । उत्पाद्यकथानकमहाकाव्येषु रुद्रट मतेनारम्भे सन्नगरीवर्णन नायकवंशप्रशंसा च भवति । तत्रालौकिकातिप्राकृततत्वसमावेशोपि जायते । इदंप्रायः कथाख्यायिकासु लभ्यते । अतः तेन कथात्मकमहाकाव्यान्यपि स्वीकृतानि । यान्यन्यैर्नो मतानि । इत्थं पद्याबद्ध कथायाः पाश्चात्यदेशानुसार महाकाव्ये प्रभावः रुद्रटे परिलक्षितो भवति, नान्यत्र । आधुनिकयुगे पाश्चात्यैरपि महाकाव्यस्य लक्षण स्वदृष्ट्या विहितमास्ते । तदा काप्येका सर्वव्यापकपरिभाषेय भवितुमर्हति । महाकाव्यं तत् छन्दोवद्धं कथात्मक काव्यरूपमस्ति. यत्र क्षिप्रकथाप्रवाहोवालकृतवर्णनम् अथवा मनौवैज्ञानिकचित्रणयुतम् सुनियोजित सागोपागम् सजीव लम्वकथानक भवेत् । यत्रसात्मकताप्रभावान्वितिसमायोजने पूर्णसमर्थ भवेत् । यत्र यथार्थकल्पनासम्भावनाधारितस्य चरित्रस्य वा चरित्राणा महत्त्वपूर्णजीवनवृत्तस्य पूर्णमाँशिकवर्णन भवेत् । यद् कस्यापियुगस्य सामाजिकजीवनस्य कस्मिन्नपिरूपे प्रतिनिधित्व कुर्यात् । यत्र कथापि महाप्रेरणाया अनुप्राणित भूत्वा कस्यापि महोद्देश्यस्य सिद्धये कामपि महत्वपूर्णाम् गम्भीराँ रहस्यमयीमाश्चर्योपादिकाँ घटनामाश्रित्य संश्लिष्टसमन्वितरूपेण जातिविशेषस्य युगविशेषस्यवा समग्रजीवनस्य,

६—विश्वनाथ साहित्य दर्पण ६ : ३१५ : ३२८ ।
७—रुद्रट सप्तमशताब्दीः—काव्यालकार अ० १६ : २ : १६

विविधरूपाणि, पश्चात् मानसिकदशाः कार्याणि च व्यावर्णितुम् उद्घाटयितुं चसयत्नं भवेत् । यस्य शैली इयती गरिमामयी उदात्ता च भवेत् । यत् युगयुगान्तरपर्यन्त महाकाव्यम् जीवितुं च शक्ति प्रदद्यात् । स्थूलरूपेण महाकाव्यस्य निम्नाँकितावयवानाँ स्वरूपेषु विभाज्योपस्थाप्यते.–महदुद्देश्यम् महत्प्रेरणा, महती काव्यप्रतिभा । २–गुरुत्वम्, गाम्भीर्यम् महत्वम् । ३–महाकार्यम् युगजोवनस्य समग्र चित्रण । ४–सुसंघटित जीवितकथानकम्, ५–महत्वपूर्णो नायकः तथान्यपात्राणि । ६–गरिमामयी उदात्तशैली ७–तीव्रप्रतिभान्वितिगम्भीररस व्यजना ८-अनवरुद्धजीवनशक्तिः सशक्तप्राणवत्ता चेति ।

इमानि तत्त्वानि लक्षणानि च संर्वाशे अधिकांशे च यत्र काव्येषु मिलिष्यन्ति । तान्येव वास्तविकरूपे महाकाव्यानि भवितुमर्हन्ति । इत्थंतु महाकाव्यरूपे लिखितानि मतानिवा प्रवन्धकाव्यानि प्रत्येकदेशे प्रभूतानि मिलन्ति; किन्तु तानि सर्वाणि वास्तविक महाकाव्यानि नोभवन्ति । महाकाव्यलक्षणानुसारम् अथवा प्रसिद्धमहाकाव्यानुसारं च लिखितान्येव काव्यानि महाकाव्यानि मन्तु शक्यन्ते । इत्थं नो जाने कियन्तोहिवृहदाकाराः ग्रन्थाः भारते तथान्यदेशेपु लिखिताः सन्ति । परन्तेषु वहवो महाकाव्यानि नो मतानि । अथवा महाकालो विस्मृतिगर्तमानिनाय तानि । एतद् विपरीतान्यपि व्यापक महाकाव्यरूपे मतानि जातानि वहून्यपि । इत्थ महाकाव्यानि आयुगकस्यापि देशविशेषस्य जातेः, समाजस्य च जीवनं प्रभावितम् आनन्दितं चाकार्षुः । इदमेव कारणमस्तियत् नाटककथाकाव्येतिहासपुराणनीतिकाव्यग्रन्थानाँ कापि गणना कर्तुं नोशक्यतेतत्र कस्या अपि भापायाः महाकाव्यानि संख्यापेक्षयाऽल्पान्येव सन्ति । एतादृशमस्मात्कारणादस्ति यत् महाकाव्यं प्रतिसमय साधारणकविद्वारा नोविरच्यते । उपयुक्तानेहसि विराट्चेतनासम्पन्नमहाकविरेवोपयुक्तमवसर परिज्ञाय तत्कालिकावश्यकतापरिपूर्तयेस्वचेष्टया महाकाव्यं निर्माति ।

ससारस्य प्रायः सर्वदेशेपु महाकाव्यानि रचितानि सन्ति । तस्य परम्परा धाराद्वये विभक्ता प्रवाहिता सती आगच्छति । १–मौखिक परम्पराधारा लिखित परम्परा धारा च द्वयोर्भू तत्वैक्यात् परस्परं विशेषभेदो नास्ति । आद्यप्रकारकं च महाकाव्यम् साहित्यिकमनुकृतम् वालंकृतम् कथ्यते । अन्यदेशापेक्षया भारतवर्षे रामायणं महाभारतंच विकसनशीलं महाकाव्यमस्ति । अश्वघोपकालीदासमाघभारविश्रीहर्षस्वयम्भूपुष्पदन्तादिकवीनां महाकाव्यानि अनुकृतं वालंकृतं निगद्यते । प्रारम्भेऽलंकृतधारान्तर्गत शास्त्रीयशैलीसम्पन्नमहाकाव्यानि लिखितानि, परन्तु तदनन्तर पौराणिकैतिहासिकशैलीसम्पन्नानि महाकाव्यान्यपि लिखितानि ।

समाजशास्त्रीयैतिहासिकविकासक्रमदृष्ट्या दर्शनेन स्पष्टं ज्ञायते; यत् महाकाव्यानाँ विभिन्नरूपाणां शैलीनां च विकासः समाजविकासक्रमानुरूपएवास्ते सम्पन्नः ।

## —:महाकाव्यपरम्परा:—

संस्कृते महाकाव्यस्य रूपे सर्वप्रथमं प्रतिष्ठा वाल्मीकिरामायणे ऽभवत् । रामायणं वस्तुतः स्वकोटेरनुपमारचनास्ते । परवर्तियुगीनमहाकाव्यतुलनायां रूप-विन्यासकाव्य कौशलदृष्ट्या सर्वोत्कृष्टा वरीवर्ति । अतोन्यकाव्यैः सह तत् स्थाप-यितुं न शक्यते । अस्यां परिस्थितौ तद् आदिकाव्यनाम्नाभिधाय अद्वितीयकोटि-ग्रन्थो मतो विभाति ।

तत्पश्चात् सर्वप्रथममुल्लेखनीयो महाकविरश्वघोषोऽस्ति । यस्य रचना "बुद्धचरितम्" सौन्दरनन्दंच महाकाव्यमस्ति । एतत् महाकाव्यस्वरूपपरिपक्वतां दृष्ट्वा स्पष्ट प्रतीयते, यद् एतत्पृष्ठभूमौ पूर्ववर्तियुगीनमहाकाव्य परम्पराऽवश्यमेव विद्यमानाऽसीत् । परन्तु सा परम्परा विच्छिन्ना, नावलोक्यते ।

"बुद्ध चरितम्":— अत्र गौतम बुद्धस्य जन्मनः प्रभृति निर्वाणप्राप्तिपर्य-न्तम् चरितगाथा साँगोपांगविधिनोपवर्णितास्ते । अत्रान्त पुरविहारः उपवनविहारः वृद्ध दर्शनम्, रोगिदर्शनम्, मृतकदर्शनम् कामिनी, मनोरञ्जनानि, वनभूमिदर्शनम्, श्रमणोपदेशः, नुन्दरी विकृतरूपदर्शनम्, महाभिनिष्क्रमणम्, वनयात्रा, छन्दककन्थ-कविसर्जनम्, तपस्विवार्त्तालापः अन्तःपुरविलापः मारपराजयश्च वेविद्यते । उप-र्युक्तसर्वविषयाणां काव्योचितशैल्या वर्णनैः काव्यसौष्ठवसंवर्धना विहितास्ते ।

सौन्दरनन्दम्:—अस्य महाकाव्यस्य कथानकमशतो बुद्धचरितमनुरुणद्धि । कपिलवस्तुनृपस्य शुद्धोदनस्य माया राज्ञी सर्वार्थसिद्धं कुमारं जनयतिस्म । कनि-ष्ठराज्ञी नन्दञ्च । नन्दश्च सुन्दरोपनामा । सिद्धार्थः प्रव्रजितः । नन्दश्चविषया-सक्तो जातः । सिद्धार्थः सफलतां लेभे । मोक्षस्य सत्यमार्गमाससाद । काश्यां तेन धर्मचक्रं प्रवर्तितम् । गयायां राजगृहे च वहवो मानवाः प्रवोधिताः । सिद्धार्थं इदानीं बुद्ध आसीत् । जन्मस्थाने गौतमे आगते शुद्धोदनो विनयत्वंस्वीचकार, परन्तु नन्दः कामासक्त एवातिष्ठत् । अन्ते गौतमप्रभावात् सोपि दीक्षां जग्राह । संक्षेपतः इदमेवकथावस्तु ।

अश्वघोषस्य व्यक्तित्वम्:—स महान् कविरासीत् । स्वकवितामं ...

रार्थमेव मन्यतेस्म । अयम् प्रथम शताब्द्यां महाराजकनिष्कस्याश्रये बौद्धसम्प्रदायस्य महानाचार्य आसीत् । रचनापि प्राप्तराज्याश्रया । तस्य महाकाव्ये राजकीयवातावरण स्पष्टम् । अय कथावस्तु वर्णनात्मकोपादानैरलंकर्तुं सफलमयतिष्ट । वर्णनसयोजनं काव्ये रसवत्तामाधातु कृत विभाति । इत्थं धर्मदर्शनव्याख्यानाय काव्यस्य उपयोगिविधान कवेरात्मविशेषतैव वक्तुं पार्यते । वस्तुविन्यास दृष्ट्या भारतीयकाव्यसाहित्ये पूर्वोक्तकाव्यद्वयम् अनुपममेव । समानवताकृतेऽभ्युदयमुक्तिसन्देशञ्च दातुमैच्छत् ।

## —: कवि कालीदासः :—

अश्वघोषानन्तर महाकविकालीदासस्य महाकाव्यद्वयम् दृष्टिपथमवतरति। "रघुवंश महाकाव्यम्" कुमार सम्भव" महाकाव्यञ्च" । रघुवंशे राज्ञाँ वर्णनमस्ति । कुमारसम्भवे शिवपार्वती विवाहः तत्पुत्रकार्तिकेय द्वारा तारकासुरवधस्य कथोपवर्णिता विभाति ।

सस्कृतसाहित्ये कालिदासः सर्वोत्कृष्टः कविरस्ति । स मूर्तिमान् विनय आसीत् । तस्योद्भवो देशस्य स्वर्णयुगे चतुर्थशताब्द्यामभवत् । अतएव तस्य व्यक्तित्व सर्वकविभ्यः सर्वथा भिन्नम् । स समाजस्य कृते काव्यदृष्टि प्रदाय तद्द्वारा चतुर्दिक्षुसौन्दर्यपूर्णवातावरणसृष्टौ साफल्यं लेभे । संसारस्य तथ्य रूपस्याकलनविहितम् यत्र हिमालयो नामनगाधिराजः, महासागराः महानदाः महापगाः सन्ति । सहैव च कुसुमिताः लताः, पादपाश्चापि । एतैः सह मानवस्य सम्बन्धस्थापनम् महाकवेः विशिष्टसफलतास्ते । काव्यदृष्ट्या प्रयोजनमस्ति । मानवताकृते सर्वानन्दप्राप्ति. । सूक्ष्मपात्रचरित्रचित्रणे सिद्धहस्तता विलोक्यते । महाकाव्यद्वये मानव जीवनस्य सर्वथोदारपक्षः प्रदर्शितः । तस्य रचना समग्रमानवतोपयोगिनी । तस्य भाषा सरलासती लावण्यमयी चास्ति । भावः परिष्कृतः सदाशयतापरिपूर्णञ्च । शैली वैदर्भी प्रसिद्धैव । उपमाकालिदासस्येति प्रसिद्धिरपि विश्रूयते ।

## —: श्रीहर्षः :—

नैषधीयचरितस्य निर्माता महाकविः श्रीहर्षोऽस्ति । अयं सर्वशास्त्राचार्यः दार्शनिक प्रवरश्चापि । तस्य "खण्डनखण्डखाद्यम्" सर्वोच्चरचनास्ते । दर्शनस्य [illegible] रचनायाञ्च प्रवृत्तिरेकत्र दुर्लभा भवति न. पर तत्र सा अनुपमैव राराजीति ।

अत्र विषये संक्षेपत एव संस्कृतमहाकवीनांपरिचयः प्रस्तुतः ।

## प्राकृतमहाकाव्यम्:-

महाराष्ट्रीयप्राकृतस्य सर्वप्रथमं महाकाव्यं सेतुबन्धोऽस्ति । इदं पञ्चदशनिश्वासैः परिपूर्णम् । द्वितीयं श्रेष्ठ महाकाव्यं गौडवहोऽस्ति । अस्य विभाजनं सर्गे आश्वासे च नास्ति । अत इदं पालिभाषामहाकाव्यजिनालंकारजिनचरितसमकक्षं ज्ञायते । अत्र १२०६ श्लोकाः सन्ति । यद्यपि कथावस्तु प्रोच्चकोटिकमस्ति, किन्तु विकासरहितमेव तत् काव्ये । विषयविन्यासोऽपि न समीचीनः । प्राकृतमहाकाव्यकथावस्तुसाधारणतो लोकप्रचलितकथानकेभ्यो गृहीतमस्ति । तत्पुराणेतिहासकोटिककथानके संस्थापयितुं समीचीनम् । गौडवहकुमारपालचरितयोश्च कस्मिंश्चिदशे ऐतिहासिकसामग्री अपि उपलभ्यते । एतेषु नाटकीयसन्धीनां संयोजनं नो विहित विभाति । तत्र तासां छायामात्रमपि नो परिदृश्यते ।

तत्रत्या नायका अपि संस्कृतमहाकाव्यनायकसमानाः उदात्ताः सन्ति । भारतीयपुराणेतिहाससाहित्ये नायकानामेषामास्पदमुत्कृष्ट वर्तते । गौडवहकुमारपालचरितनायका विशुद्धैतिहासिकपरम्पराया गृहीताः सन्ति ।

पूर्वोक्तेषुमहाकाव्येषु वर्णनस्य बाहुल्यं दरीदृश्यते । एतद्दृष्ट्या तानि संस्कृतमहाकाव्यसदृशानि प्रतीयन्ते । कंसवघोषानिरुद्धयोः वर्णन मनोरम प्रभावशालि संक्षिप्तमस्ति । परवर्तियुगीनमहाकाव्यानामयमेकस्यां नव्यदिशि विकासः कथयितुं शक्यते । सेतुबन्धगौडवहकंसवघोषानिरुद्धमहाकाव्यानां रचना रसालकारशैलीछन्दोदृष्टया सस्कृतमहाकाव्यपरम्परामनुसरति । कुमारपालचरिते काव्यसौष्ठवमल्पीयः । एतत्प्रधान कारणमस्तिः—व्याकरणोदाहरणप्रस्तुतीकरणप्रक्रियायाः काव्यकथयासाकं सामञ्जस्यसंस्थापनम् । कवेर्व्याकरणनिदर्शने साफल्यं दृश्यते किन्तु काव्यदृष्ट्या स असफल एवातिष्ठत् ।

पूर्वोक्तनिर्दिष्टमहाकाव्येषु धार्मिकभावनायाः विशिष्टः प्रभावोऽस्ति । जैननकवयो धार्मिकभावनानां काव्यमाध्यमेन व्यक्तीकरण सततमावश्यकममन्यन्त । तेषां संख्याऽगणितास्ते । तेषु "वरांगचरितम्" सम्भवतः दशमशताब्द्याः प्राग्भवा रचनास्ति । अत्रैकत्रिंशत्सर्गेषु "वरांगचरिता" ख्यानमुपलभ्यते । अत्र नवसर्गेषु जैनधर्मसम्बन्धिचर्चाऽस्ति । तथापिमहाकाव्यस्यावश्यकतत्त्वानां समावेशः पर्याप्तमात्रायां मिलति । कथानके नायकस्य निर्वासनम्, परिभ्रमणम्, पराक्रमः शमसाने राज्याधिपतित्वलाभः च साधारणघटनाः सन्ति ।

दशमशताब्द्यां कनकसेनवादिराजसूरिः तथा एकादशशताब्द्यां माणिक्यसूरिश्च यशोधरचरितम् निर्ममाते । कथेयं जैनधर्मावलम्बिषु महती लोकप्रियास्ति । जैनसंस्कृतमहाकाव्यपरम्परानैरन्तर्येणाऽविच्छिन्नरूपाग्रेसरा भवन्ती आसीत् । वीरनन्दिप्रणीतम् "चन्द्रप्रभमहाकाव्यम्" किमपि वैशिष्ट्यं परिरक्षति । अत्र कवेः प्रतिभायाः चूडान्तनिदर्शन परिदृश्यते । रचनाकालः १०२५, खीस्ताब्दात्पूर्वमेवानुमीयते । महाकविवादिराजेन स्वकीयपार्श्वनाथचरिते रचनाकाल। १०२५ । वीरनन्देः सस्तुतिः कृता विभाति । इयमेकमात्रा रचना कवेः । अत्राष्टादशसर्गाः १६६७ पद्यानि सन्ति । संस्कृतस्य प्रायः सर्वेषां छन्दसां प्रयोगो विहितोविभाति । अष्टमतीर्थंकरस्य चन्द्रप्रभस्य जीवनचरितम् वर्णितमस्ति । रचना सरसा हृदयग्राहिणी च । सर्वे रसाः, अलंकाराश्च यथाशक्यंसमाहिता। सन्ति । प्रसंगतः सिद्धान्तप्रतिपादनं प्रभूतबोधवर्धकमसाधारणं च । श्रावकमुनिधर्मवर्णनम् वैशद्येन सम्पादितम् । रचनेयं केवलं काव्यदृष्ट्यैव नार्चनीया प्रत्युत धर्मदर्शनाचारसरण्यापि सततं समृद्धा ।

आचार्यमहासेनस्य प्रद्युम्नचरितं काव्यम् उपलभ्यते । समयः दशम शताब्दी । अत्र चतुर्दश सर्गाः सन्ति । परम्पराप्राप्त कथानकस्य महाकाव्योचितःस्वरूपप्रदानं विशेषतो द्रष्टव्यमास्ते । कथावस्तु शृंखलाबद्धम् सुसंघटितञ्च । क्रमनियोजनं पूर्णतोलभ्यते । येन मनोरंजकतासमावेशो जातः । काव्यप्रवाहं स्थिरं शृंखलाबद्धम् विधातुं भवान्तरकथा अपि परिगुम्फिताः सन्ति । रचनेयं विशेषतः सरसा मनोहारिणी च ।

महाकविः आचार्यवादिराजः । समय १०२५ । अस्य महाकवेः महाकाव्यम् अस्ति । 'पार्श्वनाथचरितम्" ।

अनेन सिंहचक्रेश्वरचालुक्यचक्रवर्तिजयसिंहदेवस्य राजधान्यांनिवसता महाकाव्यमिदम् विरचितम् । महाकाव्यदृष्ट्या "पार्श्वनाथ चरितम्" श्रेष्ठ काव्यमस्ति । अत्र द्वादश सर्गाः । परम्पराप्रसिद्धं कथावस्तु परिगृहीतं विभाति । अनेन महाकविना संस्कृते पूर्णरूपेणेदं महाकाव्यं गुम्फितम् । अस्योपजीव्यमस्तितदुत्तरपुराणम्, किन्तु कल्पनाया अपि विहितोऽस्ति पर्याप्तोपयोगः । कथावस्तु सुसंघटित शैथिल्यविरहितं सुन्दरञ्चास्ति । शास्त्रीयलक्षणानुसारमिदं महाकाव्यं विद्यते । मगलस्तवनपूर्वक महाकाव्यारम्भोऽजनि । रसवर्णने संवेगचित्रणमपि स्वतएवागतम् । अत्राङ्गी रसः शान्तः । अंगानि च शृंगारः, करुणः, वीरः रौद्रबीभत्सभयानकाश्च । कथानकेनादर्शः प्रस्तुतीकृतो विभाति । प्रतिनायकोऽत्र कमठः । नायकस्तंप्रति सदैव सहानुभूतिमेव रक्षति । प्रकृतिचित्रणालंकारयोजनादृष्ट्यापि सफलमिदं महाकाव्यम् । भावरसनिरूपकप्रसादगुणसम्पन्नसरलसरस-

भाषायां भावानुरूपां शब्दावलि प्रयुज्य महाकविनात्र सरलशैलीप्रयासो विहितः। सामान्यत इदंकाव्यं वैदर्भीशैलीसम्भृतमास्ते । कुत्रापि पाञ्चालीस्वरूपमपिपरिगृहीतम् । अस्य यशोधरचरितमपि परमस्ति महाकाव्यम् ।

## महाकविर्धनञ्जयः—

अस्य बहुचर्चितारचना द्विसन्धानमहाकाव्यमस्ति । समयः १०२५ तः पूर्वमेववक्तुं शक्यते । सन्धानशैल्या सर्वप्रथममिद संस्कृतमहाकाव्यं भवितुमर्हति । अत्र रामकृष्णचरितयोः निर्वाहः साफल्येन विहितः ।

इदमष्टादशसर्गेषु विभक्तमस्ति । अपरं नाम राघवपाण्डवीयमस्ति । अत्र रामायण महाभारतकथा युगपन्निबद्धा वर्तते । प्रत्येकश्लोकस्यार्थद्वयमास्ते । प्रथमार्थे रामचरितम् द्वितीयार्थे कृष्णचरितं निस्सरति । सहैव पाण्डवचरितमपि लभ्यते । तीर्थंकरवन्दनया काव्यारम्भः प्रस्तुतः । इतिवृत्त पुराणप्रसिद्धं गृहीतम् । अत्र सर्वत्रकाव्ये पराक्रमपूर्णयुद्धातंको विलोक्यते । इदं काव्यं शास्त्रकाव्योभयदृष्ट्या महत्त्वपूर्णमस्ति ।

## महाकविरसगः—

अस्य महाकवेः रचनाद्वयं लभ्यते । "वर्धमानचरितं" शान्तिनाथचरितञ्च । समयोऽस्ति दशमशताब्दी । वर्धमानचरितमहाकाव्ये अष्टादशसर्गाः सन्ति । यत्र तीर्थंकर महावीरस्य जीवनवृत्तमङ्कितं विभाति । कथावस्तु परिगृहीतमुत्तरपुराणादेव । तत्र कल्पनाया अपि समाश्रयो विहितः । पौराणिककथानकं महाकाव्यकथानके परिवर्तितं विभाति । कथानियोजने योग्यताऽवसरसत्कार्यतारूपाकृतीनाँ समग्रं ध्यानं सुरक्षितं वर्तते । अवान्तरकथापि पूर्वभवावलिरूपे प्रक्षिप्ता विद्यते । प्रतिनायकोविशाखनन्दिरस्ति । कथानकपूर्तये वस्तुव्यापारप्रकृतिचित्रणरसभावसंयोजनालंकारादिनियोजनं सम्पादितं शोभते ।

शान्तिनाथचरितमपि महाकाव्यं । अत्र षोडशसंख्यावतस्तीर्थंकरस्य जीवनवृत्तम् वर्णितम् । रसभावालंकार—प्रकृतिचित्रणेसर्वथा महाकविः सफलो दृश्यते । अत्राधिकपौराणिककथायाः समावेशो राजते । श्रमणश्रावकाचारतत्त्वान्युपवर्णितानि सन्ति ।

## महाकविर्हरिश्चन्द्रः—

धर्मशर्माभ्युदयमहाकाव्यम्

**कविकर्मो**.—च्चताद्दष्ट्या सर्वोपरिवेविद्यते । अस्य लेखकोहरिश्चन्द्रः सम्भवतः द्वादश्याः शताब्द्याः भवितुं शक्नोति । तत्रैकविंशतिसर्गेषु पञ्चदशमतीर्थंकरधर्मनाथस्य चरितंव्यावर्णितमस्ति । शैली माघसमाना, वाग् विन्यासो वैदर्भीरीत्यानुप्राणितो विद्योतते । तस्याः रचनायाः भावरमणीयता संस्कृतसर्वोच्चकविसमकक्षा प्रतीयते । **सम्भवतो द्वादशशताब्द्यां** वाग्भट्टो "नेमिनाथचरितं" रचयामास । अस्य पञ्चदशसर्गेषु नेमिनाथस्य चरितं वर्ण्यविषयोऽस्ति । शैली सरलासरसा च । जैन संस्कृतौ "श्रीनेमिनाथचरितम्" लोकप्रियमास्ते । सूराचार्यमलधारिहेमचन्द्राभ्यामपि नेमिनाथचरितम् वर्ण्यविषयं विधाय रचना विहिता । अस्मिन्नेव समये सुन्दरगणिविरचित महीपालचरितमपि समुपलभ्यते । यत्र चतुर्दशसर्गास्तथा ११५९ श्लोकाश्चासाद्यन्ते ।

## हेमचन्द्राचार्यः—

हेमचन्द्राचार्येण द्वादशशताब्द्यां "त्रिषष्ठिशलाकापुरुषचरितम्" निर्मितम् । अत्र जैनधर्मस्य त्रिषष्ठिमहापुरुषाणाँ, चतुर्विंशतितीर्थंकराणाम् द्वादश चक्रवर्तिनाम्, नव वासुदेवानाम् नव बलदेवानाम्, नवप्रतिवासुदेवानाञ्च चरितानि वर्णितानि सन्ति । हेमचन्द्रस्य व्यक्तित्वम् सांस्कृतिकविकासदृष्ट्योदात्तमासीत् । सोऽनेकविद्यासु शास्त्रेषु च सर्वथा पारंगतोऽभवत् । एतेषां सम्यगध्ययनेनजैनाचारजैनदर्शनतत्त्वानां परिबोधो जायते । विहंगमदृष्ट्या महाकाव्यपराणां विमर्शन तद्विषयकविकासबोधपरिसरः एधते । शेमुषीपरिमार्जनं च यथायथ सम्पद्यते ।

शास्त्रीयमहाकाव्ये वस्तुपालकृतः—"नरनारायणानन्दनम्" जिनप्रभसूरि विरचितम् "श्रेणिकचरितम्" महाकाव्यं च वरीवर्ति । प्रथमस्य कथानकस्याधारो महाभारतमस्ति । महाकाव्यवस्तुविवेचने महाकवेः समीहिता सफलताप्ता वर्तते । परं धारावाहिकताया अभावो विलोक्यते । चरित्रचित्रणे प्रभूता सफलता मिलितास्ते । कृष्णार्जुनयोः चरित्रचित्रणं प्रधानरूपेण विभाति । अन्यान्यपिपात्राणि सन्ति । तेषामपि चरित्रचित्रणम् सर्वथानुकूलमास्ते । तत्र प्रकृतिचित्रणम् सर्वथा समृद्धम् राजते । सौन्दर्यचित्रणम् कामपि विशिष्टतामारक्षति । रसपरिपाकोऽपि द्रष्टव्य एव । भाषालंकारछन्दोविधानवर्ततेतराम् मर्यादितम् । वस्तुं पार्यते सफलमिदं महाकाव्यम् ।

द्वितीयस्मिन् महाकाव्ये अष्टादशसर्गाः सन्ति । कथानके व्यवस्थाधाराबाहिकतयोः समीहितनिर्वाहो नो जातः । च[illegible]णे महाकविना साधीयसी सफलता प्रासादिता । प्रकृतिचि[illegible] [illegible] तत्र सूक्ष्मेक्षणशक्तिः

परिचीयते । सौन्दर्यवर्णनं नो मनोरमम् । अस्य कलापक्षः समृद्धः । अलंकार–योजनाऽभ्यर्थनीया । कालदृष्ट्या सफलमिदमपि महाकाव्यम् ।

ऐतिहासिकमहाकाव्ये बालचन्द्रसूरिप्रणीत "वसन्तविलासः" नयचन्द्र–सूरिकृत "हम्मीरमहाकाव्यम्" च दृष्टिपथमवतरति । उभयत्र चरित्रचित्रणप्रकृति चित्रणसौन्दर्यवर्णनसमाजचित्रणधार्मिकविचारपरिचर्चारसपरिपाकभाषाशब्दक्रीडा – पाण्डित्यप्रदर्शनैः सहैवालंकारछन्दोविधानं समीचीनतामञ्चति । जिनपालोपा–ध्यायप्रणीत "सनत्कुमारचरितम्" अमरचन्द्रसूरिकृत "बालभारतम्" अभय–देव सूरिकृत "जयन्तविजयम्" अर्हद्दासकृत–"मुनिसुव्रतचरितम्" माणिक्य–देवसूरिप्रणीतम् "नलायनम्" मुनिभद्रसूरिविहितम् "शान्तिनाथचरितम्" विशेष–रूपेणोल्लेखनीयमास्ते । एष शान्तिनाथचरितविषये किंचित्प्रस्तूयते । अस्य रचना कालः सं. १४१० वैक्रमशती अस्ति । अत्रैकोनविंशतिः सर्गाः सन्ति । महाका–व्यदृष्ट्या सर्वथा सफलमिदं महाकाव्यम् । वीरशान्तगुणगरिमविशिष्टः तीर्थंकरः श्री शान्तिनाथोऽत्र नायकोनिर्दिष्टः । अङ्गी शान्तरसः, सहायकाश्चान्ये रसाः । चतुर्वर्गेषु धर्ममोक्षौ परमोद्देश्ये स्तः । प्रत्येकसर्गे एकस्य छन्दसः प्रयोगः । अवसाने छन्दःपरिवर्तनं विलोक्यते । कुत्रचिच्च विविध छन्दांसि प्रयुक्तानि । वननगरर्तुसंयोगवियोगविवाहयुद्धादिविषयाः वर्णिताः । सन्धियोजनांविहाया–परशास्त्रीयनियमानां निर्वाहो विहितो विभाति । जैनसंस्कृतेः सशक्तोद्घोषणाकृता चकास्ति । प्रौढभाषाशैलीचरित्रचित्रणगतशालीनता च वेविद्यते । सन्देशश्चवर्तते सार्वकालिकःसार्वभौम सर्वजनीनश्च । इदं पौराणिकशैल्याः महाकाव्यम् । यत्रा–नेक पात्राणां भवान्तरवर्णनं कृतमस्ति । शान्तिनाथस्य द्वादशभवानां वर्णनं विद्यते । वर्तमाननवघटनाभिः सहैव पूर्वभवघटनाऽभिसम्बद्धा । देवराजकृता स्तुतिरत्र परम्परारूपे विराजते । स्वधर्मप्रशंसापरधर्मनिराकरणप्रवृत्तिः परिल–क्ष्यते । अर्हद धर्मः समग्रकाम्यकामना पूर्तिदः चित्रितः । तत्खण्डनपरायणो दारुणं कष्टमनुभवतीति दर्शितम् । चरित्रे सर्वथाऽलौकिकता दृश्यते । पक्षिणश्च मानववाचा व्यवहरन्ति । घनरथमेघरथादीनां मुनीनां भूतभविष्यद् ज्ञान तत्राङ्कि–तम् । येत ते पूर्वजन्मवृत्तान्तम् वर्णयन्ति । अत्र पौराणिकरंगस्याधिक्यम् । धर्म–कथामहाकाव्ययोः समावेशोविलोक्यते । रचनेयं भक्तिभावनयासह पाण्डित्यप्रद–र्शनार्थं कृताविभाति । मिथ्यात्वाञ्चितपरतीर्थिककाव्यपठनपाठन निरासार्थमेव सम्यक्त्व संवासनासंवलितमिदं काव्य प्रणीतमिति साधिकारं वक्तुं पार्यते । मुनिदेव सूरिकृत "शान्तिनाथचरितम्" वर्ततेऽस्योपजीव्यम् । अत्र प्रकृतेः मानवी–करणमपि परिलक्ष्यते । प्रसंगतो दशमसर्गे चार्वाकमतनिरसनपुरस्सरं जीवसिद्धिः विहिता विद्यते । इत्थं धर्मात्मकेऽस्मिन्महाकाव्ये दर्शनपक्षोऽपि नास्त्यस्पृष्टः । इतोऽग्रेपि महाकाव्यपरम्परा गतिमती अभवत् । तत् विषयेऽपि इतिवृत्तग्रन्थेभ्यः परिज्ञानमासादनीयम् । स्थानाभावान्मया दिङ्मात्रमेव दर्शितम् ।

प्राक्कालतः प्रवर्तमानमहाकाव्यप्रणयनधारा कालक्रमेणोच्चावचा चा भवत्, किन्तु सा सर्वतोभावेन सर्वथा नो रुद्धा जाता । यतः सा कालचक्रविजयिनी मन्यते । भारतीभव्यभावविकाशे कथं भवेदवरोधः ? पराधीनतापाशकालेऽपि सा येनकेनापिरूपेण निजनैसर्गिकतां न जहौ ।

वर्तमान कालेऽपि कालजयिनी "श्रीजयमल्लकाव्यकीर्तिलता" प्रत्यक्षं विराजते । अस्याः प्रकाशनं परमसन्तोषास्पदमेवमन्तव्यम् । करालेकलिकालेऽपि सुरभारतीपरायणैः यत्प्रणीयते संस्कृतकाव्यमिति । तथा तस्याः प्रचारेप्रसारे चोत्तरदायित्वम् कटिबद्धाः वहन्ति । अस्याः विषये किमपि विचार्यते:— प्रस्तुतकाव्यंषट्स्तवकेषु विभक्तमस्ति । प्रथमे श्रीजयमल्लस्य जन्मपरिवारविवाह स्वल्पकालिकगार्हस्थ्यजीवनस्य चित्रणं विद्यते । द्वितीये आचार्यश्रीभूधरद्वारा विवेचितकथानकेन विशेषप्रभाविता जयमल्लस्य संयममयश्रमणजीवनस्वीकृतिर्वर्णिता । तस्य धर्मपत्नयाऽपि भागवतीदीक्षाङ्गीकारो रोचकः प्रेरकश्चास्ति । दीक्षितस्य तपोमयजीवनदर्शनमस्ति । तृतीये व्यक्तित्वकृतित्वोद्वेलितोदात्तस्वभावस्य सम्यक् चित्रणम् कृतम् । चतुर्थे पादविहारः धर्मप्रचारश्च सजीव उपवर्णितः । पंचमे यात्रावाः वैशद्येन निर्देशनम् । षष्ठे गहनचिन्तनधाराचित्रिता । तपोध्यानभावपूजायाः वर्णनं वस्तुतोऽद्भुतमेव । इत्थं काव्यमिदं सम्पूर्ति गच्छति । अवसाने परिशिष्टद्वयमपिदत्तमस्ति विषयपरमोपयोगि मत्वा । स्थालीपुलाकन्यायेनैवमया विवेचितम् ।

## प्रस्तुतस्यास्यमहाकाव्यस्यवैशिष्ट्यम् ?

वैज्ञानिकयुगेऽस्मिन् अस्याध्यात्मप्रवणस्यमहाकाव्यस्यप्रणयनस्यकौचितीति प्रश्नः सर्वत उत्थातुमर्हति । उत्तरे सादरं विनिवेद्यते । सम्प्रति संस्कृतसंस्कृतिरक्षणस्यापिसमीरः प्रवहमानो दृश्यते । जागतिकसर्वसभ्यभाषाणांनिदानं संस्कृतं समुन्नेयम् । महाकाव्यनिर्माणेन तथा कर्त्तुंपार्यते । आध्यात्मिकं महाकाव्यम् जनजीवनस्य निर्माणे साधु शक्तमिति विचारशीलैः परिभाव्यते । भौतिकप्रवाहे पतितं जगत् संस्कृतमेवोद्धतुं क्षमम् । समर्थभौतिकयुगे यत्फल लब्धम् तत्सर्वसमक्षे विद्यमानमस्ति । सर्वत्र सर्वनाशविभीषिकैव दृष्टिपथमायाति । विश्वयुद्धद्वयस्य तापोऽद्यापि नो शान्तः । सर्वं विश्वं वेपमानम् परस्परं संदिग्ध सर्वथापीडितम् पतनोन्मुखञ्च परिदृश्यते । अस्यां परिस्थितावेदृशस्य निर्माणंनिष्प्रयोजनं नो वक्तुं शक्यते । अस्य चरितनायकस्य समग्रमाचरणं प्रेरणादायकं भैषज्यमिव विश्वेषा जगतां कृतेमन्तव्यम् । भगवन्निर्दिष्टपथं जगदनुवर्तेत तदा कापि व्याघ्रीव समम्या मुखं व्यादाय समक्षे नागमिष्यतीति । दया दानैः

सहैव बहवः सामयिकाः विषयाः अत्र कीर्तिता वर्तन्ते । नीतिराजनीतिपरिमार्जनस्यावश्यकतोपवर्णिता । अत्र विहिताचारसंहिता कापि द्रष्टव्यैव । महाकाव्यपारायणेनापि सर्वथा वैशिष्ट्यं ज्ञातुं शक्ष्यते ।

अनादिकालतः प्रवहमाना महाकाव्यस्यधारा सदैकरूपासीदितिकथनं विप्रतिपत्तिपूर्णम् । मध्येमध्ये परिवर्तनात्मकं विकासस्वरूपं नैवावरुद्धम् । परन्तु न जातं तत्र परिवर्तनमामूलचूलम् । सामयिकगतिविधिमनुरुध्य यत्परिवर्तितं तत्सर्वं साहित्यकोटौ परिगृहीतमपि जातमिति सन्तोषास्पदम् । महाकाव्यधारा आपगाप्रवाह इव सर्वथा निरोद्धुं न शक्या । सम्प्रति सेतुबन्धादिसुदृढनिर्माणेऽपि वारिप्लावनम् नासम्भवम् । विनाशलीलापि विलोक्यते जगतीतले । अनादिप्रवाहं रोध्दुं कः प्रभवेत् ! साहित्यजगति प्रारब्धो विकासः कुत्र विश्रान्तिमाश्रयिष्यतीति वक्तुं नालम् । भारतीयभाषानिबद्धग्रन्थरत्नेषु भवति विकासस्य स्वरानुभूतिः । हिन्दीसाहित्यस्य महाकाव्येषु नैव वर्तते विकासस्य समानरूपता कामायनी, नूरजहाँ, प्रियप्रवास साकेतभारतविजयेषु हिन्दीमहाकाव्येषु नैव सर्वत्रविद्यतेप्राक्तनसाहित्यलक्षणानां सर्वथा समन्वयः । सामान्यतो महाकाव्यस्य कतिपयलक्षणसत्त्वेपि रुचिवैचित्र्यात्पर्याप्तंस्वातन्त्र्यमपि परिदृश्यते । तथात्र महाकाव्ये यदि पूर्णरूपेण लाक्षणसमन्वयो लाक्षणिकग्रन्थानुसारेण सर्वथा नोपजातं स्यात्तदा किमप्याश्चर्यजातं नो मन्तव्यम् ? नवीनस्वरूपे नवीनयुगे तथासम्भावनाऽसम्भाव्यकोटौ नायाति । विशेषरूपेणोद्देस्यसन्देशदिशि पक्षपातपरिशून्यानां भव्यालोचकानाम् साधीयसी दृष्टिसौदामिनी विद्योतमाना निपतेत् । इति मदीयं हार्दम् ।

जैनसुधर्मसुदेवसुगुरुभक्तिभावप्रवणमानसेन, चरितनायकस्यगुणगरिममयव्यक्तित्वप्रभावितेन, वर्तमानाचार्यकलितकृपासन्दोहपरिलब्धक्रान्तिमयजीवनप्रवाहेण, मया नव्यभव्यभावकदम्बकलितं "श्रीमद्जवाहरयशोविजयं महाकाव्यम्" प्रणेतुं यथाशक्यं प्रयत्नो व्यधायि । अल्पीयसानेहसा विरचितेऽस्मिन् प्रमादवशेनाऽपरिमार्जनीयाः कतिपये दोषाः सम्भवेयुरिति विद्वज्जननिकषोपलः प्रमाणम् । परं "समादधति साधव" इति भणितेरनुसारम् शक्तिसंचयमाकलय्य वेपमानेनापिस्वकीयोभावसुमनोऽञ्जलिरुपस्थाप्यते । आशासे चरितनायकप्रमोदकरोऽय गुरुवर्यनानेशाचार्यमहनीयचारुचरणचर्याया स्वीकृतो जनिष्यते । येन मदीयः श्रमः साधु सफलतां व्रजेत् ।

## कृतज्ञताज्ञापनम्:—

दिग्दिगन्तपरिव्याप्तकीर्तिकदम्बाः युगप्रधानाः युगप्रवर्तकाः युगाव-

तारा: युगन्धरा: महाकाव्यचरितनायका: सादरं स्मर्यन्ते । येषां पावनचरित-प्रवाहै: तरङ्गितन्तद्भृशं संपूर्तिमगात् । तथा सज्जापरिकलितं सत् विशालविग्रह-मपि प्राकाश्यं नीयते ।

अस्मिन्प्रसंगे समतादर्शनप्रवर्तका: चारित्र्यचूडामणयोऽध्यात्मसाधनसु-धासिन्धव: धर्मपालप्रतिबोधका: समीक्षणध्यानधारणधियो गुरुवर्या: श्री नानेशा-चार्या: विशेषरूपेण वन्दनापुरस्सरं मनसिधीयन्ते । येषांनिर्माणशक्तिप्रदानेनैव-कृपाविशेषसंचारेणैव प्रस्तुतमहाकाव्यम् अचिरेणसम्पूर्तिमगात् ।

ग्रन्थस्य प्रणयन जिनशासननभोमणिसमताविभूतिधर्मपालोद्धारकविद्वत्-शिरोमणेराचार्य श्रीनानेशस्य सततत्त्वावधाने सम्पन्नमास्ते ! आचार्यप्रवरै: साधनायाव्यस्तक्षणेष्वपि यथोचितसमयं प्रदाय ग्रन्थप्रणयनसम्बन्धिश्लोकरचनाभा-वभाषाप्रभृतिविविधप्रकारेषुमहत्त्वपूर्णामूल्ययोगदानमदायि ।

आचार्यप्रवराणामध्ययनं जैनदर्शनेन सह परदर्शनेषु संस्कृतसाहित्ये चात्यन्तं गम्भीरं गहनञ्च वेविद्यते । व्याकरणन्यन्याय प्राकृतागमषड्दर्शन-गीतावेदपुराणभामतीटीकोपेतशाङ्करभाष्यसंवलितब्रह्मसूत्रटीकासंपृक्त सिद्धान्तकौ-मुदीप्रमेयकमलमार्त्तण्डानेकग्रन्थरत्नै: सह कुरान बाइबिल पाश्चात्यदर्शन मनो विज्ञानादि विषयाणां तलस्पर्शिज्ञानेन सह तत्राधिकारप्राप्तिरपि समासादित तै: । अत: महाकाव्ये यत्किमपि गुणाधानमजनिष्ट तत्सर्व तेषां कृपाया: अश्रा न्तपरिश्रमस्यच सुफलं वरीवर्ति । एतद्दृष्ट्याभिधातुं शक्यतेयत् ग्रन्थस्य प्रमुख रचनाकारस्यश्रेयो आचार्यवर्यानेव सहजंसमुपैति । मया यत् किमपि कृतं तत् तेषां तत्त्वावधाने एव सत्कार इव विहितम् । महाकाव्येऽस्मिन् वैशिष्ट्याधानस्यमौ-लिककारणमिदमेवास्ति । तेषामहैतुकीं कृपां प्रति विनयेन नतमस्तकोऽहम् । अत्र न्यूनताया: कस्या अपि कृतेऽहमस्मि सर्वथा भाजनम् ।

विद्वद्वर्य श्री शान्तिमुनिजी म. सा. विद्वद्वर्य श्री पार्श्वमुनिजी म. सा. विद्वद्वर्य श्री ज्ञानमुनिजी म. सा. इति त्रयोपिमुनिवरा: महाकाव्यास्यावलोकन कृत्वा यथायोग्यपरामर्शेनोपकृतवन्त: ।

महाकाव्यस्यसम्पन्नायां सम्पूर्णपाण्डुलिपौ वर्षावासावसानेऽहमाचार्य-वर्याणां सेवायां उदयपुरेस्थितोऽभवम् । तैरनुकम्पापूर्वं पुनर्महाकाव्यस्याद्यन्तं श्रवणंविधायमहर्घसंशोधनपरिष्करणमार्गदर्शनै: भृशमुपकृतम् ।

सहैवाचार्यप्रवराणां ज्योतिर्धरजवाहराचार्यान्प्रति प्रस्फुटितभावाभि-व्यक्तिमपि "श्रीमज्जवाहराचार्यवर्यस्य संस्कृतगद्ये जीवनचरितम्" इतिनाम्ना सङ्कलनम्पाद्य ग्रन्थस्यादौ संयोजितं कृतवानस्मि ।

धातृमातृपदालंकृता कर्मठसेवाभाविन: विरक्तवर्गसंप्रेरका: संघीयव्य-वस्थानिर्देशका: श्री इन्द्रचन्द्रजी मुनिवर्या: सादरं वन्द्यन्ते । येषां मौनादृष्टप्रेरणा-

साहाय्यमन्तरेण महाकाव्यपाथोधिपारयानं कदापि न सम्भवि । तेषां वात्सल्य-भावोममास्ति श्रावकिकोधर्मः । अस्यमहाकाव्यस्य हिन्दीभावार्थविधातारः सर्वथादुरूहसम्पादनकार्यनिष्णाताः साहित्यविविधांगप्रणेतारः " अन्तः पथ केयात्री आचार्यश्रीनानेश" इति महाग्रन्थस्य यशस्विलेखकाः श्रीशान्तिमुनिवर्या समभिनन्दनीयाः यैः व्यावरचातुर्मास्यप्रसंगे मदुपस्थितौ प्रशस्तसम्पादनकृत्यजातं सुचारु निर्वोढम् । यस्य तात्कालिकं फलं चातकीभूतविद्यारसिकैरुपलब्धम् । सततसान्निध्यसुधासन्दोहसंवर्षकाः उत्तराध्ययनपद्यानुवादकर्त्तारो मौनसाहित्यसमर्जकाः कविवर्याः श्रीवीरेन्द्रमुनिवर्याः अपेक्षितं साहाय्यं दत्तवन्त इति सभाजनीयाः । विशिष्टप्रतिभाशेमुषी सम्पन्नसुधियो विविधविधविद्याकलामर्मज्ञाः समुज्जवलसमुन्नतायतिकाः विलक्षणप्रज्ञाविचक्षणाः यथानामतथा गुण इति निदर्शनप्रमाणीभूताः श्री ज्ञानमुनिवर्याः स्वकीयसत्प्रेरणया ममोत्साहमवर्धयन्त । यत्फलंमहाकाव्यसम्पूर्तिरिति तेऽपि एतदर्थं वन्दनीयाः सन्ति । उदयपुरनगरे आचार्यभगवत्संन्निधौ सेवाभावसमुज्ज्वलचरिताः गुरुपादपङ्कजपरागसंचयनचारुचंचरीकाः समुपलब्धतपस्तेजस्काः निरन्तरसंयमसमाधिसंसाधकाः श्रीराममुनिवरा अत्र प्रसंगे यदुपकृतवन्तः । तज्ज्योतिरद्यापि मानसेजागर्ति । तदर्थमह तानभिनन्दामि । निर्हेतुकस्नेहिलमानसाः देवताभिधानाः श्री रमेशमुनयो विद्याकृतिवैदग्ध्यविभूतिविभूषिताः नैसर्गिकप्रतिभासम्पन्नाः श्रीविजयमुनिवर्यास्तथाऽन्येपि समस्ताः सन्तः विशेषरूपेण नमनार्थं स्मर्यन्ते । येषां साहाय्यमन्तरेणेदविधानं मादृशानां कृते दुष्करसेवासीत् । विशुद्धपावनचरितानां साधूनामिव सतीनाँ साध्वीनामपि सेवारूपाध्यनस्य मिलति सौभाग्यपुण्योदयात् निरन्तरं सेवावसरः । पञ्चमारायामपि एतादृश्योभिमानभूमयः, सम्यक्ज्ञानदर्शनचारित्रसंयमसमाराधिकाः, विशिष्टशक्तिसम्पन्नाः आदर्शस्वरूपाः सर्वजनहिताय सर्वजनसुखाय संघारिततपस्तेजोमय[illegible]विग्रहाः आत्मोन्नतिदिशि सततबद्धपरिकराः साँसारिकादिकसुख[illegible] मन्यमानाः, अहिंसादिमहाव्रतसमाराधनपरायणाः विश्वविश्वबन्धुत्व[illegible], सुधासरिति इव जनजननिवहं सिञ्चमानाः कराले घोरकलिकाले[illegible] दयादानधाराप्रवाहिकाः अनगाराः दृष्टिपथ समक्षमवतरन्ति । [illegible] सान्निध्येनमयाऽनल्पोलाभोऽलाभि । अत. महाकाव्यप्रकाशनम[illegible] [illegible]ऽहमात्मानं सुधाशीकरसम्पृक्तात्मानमानन्दपयोधौ निमग्नमिवानुभवामि । महाकाव्यपूर्तिमहाध्वरे निदानमेकमिदमपिमन्ये । अन्ते ग्रन्थस्य प्रकाशकाः विशेषतो धन्यवादार्हाः । येषां प्रयासैः सुरभारतीभाण्डारे कापि नवीना सम्पत्तिरायात ।

इति निवेदयते:—

काव्यकार:

काशीनाथ शास्त्री "आचार्य [illegible]

नव्यव्याकरणाचार्यः (वाराणसी) [illegible]

## प्रथमसर्गस्य संक्षिप्तः कथासारः—

प्रथम सर्गः तीर्थंकरस्तवनात्मकोऽस्ति । समस्ताध्यात्मवादिदर्शनेषु मंगलाचरणस्य महत्तोपादेयते स्वीकृते विभातः । निर्विघ्नग्रन्थसमाप्ति प्रति विद्यते मंगलस्य कारणत्वम् । मनोवैज्ञानिकदृष्टिकोणेन मानवमनः स्वोच्चादर्शं ध्यायं ध्यायं तत्रैव समर्पितं जायते । ततः संकल्पस्यासीमशक्तिमुपलभते। जैनदर्शनानुसार स्वयं तीर्थंकरा अपि प्रव्रज्यास्वीकृतिसमये सिद्धनमनरूपं मंगलमाश्रयन्ते । कल्पानुसारेण प्रथमसर्गे लोकोत्तरं भावमंगलं परिगृहीजातमास्ते । साधनायाः चरमपरमस्थितिप्राप्ताः वीतरागदेवारिहन्ततीर्थंकसिद्धाश्च समुज्ज्वलप्रतीकाः सन्ति । अतोऽत्रग्रन्थे सर्वप्रथमं सिद्धदेवः सादर स्तुतराराजीति । अन्यत्र मद्दृष्टौ भावपूर्णवन्दनमित्थमेकत्र सुलभं नो वरीवर्ति विसकलितवर्णनं यत्रतत्रावश्यमेवोपलभ्यते । अनया दृष्ट्या वर्ततेऽस्यवन्दनस्य मौलिकंवैशिष्ट्यम् ? सिद्धप्रभुवन्दनानन्तरं दशश्लोकपर्यन्तं तीर्थंकरवन्दनासाधीयसो मता । तदनन्तरं चतुर्विंशतिजिनेश्वराणां वन्दनं भक्त्या सम्पादितविराजते । सर्वत्र भावप्रवणता विशेषतो दरीदृश्यते । नवीनतापक्षपातिनाग्रन्थप्रणेत्रा विमर्शं विमर्शं वर्णने मन्दं मन्दं पदमाहितं । येन प्रयत्नवैपरीत्यं नोकिमपिकथमप्युद्भवेत् । पक्षपातशून्येन चेतसा सर्वेषां तीर्थंकराणां वन्दने समानरूपतैवाभिव्यक्तीकृता । एकपदे सर्वेषां स्तुतिमुपलभ्य भगवतो भाग्यभास्करामव्यश्रावकाः प्रमोदमेष्यन्ति । प्रयोजनमनुदिश्य मन्दोऽपि न प्रवर्तत इति दिशादिमध्यावसानेषु मंगलं विधाय काव्यकारः त्रिविधेषु प्रयोजनेषु परिपूर्णेषु स्वं कृतकृत्यम् कलयिष्यति इति

## अथ द्वितीयसर्गस्य कथासारः—

अत्रसर्गेचरितनायकस्योद्भवो वर्णितोऽस्ति । सर्वप्रथमं प्रातःकालस्य प्राकृतिकवर्णनम् । यथाः—

कुशेशये मञ्जुलमालिकावतीम् ।
विकासवृत्तो भ्रमरावलिं दधत् ॥
विबोधयन् लोकसमग्रसारिणीम् ।
विभाकरोभाति पुरोदिगञ्चले ॥

सूर्यः मलयजसमीर प्रवाहयन् स्वारुणिम्ना दिशामनुरञ्जयन् ससारे प्रकाशं परिवर्धयन् विराजते । यथा प्रतिभारहितो निर्धनोऽक्षयं निधिं प्राप्य प्रसीदति तथैव प्रातःकालेन मनुष्योऽपि प्रमोदते । तत्र मानवीकरणविधया दिवाकरो धरायाः ध्रवमाश्वासनां ददे । हे दुरितप्रपीडिते धरे ! त्वं भीतिं जहीहि । कोऽपि

त्वरया सुधाकर: प्रत्यासन्ने काले समेष्यति । ततः प्रसंगतो भारतवर्षदेशस्य वर्णनम् संक्षिप्तं विभाति । तस्य मध्यप्रान्ते झाबुआ मण्डलस्य थांदला नगरे गृहस्थरत्नस्य श्री जीवराजस्य गृहे श्रीनाथीबाईकुक्षौ शुभग्रहावलोकितमुहूर्ते श्री जवाहरस्य जनिरभवत् । अल्पायुषि, मातुर्वियोगोजनि । स चानभ्रेऽशनिनिपात: । यथावसरं पठितुं पाठशाला गतः, किन्तु तस्य नैसर्गिकमध्ययन कदापि जीवने समाप्ति नोगतम् । तत् चिरं विस्तृत जातम् । ततोबालक्रीडावर्णनं कृतम् आस्ते । सहसा पित्रोरवलम्बन समाप्तम् । तदपि तस्य हृदयं सर्वथा सहनशील मतिष्ठत् । निसर्गेण तस्य मानसं प्रत्येकपरिस्थितौ शिलायतमेकाग्रं चाजायत । क्रमशो वैराग्यभावाभिमुखी प्रवृत्तिः सम्पद्यमानाभवत् । स स्वय सिद्धपदस्य गायक: समजनिष्ट । आसादिता च साधुसंगतिः । सत्यपिविरोधे वैराग्यभावो दृढतामुपाजगाम । अन्ते च गृहत्यागो विहितः । विहिते प्रभूते प्रयासे साफल्यमासादितमाज्ञापत्रे । तदा परमप्रसन्नतामनुबभूव । आत्मानं सदा संबोधितं चक्रे । दीक्षामहोत्सवस्य विशिष्टायोजने भागवती दीक्षां प्रपेदे । साधुत्वपरिपालने तत्परो जज्ञे । साधको भूत्वा विभूषितदिशि प्रस्थित: ।

## तृतीयसर्ग कथासारः–

अयं मुनिसामाचारी सर्गोस्ति । भागवतीदीक्षा समाश्रयणानन्तरं शुद्धस्वर्णद्युतिरजायत । महाव्रतानां पालनं प्रारब्धम् । साधना समाधिरदीप्यत । परमात्मप्राप्तितत्परता जाता । परीषहानजयत् । ततः धर्मदेशनापि प्रारब्धा । क्रमेण हैमन्तर्तु वर्णनं विहितं विभाति । सहसा गुरौ निधनं गते प्रभूत: प्रभावितोऽर्जान । यस्य कदापि सम्भावना नासीत् । यथा प्रकृतिः परीक्षितुं सन्नद्धेव जाता भवेत् । मानसे विविधभावनोर्मयोऽजायन्त । विषमपरिस्थितावपि समभाव एवादृश्यत । समयपरिवर्तनेन पुनः स्वास्थ्यं समीचीनं सम्पन्नम् । धारानगरे प्रथमप्रावट्प्रवासो जात: । तत्रैव कवितापगास्वत एवोद्बभौ । विहरन् सन् स्वकीय जन्मभूमिमपि प्राप्त: । उज्जयनीनगरे सर्वप्रथम भाषणमदायि । प्रवचनप्रभावेण प्रभाविता अनेके नरः निजव्यसनादिकं जहुः । उपवासादिसमाचरितम् । कतिपयेऽधिकारिणोऽपि जैनमतं स्वीचक्रुः । तथाकथितविपक्षमाश्रिताः साधवो विचारविमर्शार्थं सम्मुखे नागता: । पलायनमेव श्रेयस्करं निश्चिक्युः । प्रवचनेतस्य जन्मसिद्धाधिकारः । जयतारणनगरेऽपि प्रतिवादिन: पराजिताः । धार्मिकप्रवचनैः प्रभूता जीवाः परिरक्षिताः । गुरोराज्ञामादाय दाक्षिणात्यप्रदेसे विहर्तुं प्रयात: । तदानी भारतवर्षस्य पाश्चात्यशिक्षाप्रभावात् धर्मविषये दयनीयैव स्थितिरभवत् । भारतस्यदैन्यचित्रण हृदयविदारकं कृतमस्ति । सर्वत्रासीद्विषमतायाः साम्राज्यम् । दीनदशामपनेतुं कल्पानुसारं (ह्पो०।।)

चार। सर्वथा तस्मिन् राष्ट्रियताया रंग: दृष्ट:। संस्कृतपठनस्याध्यापकै: व्यवस्थानवीना जाता। शालनेऽयमपि गणी निर्वाचित:। लोकमान्यतिलकेनाजायत साक्षात्कार:।

## चतुर्थसर्गकथासार:—

अयं युवाचार्यसर्ग:। आदौ सप्तमश्लोकपर्यन्तम् शरदर्तुवर्णनं विहितमास्ते। यत्र कापि नवीनतैव प्रतिभाति। वर्षावासानन्तरं शरदर्तुपश्चात् विहारो जात:। आचार्यवर्यश्रीश्रीलालजीमहाराजेन निजस्वास्थ्यासमीचीनतया कमपि युवाचार्यं विधातुं मानसं कृतम्। योग्यशान्तपरिपक्वविचाराय धर्मसंघपरिरक्षकाय जैनसिद्धपरिष्कृतचेतस्काय कस्मैचित् मुनये तत्पदं देयमिति। तदर्थं मुनिश्रीजवाहरमेवालचिकाय। तदायं दाक्षिणात्यप्रदेशे विहरमाण आसीत्। अनेनाचार्यविचारेण श्रावका: प्रसेदु:। अस्य प्रस्तावस्य साधुसमर्थनमनुमोदनञ्च विहितम्। तदनन्तरं युवाचार्यपदप्रदानस्य प्रशस्तदिवसस्य घोषणा विहिता। वृत्तं श्रुत्वा मुनिर्जवाहरो विचारसागरे निमग्न:। आचार्यवर्यस्यादेशमादाय कोऽपि विश्वस्त: श्रावको मुनिसमीपमाययौ। गुरुवर्यनिश्चयं मत्वा युवाचार्यपदमादातुं तत्परोऽभवत्। तत: सर्वत्र प्रमोदसमीर: प्रावहत्। विद्याध्ययनेरतान् मुनीन् दाक्षिणात्यप्रदेशे विहाय स्वयं गुरुसन्निधौ प्रतस्थे। युवाचार्यमहोत्सवस्य स्थानं रतलामनगरं निश्चितमासीत्। तत्रैवाचार्यवर्यस्य दर्शनं जातम्। तद्दिनस्य सूर्योदयोऽपि सर्वथा नवीनोदय:। संक्षिप्ते स्थाने समिता: जनता: न ममु:। आचार्यवर्येण शुभसन्देशा: प्रदत्ता:। स्वकीयं प्रावरणं प्रदाय युवाचार्यपदं नियमतो दत्तम्। प्रत्युत्तरे युवाचार्येण प्रवचनपूर्वकं कृतज्ञता ज्ञापिता। उद्घोषितं च। श्री संघस्य कल्याणस्याचरणपूर्वकं जिनेन्द्रशासनस्य सेवाविधानं ममोद्देश्यम्। गृहस्थप्रचारकदिशिध्यानं गतम्। आचार्यवर्यहार्दानुसारं मुनिभि: सहपृथक् विजहार। ग्राम्यदुर्दशां दर्शंदर्शं उद्धाराय प्रवचनं विहितम्। सत्शिक्षाप्रचारायोद्बोधिता: जना:।

## पञ्चसर्गकथासार:—

अयं सर्गश्चरणात्मकोऽस्ति। युवाचार्यपदेस्थितचरितनायको विधिना नमाजोद्भावना विहिता। क्रमश: स आचार्य पदं प्रपेदे। तदातस्य कापि नवीनैव सुषमा परिलक्षिता। अयंषष्ठपट्टे समासीनो बभूव। तत: पूर्वमपि पञ्चाचार्यवर्या अपि पट्टं सुशोभितवन्त:। प्रथमाचार्या: हुक्मिगुरुवर्या:, द्वितीया: श्रीलालजीस्वामिन:, तृतीया: उदयसागरजीवमहाराजा, चतुर्था: श्रीचौथमलजीमहाराजा:। पञ्चमपट्टे श्रीलालजीस्वामिन: शुशुभिरे। श्रीमज्जवाहराचार्य

त्रिरत्नम् तपस्यासमृद्धि, उदात्तबुद्धिधीरता, श्रम: श्रमणत्व, साम्यं, शमनम्, मनोनिग्रहादय: नीतिमार्गानुसरणम्, वैराग्यभावना, विनयावदातता गुणा: प्राचुर्येणासन् । देशनव्यभव्यनिर्माणायात्मोन्नतये च सुशिक्षा परमोपादेयास्ते । अत्रदिशिष्यानं सर्वप्रथमं गतमभवत् । "गुरुकुलस्थापनाया:" प्रेरणा श्रावकैरासादिता । यत्र धार्मिकशिक्षाया: प्रधान्यमेव मान्यम् । पाश्चात्यशिक्षासमन्विता, भारतवर्षीया अनुकरणपरायणा: स्वातन्त्र्यमुपभोक्तुं कथमपि नालम् । देशदुर्दशाप्रतीकारे ते कथमपि सन्नद्धा: भवितुं नोशक्ष्यन्ते । स्वभाषास्वदेशिवसनप्रचारे सर्वतोभावेन यतनीयम् । यदा निर्मातुं नो प्रभवन्ति जनास्तदाहन्तुं कथं यतन्ते । गवां प्राणातिपात: सर्वथा वर्जनीय: । भगवतां देशनया असंख्याता: नरा अहिंसका: सम्पन्ना: । सततक्रियमाणेषु कल्पानुसारं विहारेषु परीषहसहनं साधु मेनिरेगुरव: । अत्र शिशिरर्तुवर्णनं काव्यदृष्ट्या चारुतरम् । दयनीयजनसाहाय्यमाचरणीयम् । स्वकीयभ्रमणेन पूतमपि स्वदेशम् पावयाञ्चक्रिरे ।

## षष्ठसर्गकथासार:—

अस्मिन्सर्गे समाजवर्णनं शेखरायते । यत्रैवाचार्यवर्या गतास्तत्रैव जनसम्मर्दो बभूव । समाजसभाजनविधानेन तत्र तेषां समादरो भूरिशोजात: । अमृतेन सहैव विषयानमपि समासादितम्, किन्तु व्यथा न्यूनापि नानुभूता । पूज्यश्रीणां मानसमात्मदोप्त्योद्वेलिमासीत् । परस्परं भेदकारणात् देशसमाजदुर्दशाविर्बभूव । अत एकता परमोपादेया सर्वथा मता भवेत् । कस्यापि मतस्य तै: खण्डनं नो विहितम् । आगमिकसमन्वयस्यैवस्वरो जुगुञ्ज । समाजसुधारविषयेऽपि देशनाप्रवचनेषु जाता । समाजेन चित्ते परिवर्तनं विधेयम् । येन नवीनयुगस्याधानं तत्र भवेत् । समाजधर्मस्य ते महान्त: सुधारका आदर्शभूता आसन् । साधुश्रावकातिरिक्ततृतीयवर्गोपि नियोजनीय: । समाजसुधारकार्येषु येन सौविध्यं जायेत । तै: सर्वत्रैव धर्मप्रभावना सम्पादिता । धूम्रपानं मादकद्रव्यनिषेध:, शुचिब्रह्मचर्यपालनम् कन्याविक्रयनिषेध:, वृद्धबालविवाहनिवारणं च प्रवचनस्य महोद्देश्यमासीत् । देशनाभि: कुरीतिराशिनिवारणम् अभद्राश्लीलगीतविरोधनं, रात्रिभोजनञ्च निषिद्धं जातम् । मृतकभोजस्य श्राद्धादिविधानस्योपादेयतानो वैज्ञानिकरीतिमनुसरति । देशनां श्रोतुमागतै: सह सर्वथासीत् समानव्यवहार: । स्थाने स्थाने हितकारिणी सभापि संस्थापिता । कला विभागेऽपि जनताध्यानाकर्पणं सम्पन्नम् । विधवानुधारकार्यं कार्यं जातम् । स्वतन्त्रताविषये उन्मुक्त विचारा आसन् तेषाम् । न्यायोपार्जितद्रव्यं समाजकल्याणाय नियोजनीयम् समाजसेवो अपरिग्रही स्यात् ।

## सप्तमसर्गकथासार:—

अस्मिन्सर्गे पूज्यश्रीणां स्थलोविहारचरित्रवर्णनं विशेषरूपेण कृतमास्ते ।

तत्र तेरहपथानुयायिनामधिकं प्राबल्यमस्ति । तत्रान्धतमसमेव प्रचुरं विलोक्यते । अन्यधर्मप्रचारकाणां नासीदेव प्रवेशः । "वसुधैव कुटुम्बमितिमन्वानाः पूज्यवर्या-स्तत्र श्रावकाणां विनीतप्रार्थनया ग्रामानुग्रामं विहरन्तः उपागताः । प्रवचन-सुधामाधुरीपानेन जनताः विशेषरूपेण सभाजिताः । इतः पूर्वतः सर्वथा भ्रमे-निमग्ना एवासन् । तत्रत्यमज्ञानं दर्शदर्शं पूज्यश्रीमानसं दयाविगलितं जातम् । तदर्थं तेन बहु प्रयतितं स्वकल्पानुसारं; किन्तु साधीयसी सफलता नैवलब्धा । स्थलीप्रदेशे विपक्षनामधारिणामासीद् दुर्भेद्या दुर्गनिर्मितिः । यस्य भेदनं सरलं नासीद । आचार्यवर्याणामपि कृते काठिन्यानुभूतिरजनिष्ट । परन्ते ता प्रतिरोध-कारिणी नो अमन्यन्त । तत्र गतैरेव तत्रत्यानां बाधानां परिज्ञानं यथार्थतो कर्तुं शक्यते । प्रसंगतः कविना प्राकृतवर्णन काव्यशैल्या विहितम् विभाति । तन्मूलत एव विशेषानन्दाय परिग्राह्यम् । साररूपेऽत्र साधु वर्णयितुं नो पार्यते । अत्रत्यं सर्वदृश्यं हृदयाहारकं वरीवर्ति । एतादृशेपि मरुस्थलीप्रदेशे परीषहसहनपूर्वकं साधूनाँ विहारो भवति । तेषां सद्धर्मप्रचारे प्रभूता बाधा समुपस्थापिता परं तेविपक्षाः सफलमनोरथाः नो जाताः । स्थाने रोचकाः सूक्तयोऽपि सर्गेस्मिन् गुम्फिताः विभान्ति । तत्रस्थाः जनताः पूज्यपादैः यथाकल्प साधु प्रबोधिताः ।

## अष्टमसर्गकथासारः—

अत्र सर्गे युवाचार्यपदप्रदान विशेषतो वर्णितं विद्यते । तत् पदं योग्य-तमाय श्री गणेशिलालजीवार्योपकल्पितं जातम् । स एतदर्थं सर्वथा पात्रमभवत् । गुरुणामाज्ञाकारणात् तेन दत्तं पदं स्वीकृतम् । तत्रोत्सवे सर्वोपि सघः समुप-स्थितः । रंगमञ्चस्य कापि विशिष्टाऽभूतपूर्वा सुषमाऽजायत । आचार्यवर्यद्वारा प्रदत्तं प्रवचनं विशेषरूपेण सर्वैः नरैः स्नेहेन नयेन विनयेन च श्रुत्वा हृदयगमं विहितम् । भुवनेधरायाँ तीर्थंकराभावे आचार्या एव तत्तुल्याः मन्यन्ते । सदसि विपुलजनभृतायां निजोत्तरीयं तैः तस्मै प्रदत्तम् । तन्माध्यमेन उत्तराधिकार एव दत्त इति कल्पः । प्रथमत एव स गणेशनामाभवत् । युवाचार्यपदप्रदानानन्तर वस्तुतएव गणपतित्व लेभे । आचार्यवर्यैः तदर्थं शुभाभिशंसा विज्ञापिता । आशी-र्वचांसि च कल्पितानि । प्रशस्तसमुज्ज्वल चाचार्यपदं वर्तते । तस्य गुरुत्वभावस्य रक्षणमनसा विधेयमेव । उदधिरिव मर्यादापालको नित्यं युवाचार्यो भवेदिति वर्तते साधीयसीसमीहा । इद पद सर्वोपि संघः प्रयच्छति । रत्नपरीक्षायां पूर्णा-रात्निकावैदग्ध्यमापुः । युवाचार्यः कृतज्ञतामपि संघसमक्षे व्यक्तीचकार । आचार्य-मनसि शान्तेः साम्राज्यं विशेषतो बभौ । विहारप्रान्ते सहसापतितभूकम्प विषये प्रवचनं श्रुत्वा श्रावकैः यथाशक्यं साहाय्यमपि कल्पितम् । तस्य स्थितिः भीतिप्रदा जाता । समये समये राजनेतारोपि द्रष्टुमागताः ।

## नवमसर्गकथासार:-

सुभाषितमयोऽयं सर्गः। आचार्यकृतिषु प्रवचनेषु च प्रभूताः सूक्तयो विकीर्णाः सन्ति। तासाम् अस्मिन् सर्गे प्रकटनेनाचार्यवर्यस्य सर्वविषयस्यबोधस्य परिचयो मिलिष्यतीति कविना तदर्थमपि साहसमाचरितम्। "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" सूक्तेरनुसारं जन्मभूमिर्जननीव स्वकीयभाषापि मनसा माननीया। तपसो महत्त्वं सर्वविदितं भाति। तेन तीर्थंकरत्वमपि प्राप्तुं शक्यते। न्याय्यावृत्तिः समाश्रयणीया। तत्र किमपि कष्टं भवेत् सर्वंसोढव्यमास्ते। मृगाः विपिनस्य शोभाः सन्ति। तेषामाखेटप्रसंगेन कदापि मारणं नाविधेयम्। ब्रह्मचर्यपालनेनापरिमितलाभाः जायन्ते। आत्मोन्नतिकृत्ये सफलतायै तत्परिपालनमावश्यकमेवास्ते। विज्ञानं वरदानस्वरूपमेव मान्यं। सदा सर्वथाऽभिशापरूपं नैव ग्राह्यम्। धनेषु ममता नो श्रेयस्करी। वित्तं समाजकार्ये नियोजनीयम्। शरीरशोभा गुणैः सम्पद्यते ना विभूषणादिभिः। गुणेषु पक्षपातो, ना दुर्गुणेषु। प्रयत्नेन रागद्वेषौजेतव्यौ। ताविव संसारमूलौ कथितौ। अहिंसाभावा महत्तमः। स चात्मकल्याणाय धार्यः। चरित्रबलमेव सर्वबलेषु श्रेष्ठं मतमास्ते। तन्नाशे सर्वमेव नश्यतीति ध्येयम्। शीलधर्मविनतसविधे पापानि न तिष्ठन्ति। आत्मकल्याणाय जिनवरवाणी समुपासनीयासंयोगवियोगौ समौ मान्यौ। पापशुद्धिविधानेनात्मकल्याणम्। कृतकर्मणाँ भोगादेवनाश इति अवधार्यमेव।

## दशमसर्गकथासार:-

अयं सद्धर्मसर्गोऽस्ति। अत्र वादविवादस्य चर्चा पूर्णा विद्यते। सद्धर्मप्रचारस्यैव वर्तते प्राधान्यम्। एकदा भगवान् महावीरो विजहार। सह स्वयंसम्पन्नसाधुः गोशालकोऽपि चलितः। तत्र तापसशीतलेश्यायाः भगवान् शीतलेश्यया तंररक्ष। तदारभ्य दयादानयोः प्रसृतिर्जाता भुवने। भिक्षुस्वामिप्रचालित सम्प्रदायो दयादानादिकं नमन्यते। अत्र भगवतो महावीरस्य दोषं मत्वाच्युतिमपि निर्दिशन्ति। भगवतो मोहनीयकर्मापिस्वीकुरुते। तेन तस्य स्वप्नाः आयाताः। अत्राचार्यभगवतः समाधानमिदम्। भगवतः स्वप्नाः सर्वथा सत्यमाकलयन्ति। नो आसात् मोहकर्मण उदयः। दशाश्रुतस्कन्धः प्रमाणम्। ते स्वप्नाः चित्तैकाग्रतामुपगताः आसन्। न ते पापाः। प्रमादकषायजन्याश्चापि नासन्। निद्रा द्रव्यनिद्रा मान्यानतु भावनिद्रेति। निर्णायिकानां निर्णयोऽपि वादिपक्षे जातः। विहरन्नाचार्यवर्यः सुजानदुर्ग (गढ) नगरं प्रयातः। समवसरणे प्रवचनं श्रोतुं नराः उत्काः जाताः। अत्र विपक्षपक्षपातिनो प्रश्नान्कर्तुं समयं याचितवन्तः। दत्ते च समये सर्वे सम्मिलिताः। वादिभिः प्रश्नाः विहिताः। न

हितेष्वपि प्रश्नेषु तेषां सन्तोषो न जातः । तैः केवलं कोलाहलः समारब्धः । पुनः प्रतिवादिनोऽवकथन् । जीवानां रक्षणं पुण्यमास्ते नो पापम् । गवां रक्षणं धर्मः । रात्रौ साधु सविधे स्त्रीणामुपस्थितिः शास्त्रविरुद्धैव । दिनत्रयं यावदुत्तरं दत्तं परं विपक्षपक्षपातिनां सम्यक् बोधो नाजनिष्ट । सर्वमतभेदविषये वाद-विवादस्य कृते प्रस्तावो रक्षितः, किन्तु तैः किमपि न स्वीकृतम् । चुरू नगरेऽपि विपक्षिसमाजे आचार्यवर्यस्य साधवो निर्णयार्थं गताः, परन्तु तत्रापि ते दुराग्रहं नो ऽत्यजन् । सिद्धधर्मो विजयतेतराम् ।

## एकादशसर्गकथासारः—

अयं विजयसर्गोऽस्ति । अनेकस्थानेषु विपक्षिमेलनं जातं; किन्तु मतभेद-विषये निर्णयो नोऽजनि । प्रतारणपरैस्तैः स्वकल्पितवाग्जाले सरलाऽज्ञाना जनाः निक्षिप्ता आसन् । आचार्यवर्यस्य सद्धर्मप्रचारैः तेषु कतिपयमानवाः प्रबुद्धाः । पूर्वपक्षाणामयं सिद्धान्तोऽस्ति दीने हीने दया न विधेया । दययापि जीवरक्षा न विदध्यात् । तदपि पापं मतमेकान्तम् । अस्य मतस्य समर्थयुक्त्या शास्त्रप्रमाणै-श्च सिद्धान्तवाग्भिः निरसनं कृतम् । श्रमणाः प्रतिजानते । "अहमज्ञानं त्य-जामि । ज्ञानमुपगृह्णामि । मिथ्यात्वं परिहरामि । सम्यक्त्वं स्वीकरोमि" । इति । मिथ्यात्विदृष्टिमानवे तपोऽहिंसादयो नो तिष्ठन्ति । तस्यकृते मोक्षमार्गस्य देशाराधकप्ररूपणाऽऽगमविरुद्धैव । तथैव संवररहितनिर्जराविधानं मोक्षमार्गस्य देशाराधनमपि च सर्वथागमविरुद्धमेव । मेघस्य जीवः प्रसंगेन पूर्वकरिभवे शश-कादिजीवरक्षासमये विशेषरूपेण सम्यक्दृष्टिरासीत् । मिथ्यात्वकालस्य संव-न्दनं जिनोक्तमार्गे नास्ति । सम्यक्त्वचारित्रादिकार्यकलापैः मोक्षमार्गस्य सिद्धि-र्जायते । सुव्रतो निश्चयरूपेण सम्यक्त्वदृष्टिर्भवति । स एव द्वादशभिव्रतैर्युतो जायते । आन्तरिकभावभवितभिः कृतं भावयुक्तं वन्दनादि भगवदाज्ञायामस्ति । भव्यजीवेषु तद्भवति । तेरहपन्थेतरसाधवः कुपात्राणि न सन्ति । यथा पूर्वपक्षो मन्यते । अधर्मदानस्य निषेधेन धर्मलाभो भवति । आनन्दश्रावकोपि दयादान-निषेधं नो कृतवान् । अनुकम्पा दानमपि यथायोग्यं विधेयम् । शुद्धश्रावकस्य कृते दानं देयम् । म्रियमाणजीवरक्षणं सर्वथा कर्तव्यमेव । अन्ते बभूव विजयः ।

## द्वादशसर्गकथासारः—

अयमाध्यात्मिकः सर्गः । अत्राचार्यवर्यस्य विचाराः प्रस्तुतीकृताः वर्तन्ते । सर्वप्रथममत्रचार्वाकसमयस्य निरसनं कृतं विभाति । शरीरभिन्न आत्मानास्ति । चैतन्यं पञ्चभूतेभ्य उत्पद्यते । भूतेषु नष्टेषु सा चैतन्यसत्तापि

नश्यति । अत्र मतें प्रत्यक्षस्यैव प्रामाण्यम् । तत्र भौतिकवादस्य प्राधान्यम् । सिद्धान्तमतेनेत्थं निरसनं जातमास्ते । आत्मनोविद्यमाने सति शरीरे चैतन्यभ्रमो भवति । इदमात्मास्ति त्वस्यैव प्रकाशनम् । आत्मानास्तीतिकथनमपितदस्तित्वस्य प्रधानं साधनम् । बुद्ध्या भौतिकविकासो जायते । आत्मनो विकासस्तु स्वयमेव सम्पद्यते । भूतेभ्यः पृथक्वस्तु विद्यत आत्मैव । स नित्यः अक्षयः चिदानन्दः, शाश्वतस्तथा सदा विद्यमानोऽस्ति । स दिव्यशक्तियुक्तः । तस्य यथार्थज्ञानं दुष्करमास्ते । अजरामररूपोऽस्त्यात्मा । करणकदम्बकस्य स्वामी । आत्मपरिबोधनं परमात्मतत्त्वस्य विशिष्टबोधः सम्पद्यते । तदात्मज्ञानं विना विद्यासर्वक्रियाः निष्प्रयोजनाः सन्ति । भौतिकाध्यात्मिकोभयज्ञानमपेक्षितम् वर्तते । आत्मजागरणाय सावधानतया प्रयत्नो विधेयः । विविधकर्मोपादानं परिगृह्य यमात्मा निमित्तरूपकारणमास्ते । स एव स्वदेहं निर्माति । आत्मानन्तोऽस्ति । तस्य एकत्वं कदापि नो साध्यम् । विशिष्टज्ञानेनात्मानमेवविद्धि । तेनैव सर्वोन्नतिर्जायते । आत्मसुखमेकान्तभावेन तिष्ठति । तत्र परिवर्तन नो जायते । सांसारिकसुख विषयजन्यं भवति । तद्दुःखकारण विद्यते । जीवकर्मणोरनादिसम्बन्धः । तस्य कर्मणो विधीयते क्षयः । तदा राजते विशुद्धआत्मा ।

## त्रयोदशसर्गकथासार.—

अयमभ्यर्थनासर्गः । अत्र परमतत्त्वमभिलक्ष्य आत्मभावना प्रकटितास्ते । हे प्रभो ! अहम् उर्ध्वगतिमिच्छामि । मदीयमिदं सर्वोच्चं लक्ष्यमस्ति । कदापि मम पतनं न भवेदित्यर्थं सदा प्रार्थनां विदधामि । अहं धनस्य याचनां नो करोमि । मानसे क्वापि लौकिकी कामनापि नास्ति । अहम् तव शरणप्राप्ति कामये । अत्र मह्यं त्वया वरदानमेव देयम् । सर्वेषां विपत्तौ भवता साहाय्यमाचरितम् । मम कार्येऽपि तथैव कर्तव्यम् । तदेव मम संचितं पापं विलेष्यति । कस्यापि धर्ममार्गे बाधा नोपस्थापयामि । सम्भाव्ये मयि अनेकानि दूषणानि सन्ति । तेषां दयया निरसनमेव विधेयमवशिष्यते । अपरिमितान्वेषणानन्तरमेव भवदीयशरणमाप्तम् । तत् विहायान्यत्र गतिर्नातिश्रेयस्करी । सांसारिकाः विकाराः मामत्यमभिलषन्ति । भवान् नैजं विरुदं परिपालयन् मां त्रायस्व । भवतां सन्निधानेन मम सर्वदोषाः गुणतां व्रजिष्यन्ति । यथा पारसमणिसन्निधानेनायः हिरण्यायते । यदा शत्रवो मां नाशयितुं समीहन्तां नाम परमहं तान् सर्वथा मित्राणि एव मन्ये । आज्ञां विनैव हृदये पाटच्चराइव कषायाः प्रविष्टाः वैजात्यमाचरन्ति । तेषां निष्कासन कथं भवेदिति भवतैव कोपि पन्थाः प्रदर्शनीयः । मम सर्वत्र समभावो भवेदिति मानसिकी समीहा । हे भगवन्त्वं दयालुरिति जगति विदितोऽस्ति । मां रक्ष । अन्यथा कीर्तिविध्वंसो जनिष्यते । रक्षकं

त्वाँशरणं विहितवानस्मि । मम रक्षा त्वदीयं कर्तव्यमेवास्ति ।

## चतुर्दशसर्गकथासारः—

अयं धर्मदर्शनसर्गः क्रमप्राप्तोऽस्ति । आचार्यप्रभुणास्मिन् तत्त्वं बहुविवेचितम् । तस्यैत्र संक्षिप्तपरिचयः प्रदीयते । दर्शनम् तर्कहेतुवादयोराधारितम् । धर्मस्याधारः श्रद्धास्ति । श्रद्धालूनाँकृते आचारपरम्परारूपदर्शनमास्ते । आचाररूपेणाऽहिंसा सर्वप्रथमंगृहीता वर्तते । सापेक्षानेकान्तवादस्य कापि दिव्या प्रशंसनीया परमोपयोगिनी विभूतिरस्ति । जैनसस्कृतिरनादिकालतो निरन्तरेणागच्छति । या मानवजीवनस्य पूततमाधारोस्ति । यत्र समता साम्राज्यं विभाति । कस्यापि जीवस्य पीडन नो विधेयम् । जिनागमा आप्तप्रणीतत्वात् पौरुषेयाः सन्तः प्रमाणम् । नतु वेदादयः । ग्रन्थिभेदोऽनिवार्यः । कर्मप्रवादः सर्वथामान्यः । वर्तमानस्य चनिर्माणे व्यतीताधारस्तथाऽनागतस्य निर्माणं वर्तमानाधारे । सर्वं निर्माणमात्माधारे विद्यते । सर्वा विचारधाराऽनेकान्तप्रभाविता । स्याद्वाददृष्ट्या नयवादविकासः । "उत्पादव्ययध्रौव्यं सत्" इदं पदार्थस्य मौलिकं निर्दिष्ट लक्षणमस्ति । अत्रैकान्तवादो नोगृहीतः । नवतत्त्वविवेचनं पूर्णतो विहितंविभाति । प्रसंगेनचार्वाकमतस्य निरसनं कृतम् । द्विविधं प्रमाणं मतम्:—प्रत्यक्ष परोक्षञ्चेति । प्रमाणेनात्मसिद्धिर्विहितास्ते । वनस्पतावपि जीवाः इतिवैशिष्ट्यम् । पूर्णरूपेण कर्मणां निर्जरामोक्ष इति सम्यक्दर्शनचारित्राणि मोक्षमार्गा इति विविचनैः सर्गः सम्पूर्तिमगात् ।

## पञ्चदशसर्गस्यसंस्कृतेसारः—

अयं रत्नत्रयसर्गः । अत्र ज्ञानदर्शनचारित्रेषु विशिष्टः प्रभावोलक्ष्यते । ज्ञान स्वतः प्रकाश्यं भवदपि घटपटादिपरपदार्थप्रकाशकं भवति यथा दीपकः । अस्य पञ्चभेदाः मतिश्रुतावधिमनःपर्यवकेवलानि । मतिज्ञानं द्विविधम् श्रुतनिश्रितं अश्रुतनिश्रित च । तयोः पुनः चत्वारः भेदाः । अवग्रहेहावायधारणाः । अवग्रहस्य भेदद्वयम् व्यञ्जनावग्रहार्थावग्रही । अवगृहीतार्थस्य विशेषरूपेण विवेचनमोहाद्वारा सम्पद्यते । इदं ज्ञानं संशयरूपं नास्ति । अत्रनिर्णयार्थे भवत्युन्मुखता । अत इदमपि प्रमाणरूपम् । अवाये ज्ञानं निश्चिततामेति । अवायस्य विशिष्टं रूप धारणा । एतत् विवेचनग्रन्थेणास्ति । आप्तप्रणीतसदागमेन मतिपूर्वकं श्रुतज्ञान भवति । अस्य भेदद्वयम्:—अंगप्रविष्टमगवाह्यंच । प्रथमस्य प्रणेता गणधरः द्वितीयस्य च स्थविराः । उभयमपि प्रमाणकोटिमेति । मतिश्रुतज्ञाने करणमनोनिदानेन जायमानत्वात् परोक्ष । इतराणि ज्ञानानि स्वतो

भवन्तीति प्रत्यक्षाणि मन्यन्ते । ज्ञानी केवली उच्यते । ज्ञानिनः आत्मशुद्धिपूर्वकं पुण्यप्रकृतिबन्धं विदधति । ज्ञानिनः परिणतिः मुक्तिरस्ति । अत्र विशेषबोधो जायते । दर्शने तस्य सामान्य रूपं भवति । विद्यमानायां क्रियायां ज्ञानं सिध्यति । द्वयोर्लक्ष्यमेकमेव । केवलमेकेन कार्यं नो चलति । ज्ञानं विना क्रियान्धा । क्रियां विना ज्ञान पगु । ग्रन्थेऽग्रे क्रियायाः भेदप्रभेदाः वर्णिता सन्ति । गुप्तिः समितिः धर्मः अनुप्रेक्षा परीषहजयः चारित्राणि च संवरतत्त्वमस्ति । आस्रवनिरोधः संवरो भवति । सवरनिर्जराभ्यस्तपः क्रियते । अस्यभेदद्वयम्:-आभ्यन्तरं बाह्यम् च । विमुक्तये रत्नत्रयमुपादेयम् । ग्रन्थावसाने प्रसगतः प्रमाणचर्चा चर्चिता । ततः सर्गस्य पूर्तिरजायत । (संस्कृते लिखितसारोऽत्रावलोक्यताम्) ।

## षोडशसर्गस्यकथासारः-

अत्र परमोपादेयस्य कर्मप्रवादस्य वर्णन चकास्ति । अनेन बद्धात्मस्वरूपस्य व्याख्या क्रियते । आश्चर्यमस्ति शुद्धोपि कायसमन्वित आत्मा सततकर्मजालैः भ्रमति । यत् किमपि भवति तत्सर्व कर्मप्रभावेणैव । विश्ववैचित्र्ये कारणमात्मैव । तत्र कर्मसहायक जायते । वलशालि कर्म पौद्गलिक सत् आत्मान बन्धने क्षिपति । चिरात् जन्ममरणराशेः मूलं कर्मैव । जीवो यथा करोति तथैव फलमश्नुते । तपश्चरणादिभि. तत् क्षयति । कृतकर्मणः फलमवश्यं लभ्यते । वर्तमाने फलाभावेऽनागते मिलति । भवमध्यमेन पूर्वकृतकर्मणां फलं लभ्यते । तथा नवीनरूपे तद्वध्यते च । जन्मादिसम्पूर्णभेदाः, सांसारिकसमस्तदुःख सुखादिभावः च कर्मणोत्पद्यते । आत्मा कर्मकरणे कथंचित् स्वतन्त्रोपि भवति । स कालस्वभावनियतियदृच्छा भूतेश्वरभाग्यप्रयत्नादिकं स्वदृष्ट्या समन्वितं विदधाति । यथांकुरस्य कारण बीजम् । तथैव सुखादिकारणं कर्म । अस्य सिद्धिः विविधैरनुमानैः कृताचकारित । मूर्त कर्म वेदनानुभवत्वात् यथाऽनलः । अमूर्तज्ञानस्य यथा मूर्तमदिरादिनोपघातो भवति । तथैवामूर्तात्मनोऽपि मूर्तकर्मद्वारा स बोध्यः । शरीरकर्मणोः सम्बन्धोऽनादिः । यथा बीजादंकुरः अंकुरादचबीजमुत्पद्यते तथैव कर्मणः शरीरं शरीराच्च कर्म भवति । स्थानांगादिषु कर्मप्रवादस्य विवेचन विशेषरूपेण विहितमास्ते । जडचेतनयोर्मिश्रणेन कर्मोद्भवः । यदा जीवो जडपदार्थान्प्रति प्रयाति तदा पुद्गलपरमाणवः तत्र समाकृष्टाः सन्तः विलीयन्ते तथात्मनासह सयुक्ताः जायन्ते । विनष्टेषु सर्वकर्मसु जीवस्य पुनर्जन्म न भवति । अत्र विषये सांगविवेचनं वर्तते । कर्मणोऽष्टौ मूलाः प्रकृतयः फलप्रदायिकाः मताः । सर्वैः तत्पृथक् क्रियत इति सारः ।

## सप्तदशसर्गस्यकथासारः-

प्रथमाचारसामाचारी सर्गोऽस्ति । प्रारम्भे प्राकृतवर्णनोपयोगः कृतः ।

नवोनैव विशेषता प्रकटीकृता । धराया: मानवोकरणं विशेषतो द्रष्टव्यमेव । समीर-सेवा कामपि अनिर्वचनीयतामापन्ना । अत्रोत्प्रेक्षालंकारो विजयतेतराम् । विहगकुल-गानमपि सर्वथा नवीनम् । मृगा अपि सौम्यरूपं दृष्ट्वा नतप्ता: भवन्ति । आचार्यवर्यस्य भ्रमरा अपि यशोगानमेव पपु: । यत्र यत्राचार्या: गच्छन्ति तत्र तत्र धरा धामायते । ते सर्वत्राऽप्रतिहतगतय: । हिंसा न कार्या । सर्वत्र समता कार्या । सर्वे जीवितुमिच्छन्तिमर्तुं न कोपीहते । कस्यापि विरुद्धाचरणं न कार्यम् । स्थूलसूक्ष्मसर्वजीवा: पातव्या: । प्रमादं विहाय दया विधेया सर्वत्र । तदनन्तरं सत्यस्य संख्यायाति । कायेन वाचा, मनसा तत्पालनीयम् । स्वप्नेपि परद्रव्यापहारो न विधेय: । साधुचर्या द्विविधा भवति सामान्यदिनचर्या तथापर्यूषणा-कल्पा । प्रथमा दशधा उत्तराध्ययनादिवर्णिता विभाति । वस्त्रपात्रादिप्रतिलेखना कल्पानुसारं कार्या । गुरुवन्दनादिकं सम्पादनीयम् । वर्षावासोऽनिवार्य: । तदा विहारो न जायते । द्वाचत्वारिंशत्दोषरहितमेषणीयमाहारादि ग्राह्यम् । पर्यूषण पर्वराज:, सवत्सरी च मान्या । क्षमापना विधेया । तपोऽनिवार्यं मतम् । अन्ते सलेखना विधि: पार्य: । त्रिरत्न समाश्रयेण मुक्तिलाभ: । यथा साधुसामाचारी दर्शिता तथैव श्रावकाचारोऽपि ज्ञातव्य: । महाव्रतानि साधूनां कृते, तथाणुव्रतानि श्रावकाणामितिविशेष: । श्रावकै: द्वादश प्रतिमाधारणं क्रियते ।

## अष्टादशसर्गस्यकथासार:-

अस्मिन्सर्गे वियोगिनीछन्द: । संसारस्यानेकै: दर्शनै: समर्थितस्येश्वरस्य जगत् कर्तृत्वनिरास: कृतश्चकास्ति । अत्र विशेषतो वैदिकै: सह विचारविमर्श: कृतोऽस्ति । तन्मते ईश्वर: जगत्कर्ता पालयिता संहर्ता च स मत: । जैनमते तस्य निरासो युक्त्या विहित आस्ते । विभेददर्शनात् संसारे ईश्वर: तस्य कर्ता कथमपि न सिध्यति । कोपि सुखी, कोपि पीडित:, कोपि धनिक:, कोपि रकश्च कथं विद्यते । स समदृष्टिरपिविद्यते । तदा वैषम्यं कथमपि ग्रहणकोटौ नायाति । भक्तजनान् रक्षति, रक्षांसिपीडयति इति कथम् ? कर्मानुसारं दृष्टि विधानमपि नोचितम् । यदि स करोति । स्वतन्त्रतया तदा कर्मोत्पत्ति कुतो जायते । स कथं पापान् सृजति ? सर्वै: कृत्यं यदीश्वर: कारयति । पापकर्मप्रवृत्तिमपि स एव कारयति । दण्ड च लभते कर्तेति महदाश्चर्यम् । जैनेऽपि वर्तते ईश्वरस्तदा ते जैनाप्यस्यैवनिरसनं विदधति । तदा तेषान्नकोपि दोष: ? जगति कर्तार: सर्वे साकारास्तदेश्वरो निराकार: सृष्टिं कर्तुं कथमलम् ? स ज्योतिस्वरूप: प्रकाशते इति कथनं निराकारे न संघटते । तस्य कर्तृत्वे मते दोषबाहुल्यं स्वत एवापतति । स किमर्थं जगन्निर्माति ? इति प्रयोजनं किमपि न दृश्यते ? उद्देश्य-विहीनं किमपि कार्यं संसारे नो जायते ? विषवृक्षोपि संवर्ध्यं स्वयं छेत्तुमसाम्प्र-तमिति [illegible] न जगन्निर्माय नाशयितुन्न प्रभवेत् । नर: कर्म करोति

तदनुसारं फलमपि कारणात् दुःख सुखादिकं लभते। तदर्थमीश्वरस्य नापि विद्यते सत्ता ? भवत्प्रदत्तानुमाननिरसनमपि जैनागमे विद्यते। केनापि प्रमाणेन ततसिद्धिर्नो भवेत्।

## एकोनविंशसर्गस्यकथासार:—

अत्रसर्गे सर्वतोविशिष्टस्य सर्वथा मौलिकस्याऽनेकान्तवादस्य दर्शनात्मकस्य महाकाव्ये विचारप्रस्तुतिश्चमत्कारिणीव प्रतिभाति। केवलज्ञानात्पूर्वमेव भगवता महावीरेण पुंस्कोकिलस्वप्नाः दृष्टाः। तदनन्तरमेव प्रतिबुद्धाः जाताः। तत्कारणादेवस्याद्वादोपि जगति प्रसृतः। धर्माः परस्परं सापेक्षरूपेण नियताः भवन्ति। एकस्मिन् विद्यमानेऽपरोपि विद्यते इति निश्चप्रचम्। यस्य प्रश्नस्य यथादृष्ट्योत्तर दातुं शक्यते तथैव तत् देयमिति नियमः। एकान्तवादस्य सर्वे पक्षाः परस्परं मतभेदेन पूर्णाः सन्ति। अत्र प्रत्येकवस्तु चानन्तधर्मात्मकमास्ते। एषु धर्मेषु कस्याप्यपलापोन विधीयते। सम्यक्वस्तु तत्त्वस्य व्यवस्थात्रैव जायते। एकान्तवादेन वस्तुस्वरूपं खण्डितमेव जायते। भगवतोक्तम् लोकः नित्योऽस्ति अनित्योऽपीति। सत्रिकाले निवसति अतः नित्यः; शाश्वतो, ध्रुवोऽपरिवर्तनीयश्चास्ति। किन्तु स अवसर्पिणीउत्सर्पिणीकालयोः परिवर्ततेऽतोऽशाश्वतोऽनित्योप्यस्ति। द्रव्यास्तिकदृष्ट्या सर्वंनित्यम्, किन्तु पर्यायार्थिकदृष्ट्या ऽनित्यमपि। एकान्तनित्यपक्षं निरस्य भगवताऽनेकान्तपक्ष एव समर्थितः। सोमिल ! द्रव्यदृष्ट्याऽहमेकोऽस्मि। प्रवर्तमानज्ञानदर्शनोपयोगेनानेकोऽप्यस्मि। यो यथास्ति तथैव निर्वचनीयः। अनेकान्तवादेनोभयपक्षस्य सिद्धिः। निषेधेन सहविधिरूपेण क्रियते अत्र समन्वयवादो विजृम्भतेतराम् ? अत्रैव वस्तुनः पूर्णस्वरूपं प्रतिभासते। प्राचीनजैनागमेषु स्याद्वाद उपलभ्यते। जैनदर्शनदृष्ट्याऽनेकान्तवादाभ्युगमः। स्याद्वादः निश्चयवादो ज्ञानवादश्चरित। अत्र सप्तभगीप्रकारः प्रस्तुतोभाति। अत्राभेदवादे कालाद्यष्टदृष्टिः ध्रियते।

## विंशसर्गस्य संस्कृतेकथासार:—

अयमस्ति दिव्यसर्गः। अत्राचार्यवर्यस्य कायसंहरणं वर्णितमास्ते। तेनाचार्येण दीक्षां गृहीत्वा मुनिधर्ममासाद्य देशस्य विभिन्नभागेषु विहृत्य मनुष्याऽज्ञानापहृतिर्विधीयतेस्म। सर्वत्रदयादानयोः सरित्प्रवाहिता। सर्वे प्रभाविताः। जगतः पूर्णमेव भद्रं भावितम्। तस्य सन्देशाः श्री गणेशिलालमहाराजेन यथास्थान प्रापिताः। मन्दिरधर्मस्थानेषु वलिनिरुद्धः। तदुपकारेविषये केवलं कृतज्ञताज्ञापनमेव ऋणापनयनम्। भक्तैः दीक्षास्वर्णजयन्तीसमारोहो विहितः। आजी-

वनं परोपकृतौ साधुसामाचारीपरिपालनेदक्षता, कर्तव्यभावना च भाविता। साध्यसिद्धिं समीपे परिज्ञाय भगवदाज्ञां पूरयितुं सर्वेषांकृते क्षमायाचना प्रस्ताविता। क्रमशोऽस्वास्थ्यमेव कर्मविपाकात् अजायत। सर्वोपचारे विहितेऽपि साफल्यं तत्र नो लब्धम्। अवसाने संस्तरणेव साधुमतम्। शरीरत्यागसमये कमनीयमतेराजार्यचरणस्य कापि दिव्यैव सुषमा जातास्य मुखमण्डलस्य। अपूर्वा च शान्तिः व्यराजत। कापि वेदना नो परिलक्षिता। प्रदीपतुल्यो महात्मा चरितनायको जगत्पदार्थान् प्रकाश्यात्मानं पूर्वं प्रकाशयितुं महाप्रयाणपथस्य पथिकः सम्पन्नः। आचार्यवर्ये दिवंगते धरामानवानां वार्तैवैका? नीहारिकामिषेण नभोऽरोदीदथवा प्रासीददिति यथार्थं सर्वविदो विदन्ति। ज्ञानेन पदार्थाः ज्ञायन्ते। दर्शनेन श्रद्धीयन्ते। सम्यक् चारित्र्येणाविनिरोधो भवति। तपोभिरात्मशुद्धिर्विधीयते तदा साध्यते मोक्षलाभः। सम्यक् ज्ञानदर्शनचारित्राणि मोक्षमार्गः इति साधूक्तम्।

## एकविंशसर्गस्यसंक्षेपः—

सम्पूर्णमानवजातेः कृते महनीयकरणीयसदुपदेशा आचार्यवर्येणानेन प्रकारेण प्रदत्ताः सन्ति। आत्मनि विपुलप्रकृष्टशक्तिः निसर्गेण विद्यमानास्ति। तथैव विज्ञानस्य निर्माणं जायते। तथा जगन्निर्मितञ्च। अतस्तमेव सर्वस्वं मत्वा तद्विकासोत्थानार्थं सदावधेयम्। "अप्पासो परमप्पेति" लक्ष्यमुरीकृत्य सततं प्रयतनीयम्। तस्य सर्वथा परिपूर्णरूपविकासः परमात्मनः स्वरूपमास्ते। परमात्मप्रार्थनायां विश्वासो विधेयः। स कल्पवृक्षादपि विशिष्टरूपोऽस्ति। विषमतात्यागपूर्वकं समतादिग्प्रयासेन विमुक्तिप्राप्तिरिति। उन्नताभीष्टकार्येषु बाधाः आयान्ति, किन्तु तासु विजयाप्तिरभीष्टा। धर्माय सर्वस्वत्यागोऽपेक्षितः। आत्मोन्नतयोऽहिंसादिव्रतपालन श्रेयस्करम्। दयादानयोः समाश्रयो जीवने स्वार्थभावनानिरासाय कार्यः। 'जीवत जीवयतेतिपूनभावोंगीकरणः। जीवनाभिकमंगम् सत्यम्। अखण्ड ब्रह्मचर्यम् पालनीयम्। जीवनादर्शाणां सम्यक् रक्षणार्थं गार्हस्थ्यजीवने परिणयसूत्र बन्धनमुपादेयं मान्यम्। तृष्णा परिहाराय परिग्रहत्यागो हितकरः। तथाकथितविदेशिसाम्यवादापेक्ष्या विश्वबन्धुत्वभावनाभृत साम्यवाद समाश्रयेयुरात्मश्रेयोविधातारः। तपःशीलानिवार्यता मता। करणविजयपूर्वकं मनोविजयार्थं सततं प्रयतनीयम्। राष्ट्रसमाजैकतादिशि विशेषतः चेष्टितव्यम्। "सघे शक्तिः कलौयुगे इत्यपि ध्यातव्यम्। मानवतादृष्टिकोणेनास्पृश्यता निर्मूलनीया। शासका शासनसूत्रं परिचित्य तत्र प्रवर्तेरन्। सर्वं व्यसनत्यम्। स्वदेश गौरवं वर्धनीयम्। दोषस्य कृते क्षमापना विधेयेतिप्रेरकसन्देशः।

## श्री मद्जवाहराचार्य प्रशस्ति गीतिः ॥

—०— —०— —०—

ज्योतिर्जवाहरस्य जनताहिताय भूयात् ।
स्वर्गं विधातुमेवं जगती हिताय भूयात् ॥
सर्वेजनाः निमग्नाः मायामनोजपाशे ।
उद्धर्तु काममेषां जगतां हिताय भूयात् ॥
समुपास्यते सदैषा गुरुदेवदिव्यवाणी, ।
आत्मीयभक्तभद्रं भव्य हिताय भूयात् ॥
सततं समाचरन्ति तव देवधर्मध्यानम् ।
सद्धर्ममण्डनाय विदुषां हिताय भूयात् ॥
सन्तोषितः सुयुक्त्या प्रतिगामिनां कदम्बः ।
मतभेदमपाकर्तुं सकलं फलाय भूयात् ॥
हृदये न रागद्वेषौ तव पावने महात्मन् ।
तीर्णोऽस्ति स्वयं देवोऽपरतारणाय भूयात् ॥
भवभावभूमिभागे, दोधूयते पताका ।
चित्ते निवासकारी कलितः सुखाय भूयात् ॥
तव दर्शनाय सर्वे व्यग्राश्च भक्तिभावैः ।
गरिमाणमेवगातुं, वदतां हिताय भूयात् ॥
आकल्पमत्र गाथा चिरकालिकी रमेत ।
मोक्षे स्थितो महात्मा महसां हिताय भूयात् ॥
वचनानि ते तथैव जनमानसे रमन्ते ।
यत्रापि सन्निवासो नियत हिताय भूयात् ॥
युगधर्मशर्मकारी जनमानसे विहारी ।
सत्स्याद्वादधारी धरणीहिताय भूयात् ॥
विनय नयेन भक्त्या गुरुपादयोश्चरामः ।
आचार्यवर्यभगवान् भजतां हिताय भूयात् ॥

"चन्द्र."

## श्री नानेशाचार्य प्रशस्ति गीतिः ॥

—०— —०— —०—

आचार्यवर्यनाननमनं नुताश्चरामः ।
कमनीयपादपद्मो भक्त्या सदाश्रयामः ॥
भुवि भद्रभावनाभिः तीर्थंकरस्वरूपः ।
कमनीयकान्तकायं मृदुमानसे धरामः ॥
तपसा चमत्कृतास्ते, जनता समग्ररूपे ।
जयकारमेव मोदात्तारस्वरे वदामः ॥
मञ्जुलमनोज्ञमूर्तिर्महसाँ महोर्मिरम्या ।
आत्मनमेवमग्रे भावेन सन्नयामः ॥
हृदये नवीनरूपा चाशातरंगितास्ते ।
त्वामेव देवशरणं पाराय सम्भरामः ॥
संरोचतेऽधिकं ते संरोचिषा सुपद्मः ।
भुवि चाष्टमो जनौघै सुरपादपं व्रजामः ॥
गुणराशिरप्यनन्तो दिवि राजते त्वदीयः ।
कृपया तवैव धन्याः धरणीतले भवामः ॥
सम्यक्त्वलाभमाप्त्वा प्रगतौ पदक्रमोऽयम् ।
नवकारमन्त्रमेव जयकारणं जपामः ॥
तव दर्शनेन चेतो रमते जिनेन्द्रधर्मे ।
भावाञ्जलि मनोज्ञं गुरुवन्दने हरामः ॥
शेषो न कोपि दीनस्य रक्षकः समक्षम् ।
जयनस्वरूपमाप्य जगतीतले जपामः ॥
उपहाररूपमास्ते सविधे न किंचिदेव ।
नमनं विनीतभावैरपि श्रद्धया सरामः ॥
गुरुवर्य ! विस्मृताः स्युः स्वप्ने कृतोपकाराः !
करुणाकरस्य कल्पं सकलं मुदावहामः ॥

"चन्द्रः"

# प्रस्तुतमहाकाव्यस्य वस्तुतत्त्वदृष्ट्याविमर्शः ।

प्रस्तुतमहाकाव्यस्यप्रणयनं जिनशासननभोमणेः समताविभूतेः विद्वद्वर्यस्य धर्मपालोद्धारकस्याचार्यश्रीनानेशस्य सत्सान्निध्येन परिष्कारेण च सम्पन्नं जातम् । यद्यपि प्रस्तुतग्रन्थस्य रचनाकारो विश्रुतविद्वान् श्री काशीनाथजीशास्त्री (आचार्यचन्द्रमौलिः)आस्ते । तथापि पयसिमिश्रितसितायां इव साधुमर्यादायां सर्वथास्थितस्याचार्यश्रीनानेशस्याद्यन्तं श्लोकरचनाभावभाषातत्त्वादि विविधप्रकारेषु सत्सान्निध्यस्य परिष्कृतेश्च महत्त्वपूर्णमहर्घसहयोगप्राप्तिरलाभि । तस्यैव महाकृपया ग्रन्थस्यसुचारुप्रणयन भवितु शेके । इद ग्रन्थकारेणापि स्वकथ्ये सर्वथोररी-कृतम् ।

सम्प्रत्यस्यमहाकाव्यस्य तत्त्वदृष्टया दिङ मात्रविमर्शः प्रस्तूयते । सर्वथानवीनस्य कथावस्तु नवीनमेव युगपुरुषस्य श्रीमज्जवाहराचार्यस्य जीवन व्यक्तित्वं कृतित्वं च महाकाव्यमाध्यमेन वर्णितंविभाति ।एकविंशतिसर्गेपुतत्पूर्णतांनीतम् । चरितनायकस्य मध्यप्रदेशस्य "थांदला" नामग्रामे सद्गृहस्थस्य नाथीदेवीभार्यस्य श्रीजीवराजस्य गृहेजनिरजायत । जवाहराभिधानं जातम् । शैशवे पित्रोरवलम्बनम् समाप्तम् । लालन पालनं च पितृव्यमातुलद्वारासम्पन्नम् । बालक्रीडया सह प्रारम्भिकी शिक्षाऽधिगता । निसर्गतः चित्तैकाग्रतासीत् । क्रमशो वैराग्यभावेन गृहत्यागमेव हित मेने । विशेषविरोधबाधापुरस्सरं दीक्षाग्रहणनिदानभूतमाज्ञापत्रं मिलितम् । अनागारजीवनधारणेन सह नवीनं जीवनं समारब्धम् । मुनिसामाचारी पालित-वान् । जनकदम्बं च प्राबोधयत् । परीषहसहनेऽलं बभूव । निजगुरुवर्यस्य निर्धनेना-कस्मिक वेदनोपगता । परिचारेणप्रबोधप्राचूर्येण च व्यपगतापि । पुनश्चित्त-स्थैर्यलेभे । विभिन्नप्रान्तेषु चातुर्मास्यं सम्पादितम् । धारानगर्यां कविताऽविर्बभूव । प्रवचनप्रभाविताः जनताः व्यसनजहुः । मध्ये मध्ये स्थाने स्थाने समागतायाम् वादचर्चायां परिपन्थिनः पराजिता । प्रवचन पाटवविशिष्टमेवलब्धम् । दाक्षिणा-त्यप्रदेशेषु विहर्तुं गुरोराज्ञागृहीता । देशे सर्वत्र विदेशिराज्यकारणात् दयनीयपरि-स्थितौ जातायां जनदुर्दशायां जागरणमेवोद्बोधितम् । बल्पानुकूलसहयोगप्रदानेन-गुप्तचरराजपुरुषेभ्यः कापि भीतिर्नाजायत । भारतीयासहयोगस्यान्दोलने साधु-कल्पानुसार साहाय्यमाचरितम् ।

इति विरक्तजीवनस्य वैविध्ये किमपि ऐतिह्यं वैशिष्ट्यम्! इदमव-सद्भूतपूर्वमेव । सम्प्रदाये प्राचीनप्रचलितरूढिपरिमार्जनमपि विहितम् । नाम्ना-[illegible]दिपरम्परानुधारेऽपि विजयश्रीरधिगता । [illegible] मूर्धन्यनेतृभिः

समये समये सम्मेलनमपि सम्पन्नम् । गुणगणगरिम्णायुवाचार्यपदं प्राप्तम् । तस्य निर्वहनं साधु सम्पादितम् । साधु श्रावकव्यतिरिक्तं तृतीयप्रचारकवर्गस्यापियोज-नाया। प्रारूपं निर्दिष्टम् । युवाचार्यरूपेऽपि देशप्रान्तेषु नूतनसज्जया विहृतम्। प्रवचनं च सर्वत्रसमाचरितम् । गुरोरिङ्गितापेक्षया पृथक् विहृत्य निजवैशिष्ट्यम्-प्रदर्शितम् । देशस्य दैन्यदशापि न तिरोहिता जाता ।सर्वत्र शान्तिसाम्राज्यं तेने। तपनेऽज्ञानं कारणं मत्वा तदपनेतुं ज्ञानं प्राचारयत् ।

आचार्यवर्ये पूज्यश्रीश्रीलाले दिवंगते युवाचार्य आचार्यपदं लेभे । गुरु-कुलस्थापनास्थितिरपि समक्षमागता । धार्मिकशिक्षा विषयेध्यानम् गतम्। प्राचीनं भारतीयं गौरवं सदैव दृष्टिपथमवतीर्णमभवत् । भारतभारतीदुर्दशा नेत्रयोः सम-क्षमनरीनृत्यत् । पूज्यश्रीदेशनया समाजे स्वदेशिखादिवसनस्य प्रचारप्रसारयोः साहाय्यमिलितम् । गोहत्यानिवारणार्थं पर्याप्तगोचरभूमिः हातव्या । गोचरीचरणे यत्किमपि रुक्षंशुष्कं मिलतिस्म । तेनाहारवृत्तिं निर्वहतिस्म । दुर्भिक्षमनुरुध्य प्रदत्तं प्रवचनं श्रेयसेजातम् । दयादानयोः देशना सर्वत्र प्रचारिता । समताप्रचारः, अस्पृश्यतानिवारणं, च विशेषतोऽवलोक्यतेतराम् । अनेकतायामेकतासन्देशमद-दात् । प्रवचनेन मन्दिरादिषु पशुबलिरवरुद्धः । योग्यसाधुभिः सह स्वविहारैः तत्र यत्र सर्वत्र भूभागः पावितः । समाजसुधारदिशि प्रभूतंप्रयतितम् । अन्याय-पूर्वकं धनोपार्जनं निषिद्धम् । अपरिग्रहस्य सन्देशोऽदायितेन । वित्तस्यविनियोजनं समाजहितार्थं भवेत् । राउण्डटेबलकान्फ्रेन्सेगन्तुमुत्काय मेहतामहोदयाय राष्ट्रहित भावनयाऽशीर्वचांसिप्रहितानि । तस्यधर्मदेशनया समाचरणप्रवृत्या च प्रभाविताः श्रावकाः अभिनन्दितुं पदवीदानायवाचेष्टन्त परन्तेनतन्नो स्वीकृतम् ।

आचार्यवर्यस्यविहारः स्थलीप्रदेशेऽपि सम्पन्नः । तत्रत्याभिर्जनताभि-रभिनन्दनमभिवन्दनञ्च चक्रे । वीकाणप्रदेशस्य तात्कालिक प्रधानमन्त्रिणा सर-मन्नूभाईमेहताभिधेयेन स्वकीयाभक्तिभावना प्रदर्शिता । धार्मिकसमीहितप्रचार-कार्यं सुचारुरूपेण सम्पन्नम् । जनतान्धविश्वासं दूरी कर्त्तुं प्रायतत । परंपूर्णं साफल्यंनाधिगतम् । प्रचार कर्मणिबाधाऽगता । तथापि निरन्तरं तद्प्रावर्तत् अधार्मिकमञ्चकारणात् सद्धर्मप्रचारकाः न्यूनमात्रायामेव प्रवचनंश्रोतुमायान्तिस्म। [illegible] स्वाभाविकनिखिलं परीषहादिकं सोढम् । सर्वत्र समर्यादमेवचरितम्। [illegible]प्रदेशे विहृत्येन्द्रप्रस्थं प्रति प्रतस्थे ।

[illegible]भारसंचालनार्थं श्रीगणेशीलालो युवाचार्यपदं विभूषितवान् । तथा-[illegible] । नवीनयुवाचार्यविषये शुभाभिशंसा व्यक्तीकृता । [illegible] तस्य चेतः [illegible]निर्वृतिमाप । क्रमशोऽपरोपिभारः तत्रैवनियोजितः।

प्राकृतप्रकोपस्वरूपभूकम्पविषये साधुकल्पानुसारं प्रवचनद्वारा साहाय्यमाचरितम्। तदर्थं जननिवहः प्रबोधितः। जनकल्याणस्य दिशिसमीहितकार्यसम्पूर्तिः समापन्ना।

समयेसमये दर्शनार्थं राजनेतारः कवयोलेखकाः नीतिविदोविद्वांसश्चाचार्यवर्यस्य समीपमाजग्मुः। स निखिलस्य प्राणिनः सदाप्रिय आसीत्। कुटीरप्रासादसमग्रवासेषु समानरूपेण सभाजितः। स्थाने स्थाने वादचर्चायां विजश्रीः वृता। यथाधर्मदिशि चारित्रे च विशुद्धाप्रवृत्तिरासीत् तथैवदर्शनविषयेऽपि जाताप्रतिहतगतिः। तस्यसूक्तयः कामपि विशिष्टतां रक्षन्ति। अभ्यर्थनाविषये सर्वातिशायिनी तल्लीनता। जैनदर्शनस्य पारदर्शीचासीत्। वैचारिकशक्तिसम्पन्नोविद्वत्तल्लजोऽभवत्। सम्यक्ज्ञानदर्शनचारित्रत्रिरत्नवैभवशालीकर्मप्रवादस्य सफलोव्याख्याता। चरितनायकस्यसम्यक् चित्रणेन सहैव जैनदर्शनधर्मयोः स्वरूपम् प्रसंगतः ईश्वरजगत्कर्तृत्वनिरासः अनेकान्तवादः निर्वाणस्वरूपं चात्रवैशद्येन चर्चितं चकास्ति। इदमस्ति महाकाव्यस्य संक्षिप्तं कथानकम्।

## चरित्रचित्रणम्

अत्रानेकानि पात्राणि सन्ति। तत्र प्रधानपात्रम् आचार्यवर्योजवाहरः तत्पूर्वे पञ्च निजसम्प्रदायप्रवर्तकमुनयो युवाचार्यश्रीगणेशिलालः, प्रतिपक्षधराः वादिनः दीक्षिताःसाधवः, चतुर्विधसंघः जीवराजःपितृपादः। धनराजःपितृव्यः मातुलः, गुरुमगनलालः द्विज आत्मरामः बड़ेघासीलाल जी महाराजः इत्यादयः।

एषु जवाहरः चरितनायकः सर्वप्रधानंपात्रम्। तस्यैवसर्वदिक्षु महाकाव्यकथानकभ्रमति। स एव सुमेरुशिखरायते। कथानायके यादृशाः यावन्तोगुणाः अपेक्ष्यन्ते। ते सर्वे चरितनायके पर्याप्तरूपेण विराजमानाः सन्ति। स प्रकृत्या धीरः गम्भीरः संस्कारसम्पन्नो वैशिष्ट्ययुक्तो महामानवः आसीत्। ग्रहणधारणशक्तियुक्तो विजयविग्रहसमानः सम्पूर्णजीवरक्षकः सर्वहितकरः सततसावधानः कर्त्तव्यपरायणः, जिनेश्वरनिर्दिष्टपथपथिकः कल्मषकलंकविहीनः काञ्चनकायः विशालभालपट्टः समुन्नतविग्रहः मधुरवाक्, वाग्मी, परममनोहरस्वरूपः साधनानिरतः विषमयसांसारिकदृश्यपदार्थसमुदाये ममत्वरजारहितः परमात्मप्राप्तिरतः विशेषरूपेणासीत्। नायकचरित्रचित्रणे महाकविना महती सफलतासादिता।

संसारविरक्तसाधुरपि चरित्रादर्शविशिष्टो महाकाव्यनायको भवितुमर्हति। सत्कुलोत्पन्नश्च चरितनायको गुणगणगरिम्णा सम्भृतः धीरोदात्तः

समये समये सम्मेलनमपि सम्पन्नम् । गुणगणगरिम्णायुवाचार्यपदं प्राप्तम् । तस्य निर्वहनं साधु सम्पादितम् । साधु श्रावकव्यतिरिक्तं तृतीयप्रचारकवर्गस्यापियोजनाया। प्रारूपं निर्दिष्टम् । युवाचार्यरूपेऽपि देशप्रान्तेषु नूतनसज्जया विहृतम्। प्रवचनं च सर्वत्रसमाचरितम् । गुरोरिङ्गितापेक्षया पृथक् विहृत्य निजवैशिष्ट्यम् प्रदर्शितम् । देशस्य दैन्यदशापि न तिरोहिता जाता ।सर्वत्र शान्तिसाम्राज्यं तेने। तपनेऽज्ञानं कारणं मत्वा तदपनेतुं ज्ञानं प्राचारयत् ।

आचार्यवर्ये पूज्यश्रीश्रीलाले दिवंगते युवाचार्य आचार्यपदं लेभे । गुरुकुलस्थापनास्थितिरपि समक्षमागता । धार्मिकशिक्षा विषयेध्यानम् गतम्। प्राचीनं भारतीयं गौरवं सदैव दृष्टिपथमवतीर्णमभवत् । भारतभारतीदुर्दशा नेत्रयोः समक्षमनरीनृत्यत् । पूज्यश्रीदेशनया समाजे स्वदेशिखादिवसनस्य प्रचारप्रसारयोः साहाय्यंमिलितम् । गोहत्यानिवारणार्थं पर्याप्तगोचरभूमिः हातव्या । गोचरीचरणे यत्किमपि रुक्षंशुष्कं मिलतिस्म । तेनाहारवृत्तिं निर्वहतिस्म । दुर्भिक्षमनुरुध्य प्रदत्तं प्रवचनं श्रेयसेजातम् । दयादानयोः देशना सर्वत्र प्रचारिता । समताप्रचारः, अस्पृश्यतानिवारणं, च विशेषतोऽवलोक्यतेतराम् । अनेकतायामेकतासन्देशमददात् । प्रवचनेन मन्दिरादिषु पशुबलिरवरुद्धः । योग्यसाधुभिः सह स्वविहारैः तत्र यत्र सर्वत्र भूभागः पावितः । समाजसुधारदिशि प्रभूतंप्रयतितम् । अन्यायपूर्वकं धनोपार्जनं निषिद्धम् । अपरिग्रहस्य सन्देशोऽदायितेन । वित्तस्यविनियोजनं समाजहितार्थं भवेत् । राउण्डटेबलकान्फ्रेन्सेगन्तुमुत्काय मेहतामहोदयाय राष्ट्रहित भावनयाऽशीर्वचांसिप्रहितानि । तस्यधर्मदेशनया समाचरणप्रवृत्या च प्रभाविताः श्रावकाः अभिनन्दितुं पदवीदानायचाचेष्टन्त परन्तेनतन्नो स्वीकृतम् ।

आचार्यवर्यस्यविहारः स्थलीप्रदेशेऽपि सम्पन्नः । तत्रत्याभिर्जनताभिरभिनन्दनमभिवन्दनञ्च चक्रे । वीकाणप्रदेशस्य तात्कालिक प्रधानमन्त्रिणा सरमन्नूभाईमेहताभिधेयेन स्वकीयाभक्तिभावना प्रदर्शिता । धार्मिकसमीहितप्रचारकार्यं सुचारुरूपेण सम्पन्नम् । जनतान्धविश्वासं दूरी कर्त्तुं प्रायतत । परंपूर्णं साफल्यंनाधिगतम् । प्रचार कर्मणिबाधाऽगता । तथापि निरन्तरं तद्प्राचलत् अधार्मिकमञ्चकारणात् सद्धर्मप्रचारकाः न्यूनमात्रायामेव प्रवचनंश्रोतुमायान्तिस्म। [illegible] स्वाभाविकनिखिलं परीषहादिकं सोढम् । सर्वत्र समर्यादमेवचरितम् । [illegible]प्रदेशे विहृत्येन्द्रप्रस्थं प्रति प्रतस्थे ।

शासनभारसंचालनार्थं श्रीगणेशीलालो युवाचार्यपदं विभूषितवान् । तथा[illegible]तः । नवीनयुवाचार्यविषये शुभाभिशंसा व्यक्तीकृता । [illegible] शान्तिमाप । क्रमगोऽपरोपिभारः तत्रैवनियोजितः।

प्राकृतप्रकोपस्वरूप भूकम्प विषये साधुकल्पानुसारं प्रवचनद्वारा साहाय्यमाचरितम्। तदर्थं जननिवहः प्रबोधितः। जनकल्याणस्य दिशिसमीहितकार्यसम्पूर्तिः समापन्ना।

समयेसमये दर्शनार्थं राजनेतारः कवयोलेखकाः नीतिविदोविद्वांसश्चाचार्यवर्यस्य समीपमाजग्मुः। स निखिलस्य प्राणिनः सदाप्रिय आसीत्। कुटीर प्रासादसमग्रवासेषु समानरूपेण सभाजितः। स्थाने स्थाने वादचर्चायां विजश्रीः वृता। यथाधर्मदिशि चारित्रे च विशुद्धाप्रवृत्तिरासीत् तथैवदर्शनविषयेऽपि जाताप्रतिहतगतिः। तस्यसूक्तयः कामपि विशिष्टतां रक्षन्ति। अभ्यर्थनाविषये सर्वातिशायिनी तल्लीनता। जैनदर्शनस्य पारदर्शीचासीत्। वैचारिकशक्तिसम्पन्नोविद्वत्तल्लजोऽभवत्। सम्यक्ज्ञानदर्शनचारित्रत्रिरत्नवैभवशालीकर्मप्रवादस्य सफलोव्याख्याता। चरितनायकस्यसम्यक् चित्रणेन सहैव जैनदर्शनधर्मयोः स्वरूपम् प्रसगतः ईश्वरजगत्कर्तृत्वनिरासः अनेकान्तवादः निर्वाणस्वरूपं चात्रवैशद्येन चर्चितं चकास्ति। इदमस्ति महाकाव्यस्य संक्षिप्त कथानकम्।

## चरित्रचित्रणम्

अत्रानेकानि पात्राणि सन्ति। तत्र प्रधानपात्रम् आचार्यवर्योजवाहरः तत्पूर्वे पञ्च निजसम्प्रदायप्रवर्तकमुनयो युवाचार्यश्रीगणेशिलालः, प्रतिपक्षधराः वादिनः दीक्षिता;साधवः, चतुर्विधसंघः जीवराजःपितृपादः। धनराजःपितृव्यः मातुलः, गुरुमगनलालः द्विज आत्मरामः बड़ेघासीलाल जी महाराजः इत्यादयः।

एषु जवाहरः चरितनायकः सर्वप्रधानंपात्रम्। तस्यैवसर्वदिक्षु महाकाव्यकथानकभ्रमति। स एव सुमेरुशिखरायते। कथानायके यादृशाः यावन्तोगुणाः अपेक्ष्यन्ते। ते सर्वे चरितनायके पर्याप्तरूपेण विराजमानाः सन्ति। स प्रकृत्या धीरः गम्भीरः सस्कारसम्पन्नो वैशिष्टययुक्तो महामानवः आसीत्। ग्रहणधारणशक्तियुक्तो विजयविग्रहसमानः सम्पूर्णजीवरक्षकः सर्वहितकरः सततसावधानः कर्त्तव्यपरायणः, जिनेश्वरनिर्दिष्टपथपथिकः कल्मषकलंकविहीनः काञ्चनकायः विशालभालपट्टः समुन्नतविग्रहः मधुरवाक्, वाग्मी, परममनोहर स्वरूपः साधनानिरतः विषमयसांसारिकदृश्यपदार्थसमुदाये ममत्वरुजारहितः परमात्मप्राप्तिरतः विशेषरूपेणासीत्। नायकचरित्रचित्रणे महाकविना महती सफलतासादिता।

संसारविरक्तसाधुरपि चरित्रादर्शविशिष्टो महाकाव्यनायको भवितुमर्हति। उच्चकुलोत्पन्नश्च चरितनायको गुणगणगरिम्णा सम्भृतः धीरोदात्तो

निर्दिष्टुं शक्यते । यावज्जीवनं विशिष्टादर्शसम्भूतं जीवहितकारमन्तरेणापरः कोहि नायको भवितुं शक्नोति । तदाचरणमनुसृत्यसमाजस्याजायत पारमार्थिको- लाभः ।

## कथोपकथनं (संवादः)

इदमपि तत्त्व महाकाव्येषु समुचितमात्राया मन्यत एव । वस्तुतोऽस्य स्वरूपं नाटकेष्वेव विकासमितमुपलभ्यते । अनेन महाकविसन्देशस्य प्रेषणीयता सम्पाद्यते । नाटकीयतानिदानेन कथ्यविषयेषु जायते श्रोतॄणा पाठकानाञ्च मन- साकृष्टिः । संवादशैली नितरां भवतिमनोहारिणी । काव्यरससम्भृतानां सचेतसां सामाजिकानाम् यत्रतत्र वादविवादचर्चाप्रसंगे कृतोविभात्युपयोगः । यथा सद्धर्म- वादिविजयसर्गयोः । अस्य तत्त्वस्य प्रदर्शितावेविद्यते चमत्कृतिचारुता । विशेषतो ग्रन्थालोकनेनैव परिज्ञेयम् । विषयविस्तरभयादेवात्र विशेषतो नो तच्चर्च्यते । अस्य तत्त्वस्यापि महाकाव्ये समर्यादं निर्वाहो विहितो दृश्यतेतराम् ।

## वातावरणम्

महाकाव्येवातावरणस्यापिभवति समायोजनम् । कथानकविकासे चरित- चित्रणे च वातावरणमपेक्षितं विद्यते । तेनौचितीचर्चा परिपूर्यते । अस्मिन्वर्म दर्शनमहाकाव्ये प्रथमसर्गे च मङ्गलाचरणमाध्यमेन परिशान्तवातावरणम् समुप- स्थापितम् । तत्र कथानकस्यकृते निरावृतमार्गो लभ्यते । द्वितीय सर्गे भारतवर्ष- वर्णनपुरस्सर मध्यभारतवर्णनेन सह थांदलाग्रामस्य स्वाभाविकं स्वरूपमुपवर्णितम् । सद्गृहस्यचर्चा विहिता । वैराग्योत्पादनार्थं चित्रोखलम्बनं समाप्तिमगात् । व्यापा- रिजीवनस्यापि प्रसंगतो लघु चित्रणं जातम् । प्रकृतिसाहाय्यमुपलभ्य चरितनायक स्य सहजवैराग्यभावनावृद्धिमुपगता । तदर्थंपारिवारिकजनाज्ञापत्राय प्रभूतचेष्टायां बाधासाम्राज्य पदे पदे स्खलयति । दीक्षाग्रहणनिदानमाज्ञापत्रमुलभ्य तदर्थं महोत्सवसमायोजनमपि शृंखलैकामन्तव्या । तदर्थ समुचितदेशकालयोरुद्भावना विहितास्ते । दीक्षादानविधिः समयानुसारो वर्णितो यथार्थंकोटिमुगतोविभाति । सामाचारीपालनप्रसंगो वैशिष्ट्येन निर्दिष्टः । साधुजीवनस्योपर्विरपि यथार्थन्ये वर्णितः । परीषहोपसर्गचित्रणं नैसर्गिकम् । सर्वत्रविहारे वातावरणस्यध्यानमुप- कल्पित विराजते । युवाचार्याचार्यप्रसगे जैनमर्यादास्वरूपं द्रष्टव्यमेवास्ते ।

स्थलीप्रदेशस्य स्वाभाविकं वर्णनं सहायकं वरीवर्ति । राजस्थाने वालुका निकरा, कच्चा:वनाथरा, अनावृता समीरः, पादपाभावः, ग्रानपबाधा, निर्जनत्वम्

अपेक्षितवस्तुविरहः, अजावीनां स्वच्छन्दाचरणम्, विहगकलखः, वातमजशावकविहारः,धूलिधूसरताश्रमशीकरता,विशेषतोऽवलोक्यते ।स्थानेस्थानेऽज्ञान विजृम्भणं स्थैर्यमुपगतमुदतिमानसम्वि।क्षिसंघर्षोपिकामपिसर्वथोपचितिमुपचिनोति गवांदर्शनेन सर्वत्र मानसमोमोत्ति । भारतस्यविभिन्नप्रदेशे विहारस्यसुषमापि प्रेरणादायिका। देशेसमापतितदुर्भिक्षाणांप्राकृतिकप्रकोपेजायमानस्य भूकम्पस्यचित्रणं स्वाभाविकम् । भारतीयासहयोगान्दोलमपि समर्थनरूपेण चर्चितं जातम् । देशदुर्दशाचित्रण सर्वथा-करुणाकरम् । चरितनायकस्य जीवनादारम्य साध्यसिद्धिपर्यन्तं सर्वमपेक्षितं वातावरण तत्रतत्रौचित्यपूर्णशोभते । बालक्रीडाप्रसंगोपि स्वतएवागतो विभाति । पण्डितमरणस्वरूप यथोचित वर्णित वैशिष्ट्यं रक्षति । मध्येमध्ये समुत्जात सम्मेलनानामपि सम्यक् चित्राकृतिः चकास्ति ।

महाकविना वातावरणात्मकस्वरूपनिर्वाहे किमपि नोहापितम् । देशकालपरिस्थितिविरुद्धम् किमपिचित्रितम् नोपजायते । तत् मनोज्ञ समाकर्षकञ्च । स्थलीप्रदेशे विहारकाले मार्गे समापतता जीवराशीनां चित्रण कामपि सुषमां समारक्षति । परीषहोपसर्गसमाकलनं सर्वथा विषयानुकूलम् । वैदिकविदुषां सभाजनं प्राक्तनर्षिकालिकस्वरूप समाद्योतयते । समन्वयभावनायाः कापि शक्तिशालिनी छविरवलोक्यते । वादविवादचर्चाप्रतियोगिता न्यायालयप्रतीकतामियर्तिस्म । एतद्वस्तुविवेचनदृष्ट्यापि महाकाव्यस्वरूपम् सज्जितमेवाजनिष्ट ।

## शैली

महाकाव्येषु शैली शरीरावयवसंस्थानमिव भवति । यथात्मशक्तिसम्पन्नोपिमानवः वामनकुब्जादिदशायागर्हितो भवति । तथैव शैलीविरहितायामवस्थाया महाकाव्यमपि स्ववैशिष्ट्य कदापि नो संरक्षति । शैल्योऽनेकाः सन्ति । यथा लाटी, पाञ्चाली वैदर्भीति । एतासां सर्वासामुपयोगो जायते महाकाव्येषु । प्रस्तुतमहाकाव्ये विशेषतो वैदभी शैली समाश्रिता विभाति । अत्र अस्याः पूर्णरूपेण निर्वाहः कृतोऽस्ति । यथाः—

**स्वधर्मरक्षा न विदेशिशासने,**
**विनष्टरूपा तत एव संस्कृतिः ।**
**ततः स्वरूपस्य महत्त्वमिच्छता,**
**स्वतन्त्रताप्राणपणैर्विधीयताम् ।।**

महाकाव्यस्य षष्ठसमाजसर्गस्य श्लोक सं० ४५ । द्वितीयमुदाहरणम्:—
**कदापिभगवान्वीरोऽनार्यक्षेत्रं गतोऽभवत् ।**
**स्थली न तादृशंक्षेत्रं तथाऽसद्धर्मरंगभूः ।।**
तस्यैव सप्तमसर्गस्य श्लोक सं० १८ ।।

शैलीदृष्टान्ते दिङ्मात्रमेवोपदर्शितम् । विस्तरतोविबुधैर्महाकाव्यमेव समभ्यसनीयम् । शैलीविषये भाषाया अपि जायते समावेशः । अतोऽत्र संक्षेपतः सापिविचार्यते ।

## भाषा विवेचनम्

महाकाव्यस्य भाषाविषिये किमधिकं कथनीयं वर्तते । वैदर्भीशैलीकारणात् सर्वत्रैव भाषा प्रसादमाधुर्यौजोगुणविशिष्टाशोभते । आध्यात्मिकमहाकाव्यस्य कृते सर्वथेयं प्रयुक्ताभाषौचित्यमावहति । लोकोक्तिसंभाणकसंभृता प्रेरणामयी समवलोक्यते । श्रुतासती सहृदयंस्वदिशि समावर्जति । सरला सरसा च सती प्रबन्धनिर्वाहिका सम्पन्नाविशेषरूपेण । 'गीर्वाणवाणी दुरूहकठिनेति' प्राचीनाकिंवदन्ती मूलतः परिमार्जिता । साधुशक्तिसम्पन्नः पाठकः प्रयुक्तां तां बोद्धुं सर्वथाऽलम् । तस्याः नैसर्गिकं रूप प्रस्फुटितं विभाति सर्वत्र यथास्थानं महाकाव्येऽस्मिन् । यथा:—

कुशेशये मञ्जुलमालिकावतीम् ।
विकासवृत्ते भ्रमरावलिं दधत् ॥
विबोधयन् लोकसमग्रसारिणीम् ।
विभाकरो भाति पुरोदिगञ्चले ॥

अत्रपद्ये प्रसादमाधुर्यगुणयुक्ता भाषा कस्य मानसोन्मादिनी नो जायते । तत्रत्रिविधत्व राजते । अभिधा, लक्षणा, व्यञ्जनाचेति । स्थाने स्थाने शक्तित्रयस्याप्युपयोगो महाकाव्ये विहितो विलोक्यते । तत्रप्रथमायथा पूर्वे महान्तः पुरुषाः स्वकीयामाचारभूमि परिहाय याताः । यथाचरन्ते च तथैव सर्वेरादर्शरूपाचरण विधेयम् ।

यथा द्वितीया:—

प्रवाति वातः त्रिविधो मनोज्ञः ।
सन्तर्पणः प्राणबलेन्द्रियाणाम् ।
शाखाप्रभाप्रोन्नतपादपानाम् ।
वनाबनो नृत्यति पल्लवालिः ।

च० स० श्लोक सं० १

## अभिधावृत्तिः

इयं प्रथमा सर्वसाधारणीवृत्तिरास्ते । भाषासमलंकारेऽस्या। भवति प्रयोग। । अनया शब्दार्थनिर्णयो विधीयते । यथोक्तमभियुक्तैः—

शक्तिग्रहं व्याकरणोपमान
कोशाप्तवाक्यात् व्यवहारतश्च ।
वाक्यस्यशेषाद् विवृतेर्वदन्ति,
सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

भाषामाध्यमेनैव भावपरिप्रेषणं विधीयते । महाकाव्येऽस्मिन्नियं विराजतेऽविनाभावरूपेण । इमामन्तरेण रचनास्वरूपमेव दुष्करम् ।

द्वितीयावृत्तिर्लक्षणा ॥

अभिधानन्तरं संख्यायते इयम् । अस्याः उपचरितमितिनामान्तरम् । साहित्यदर्पणादिष् आलंकारिकग्रन्थेषु लक्षणमित्थं दत्तमिति ।[1] उदाहरणानि सन्ति "गंगायां घोषः" अर्थोभवति गंगातटे घोषः गौर्बाहीकः बाहीकः गौरिव-मन्दः । कलिंगः साहसिकः । कलिंगदेशोद्भवोमानवः साहसविशिष्टः । कुन्ता प्रविशन्ति कुन्तधारिणो मनुष्याः वीराः आगच्छन्ति । विशेषत उदाहरणानि लक्षणग्रन्थादेवावसेयानि । अस्याः अशीतिः भेदाः भवन्ति । इयं विपरीतरूपापि जायते ।[2]

---

१ मुख्यार्थबाधे तद्युक्तोययान्योऽर्थः प्रतीयते ।
रूढ़ेः प्रयोजनाद्वासौ लक्षणाशक्तिरर्पिता ॥

२ उपकृतं बहु तत्र किमुच्यते ।
सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे ?
सुखितमास्व ततः शरदां शतम् ।

## लक्षणाशक्तिः

प्रस्तुतमहाकाव्ये अस्याः वृत्तेः प्रभूतमुदाहरणं दातुं शक्यते । कविवाचा प्राणवत्ता तिष्ठति लक्षणायामेव । अतस्तां कवयः स्वतो व्यवहरन्ति । महाकवेः काव्ये तदर्थं विशेषप्रयासो नो विधीयते सा स्वयमेवोपतिष्ठते । संक्षेपतो लक्षणोदाहरणानि दीयन्ते । सर्गेषु वर्तते अस्याः प्राचुर्येण प्रयोगः । स्थालीपुलाकन्यायेन विमृश्य दीयन्ते कतिपयानि उदाहरणानि । महाकाव्ये एकत्र स्वप्नप्रसङ्गे पुंस्कोकिलशब्दः[1] प्रयुक्तः । तस्याभिधेयार्थं वर्तते बाधितः । अतः लक्षणावृत्त्या प्रतीकात्मकश्चार्थोगृह्यतेतस्य पुंस्कोकिलस्य । स्याद्वादः, अनेकान्तवादश्च । अत्रानेकधर्मस्य भवति च समन्वयः । इत्थं प्रयोगाः अन्यत्रापि सन्ति ।[2] एतत्स्थानेऽन्य शब्दप्रयोगात् तादृशी रसानुभूतिर्न प्यते । तथैव संसारचक्रम्,विद्युतप्रवाहः अक्षय्य निधि[3] आदर्शरूपः इत्यादि शब्दप्रयोगोपितथा ।

अभिधाख्यया शक्तया यद्बोध्यते । स मुख्योऽर्थः । तस्यबाधे जातेऽन्वयस्यानुपपत्तौ

रूढिवशात् कस्यापि प्रयोजनस्य सिद्धये वा मुख्यार्थसम्बद्धस्यैवान्यार्थस्य ज्ञानं यया शक्तया भवति सा लक्षणा नाम । अत्रान्यपदस्य न मुख्यार्थभिन्नोऽर्थः किन्तु मुख्यार्थतावच्छेदकातिरिक्तधर्मावच्छिन्नः । तेन काकेभ्योदधि रक्ष्यतामित्यत्रोपादान लक्षणोदाहरणे मुख्यार्थतावच्छेदकं काकत्वं तदन्योधर्मः दध्युपघातकत्वम् तदवच्छिन्ने काक शब्दस्य लक्षणा । एवं रामोस्मिसर्वंसह इत्यत्रापि मुख्यर्थतावच्छेदक रामत्वं तदन्यो धर्मः दुःखसहिष्णुत्व तदवच्छिन्ने रामशब्दस्य लक्षणा सिध्यति । इय शक्तिः कल्पिता नतु ईश्वरोद्भाविता । तथा च लक्षणाया मुख्यार्थबाधः, मुख्यार्थयोगः रूढिप्रयोजनयोरन्यतरश्चहेतुः । इतिबोध्यम् । उदाहरणं पूर्वमेवदत्तम्

इयं शब्दस्यार्पिता स्वाभाविकेतरा ईश्वरानुद्भाविवृत्तिर्लक्षणेति निष्कृष्टार्थः । सा च उपादानलक्षणालक्षणलक्षणेति भेदेन द्विविधा । एता अपि सारोपासाध्यवसानभेदेनद्विधा । एवं च शुद्धा गौणीभेदेन ता अपि द्विविधा, एवं सङ्कलनया षोडशभेदा लक्षणा ।[4]

---

१ श्रीमज्जवाहरयशोविजयम् महाकाव्म् सर्ग १९ श्लोक ।
२ " " १८ सर्ग १७, तथा ७९ श्लोकः ।
३ " " २० सर्गस्य १५. १८ श्लोकाः तथैकविंशसर्गस्य ६, २६, ३७ [illegible] तदर्थमुपन्यास्यन्ते ।
४ साहित्यदर्पणम् ।

## व्यञ्जनावृत्तिः

व्यञ्जनैव काव्यजीवितं वस्तुतो वरीवर्ति । इमां विना किमपि विशिष्टकाव्यं स्वरूपमाधातुं नो शक्यते । नहि ऐतिह्यमात्रनिर्वाहेण कवेरात्मपदलाभः । केवलंवस्तुस्वरूपवर्णनेन कोऽपि कविर्नोभवितुमर्हति । यथास्थानंतिसृणां वृत्तीना प्रदर्शनमुचितमेवमन्यते । तासु विशेषरूपेण व्यञ्जनावृत्तिरास्ते । वाच्चार्थं वोधयित्वा विरतायाः अभिधायाः लक्ष्यार्थं वोधयित्वा निवृत्तायाः लक्षणायाः परामर्शाऽसम्भवेनानुमानस्य चासम्भवत्वेन व्यङ्ग्यार्थवोधाय काव्यानन्दजनका सविकल्पकनिर्विकल्पकज्ञानशून्याय ब्रह्मानन्दस्वरूपाय रसजननाय व्यञ्जनाशक्तिव्यापारोऽवश्यमेवाऽभ्युपेय इति । इयं सहृदयगम्या भवति ।

**शक्तिर्निपुणता लोककाव्यशास्त्राद्यवेक्षणात् ।**
**शास्त्रज्ञ शिक्षणाऽभ्यास इतिहेतुस्तदुद्भवे ।**

इतिकाव्यप्रकाशानुसारं कविषु नैसर्गिकी शक्तिः लोकशास्त्रादिसमभ्यासकारणात् निपुणता, तथा साहित्यालंकारिकशास्त्रज्ञाऽभ्यासः । इति परस्परं मिलित्वा काव्यनिर्माणे काव्यकारस्य कृते त्रयोहेतवोऽनिवार्यरूपेण मताः । तदैव महाकविः विशिष्टं कार्यं निर्मातुं क्षमते ।

अत्रकाव्ये लक्षणातिरिक्तं व्यञ्जनाप्रयोगः साधीयान् प्रदर्शितः । इयं वृत्तिः महाकाव्यस्य निकषोपलमस्ति । अल्पीयसा शब्देन साभिप्रायवह्वर्थकथनं नत्र जायते । केवलमभिधाप्रयोगे नजायते सम्यक्रसवोधः । कथाकारश्रमोऽपि व्यर्थतामुपगच्छति । विंशतितमे[1] एकविंशतितमे महाकविनाव्यञ्जनावृत्तिः साधिकारप्रयुक्ता । असिञ्चत् कदाचकिस्यान्नहि कोपि वेत्ति । नान्यः पन्थाः विद्यते यनाय । हिंस्राश्च सख्यं यान्ति । वसासहायंरचितं च वस्त्रम् । चतुर्भुजत्वं नो लब्ध चतुष्पादत्वञ्च प्राप्तमेव । यज्ञस्वरूपमीष्टम् । मृत्युञ्जयतामुपैति । आत्मतत्त्वलाभार्थम् । तथानिर्लिप्तभावे पद्मपत्रस्य समः समाजे इति संक्षैपेण निर्देशनमलम् मान्यम् । सूक्ष्मेक्षिकयाविलोकनेनोदाहरणानि मृग्यानि सहृदयभव्यपाठकैः ।

---

१ महाकाव्यस्य २० सर्गस्य श्लोक सं. २/२१ सर्गस्य ६, १५, २०, २३, २७, २८, ७०, ७२ श्लोकाः उदाहार्याः ।

अत्रविषये साहित्यमर्मज्ञानांवर्तते विप्रतिपत्तिः । कोऽपि स्वीकृतिमन्तरेणैव साहित्यनिर्माणकार्यमावहति । तदपरे न क्षमन्ते । अत्रविषयेविशेषविचारणा साहित्यशास्त्रकदम्वात् परिज्ञेया ।

काव्यं द्विविधम् ध्वनिः, गुणीभूतव्यङ्ग्यं च । तत्रध्वन्यते अस्मिन्निति ध्वनिरिति अधिकरणव्युत्पत्त्या उत्तमकाव्यमर्थः । ध्वन्यते अनयेति ध्वनिरितिकरणव्युत्पत्त्या व्यञ्जनापिध्वनिः । ध्वननं ध्वनिरिति भावव्युत्पत्तिस्वीकारे व्यञ्जनाजन्यबोधोपिध्वनिः । ध्वन्यतेयत्तद्इति ध्वनिरिति कर्मव्युत्पत्तिस्वीकारे रसादिव्यङ्ग्यस्य बोधकोध्वनिशब्दोभवति । तस्य च वाच्यातिशायिनि व्यङ्ग्ये ध्वनिरितिलक्षणम् । यत्रवाच्यार्थापेक्षया व्यङ्ग्यार्थस्याधिकचमत्कारिता ध्वन्यतेऽस्मिन्नितिव्युत्पत्त्या तत्काव्यं ध्वनिर्नाम तच्चोत्तमं काव्यम् । उदाहृतं शास्त्रेः-

"कदली कदली करभः करभः करिराजकरः करिराजकरः" इत्यादि । इत्यत्र द्वितीयकदल्यादिशब्दाः पौनरुक्त्यभिया सामान्यकदल्यादिरूपे मुख्यार्थे वाधिता जाड्यादिगुणविशिष्टकदल्यादिरूपमर्थं बोधयन्ति । जाड्यातिशयस्तु व्यङ्ग्यः ।[1]

## उद्देश्यम्

प्रयोजनमनुदिश्य मन्दोऽपि न प्रवर्तते इति अनुसारं प्रश्नोऽयं सर्वातिशायी समक्षमुपतिष्ठते । यदस्यमहाकाव्यस्य प्रणयनस्य किम् विशिष्टमुद्देश्यमस्ति? तथा काव्यकारेण तत्र कियती सफलता समासादिता । जीवनस्य मूल्याङ्कनेषु मापदण्डेपु च परिवर्तनं जातंदृश्यते । रुचिवैभिन्न्ये मतिभेदः संघर्षःसीमातिशायी वर्तते । आदर्शयथार्थौ, लौकिकाध्यात्मिकदृष्टिकोणौ, कलावादोपयोगितावादौ च परस्परं प्रश्नचिह्नं विधत्तः ।

इदं सर्वमान्यमस्ति साहित्यं राष्ट्रस्य तपश्चरणमास्ते । जीवनस्यानन्तानन्तप्रयोगस्यसिद्धिरस्ति । समग्रवेदानां साररूपञ्च । इदं केवलं वर्तमानस्य मनोरंजनमात्रं नास्ति प्रत्युतानागतस्य सवलमपिवर्तते । तत्र जीवनस्येतादृशं परि-

---

१ साहित्यदर्पण ।

करणमुर्जस्विकरणञ्चेति येनायतौ बलमपिलब्धुं शक्येत । अत्रवेविद्यन्ते जीवनस्योच्चतमानुभूतयः परिवर्तनशीला समयसहचर्योमनोवृत्तयश्चापि सन्ति । संस्कृत-संस्कृतिसाहित्ये जीवनस्य यथार्थदर्शौ परस्परं मिलिताविव विभातः । अनेनदृष्टिकोणेन प्रस्तुतमहाकाव्योद्देश्य विषये विचारणाप्रस्तूयते:—

रागात्मकानि महाकाव्यानि प्रभूतानि निर्मितानि सन्ति । वर्तन्ते च च प्रभावशालीनि तानि । परं वैराग्यप्रधानानि तानि अल्पीयांसि एव मिलन्ति । भौतिकयुगे वातावरणनिर्माणार्थमध्यात्मभावभृतस्य महाकाव्यस्य वरीवर्ति नितान्तं प्रयोजनम् । प्रवृत्तिमार्गमुपेक्ष्य निवृत्तिपथमनुसरतांमुनीनां जीवनं किमपि वैशिष्ट्यमुपरक्षति ।

प्रस्तुतमहाकाव्यस्य चरितनायकाः युगपुरुषाः युगप्रवर्तकाश्चासन् । तेषामाचारणस्य महाकाव्ये सन्निधापनेन समाजसुधारदिशि समीहितलाभप्राप्ति-र्भविष्यति । समाजे तस्यप्रवचनस्य पर्याप्तप्रभाव आसीत् । एकवारमपि यदिकोऽपि तस्य सविधे आयातिस्म । स तस्मात्कदापिपराङ्मुखोभवितुंनाशक्नोत् । इयमासीदाचार्यवर्यस्य स्वकीया विशेषता । धर्मदर्शनपारंगतस्य मानवतावादिदृष्टिकोणसमन्वयकारिणः कल्पानुसारमेव सततादर्शचरितस्य जीवनं लोकोपकारि सदासीदिति कारणात् महाकाव्ये वैशद्येन महाकविना स महापुरुषः चर्चितः । तस्मान्महाकाव्यमपि सर्वथादर्शरूपता दधौ । करुणाकरस्य दयादानविषयिणी विचारधारा संततं परिष्कृता चकास्ति । सम्यक्ज्ञानदर्शनचरित्रस्य प्रचारलक्ष्य-मपि साहित्यरीत्यानिर्वोढमेव ।

धर्माभासनिराकरणपूर्वकं सद्धर्मप्रचारस्य समीहासीद् चरितनायकस्य । तदर्थं मुनिजीवनेन सह स्वकल्पानुसारं जीवनपर्यन्तं सावधानेन मनसा चेष्टितम् । राष्ट्रीयचेतनाया अपि स सन्देशवाहकोऽभवत् । विविधक्षेत्रेषु व्यापृतंजीवनमेतादृशं क्व लभ्येतान्यत्र । जीवितजीवनचरित्रशालिनः आचार्यवर्यस्य सर्वाः विशेषताः प्रस्तुतेनैकेन महाकाव्येन पूर्णतो व्यावर्णयितुं नो पार्यते । यत्किमपि निर्देष्टुं प्राभवम् । तत्सर्वं सर्वज्ञकृपैव मन्तव्या । आशासे महाकाव्योद्देश्यविषयनिर्वाहेकाव्यकारस्य वर्तते किमपि साफल्यम् ।

## रसविवेचनम्

इदमप्येकं तत्त्वं मतं विभाति । अत्रजागर्ति प्रश्नः ? कोहि रसोऽत्रारितप्रधानः । कोहि अङ्गी ? केचरसाः अङ्गानि ? महाकाव्ये एषापरम्परा भवति । वाक्यंरसात्मकंकाव्यमिति लक्षणानुसारं महाकाव्ये शान्तरसस्यैव प्राधान्यम् । अन्ये, शृंगारहास्य करुणवीररौद्राद्भुतवीभत्सभयानकाः अङ्गानि मतानि ।

निर्वेदस्यैव स्थायिभावत्वेन शान्तरस एव प्रधानः । तस्यैवात्रपूर्णं निर्वाहो विहितः।
शैशवात्प्रभृति चरितनायकस्य संसारपरित्याग एवनैसर्गिकः । तदर्थं तेन प्रभूतंचे-
ष्टितम् । सफलतापि चाप्ता । क्रमशो साभावनाऽतिभूमिगताविभाति । दीक्षां-
गृहीत्वा गृहं परित्यज्यानगारो भूत्वा मुनिभिः साकं चरित्रसम्पादनमेवं हितं
मेने । स्वयं गृहत्यागीभूत्वाप्रवचनमार्गेण वैराग्यदिशि नराणांध्यानमाकृष्टवान् ।
युगप्रवर्तनकारणात् समाजराष्ट्र निर्माणदिशिप्रभूतं प्रयतितम् । येनदेशे स्वस्थ-
वातावरणप्रचारे साफल्यमुपगतम् । रसलक्षणंशास्त्रे निर्दिष्टमित्थम्[1] । प्राचीन
संस्कृतसाहित्यशास्त्रे नवरसाः सन्ति । हिन्दीभाषायाम् महाकविसूरदासकारणात्
वत्सलरसोऽपि मतः । अतस्तेषां संख्या दशधामुपागता । तद्यथाः—

(१) शृंगारः, (२) हास्यम् (३) करुणरसः (४)वीरः (५)रौद्रः
(६)वीभत्सः(७)अद्भुतोरसः (८)भयानकः (९) शान्तः(१०) वत्सलरसश्च ।

अत्र साधारणीकरणव्यापारः स्वीक्रियते । परस्य नपरस्य । मम न
मम इत्यादिरूपेण विभावादेः आस्वादे परिच्छेदोनभवति । एवमेवरत्यादयः स्था-
यिभावा अपि साधारण्येनैवप्रतीयन्ते । अन्यथा रत्यादीनां स्वात्मगतत्वेन प्रतीतौ
वीडातंकादिर्भवेत् । परगतत्वेन प्रतीतौ अरस्यतापातः स्यात् । अतः साधारणी
करणाख्येन अलौकिकेन व्यापारेण विभावादीनां प्रतीतौ न कुत्रापिकोपिदोषः ।

प्रथमं प्रत्येकं प्रतीयमानः विभावादिः हेतुः । ततः सर्वः सम्मिलितः
विभावादिः सहृदयानांप्रपाणकरसन्यायात् चर्व्यमाणः रसरूपतां भजते । रस-
स्यालौकिकत्वं सत्यत्वं स्वप्रकाशत्वम् शास्त्रेषु व्यवस्थापितम् । ज्ञाप्यत्वकार्यत्व-
नित्यत्वभविष्यत्ववर्तमानत्वनिर्विकल्पकज्ञानवेद्यत्वसविल्पकज्ञानवेद्यत्वपरोक्षत्वविल-
क्षणत्वात् अलौकिकत्वमस्य । सहृदयैः वेद्यत्वाच्च सत्यत्वम् । रत्यादिज्ञानरूप-
त्वाच्च स्वप्रकात्वमखण्डत्वं च सिध्यति ।

## विभावादीनां लक्षणम्

लोकेरत्याद्युद्बोधकाः विभावाः भवन्ति । तेद्विविधाः आलम्बन

---

१ विभावेनानुभावेन व्यक्तः संचारिणा मतः ।
(क) रसतामेति रत्यादिः स्थायिभावः सचेतसाम् । साहित्यदर्पणम् ॥
(ख) विभावानुभावसंचारिसंयोगात् रसनिष्पत्तिः इति भरतसूत्रम् ।

विभावाः उद्दीपनविभावाश्च । प्रथमे रसमुद्गमयन्ति । परे तमुद्दीपयन्ति । स्थायिभावानुमापकत्वम् अनुभावत्वमिति फलितार्थः । विशेषादाभिमुख्येन चरन्तो व्यभिचारिण। स्थायिन्युन्मग्ननिर्मग्नाः । अयमेव संचारीभावोप्युच्यते ।

## अलंकारविवेचनम्

शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः रसादीनुपकुर्वन्तोऽलंकारास्तेङ्गदादिवत् । इति अलंकारलक्षणम् शास्त्रेषु निर्दिष्टम् विभाति । साक्षात्परम्परया वा रसाद्युत्कर्षजनकत्वे सति अतिशयशोभातिशायिकाव्यधर्मत्वमलंकारत्वमितिफलितार्थः । रसवदाद्यलंकाराणां साक्षात् रसाद्युत्कर्षजनकत्वस्य सत्वात् लक्षणसमन्वयः । एतेऽलंकारामहाकवीनां काव्येषु निसर्गरूपेणायान्ति । एतदर्थं विशेषप्रयासोनापेक्षितः । यथाअंगदादयः शरीर शोभातिशायिनःशरीरिणमुपकुर्वन्ति तथानुप्रासोपमादयः शब्दार्थशोभातिशायिनो रसादेरुपकारकाः । एतेषांगुणवदावश्यकी स्थितिर्नास्ति । एते शब्दार्थोभयभेदात्त्रिविधाः भवन्ति । एतत्विषये अलंकारशास्त्रात् ज्ञानमासादनीयम् ।

अनुप्रासयमकवक्रोक्तिशब्दश्लेषे उपमारूपकोत्प्रेक्षा। सन्देहोभ्रान्तिमानुल्लेखश्चेति इत्थंमलंकाराणां संख्या प्रभूता अस्ति । प्रस्तुतेमहाकाव्ये दिङ्मात्रंविविच्यते सः ।

शब्दालंकारस्योदाहरणानि । महाकाव्ये प्रायः संसारसागरसमुत्तरणायेत्यादिपदेषु विकीर्णानिसन्ति । येषां संख्या प्रभूतास्ते । परं ध्येयम् तत्रार्थलिंकारसमावेशोपि मनोरमः । प्रथमसर्गस्यद्वादशे पद्ये द्रष्टव्योपमायाः छटातथैवद्वितीये सर्गे तृतीयेपद्येऽपि । तस्यैवसर्गस्य षष्ठे पद्ये रूपकालंकारः, द्विचत्वारिंशत्पद्येपि रूपकम् । षष्ठसर्गस्य नवमे पद्ये उदाहरणम् । सप्तमसर्गेचार्थान्तरन्यासः । षोडशे पद्ये सांगरूपकम् ।

सप्तमेसर्गेसर्वत्रविविधालकाराणां सुषमा सर्वथाभ्यर्थनीया । सप्तमेसर्गे षण्णवतिपद्ये अतिशयोक्तिरस्ति । यथाः—

**सम्प्राप्ताः गुरवः, पश्चात् पूर्वकीर्तिः समागता ।**
**सौरभं प्रथमंयाति, कुसुमं तदनन्तरम् ॥**

नवमसर्गस्य षट् पञ्चाशत्तमे पद्येऽलंकारस्य छविरवलोक्यते मनोहारिणीः—यथाः—

यस्मिन्दिनेनैव पतिव्रताः स्युः ।
तलेजगत्याः वसुधासुधाश्च ॥
तस्मिन्दिने भास्करचन्द्रतारा ।
सीमानमुद्यन्ति धरासमुद्राः ।

अत्र रूपकस्य तथा उत्प्रेक्षायाः च कृतो विभाति मनोरमो निर्वाहः। शब्दालंकारविषये च किं वक्तव्यमवशिष्यते । अपरमपि निदर्शनं प्रस्तूयते । प्रथ० सर्गस्य ६७ श्लोकेऽलंकारच्छटाद्रष्टव्याः—'शब्देषु मेघपरिगर्जनमत्रमुख्यमिति" पद्ये यथा शब्देषु मेघपरिगर्जनम् मुख्यम् तारासुचन्द्रः, विपिनचरेषुकेशरी वारिषुजाह्नवी पक्षिषु गरुड़ः, उत्तमोभवति तथैव महर्षि समुदाये जिनेन्द्र प्रभुर्महावीर एवमास्ते। अत्र मालोपमाभवितुमर्हति ।

द्वितीयसर्गस्य तृतीये पद्ये:—

प्रभातकालस्यमनोज्ञरूपतामिति स्थले उपमायाः दृश्यते साम्राज्यम् । तथा अस्यैव सर्गस्य चतुर्थपद्ये:—जलप्रसन्नं सरसीषुशोभते इति अत्र स्थले सरोवरे स्वच्छनिर्मलवारिषु यदा रक्ताः रविमरीचयः पतन्ति तदा स्वच्छस्फटिकाक्षमालिका जपाप्रसूनैनपिनद्धसान्तरा इव चकास्ति । अत्र पूर्णोपमाऽनुमीयते । सांगरूपकोदाहरणम्:—

श्रद्धापुरे संयमकीलितेच, क्षमासुदुर्गे धृतिवैजयन्त्या ।
प्रगृह्य चोद्योगधनुश्च सत्यैः कर्मद्विषन्तः सततं विजेयाः ॥

## प्रकृति चित्रणम्

महाकाव्येन सह वर्तते प्रकृतिचित्रणस्याविनाभाव सम्बन्धः । वैदिककालादारभ्येयं सरणिः महाकाव्येषु सर्वत्रपरिगृहीतावलोक्यते । तया तस्य वैशिष्ट्यं परिवर्धते । प्रकृतिचित्रणं विनाकाव्यं तिष्ठति सर्वथापूर्णम् । साहित्येषु मन्यते अस्य वर्णनमनिवार्यम् । महाकवेः कविकर्मणः साफल्यमत्रैव निर्भरमास्ते। संस्कृतसाहित्यस्य प्रतिनिधिमहाकवीनां काव्येषु अस्यवर्णनस्यविद्यते प्राचुर्यम् । तद्वर्णगानेन प्रसीदतितमाम् पाठकानां मानसम् । महाभारतवाल्मीकिरामायणयो रम्यमुपमाऽनुभूयते यथेष्टम् । महाकाव्यस्यान्यानिवार्यविषयै. सह वर्तते अस्यापि सम्पृक्तिः । शान्तरसप्रधानेऽप्यस्मिन्महाकाव्ये यथास्थानमुपलभ्यते विहितउपयोगः। तेन श्रीवृद्धिरौचितमात्रायां संजाता ।

## वसन्तवर्णनम्

शिशिरर्तोरनन्तरं वसन्तर्तुरायाति । चैत्रवैशाखमासावाधारः । श्रयं सर्वेषामृतूनां श्रेष्ठतमोऽस्ति । अतः ऋतुराजोऽभिधीयते । अत्र भवजीवनेकापि नवीनैव स्फूर्तिरासाद्यते । सर्वंजीवनमेव परिवर्तितमिवविभाति । प्रस्तुतेमहाकाव्ये तृतीयसर्गस्य ६८, ७० श्लोकयोः वसन्तवर्णनं सम्यक्प्रकारेण प्रसंगतोविहितं चकास्ति । यथाः—मधुपवृन्दनिपीतसुपंकजो, नवरसालरसान्वितकाननो
मलयवातविकम्पितपादपो नवपलाशपलाशवनोऽवनौ ।

तथाः—नवलमंजरिकासुरभिर्नवःकिशलयाञ्चितवल्लिवितानको
मधुमयःसमयः समुपागतो मुनिवरो बुबुधे निजमानसे ।

तृतीयसर्गे श्लोक ६८, ७०

## ग्रीष्मवर्णनम्

वसन्तर्तु समनन्तरं ग्रीष्मसमय आगच्छति । अत्र दिवाकरः उष्ण-किरणैः सकलांवसुधां परितापयति । अग्निसमीरोपि ज्वलयन् सर्वतोवाति । सर्व-वातावरणं शुष्कमिवदृश्यते परंदिवसावसानं दृश्यतेमनोहरम् । कतिपयभारतीय कवीनामयंऋतूरुचिरोऽभिमतः । प्रस्तुतमहाकाव्ये ग्रीष्मसमर्थवर्णनम् सप्तदशसर्ग-स्य प्रारम्भे प्रथमपद्यत आरभ्य चतुर्थपद्यपर्यन्तं विहितं विभाति । तद्यथाः—

अथातिरम्येसुखदेप्रदेशे, पदातिगं स्वेदलवैः समेतम् ।
मुनिव्रजे साकममुंव्रजन्तमाचारपूतं पवनः सिषेवे ।।
निरुद्धवाते रविरश्मितप्त तीव्रातपैः पूर्णपरीतगात्रम् ।
संसेवितुं श्रावकवत्पयोदाः खंखेचराः संपरिवव्रुरेनम् ।।

श्री. यशोविजये सर्गे १७ श्लोक १२

अस्य सर्गस्य पञ्चमश्लोके प्रकृतेर्मानवीकरणमपि द्रष्टव्यम् । तद्यथाः—

स्थिताः प्रशाखासुच पादपस्य मध्येपथंविस्तृतमुत्पतन्तः ।
स्वैरंविरावैः विविधैरनल्पाः चरित्रगानं विहगाः वितेनुः ।।

अत्र विहगानां मागधमानवीकरणं द्रष्टव्यमस्ति । इतःपूर्वमपि पद्य

सिषेवे, खेचराः पयोदाः मुनिजनसेवार्थं चतुर्दिक्षु व्याप्ताः । वसुन्धरायाः संकोच, समीरद्वारा स्वेदप्रमार्जमित्यादि च तथैव मान्यम् ।

यशोविजयेम: सर्गे १७ श्लोक सं. १

## वर्षावर्णनम्

वर्षायाः पूर्वं सर्वं भूमण्डलं सन्तप्तं तिष्ठति । कादम्बिनीं द्रष्टुं सर्वे समीहन्ते । व्यग्रतया तां प्रतीक्षन्ते च । सर्वजनजीवनाधारोऽयमेवसमयः प्रस्तुत-महाकाव्ये वर्णनमित्थ लभ्यतेः—तद्यथा:—

जगामप्रावट्समयेऽपिकाननं तदीयमूर्तिं परिद्रष्टुमेवसः ।
प्रमोदपूर्त्याऽमितसौख्यसंभृतः सुरम्यरूपंप्रकृतेर्व्यलोकत ॥

महाकविना यत्रैव पदलब्धं तत्रैवतु चित्रणे संकोचो नोविहितः ।

यशोविजये म. द्वितीयसर्गे श्लोक २१

## शरदृतुवर्णनम्

वर्षासमनन्तर समयस्यास्यप्रवेशो भवति । गगनं निर्मलस्वच्छ चकस्ति । दनदनिर्भरांणांसलिलानि निर्मलानि जायन्ते । सरोवरेषुकमलानि विर्सन्ति । शोभतेतराम् शोभनोऽय समयः । प्रस्तुतमहाकाव्ये चतुर्थसर्गे प्रथमपद्य आरम्य सप्तमपद्यपर्यन्तं शरद्वर्णनं विहित शोभते । तद्यथा—

स्वच्छावदातं ककुभस्वरूपं पयोधरा नैव नभःप्रदेशे ।
शान्तंपयः सर्पतिसत्सरित्सु, तलं च तासां विमल विभाति ॥
नीरेऽखिले पंकजरम्यराजिः, द्विरेफमालाञ्चितसर्वभागा ।
श्रुतिप्रियस्वादुसुधासमानो गुञ्जारसारो विपिनेषुरम्यः ॥

अत्र सर्गारम्भत एव महाकविनाशरदृतुवर्णनमुपक्रान्तम् । कतिपयेषुपद्यैः तत्प्रभावक वर्णनं कृत्वा स्वस्यकविकर्मणः साधुनिर्वाहोविहितः । मनोहरतारोचकता च पदेपदे विराजमाना दरीदृश्यते । मन्येऽस्यवर्णने महाकविमानसं विशेषरूपेण रतम् । कुत्रापि मर्यादाया अतिक्रमणं नो जातम् ।

यशोविजये चतुर्थसर्गे श्लोक सं. १ से ७ तक

## हेमन्तर्तुवर्णनम्

ऋतुरस्य मार्गशीर्षपौषमासयोः भवति । शीतप्रकोपस्य प्रारम्भो वि-

यते । सूर्यातपी प्रियंकरो मुदकरो मानसोन्मादकारी विभाति । अयमपि समयो-हितकर एव प्रकृत्या प्रदत्तः । प्रस्तुतमहाकाव्येऽस्य समयस्य कीर्तन साधु विहितं विभाति । तृतीयसर्गस्य द्वादशपद्यात् कीर्तनमाचरितम् । तद्यथाः—

शरदनुक्रमकालगतेरयं विपुलशैत्यविवर्धितवैभवम् ।
सकलजीवसुखप्रदपूरकं ऋतुमवाप मनोहरहैमनम् ।
दिवसकार्यकरान् व्यथितान्निजे समधिकारगृहेसुखितान्तथा ।
प्रमुदितान्प्रविधातुमलंनरान् प्रववृते दिवसो वलदायकः ।।

अस्यर्तोः कविसमाजे वर्णनमल्पीय एवलभ्यते । नायंमतोऽयं मनोहारी सामाजिकरसिकैः ।तथापि कर्मप्रवृत्तेन कविनास्यापि निर्वाहो विहित। । अत्र-सर्वथाभ्यर्चिते काव्येऽस्यगृहीतिरौचित्यपूर्णा ।

—यशोविजये तृतीयसर्गेश्लोकौ १२, १३

## शिशिरर्त्तुवर्णनम्

हेमन्तसमयस्यपश्चात शिशिरतुरायाति । तस्मात्सर्वे मानवाः विभ्यति । शैत्यनिपातेन दिनमपिसंकुचितमिव प्रतिभाति । रात्रावग्निसेवनं मानवैः विधीयते । दीर्घारजनी शयितुं पर्याप्तामन्यते । स्वास्थ्यं च समीचीनं जायते ।निस्स्वानामयंसमयोवेदनामयो मन्यते । प्रस्तुतमहाकाव्येऽस्य वर्णनमुपलभ्यते । यथास्थानम् सप्तमसर्गस्य चतुःपञ्चाशत्तमे पद्येशिशिरे वालुकावर्णनमुपलभ्यते । तद्यथाः-

**असीमवालुकाराशिः विस्तृतः शीतकालिके ।**
**प्रभातेकरकातुल्यः भृशं शीतायतेध्रुवम् ।**
**कदापिमध्यमोवेगः कदाचित् प्रवलोवहन् ।**
**निहन्तिहृदयसद्यः पथिकानां शरा इव ।**
**अयमपि प्रकृतिवर्णस्य स्वीकृतोऽद्भुतः पन्थाः ।**

यशोविजये सर्गे ७ श्लोक सं. ५४/५५

पञ्चमसर्गे ६१ पद्यादारभ्य ६७ पर्यन्तं मनोहारि शिशिरवर्णनं द्रष्टव्यमेव ।

## अन्यत्किमपि प्रकृतिचित्रणम्

प्राकृतवर्णनस्य कापि सीमा निर्धारयितुं नो शक्यते । तस्य विशालं

प्राङ्गणम् । तत्रापि च रमते वर्णने महाकविमानसम् ।

कुशेशये मञ्जुलमालिकावतीं विकासवृत्ते भ्रमरावलिंदधत् ।
विबोधयन् लोकसमग्रसारिणीं विभाकरोभाति पुरोदिगञ्चले ।
समीररूपं त्रिविधंप्रकल्पयन्, कुसुम्भरागेणदिशोऽनुरञ्जयन् ।
जगत्विभासंसरसां सभाजयन्, विराजते राजत मण्डलेश्वरः ।

अत्र प्रातःकालिकवर्णने दिवाकरस्य, मलयसमीरस्य ऊषायाः अपि प्रासंगिकवर्णनभागतम् ।सरसीषुवारि प्रसन्नं राजते । इत्यादिस्थलेषु पूर्णालंकारिकवर्णनं कामप्यभिख्यां रक्षति । यत्रतत्र जलाशयवर्णनं, विपिनवर्णनं महीध्रकीर्तनं संदेर्ष्याविषयम् । सप्तमसर्गेमरुस्थलीप्रसगेन स्थली, क्रमेलक, गोपशुपक्षिनिर्जनवर्णनं मर्यादितमाभाति । मयूरकेकारावः स्वर्णिमबालुका वर्णने महाकवे.सूक्ष्मेक्षिकापरिचयो मिलति ।

अष्टमेसर्गे विहारभूकम्पस्य हृदयदावक कारुणिकमाख्यानं सरसंरसमयंच भयानकरसस्य समुद्भावकं विशेषतो मानसग्राहकं चेति । एतदतिरिक्तमपि वहूपवर्णितं दृश्यम् किन्तु प्रवन्धेऽल्पकाये निखिलवर्णनं दुष्करमेव तथैव रसालंकारविषयेऽपि ज्ञातव्यं । दिङ्मात्रमेव मयाल्पज्ञेन यथामति प्रकाशितम् । विशेषजिज्ञासुभिर्महाकाव्यपारायणेन वैशिष्ट्र्यं वेदनीयमिति सविनयं निवेद्यते । अन्येपिदार्शनिकविषयाः चित्रिताः सन्ति । तेषांपरिज्ञानमप्यावश्यकम् । पारिभाषिक शब्दावलिविषये तथानेकान्त,धर्मदर्शनत्रिरत्नतत्स्वरूपविवेचनं साधुविहितं विभाति। तेषां ज्ञानं मूलतोऽवधेयमिति महाकाव्यजलधौ निमज्जनपूर्वमिति सदाग्रहः ।

## तुलनात्मकसमालोचना

महाकवि—अश्वघोषप्रणीतं "बुद्धचरित" महाकाव्यं वहुचर्चितं विभाति। अत्रोपलब्धाः चतुर्दश सर्गाः दृष्टिपथमायाताः । प्राचीनमिदंमहाकाव्यम् । अतोतिदिष्टेनानेनकाव्येन सह तुलनात्मकं विवेचनं किमपि दिङ्मात्रम् प्रस्तूयते । अत्र भागद्वयमस्ति । प्रथमे जनेरारभ्य बुद्धत्वप्राप्तिपर्यन्तम् वर्णनम् । प्रथमभागः कविना कृतउपलब्धः प्रारम्भस्य श्लोकसप्तकम् तथा चतुर्दशसर्गस्य द्वात्रिंशत्प्रारभ्य द्वादशोत्तरशतम् श्लोकाः मूले न मिलिताः । तेषां पूर्तिरन्येन कृता वर्तते । द्वितीयभागस्य मूलप्रतिः भारतेऽनुपलब्धा वर्तते । तस्यानुवादस्तिब्बतभाषायां लब्धः । तदाधारे चीन भाषायामनुवादो जातः । आंग्लभाषायामपि स रूपान्तरं नीतः । तस्यानुवादोऽपि संस्कृतेविहितोवर्ततेमोहान्तरामचन्द्रदासेनेति । प्रथमेजन्म द्वितीयेऽन्तः पुरविहारः तृतीये संवेगोत्पत्तिः, चतुर्थे स्त्रीनिवारणम्. पंचमेऽभिनिष्क्रमणम्, षष्ठे छन्दकविसर्जनम्, सप्तमे तपोवनप्रवेशः, अष्टमेऽन्तः पुरविलापः,

नवमे कुमारान्वेषणम्, दशमे विम्वसारागमनम्, एकादशे कामनिन्दा, द्वादशे अराऽदर्शनम्, त्रयोदशेकामविजयः, तथाऽवसाने वृद्धत्वप्राप्तिश्च निर्दिष्टा । इत्थंप्रकारेण महाकाव्य पूर्तिरभवत् ।

अनेन महाकाव्येन स्वकीयप्रस्तुतमहाकाव्यस्य कापि तुलनात्मकसमालोचना विधीयते । सर्वप्रथमं जन्मप्रसंगः—

ततः प्रसन्नश्च बभूव पुष्यस्
तस्याश्चदेव्याः व्रतसंस्कृतायाः ।
पार्श्वात्सुतोलोकहिताय जज्ञे
निर्वेदनं चैवे निरामयं च ।

वु. च. प्रथमस. श्लोक ९

भावार्थ—तदानिर्मलपुष्यनक्षत्रं प्रकटितम् । व्रतसंशुद्धदेव्याः पार्श्वतो लोककल्याणार्थ पुत्रः उत्पन्नः । राज्ञ्याः न कापि पीडा नोकोपि रोग एवाभवत् । तत्र प्रसंगे पुत्रोत्पत्तौ पुष्यनक्षत्रोदयः, देव्याः शुद्धता, पार्श्वतो लोककल्याणाय पुत्रोत्पत्ति निदेशः, पीडारोगाभावश्चलिखितः । अस्यवर्णनस्य मनोज्ञता न कापि विलोक्यते । नच हृदयग्राहिता चापि ।

प्रस्तुतमहाकाव्यस्य पुत्रोत्पत्तिप्रसंगः इत्थम्:—
सुजीवराजस्य गृहेयशस्विनी, ।
सनाथनाथी जननीदयामयी ॥
शुभग्रहालोकितसन्मुहूर्तके,
ह्यसूत पुत्रं समये शची समा ॥

ज. विजयेद्वितीयसर्गे श्लोक ११ ।

भावार्थः— सुजीवराजस्यगृहे यशस्विनी सनाथनाथी दयामयी शचीसमा जननी शुभग्रहावलोकितवेलायां सन्मुहूर्तकेसमये सुतम् असूत । एतद् वर्णनेन विषयस्य स्वरूपम् अह्लायस्मृतिपथमवतरति । मनोहरता च जागर्ति । प्रभावशालिता विशेषतोविशिष्यते । "वुद्धचरिते" प्रथमंजन्म पार्श्वात् निर्दिष्टम् अग्रिमपद्येऽनेकानि दत्तान्युपमानानि ततो जन्म गर्भान्निरूपितम् । यथा क्रमेण गर्भादभिनिःसृतः इत्यादि । इत्थं परस्परविरोधः प्रतिभाति । पाश्वति् पुत्रजन्म कथमिति ? प्रस्तुत महाकाव्ये जन्मौचित्यसरणिमधात्[बालक्रीडावर्णनेवैशिष्टयमुभयोः समानम् । परं वृद्धचरितस्य सातिलौकिकी प्रस्तुतस्य लौकिकी इयानेव विभेदः

चरितेप्रवाहाभाव: अत्र च प्रवाहप्रभावौचितीसम्पत्तिरिति ।

श्रीजयमल्ल काव्येन सहसमालोचना अत्रप्रसगे तत्र लिखितम्--जन्मतः पूर्वमेव जातकस्यविषये तृतीये पद्ये यन्निर्दिष्टम् तत्सर्वथाऽप्राकृतमेव । परम्परा- चेयं पूर्व जन्म, ततोबालक्रीडा, ततश्चचरित्रचित्रणमित्यादि । परमत्र विरुद्धमेव चित्रितम् । पूर्वं चरित्रविषये निर्दिश्य पश्चात् जन्मवर्णनम् क्रमव्याहतिरेव । जन्म वर्णनं चेत्थम्:--

अर्कादिके ग्रहगणे समये सुखार्ते ।
वायौ सुखंवहति निर्मलखेदिशासु ॥
जातप्रसन्नविमलासु महोज्ज्वलासु ।
प्राच्यां दिशीव सवितेव शिशुर्विजज्ञे ॥

ज. कल्पलता प्र. स्तवकम् ।

सूर्यादिग्रहा: स्वकीयशुभराशिषु स्थिता। आसन्, गगनं निर्मलम्, मन्दं मन्दं समीरो वातिस्म, दिश: प्रसेदु: । प्राच्यां सवितेव शिशुर्विजज्ञे इति । वर्णनं जयमल्लकाव्यस्य । तन्मर्यादितम् सरसं मनोहरञ्च । परं क्रमव्याहतिर्दोषस्तु संलग्न एव । अग्रे बालचरितम् साधूपवर्णिम् । मध्ये मध्ये लोकपरम्परापि निर्वाहितास्ति । परन्तुपूर्वनिर्दिष्ट काव्यद्वयस्य बालचरितम् प्रस्तुतकाव्यस्यतत् सर्वयातिशेते । लौकिककाव्येसीमापरिक्षणं सर्वथोचितम् । यथाप्रकृतप्रस्तुतमहाकाव्येः--

नदीनिनादे नितरां मनोहरे ।
नगे विशाले रमणीयपादपे ॥
लताप्रतानोद्ग्रथिते भयानके ।
निरस्तभीतिर्विचचार साहसी ॥

तथाऽन्यदपि:--

अधित्यकायामधिरुह्यपादपम्
फलैर्नतं चङ्क्रमणं चकार सः ॥
पणं विधायापि जिगीषयाकुलः ।
अधावताशुत्वरदश्वलेलया ॥

ज. यशोविजये श्लोक ६१,

नदी विमध्येऽप्यधिनिर्झरं क्वचित् ।
व्यराजत प्रस्तरखण्डमास्थित। ॥

समे वयस्या नहि यत्र शेकिरे ।
भयेनयातुं, सचगन्तुमीशितः ॥

तस्यैव श्लोक ६८

एतत्समक्षंपूर्वनिर्दिष्टयोः काव्ययो:वालचरितवर्णनशिथिलंतथाऽतिलौकिकं नैविद्यते । केवलमेकविषयमलम्ब्य दिङ्मात्रम् समालोचना तुल्यात्मिका प्रस्तुता । अयंस्थालीपुलाकन्यायो मन्तव्यः । अधिकं जिज्ञासुभिः ग्रन्थाधारे विस्तृतविमर्शो विधेयः ।

## परिष्कर्त्ता सत्सन्निधिश्चाचार्यश्रीनानेशः

यथास्पष्टमास्ते यस्महाकाव्यस्य सत्सान्निध्यं परिष्कृतिश्चाचार्यश्री नानेशं समुपैति । तस्य जीवनविषये किमपिकथनं रवेर्दीपप्रदर्शनमिवास्ते । तथा-नैतिकदृष्ट्या तज्जीवनं संक्षिप्तरूपेणात्रप्रसगतः प्रस्तूयते ।

इतः षट्षष्टिवर्षाणि पूर्वं वीरप्रसविमेदपाट (मेवाड़) भूमौ ओस-वंशीयश्रेष्ठिवर्यश्रीमन्मोडीलाल पोखरना कुले धर्मशील शृंगारनामिकायाः मातुः कुक्षौ ज्येष्ठशुक्लद्वितीयायां जनिमयं जग्राह । शुक्लपक्षीय सुधांशुरिव निर-न्तरमभिवर्धमान आत्मोन्नतिमासादयितुं सततान्वेषणानन्तरं श्रमणसंघस्य सर्वो-च्चाधिनायक सर्वसत्तासम्पन्नस्य गुरुणामपिगुरोः श्रीमद्गणेशाचार्यस्य श्रीचर-णयोः प्रव्रज्याभङ्गीचक्रे । संयमितजीवनस्य प्रखरसाधनया सह ज्ञानविज्ञानयो रविस्मरणीयं विकासं चकार । तत्रभवान् संस्कृतप्राकृतभाषायाः मूर्धन्यं कृतवान-ध्ययनम् । व्याकरणन्यायदर्शन साहित्यादि विषयाणामपि सांगोपागं ज्ञानं लेभे । एतैः साकम् पाश्चात्यदर्शनमहाभारतरामायणगीतापुराणकुरानादि विषया-नपि यथाभीष्टमधीतवान् ।

भवतः स्वकीयाराध्यगुरुदेवे तादृशं समर्पणमभवत् । यस्यज्वलन्तं प्रमाणं द्वाविंशतिवर्षाणि यावत् सततगुरुसेवायामेव स्थित्वा ज्ञानदर्शन चारित्राणामारा-धनास्ते । वैयावृत्य स्वास्थ्यादिदृष्ट्या त्रिवर्षावासं पृथक्कृतवान् । समर्पणस्येद मुदाहरणम् विरलात्मसु द्रष्टुं मिलति । भवतः संयमजीवनस्यानेकविशेषतासु विशेषतैका साधकाना कृते परमोपयोगिनो अस्ति ।

भवान् संयमसाधनायाः संवृद्धेः तथाज्ञानाराधनायाःअभिवृद्धेश्चातिरिक्तं निरर्थकभाषणंपरिजहौ । अधिकाधिकमौनावलम्बनंभवतःविशिष्टतास्तेसम्यक् ज्ञान-क्रियायाः अनुपालनस्य दृढतमभावनानुस्यूतस्य भवतः जीवानाचरणंदृष्ट्वा श्रीमद् गणेशाचार्यः भवन्तं महाप्रतापशालिनः क्रियोद्धारकस्य पूज्यश्री हुक्मीचन्दस्य पट्ट

थरूपशायाः युवाचार्यरूपेनिर्वाचितवान् विकटतटेस्थितः सम्प्रदायः भवतोवरदहस्तो तथा कुशलानुशासनं प्राप्य निरन्तरमुन्नतिपथे-एधमानोऽजायत वर्धते च ।

णमो आयरियाणं इति गुरुतर पदसमासीनोभवान् व्यक्तिपरिवार समाजराष्ट्रे तथा विश्वस्मिन् विश्वे शान्तिस्थापनार्थं स्वानुभूतेरनुदोहनपूर्वकं समतादर्शनरूपंनवनीतं प्रास्तौत् । समतादर्शनस्य गुञ्जारेणानुगुञ्जितप्रवचनानां सारः निस्सृतः मालवप्रान्तस्य भुवि वास्तव्यानां सहस्राधिक बलाईजातिपरिवाराणां व्यसनमुक्तसात्विकजैनत्वस्वीकरणम् ।

भवतः प्रवचनानि एतादृशानि प्रभावकारीणि भवन्ति यत् प्रवचन सचिति मानवाः स्वकीयवैयक्तिकपारिवारिक सामाजिकवैमत्यकालुष्याणि विसृज्य स्वान् स्वान् उज्ज्वलान् निर्मलान् च सम्पादयन्ति ।

उच्चकोटेः विदुषः तथात्यन्तप्रभावशालिनः च भवतः सरलताप्रत्येक आगन्तुकं विना आकर्षितंकर्त्तुं न तिष्ठति ।

भवान् स्व. शान्तक्रान्तिजन्मदातुराचार्यश्रीगणेशिलालस्य क्रान्तिकारिणः विचारान् संघे सूत्राणि इव निर्द्वंद्वं प्राचारयत् । यत्र शिक्षा दीक्षा प्रायश्चित्तं विहारश्चेति सर्वाव्यवस्था साधु परिपाल्यते । अद्यावधि अत्यल्पसमयेपि सप्तदशाधिकशतद्वयंदीक्षाः प्रदाय नवीनेतिहासस्य सर्जनं विदधौ ।

खीस्ताब्दे चतुरशीत्यधिक एकोनविंशतितमे भवान् रतलाम नगरेपञ्चविंशतिः दीक्षां प्रदाय स्थानकवासिजैनसमाजस्य पंचशतवर्षाणां पूर्वतनस्यैतिह्यस्य पुनरावर्तनंचकार ।

जैन समाजस्यैकतायायाः भवान् दृढः पक्षधरोऽस्ति । एकतामूलाधार संवत्सरीमहापर्वणः ऐक्यविषये भवान् निर्भीकतयासाकमुवाच यदि सकलोपि जैन समाजः परस्परं मिलित्वा यत्तिथेः निर्णयं कुर्यात् । तन्मान्यतांदत्वाहमपि संवत्सरी विधातुंतत्परोस्मि । इत्थं श्वेताम्बरस्य तथा स्थानकवासिजैनसमाजस्यापि कृते तत्परतास्ते । अयमेकस्याश्चर्यस्य प्रमोदस्यचविषयोऽस्ति । यद्भवानेवैकोधर्माचार्योस्तियः इत्यम् उद्घोषयितु प्रभुः ।

ध्यानेन चित्तसमाधये भवान् समीक्षणध्यानसाधनापद्धतिं समारभ्य आत्मसाधकानाञ्चकृते सबलसबलं प्रददौ ।

भवतो विचरणक्षेत्रं पर्याप्तं विशालं भवदासीत् । भवता स्वयं श्री

चरणैः राजस्थान, मध्यप्रदेशोत्कल, दिल्ली, महाराष्ट्रगुर्जरप्रान्त सौराष्ट्रादि विविधप्रान्तेषु विचर्य सुषुप्तजनचेतनां समुदद्वोध्याभिनवं जागरण विधाय जैन शासनस्य गौरवेवृद्धिविहितवान् ।

सम्पूर्णजैनसमाज एवनो अपितु निखिलमानवजातिः भवता प्रेरका कर्षकव्यक्तित्वेन कृतित्वेन च चमत्कृताभाशान्विता चेति ।

## काव्यकारविषये किमपि

अस्यमहाकाव्यस्य प्रणेतारोमहामनसः श्री आचार्य चन्द्रमौलिमहोदयाः शैशवादारभ्यैव विशिष्टप्रतिभाशालिन सन्ति । अध्ययनकालेवाराणस्यां किमपि वैशिष्ट्यमासीत् कविवर्याणाम् । विद्यापरिश्रमाधीनेति भणितेरनुसारं विशेषरूपेण विद्यापरिश्रमसाधना विहिता । ययाचार्यपरीक्षापर्यन्तं प्रतिवर्ष प्रथमश्रेण्यामुत्ती-र्णता कामपि विशिष्टतांरक्षति । वाराणसेयसंस्कृतछात्रसघप्रधानमन्त्रिपदं स्वीकुर्वद्भिरेतै। स्वास्थ्यसमीचीनताऽभावेपि सर्वेभ्योऽधिकं साफल्यमाप्तमिति छात्र जगत्ति कीर्तिमानमेव संस्थापितम् । स्वर्णपदकैः विभूषिताः इमेऽद्यावधि श्रमसा-धनायां सलग्नाः सन्ति । वीकानेरसंस्कृतविद्यापीठस्यप्रधानाचार्याः स्वकार्य-काले संस्थायाः सर्वदृष्ट्या समुन्नतिमर्जितवन्तः । प्रभूताः छात्रा अध्यापिताः । ये राजकीयविभागेषु यत्रतत्र सर्वत्रकार्यरताः सन्ति राजकीयशिक्षाविभागे-ऽपि तत्रभवतांभवताम् विद्यालयीयसेवा शिखरायते । सम्प्रति अपि अखिल भारत वर्षीय साधुमार्गि जैन संस्थायामध्यापनलेखनकर्मणि सम्पृक्ताः वेविद्यन्ते । साहि-त्यस्य प्रत्येकदिशि वर्ततेऽप्रतिहतगतिरेतेषाम् । व्याख्यातारः समालोचकाः लेखकाः कवयः नाट्यकाराः गीतिकानिर्मातारः कथोपन्यासप्रणेतारः कवितार्किकचक्र-वर्तिनः प्रवचनपटवः अन्वेषणपरायणाः शिक्षासविदः राजस्थानशासनेनपुर-स्कृताः विद्याविपिनविहरणशीला वाग्मिनोमनस्विनो धर्मसमाजराष्ट्र सेवा संभृताः राजस्थानसंस्कृतसाहित्यसम्मेलनस्य प्रान्तीयमण्डलाध्यक्षाः, सुरभारतीप्रचारप्रसारा ध्वरे सर्वथा दीक्षिताः, श्रौतस्मार्तकर्मानुष्ठाननिष्ठाः विविधविद्या विलासयशोधनाः पदवाक्यप्रमाणपारावारीणाः विविधविषयशोधप्रवन्धनिदेशपारंगतशेमुषीकाः भारतविजयवैजयन्ती वीथिका संस्कृतगीताञ्जलि हिन्दी संस्कृतकाव्यकाराः सद्यो-भिनवभव्याप्रकाशितश्रीनानेशचरितामृतचम्पूकाव्यप्रणेतारः, सर्वदर्शनसमन्वय-कारकाः मानवतावादिदृष्टिकोणसाधनसाधकां ज्ञानदर्शनचारित्ररत्नसमुपासकाः समकितधारिणः विद्यापाथोधिसुतलतलातलनिष्णाताः श्रावकाचारपालनैकसमा-श्रितदृढव्रताः आगमाभ्यासनिरताः, सततशास्त्रसमभ्यसनवद्धपरिकराः, कान्त शान्तमनस्काः, विद्वत्तल्लजाः गुणिगणगणनाकनिष्ठिकाऽधिष्ठिताः जनससदि-लब्धकीर्तयः कविताकान्तकमनीयकलाधराः ।

आत्मोन्नतिपथपथिका; शतंजीवेम शरद; इति भद्रभावनाभृता; मद्गुरवः सन्तीति अत्रप्रसंगे विशेषविनतोऽहंसभाजयामि । चिरायुष्यमपि कामये । महाकाव्यविवेचने समादिष्टोऽह् यथाशक्यमादेशं पालितवानिति स्वंकृतकृत्यं मन्ये । सदा प्रधानानात्मोन्नतिपथपथिकान् समतादर्शनप्रवर्तकान् धर्मपालप्रतिबोधकान् बाल ब्रह्मचारिणः जैनशासनप्रभावकान् जगत्प्रथितयशस्कान् गुणगणगणनाकनिष्ठि काधिष्ठितान् श्री श्री नानेशाचार्यगुरुवर्यान् विनतोभद्रभावेन सततंवन्दे । येषां कृपयैव किमपि महाकाव्यविषये विवेचयितु प्राभवम् । आशासे इदं महाकाव्य जनमनांसिरञ्जयत् चिरस्थायिपदमासादयिष्यतीति ।

शम् ।

विवेचकः—

डॉ. ईश्वरानन्दः शास्त्रीशर्मा सारस्वतः
एम.ए.पी.एच.डी.बी. एड् विद्यानिधिः
प्रो. श्री डूंगरमहाविद्यालय
बीकानेर (राज.)

# श्रीमज्जवाहरयशोविजयं महाकाव्यम्

## तीर्थंकर स्तवनात्मकः—

### प्रथम सर्ग :

समस्त अध्यात्मवादी दर्शनों ने मंगलाचरण के महत्व एवं उसकी उपादेयता को स्वीकार किया है। ग्रन्थ की निर्विघ्न परिसमाप्ति के प्रति मंगलाचरण अपनी महत्वपूर्ण भूमिका प्रस्तुत करता है। मनोवैज्ञानिक दृष्टिकोण से मानव मन अपने से उच्चतम आदर्श का स्मरण कर उसके प्रति समर्पित हो जाता है और तद् द्वारा संकल्प की असीम शक्ति प्राप्त कर लेता है।

इसी आधार पर किसी भी कार्य के प्रारम्भ में मंगलाचरण की चिरपुरातन परम्परा चली आ रही है। जैन दर्शन के अनुसार स्वयं तीर्थंकर प्रव्रज्या स्वीकार करते समय सिद्धों के नमस्कार रूप मगलाचरण का आश्रय प्राप्त करते है।

"श्रीमज्जवाहरयशोविजय महाकाव्य" के ग्रन्थकार इस पुनीत परम्परा का अतिक्रमण कैसे कर सकते है। उन्हें भी तो इस विशालकाय ग्रन्थ को अपनी परिपूर्णता तक पहुंचाना है। और वह भी निर्विघ्न पूर्ण रूपेण। परिणामत: मंगलाचरण का आधार उनके लिए भी आवश्यक एवं वांछनीय हो गया।

जिज्ञासा हो सकती है कि मंगलस्वरूप किसे माना जाय, कौनसी ऐसी सत्ता है, जिसके अनुस्मरण को मंगलाचरण का आधार फलक माना जाय'।

इस जिज्ञासा का समाधान आत्मिक दृष्टि से दो रूपों में दिया गया है—लौकिक और लोकोत्तर। द्रव्य मंगल और भाव मंगल। द्रव्य मंगल -
कुंकुम आदि पदार्थो को माना गया है, तो भावमंगल धर्म अथवा .
णपरमोच्च आदर्श आत्माओं को।

चूंकि प्रस्तुत ग्रन्थ अध्यात्म ग्रन्थ है और अध्यात्म का सम्बन्ध भावात्मकता के साथ ही है, अतः यहा लोकोत्तर–भाव मगल से ही प्रयोजन है। वह भाव मंगल है–साधना की चरम परम स्थिति प्राप्त वीतराग देव, अरिहन्त, तीर्थकर एव सिद्ध। मुक्ति साधना के समुज्ज्वल प्रतीक सिद्ध प्रभु ही हमारे सर्वोच्च आदर्श हैं, अतः ग्रन्थकार सर्वप्रथम 'सिद्ध' देव की स्तुति करते हुए कहते है—

**ध्येयं समाधि–निरतैर्विरतैर्भवाब्धेः, सौख्यास्पदं निखिलदेवनुतंशरण्यम्।**
**आदर्शरूप–विरजस्कमनल्पकल्पम्, वन्दे च सिद्धभगवच्चरणारविन्दम् ॥1॥**

अन्वयः—अहम् भवाब्धेः विरतैः, समाधिनिरतैः, (साधकैः) ध्येयम् सौख्यास्पदम् निखिलदेवनुतम् शरण्यम् अनल्पकल्पम् आदर्शरूपविरजस्कम् सिद्धभगवतः चरणारविन्दम् च वन्दे।

भावानुवादः—ससार महोदधि से तितीर्षु आत्मसमाधि निरत, ध्यान साधकों द्वारा ध्येय (ध्यान करने योग्य) परम सौख्य केसर्वोच्च केन्द्र–स्थल, सम्पूर्ण देव-देवेन्द्रों द्वारा प्रणत, सर्वस्व प्रदायी कल्पवृक्षवत्अनन्त–अनन्त सूर्यो के प्रकाश से भी अनुपमेय, समस्त रजोगुण के कालुष्य से रहित, सिद्ध परमात्मा के भावात्मक–आदर्श–चरण–सरोजों की मेरी प्रणति ॥१॥

**लोकप्रभासनविधौ द्युतिमत्स्वरूपाः, दिव्यप्रकाशकरणे सतत समर्थाः।**
**देवैस्स्तुताः विगतकर्ममलाः महेशाः, संजातबोधजनिमृत्युजराविहीनाः ॥2॥**

अन्वयः—लोकप्रभासनविधौ द्युतिमत्स्वरूपाः, दिव्यप्रकाशकरणे सततं समर्थाः, सजातबोधजनिमृत्युजराविहीनाः देवैः स्तुताः विगतकर्ममलाः महेशाः (नः अपि सिद्धान् विदधतामितितृतीयेणान्वयः।)

भावानुवादः—परम तेजस्वी दिव्य स्वरूप के द्वारा लोकालोक को प्रकाशित करने मे परम दीप्तिमान समस्त देव-देवेन्द्रो द्वारा संस्तुत, लोकालोक प्रकाशी केवल ज्ञान के धारक जन्मजरा और मृत्यु की शृंखला से विमुक्त सिद्ध प्रभु स्वरूप प्रदाता बने ॥२॥

**सर्वोत्तमाः विमलसिद्धिपदं प्रयाताः। संकीर्तिताः निखिलवन्दितसंस्तुताश्च ॥**
**नम्याः नमेरमितसारतरप्रभावाः। सत्कारयोग्यचरिताः यशसावदाताः ॥3॥**

अन्वय—सर्वोत्तमाः विमलसिद्धिपदप्रयाताः सकीर्तिताः, निखिलवन्दितसंस्तुताः,

समैः नम्याः, अमितसारतरप्रभावाः सत्कारयोग्यचरिताः, यशसावदाताः च (सन्ति)।

भावानुवाद:—ससार के समस्त चेतन तत्व मे सर्वोत्तम सत्ता के अधिपति परम निर्मल सिद्धि सौध के अधिष्ठाता, समस्तआत्म-उपासकों द्वारा सकीर्तित अभिवन्दित एव सस्तुत जनजन के द्वारा प्रणत अनुपमेय प्रभाव के संधारक सतत सत्कार के आधार विमल यश के धारक (सिद्ध प्रभु हमारे आदर्शरूप हो)।

श्लोकत्रयी के द्वारा संसार के सर्वोच्च-आदर्श सिद्धमहाप्रभु का मंगल स्मरण कर ग्रन्थकार उपकारी उपकार्य भाव के चिन्तन पूर्वक जगदुपकारकर्त्ता अनन्त उपकृति के केन्द्र तीर्थंकर महाप्रभु की समुच्चयरूपेण एवं क्रमबद्धता के साथ स्तुति करते हुए कहते है—

**येषां सुरैः प्रतिपलं बहुमानभक्तया । धर्मस्य शासनकृतां विहिताः सपर्याः ॥**
**संसारसागरसमुत्तरणाय सेतून् । तान्नौमि; सत्त्वहिततीर्थकरान्परेशान् ॥4॥**

अन्वय:—(अहम्) येषांधर्मस्य शासनकृताम् (जिनानाम्) सुरैः वहुमानभक्तया प्रतिपलं सपर्याः विहिताः। तान् संसार सागरसमुत्तरणाय सेतून् सत्त्वहिततीर्थकरान् परेशान् नौमि ।

भावानुवाद:—धर्म के सर्वोच्च शासक समस्त देवो द्वारा सम्पूजित, संसारोदधि से पार जाने हेतु सेतुभूत समस्त प्राणिवर्ग के हितार्थ तीर्थ प्रवर्तन करने वाले तीर्थंकर महाप्रभु को मेरे अगणित वन्दन ।

**ध्येया गुणैरधिककीर्तियुताः हिमांशोः, सूर्यादनन्तगुणितागतसंप्रकाशाः ।**
**गम्भीरचारुचरिताः समसागरेभ्यः, तीर्थंकराः विदधतां ननु नोऽपिसिद्धान् ॥5॥**

अन्वय:—गुणैः ध्येयाः हिमांशोः अधिक कीर्तियुताः सूर्यात् अनन्तगुणितागतसंप्रकाशाः समसागरेभ्यः गम्भीरचारुचरिताः तीर्थकरा नः अपि सिद्धान् विदधताम् ।

भावानुवाद:—चूंकि वे तीर्थंकर अनन्त गुणों के धारक है, अतः गुणोपासकों के लिए ध्यान के पवित्रतम आधार, शशि की शुभ्र-प्रभा से अधिक सौम्य धवल कीर्ति के केन्द्र, अनन्त दिवाकरों से अधिक प्रदीप्त प्रकाशपुञ्ज, महासमुद्रों से अधिक अगाध गम्भीर, चरित्र निधि के धारक, तीर्थंकर प्रभु हमारे लिए सिद्धि सौध का पथ प्रदर्शित करें ॥५॥

**तस्मै नमोस्तु भगवज्जिननामकाय । तीर्थंकराय पुरुषोत्तमसद्वराय ।**
**लोकोत्तमाय जगतां हितसाधकाय, लोके प्रदीपविभया च विभासकाय ॥6॥**

अन्वयः—लोकोत्तमाय, पुरुषोत्तमसद्वराय जगतांहितसाधकाय, लोके प्रदीप विभया च विभासकाय, भगवद् जिननामकाय तस्मै सिद्धायनमः अस्तु ।

भावानुवादः—परम पवित्र जिन संज्ञा के धारक, संसार के समस्त पुरुषों में सर्वोत्तम. पूर्ण, ब्रह्माण्ड में अप्रतिम निखिल संसार के हितकर, प्रदीपप्रभावत् लोकस्थित, अणु-परमाणु को प्रभासित करने वाले तीर्थंकर प्रभु के परमपूत चरण-सरोजों को भाव-पूर्ण नमन ।

**ज्ञानाभयाक्षिमतिदाय दयामयाय, पद्माय सर्वपुरुषेषु च सद्गजाय ।**
**सिंहाय धर्मशरणाय, सुबोधकाय, धर्मोपदेशनकराय च नायकाय ॥7॥**

अन्वयः—ज्ञानाभयाक्षिमतिदाय, दयामयाय, सर्वपुरुषेषु पद्माय, सद्गजाय सिंहाय च धर्म शरणाय सुबोधकाय धर्मोपदेशनकराय नायकाय च तस्मै नमोस्तु ।

भावानुवादः -सम्यग्ज्ञान के उपदेष्टा, अभयवृत्तिप्रदाता, दिव्य नेत्रउन्नायक, सन्मति प्रकाशक, परम दयालु, समस्त जनवृन्द में निर्लिप्त कमल, गन्धहस्ति एव विक्रान्तसिंहवत् धर्म के अप्रतिम शरण रूप आधार, जन-मन प्रबोधकर्ता, अनन्यधर्मोपदेष्टा, निखिल-धर्म-जन-नायक, तीर्थंकर महाप्रभु के लिए समर्पित अगणित नमन ।

**सर्वस्य जीवनिवहस्य दयाकराय, सम्यक्-सुबोध-शुचिदर्शनसंधराय ।**
**तीर्णायतारकमयाय जगद्धिताय, मुक्तायमोचनकराय च पालकाय ॥8॥**

अन्वयः—सर्वस्य जीवनिवहस्य दयाकराय. सम्यक् सुबोधशुचिदर्शनसंधराय, स्वयं तीर्णाय तारकाय, जगत्हिताय मुक्तकाय, मोचनकराय पालकाय च तस्मै सिद्धाय नमः अस्तु ।

भावानुवादः—समस्त प्राणि वर्ग के प्रति अप्रतिम कारुणिक, सम्यग्ज्ञान, दर्शन, चारित्र के अधिष्ठाता, संसारोदधि से स्वयं पार होकर अन्य मुमुक्षुओं को तिराने वाले स्वयं मुक्त, मुक्तिप्रदाता, अध्यात्मशासन के सुपालक तीर्थंकर प्रभु को वन्दन ।

**सर्वज्ञ सर्वविदिताय सुदर्शनाय, भव्याय कर्मरहिताय सुमंगलाय ।**
**कारुण्यपूर्णहृदयाय कृपाकराय, शान्ताय शान्तिकलितायजगन्मयाय ।।9।।**

अन्वयः—सर्वज्ञसर्वविदिताय सुदर्शनाय, कारुण्यपूर्णहृदयाय, कृपाकराय, भव्याय कर्मरहिताय सुमंगलाय, शान्ताय शान्तिकलिताय जगन्मयाय तस्मै नमः अस्तु ।

भावानुवादः—सर्व जड–चेतन सृष्टि के साक्षात् द्रष्टा सर्वज्ञ नयनाभिराम सुदर्शनीय भव्यदेहयष्टि के धारक, कर्म बन्धन की शृंखला से विमुक्त, महामंगल करुणापूत हृदय, कृपा के केन्द्र परम शान्ति के अग्रदूत शान्तचेता, विराट विश्वस्वरूप तीर्थंकर प्रभु के लिए वन्दनार्पिति ।

**अक्षय्यमोक्षपदमर्चितमाप्तकाय, तस्मै नमोस्तु ललितं शिवमव्ययंतत् ।**
**सिद्धाय देवमहिताय महेश्वराय, मुक्तौ च गन्तुमनसे ह्यरिहन्तनाम्ने ।।10।।**

अन्वयः—अर्चितम् ललित, शिवम् अव्ययंतत् मोक्षपदम् आप्तकाय, देवमहिताय महेश्वराय तस्मै सिद्धाय नमः अस्तु । तथा मुक्तौ च गन्तुमनसे तस्मै अरिहन्तनाम्ने च नमः अस्तु ।

भावानुवाद—समस्त मुमुक्षार्थियों द्वारा अर्चित–ललित कल्याण क्रीडा के केन्द्र स्थल-भव्यपद मुक्ति श्री के अधिनायक, देववृन्द से पूजित, परमसिद्ध महेश्वर, मुक्तिपद प्राप्तेच्छु अरिहन्त अभिसंज्ञक तीर्थंकर प्रभु के लिए पुनः-पुनः वन्दन ।

समुच्चय रूप से तीर्थंकर देव की स्तुति के उपरान्त ग्रन्थकार चतुर्विंशति जिन की क्रमबद्ध स्तुति वन्दना प्रस्तुत करते हुए श्लोक पंचक द्वारा प्रथम जिन वन्दन करते हैं—

## प्रथम जिन वन्दनाः–

**मग्नस्य सर्वविधिना निविडान्धकारे, नव्यव्यवस्थितिकृतो जगतोऽखिलस्य ।**
**स्वायंभुवं विमलरोचिरुपागतस्य सद्वन्दनं चरणयोर्वृषभस्यभूयात् ।।11।।**

अन्वयः—निविडान्धकारेमग्नस्य अखिलस्य जगतः सर्वविधिना नव्यव्यवस्थितिकृतः स्वायम्भुवं विमलरोचिः उपागतस्य वृषभस्य (ऋषभस्य) चरणयोः सद्वन्दनम् भूयात् ।

भावानुवाद:—अकर्म के निविड अन्धकार मे सम्पूर्णतया निमग्न, जगज्जन समूह के लिए नव्य-भव्य व्यवस्था करने वाले स्वय विमलज्ञानालोक को प्राप्त स्वयंभू आदिनाथ-प्रभु ऋषभदेव के चरण सरोजो में भावपूर्ण वन्दना।

**साम्राज्यसौख्यमधिगत्य समस्तसर्वम्, निर्लेप भावमभजत् शतपत्रमप्सु।**
**संपाल्य लोकनिवहं विधिनाविधिज्ञो, दीक्षां विमुक्तिसरणिं जगृहे कृतार्थः ॥12॥**

अन्वय:—विधिज्ञ: (आदिनाथ:) समस्तसर्वम् साम्राज्यसौख्यम् अधिगत्य अप्सु शतपत्रम् (इव) निर्लेपभावम् अभजत् । विधिना लोकनिवह सपाल्य कृतार्थः (सन्) विमुक्तिसरणि दीक्षा जगृहे ।

भावानुवाद:—जो महाप्रभु ऋषभदेव सुविस्तृत साम्राज्य सौख्य के ज्ञाता एवं अधिष्ठाता होने पर भी सम्पूर्ण भौतिक सुखों के प्रति जल कमलवत् निर्लिप्त रहकर सम्यग् विधि से प्रजापालन के कर्तव्य से कृतार्थ हो, मुक्ति पथ-प्रदातृ प्रव्रज्या के प्रति समर्पित हुए ।

**भूत्वा मुनिर्विहितवान् जटिलां तपस्याम, ग्रामानुग्रामखिलं विजहार धीरः।**
**यस्यां कृतंवरदवार्षिकपारणं तत्, साक्षय्यपुण्यतिथिरेवमियं प्रसिद्धा ॥13॥**

अन्वय:—सुधीर: मुनिः भूत्वा जटिलाँ तपस्यां विहितवान् । अखिलं ग्रामानुग्राम विजहार । यस्यां तिथौ वरदवार्षिकपारणं कृतम् । तत् (तस्मात्) सा इयम् अक्षय्यपुण्यतिथिः एवम् (अक्षयतृतीया) प्रसिद्धा ।

भावानुवाद:—उन महाप्रभु ऋषभदेव ने मुनिव्रत ग्रहण कर कठोर तपश्चरण किया । अपनी पद रज से ग्राम-ग्रामों की धरा को पवित्र किया, जिस तिथि को प्रभु ने वार्षिक तपश्चरण का पारणक किया वह महापुण्य शालिनी तिथि 'अक्षय तृतीया" की संज्ञा प्राप्त कर प्रसिद्ध हुई ।

**भोगे विभूतिमहिमा नहिकश्चिदास्ते, त्यागे च सर्वसुलभो दृढदेशनासीत्।**
**धर्मस्य मार्गमधिरूढजनो जगत्या, माप्नोतिशान्तिमतुलामनपायिनीं च ॥14॥**

अन्वय:—भोगे कश्चित् विभूतिमहिमा नहि आस्ते । त्यागे च सर्वसुलभः (आस्ते) धर्मस्य मार्गम् अधिरूढजनो: जगत्याम् अतुलाम् अनपायिनी चशान्तिम् आप्नोति इति दृढदेशना आसीत् ।

भावानुवाद:—उन महाप्रभु की सुदृढ सम्यक्देशना थी, कि वैभव की महिमा एवं

उपयोगिता भोग मे नहीं, त्याग में है। तथा त्यागमय धर्म मार्ग पर गतिशील-मानव संसार की सर्वोत्तम अतुल एव अविनश्वर शान्ति को प्राप्त करता है।

**लोकस्य शर्मकलितैरुपदेशनैश्च, साकं समाधिनिरतः किलकेवलीसन्।**
**कैलासशैलशिखरेवत निवृतोऽसा, वाद्यो जिनो दिशतु नो नवमंगलानि ॥15॥**

अन्वयः—केवली सन् लोकस्य शर्मकलितैः उपदेशनैः साकम् समाधिनिरतः (ऋषभ) वत कैलासशिखरे निवृतः। असौ आद्यः जिनः नः नवमंगलानि दिशतु।

भावानुवादः—जन मंगलकारी एवं लोक कल्याणकारी सदुपदेशों मे प्रवृत होते हुए भी नैश्चयिकआत्म-समाधि मे संलीन, कैवल्य ज्ञानी, कैलाश पर्वत-शिखर पर निर्वाण प्राप्त प्रथम जिनेश्वर हमे नव मगल प्रदान करें।

## श्लोक द्वय द्वारा द्वितीय जिन–स्तवनः–

**देवाधिदेवविदितः शुभलाभकारी, प्रोद्यत्समुज्ज्वलयशाः जयसिद्धिसारी।**
**सम्मेदतुङ्ग शिखरे ननु निवृतो यो, भद्रं तनोतु भगवानजितो जिनः सः ॥16॥**

अन्वयः—यः देवाधिदेवविदितः शुभलाभकारी प्रोद्यत्समुज्ज्वलयशाः जयसिद्धि-सारी सम्मेदतुङ्ग–शिखरे ननु निवृतः। सभगवान् अजितनाथः जिनः भद्रं तनोतु।

भावानुवादः—देवाधिदेव रूप से प्रख्यापित प्रशस्ततम–लाभकर्ता प्रभास्वर–समुज्ज्वल कीर्ति के धारक सम्पूर्ण-सिद्धि-प्रदाता, सम्मेद शिखर गिरि के उन्नत शिखर से निर्वाण प्राप्त प्रभु अजितनाथ हमारे कल्याण हेतु बने।

**साम्यं दधत् भुवि जनेषु समानमानः, कर्मापि सर्वमवच्चित्य दिशं ददानः।**
**दिव्यां महेभशुभलक्ष्मरुचं दधानः, अर्हज्जयत्यजितनाथ सुधाभिधानः ॥17॥**

अन्वयः—भुवि जनेषु समानमानः, साम्यं दधत् सर्वम्अपि कर्म अवच्चित्य दिशं ददानः, दिव्यां महेभशुभलक्ष्मरुचं दधानः अजितनाथ-सुधाभिधानः अर्हन जयति।

भावानुवादः—परम साम्य योग के संधर्ता, निखिलजन-सम्मानित, समस्त-कर्म कलक से उपरत हो, कर्म-सक्षयकारी देशना प्रदाता दिव्यसुहरित चिह्न से उप-

शोभित, अमृत्वत् "अजितनाथ" संज्ञा से संज्ञित अर्हन्त प्रभु जयवन्त हों।

## तृतीय जिन स्तवनः-

सर्वत्रगेयचरितो मृदुरम्यरूपो, जीवे दयालुरतिपीडित-मर्त्यबन्धुः।
अश्वस्य लक्ष्म-विदितं जनिमेवमाप्य, तीर्थंकरोऽजनि च सम्भवनाथ-नामा ॥18॥

अन्वयः—सर्वत्रगेयचरितः मृदुरम्यरूपः दीनेदयालुः अतिपीडितमर्त्यबन्धुः। अश्वस्य विदितंलक्ष्म (आसीत्) एवम् जनिम् आप्य च सम्भवनाथनामा तीर्थंकरः अजनि।

भावानुवादः—जिनके चारित्र की महिमा के गीत सर्वत्र गाये जाते हैं नयनाभिराम-कोमल-कान्त–छवि से युक्त वपु वाले करुणा के अविरल स्रोत, दुःख-पीडित प्राणियों के बन्धुभूत, अश्व के प्रसिद्ध लाञ्छन वाले, तीर्थंकर महाप्रभु ससार मे "सम्भवनाथ" नाम से प्रसिद्ध हुए।

## चतुर्थ जिन वन्दनाः-

साकेत-लब्धजनुषा भवभूषणेन, प्रोद्भासिताखिलभूरविणेव येन।
भक्तया पुरस्सरसुरैरभिनन्दितो यः सोऽर्हन् पुनीतचरितो ह्यभिनन्दनोऽभूत् ॥19॥

अन्वयः—साकेतलब्धजनुषा, भवभूषणेन रविणा इव येन निखिला भूः प्रोद्भासिता। यः पुरस्सरसुरैः भक्तया अभिनन्दितः स पुनीतचरितः हि अभिनन्दनः अर्हन् अभूत्।

भावानुवादः—साकेत (अयोध्या) नाम से सुप्रसिद्ध नगरो में समुत्पन्न विश्व के भूषण रूप, रविप्रभासम; सम्पूर्ण पृथ्वी को ज्ञान लोक से प्रभासित करने वाले, अप्रतिम भक्ति से सुरेन्द्रो द्वारा अभिनन्दित, परम–पूत–चारित्र–प्रभा मण्डित अभिनन्दन प्रभु ने ससार को सनाथित किया।

## पंचम–जिन–वन्दनाः-

सद्बुद्धिदायकसहामहिमादियुक्तो, भव्ताब्जमानसविकासनचित्रभानुः।
कैवल्यबोधमहितो महितो विमुक्तो, जीयादसौ सुमतिनाथजयी जिनेन्द्रः ॥20॥

भावानुवादः—सुमतिप्रदाता, महामहिमादि अलौकिक सिद्धियो से सम्पन्न, भक्त-

मानस रूप कमलों के प्रकाश मे प्रदीप्त सूर्य के समान तेजस्वी, कैवल्य-ज्योति से ज्योतित, जन-जन पूजित, सर्वथा विमुक्त. विशिष्टतम-आत्म-विजेता, जिनेन्द्र प्रभु जयवन्त हों :

**षष्ठ-जिन-वन्दना:-**

**यन्नामपावकचये प्रदहन्ति तूर्णम्, पापानि सर्वजगतामिव सः पतंगाः ।**
**जातः पद्मकलितः प्रथितः पृथिव्याम् पद्मप्रभुर्विजयते विरतो जिनेद्रः ॥21॥**

अन्वय —यन्नामपावकचये पतगा इव सर्वजगता पापानि तूर्णम् एव प्रदहन्ति । स जात, पद्मकलितः पृथिव्या प्रथितः विरतः परमप्रभुः जिनेन्द्रः विजयते ।

भावानुवाद:—जिनके पवित्र नाम रूप अग्नि मे ससार के समस्त पातक पतग-वत् भस्म हो जाते है । वे पदमचिह्न से सुशोभित पृथ्वी पर प्रसिद्ध, समस्त-राग-द्वेषात्मक वन्धनो से विरक्त, जिनेन्द्र प्रभु पद्मनाथ जी जयवन्त हो ।

**सप्तम जिन वन्दना:-**

**वाराणसीपरिसरे कलयाञ्चकार, दिव्यांजनि जनहिताय दयाप्रधानः ।**
**धर्मार्थसिद्धिपरिपूरकमोक्षदोऽसा, वर्हन्सुपार्श्वसहितो जयतात् स नाथः ॥22॥**

अन्वयः—दयाप्रधानः वाराणसीपरिसरे जनहिताय दिव्या जनिम् कलयाञ्चकार धर्मार्थसिद्धिपरिपूरकमोक्षदः असौ अर्हन् सुपार्श्वसहितः सनाथः जयतात् (सुपार्श्वनाथ इतियावत्) ।

भावानुवाद:—समस्त प्राणियो के कल्याण हेतु वाराणसी मे अलौकिक जन्म धारण करने वाले, दया के अविरल स्रोत, धर्मरूप अर्थ की सिद्धि के प्रपूरक, मुक्ति-प्रदाता, महान्तपश्चेता अर्हन् श्री सुपार्श्वनाथ की सदा जय-विजय हो ।

**अष्टम-जिन-वन्दना:-**

**चन्द्रपुरे समभवत् शशिवन्मनोज्ञः, स्वामी त्रिलोकशरणं वरणं विमुक्तेः ।**
**सम्मेदशुद्धशिखरे शिवसौख्यमाप्तः, चन्द्रप्रभोनयनयोर्विषयो जिनोऽस्तु ॥23॥**

**पितृव्य–पादस्य कठोरशासनात्, कियद्यथारुद्धमभूदनारतम् ।**
**सुसंगतं साधु जनस्य शान्तिदम्, स्थिता तथापीह विरागभावना ॥४५॥**

अन्वयः—साधुजनस्य शान्तिदम्, सुसगतम् पितृव्य–पादस्य कठोर–शासनात् अनार तम् कियद् यथारुद्धम् अभूत् । तथापि इह विरागभावना स्थिता ।

भावानुवाद:—अपने चाचा के कठोर अनुशासन से उनकी शान्तिदायी संतसंगति में निरन्तर कुछ–कुछ व्यवधान आने लगे, अर्थात् उनका मुनिसम्पर्क प्रायः अव रुद्ध सा हो गया । तथापि उनकी वैराग्य भावना यथावत् स्थित रही ।

**विरोधमार्ग बहुधा प्रदर्शितम्, कृतंच दग्धैरनगारनिन्दनम् :**
**फलं न लब्धं दुरबोधबोधनम्, विरागिचित्तेन भृशं नगायितम् ॥४६॥**

अन्वय:—बहुधाविरोधमार्गम् प्रदर्शितम् । दग्धैः अनगारनिन्दम् कृतम् । दुरबोध-बोधनम् फलम् न लब्धम् (तस्य) विरागिचित्तेन भृशं नगायितम् ।

भावानुवादः—कतिपय तुच्छ व्यक्तियों ने असत् प्रेरणा प्राप्त कर उनके समक्ष साधुओं की निन्दा की । उनके वैराग्य मे विरोध प्रस्तुत किया । किन्तु चूंकि उनका वैराग्य अनुरंजित चित्त मेरुवत् अचल–सुदृढ हो गया था । अतः उन अज्ञ बन्धुओं का असत् परामर्श सफल नही हुआ ।

**सचित्त नीरं प्रथमं जहौ स्वयं, वनस्पतिं जीवसमन्वितं तथा ।**
**रसस्य हाने रसनापि निर्जिता, ससंयमं गर्हितरात्रिभोजनम् ॥४७॥**

अन्वय:—स प्रथमं स्वयं सचित्त–नीरम् जहौ । तथा जीवसमन्वितं वनस्पतिं (जहौ) ससंयमं गर्हितरात्रि–भोजनम् जहौ । रसस्य हाने रसना अपि निर्जिता ।

भावानुवादः—(अपनी विरक्ति को सम्पुष्टि प्रदान करने हेतु) उन्होने सर्वप्रथम स्वयं सचित्त जल का परित्याग कर दिया । सजीव वनस्पति का भी प्रत्याख्यान कर दिया । जीवन को सयमित बनाते हुए गर्हितरात्रिभोजन का भी त्याग कर दिया । इस प्रकार स्वाद के त्याग से रसनेन्द्रिय पर विजय प्राप्त कर ली गई ।

**यथा–यथा बाधविवर्धनं कृतम्, तथा–तथाबोधजसिद्धिरागता ।**
**शनैः–शनैः संयमवित्तमर्जितम् । फलं न यातं घनराजबाधनम् ॥४८॥**

**प्रयत्नलभ्यं सफलत्वमय्यते, ततोहि सम्बन्धिजनाश्चयाचिताः ।**
**स्वदीक्षणा-देशन पत्रलब्धये, पयोधिनेवावनिसीमरक्षया ।।५४।।**

अन्वयः—प्रयत्नलभ्यं सफलत्वम् (जनैः) अय्यते । ततः हि "तेन" अवनिसीमरक्षया पयोधिना इव स्वदीक्षणादेशनपत्रलब्धये सवन्धिजनाः च याचिताः ।

भावानुवादः—'यथेष्ट प्रयत्न के द्वारा मानव को अपने कार्यक्षेत्र में अवश्य सफलता प्राप्त होती है ।" इसी सिद्धान्त को केन्द्र बनाकर उन्होने पृथ्वी की सीमा को सुरक्षा प्रदान करने वाले समुद्रवत् (मर्यादित हो) अपने दीक्षार्थ आज्ञा-पत्र प्राप्ति हेतु कौटुम्बिकों से आग्रहपूर्वक निवेदन किया ।

**बहोश्च कालात्सफल समीहितम् यदाहि दीक्षाविधये च पत्रिका ।**
**पितृव्यदिष्टाधिगता महात्मना, यथाजलैः चातकखेचरस्य वै ।।५५।।**

अन्वयः—महात्मना यदाहि दीक्षाविधये पितृव्यदिष्टा च पत्रिका अधिगता । तदा जलैः वै चातकखेचरस्ययथा बहोः च कालात् समीहितम् सफलम् (जातम्) ।

भावानुवादः—उस महान् आत्मा ने जब पितृव्य द्वारा आज्ञा—पत्र प्राप्त किया तो उनकी चिरअभिलषित इच्छा उसी प्रकार पूर्ण हुई जैसे स्वातिबून्द से चातक की ।

**धनैर्यथाऽनाथविपन्नमण्डली, सुधामयै र्वारिचयैर्मरुस्थली ।**
**बुभुक्षितोऽन्नैः पयसापिपासितः, ततर्प साज्ञापरिपत्रकैस्तथा ।।५६।।**

अन्वयः—यथा धनैः अनाथविपन्नमण्डली, सुधामयैः वारिचयैः मरुस्थली अन्नैः बुभुक्षितः, पयसा पिपासितः, तथा एव सः आज्ञापरिपत्रकैः ततर्प ।

भावानुवादः—जैसे दीन—अनाथों की मण्डली धन से, मरुस्थली (रेगिस्तान) सुधा सदृश जल से, बुभुक्षित अन्न से एव तृषित जलपान से तृप्ति प्राप्त करते हैं । वैसे ही हमारे चरित नायक भी आज्ञा—पत्र प्राप्त कर आनन्दित हो परितृप्त हो गए ।

**विशिष्टपत्रं तरणाय पत्रकम्, भवाब्धिपूरौघनिमग्नपारगम् ।**
**यदाससादेति विरागजीवनो, बभूव सीमा नविमोदवारिधेः ।।५७।।**

अन्यथा मातुलसूनुः कथम् भवेत् इति एतत् परिचिन्तनम् ध्रुवम् योग्यम् न।

भावानुवादः—सभी सुरक्षा साधनों से वञ्चित, किन्तु भाग्य द्वारा सुरक्षित सां ही जीवित रहता है। और स्वयं सुरक्षित, किन्तु भाग्य द्वारा अरक्षित नष्ट हो जाता है। अतः 'मेरे दीक्षित हो जाने पर मामा के पुत्र का क्या होगा" यह चिन्तन मेरे लिए निश्चित ही अनुचित है।

**महात्मबुद्धो निविडान्धकारके, ससर्ज रात्रौ निजराज्यशासनम्।**
**जवाहरः किन्तुदिवासमुज्ज्वले, प्रकाशराशौ सदनं विसृष्टवान् ।।५२।।**

अन्वयः—महात्मबुद्धः रात्रौ निविडान्धकारके निजराज्यशासनम् ससर्ज। किन्तु महामनाः (जवाहरः) प्रकाशराशौ समुज्ज्वलेदिवा सदनं विसृष्टवान्।

भावानुवादः—महात्मा बुद्ध ने रात्रि के सघन अन्धकार में राज्यशासन का परित्याग किया था, किन्तु महामना जवाहर ने दीप्तिमन्त प्रकाशमान समुज्ज्वल दिन में गृह त्याग किया।

**जिगाय सम्यक् सहज सुधाश्रितम्, सुखावह संयमवस्तु सिद्धिदम्।**
**पुनश्च गत्वा निजसाधनस्थले, प्रशस्तसाधुत्वसमाश्रये रतः ।।५३।।**

अन्वयः—सम्यक् सहज सुधाश्रितम् सुखावहं सिद्धिदम् संयमवस्तु जिगाय। (पारिवारिक राजस प्रेम) पुनः च निजसाधनस्थले गत्वा प्रशस्तसाधुत्वसमाश्रये रतः (अभवत्)।

भावानुवादः—(इस प्रकार) जागतिक राजसी प्रेम पर सुधाभिषिक्त आनन्ददा सिद्धिप्रद नैसर्गिक सम्यक् प्रेम की विजय हुई। अब वे अपने साधन स्थल प प्रशस्तसाधु भाव मे संलीन हो गए।

---

टिप्पणीः— (श्लोक ५१)

(१) यहा जो भाग्य का कथन है! वह नीतिकार की दृष्टि मे है जैन-दर्शन सत्याश को भी सापेक्ष दृष्टि से ग्रहण करने मे गुणग्राही रहा है भाग्य नाम का कोई स्वतन्त्र तत्त्व नही है। पूर्वजन्म में किये गये शुभाशुभ क ही अग्रिमजन्म में भाग्य की संज्ञा पा लेते हैं। निकाचित बन्धन वाले कर्म अ प्रदान करते ही हैं। अनेक प्रयत्न करने पर भी वे निष्फल नही होते। अ साधारण जनता उसे भाग्य शब्द से अभिहित कर देती है। वस्तुतः शुभाशु कर्मों को ही भाग्य मानना चाहिए।

जिनेन्द्रदीक्षाग्रहणप्रयोजन. धर्ममय: महोत्सवः निरूपितः ।

भावानुवाद: "शुभ कार्य शीघ्र करना चाहिये" इस नीति वाक्य के अनुसार उन्नत धार्मिक विचारशील श्रावकों ने विरक्त बन्धु श्री (जवाहर) को जैनेश्वरी दीक्षा प्रदान करने हेतु धर्ममय दीक्षा महोत्सव का आयोजन किया ।

**सधर्मिबन्धून् निकषा परेतरान् निमत्रणं सादरमेवमागतम् ।**
**अभूतपूर्व शुचिभद्रभावनम्, मुनेरहोदीक्षणमीक्षितुं मुदा ।।६१।।**

अन्वय:—अहो! अभूतपूर्वन् शुचिभद्रभावनम्, महामुने: दीक्षणम् ईक्षितुम् सधर्मिबन्धून्परेतरान् च निकषा एवम् सादरम् निमन्त्रणम् आगतम् ।

भावानुवादः—परम-पवित्र भावनाओं से संयुक्त मुनि दीक्षा के अभूतपूर्व महोत्सव के अवलोकन हेतु स्वधर्मी बन्धुओं तथा अन्य बन्धुओं के पास भी सादर निमन्त्रण पत्र प्रेषित किये गये ।

**पयोधिवीचिप्रतिमे मुदान्विते, जनौघमध्ये कलकेशलुञ्चनैः ।**
**सम सुभाग्यान्नवकारपूर्वकम्, अदोक्षितात्मार्थिनमेव सूत्रवित् ।।६२।।**

अन्वय:—मन्त्रवित् पयोधिविचिप्रतिमे मुदान्विते जनौघमध्ये सुभाग्यात् नवकारपूर्वकम् कलकेशलुञ्चनैः समम् आत्मार्थिनम् एव अदीक्षत ।

भावानुवाद:—आगमज्ञ बड़े घासीराम जी म. सा. ने सागर की तरंगों के समान लहराते प्रसन्नवदन अपार जन-समूह के मध्य नमस्कार मन्त्र के उच्चारणपूर्वक सुन्दरकेशलुञ्चन के साथ सौभाग्यशाली आत्मार्थी श्री जवाहर को भागवती दीक्षा प्रदान की ।

**अनन्तरं दीक्षण-सद्विधेरयम्, महाव्रतानां परिपालनाय च ।**
**विमुक्ति मार्गं परितः समाश्रयन्, मुनिर्बभूवातिशयैर्विभूषितः ।।६३।।**

अन्वय:—दीक्षणसद्विधेः अनन्तरम् अयम् विमुक्तिमार्गं परितः समाश्रयन् अतिशयैः विभूषितः महाव्रतानां परिपालनाय च मुनिः बभूव ।

भावानुवादः—कल्याणकारी भागवती दीक्षा के सद् विधान के पश्चात् सर्वतः मोक्ष मार्ग को आश्रित कर महाव्रतों की सम्यक् परिपालना हेतु अतिशयों से

अन्वयः—विरागजीवनः तरणाय पत्रम् (इव) भवाब्धिपूरौघनिमग्नपारगम् विशिष्टपत्रम् यदा आससाद। इति तदा विमोदवारिधेः सीमा न बभूव।

भावानुवादः—जब विरक्त आत्मा श्रीजवाहर ने, भवसागर में निमग्न जीव को पार लगाने वाली नौकावत् अनुमति-पत्र प्राप्त किया, तो उनके हृदय मे हर्षानुभूति का निःसीम सागर उमड़ पड़ा।

**चमूर्विशाला परिपन्थिसंभृता, सशक्तरूपोऽसि स्वयं समृद्धिभिः।**
**प्रमादभावं परित्यज्य तत्परो, विबोधयामासनिजं भवेरसौ ॥५८॥**

अन्वयः—हे आत्मन्! परिपन्थि सम्भृता विशाला चमूः (अस्ति) त्वं स्वय समृद्धिभिः सशक्तरूपः असि। प्रमादभावं परित्यज्य (तां जेतुं) तत्परो भवेः। इति असौ निजम् विबोधयामास।

भावानुवादः—अनन्तर साधना पथ पर पद चरण के क्षणों मे उन्होंने स्वय को इस प्रकार उद्बोधित किया—"आत्मन् आन्तरिक शत्रुओं की विशाल सेना सन्नद्ध है। तुम स्वय सभी समृद्धियों से सम्पन्न अमित शक्ति केन्द्र हो। (अतः) प्रमादवृत्ति का परित्याग कर आन्तरिक रिपुओं पर विजय प्राप्त करने को तत्पर हो जाओ।

**न चान्तरेण प्रथतेऽनुकामना, निदानमेवं परिभावभास्वरम्।**
**जनैः समस्तैः परिभाव्यतामिदम्, विना न श्रद्धां नवसिद्धिराप्यते ॥५९॥**

अन्वयः—एवं परिभावभास्वरम् निदानम् अन्तरेण अनुकामना च न प्रथते। श्रद्धां विना नवसिद्धिः न आप्यते। इदम् समस्तैः जनैः परिभाव्यताम्।

भावानुवादः—उज्ज्वल विचार रूप कार्य के अभाव मे कार्य रूप मनोरथ की सिद्धि नही हो सकती। सम्यक्-श्रद्धा के विना नूतन सिद्धि नही मिल सकती। यह सामान्य नियम जन-जन के द्वारा ज्ञेय है।।

**"शुभस्य शीघ्रं" कथनानुसारकम्, जिनेन्द्रदीक्षाग्रहणप्रयोजनः।**
**विरागयुक्तस्य कृते सदाशयैः, निरूपितो धर्ममयो महोत्सवः ॥६०॥**

अन्वयः—"शुभस्य शीघ्रम्" इति कथनानुसारकम् सदाशयैः विरागयुक्तस्य कृते

न्वयः—अहम् कदाचन अधोगमकः न भवामि। मुदा (सदा) अचलाम् ऊर्ध्व गतिम्एव समीहे। मानसम् क्वापि प्रलोभने न व्रजेत्। भवान् एव मम भवान्त-कारकः भवेत्।

ावानुवादः—मेरी चेतना अधोगति से विरक्त रहे। मुझे अनवरत उर्ध्व–गति की ही चाह हो। मेरा मानस किसी भी प्रकार के लोभ से आकृष्ट नही। मैं सर्वदा आपको ही आदर्श मानकर जीवन सफल करूं, मेरा अब पुनर्जन्म न हो, यही कामना है।

**वहन्ति धाराः हृदि कामनाञ्चिताः, भवेन्न मे तत्र निमज्जनं मुधा।**
**इतस्ततः संप्लवनं विलोक्यते, सुधेहिमामुत्तरितुं दयानिधे ॥६८॥**

न्वयः—मम हृदि कामनाञ्चिताः धाराः वहन्ति। तत्र मे मुधानिमज्जन न भवेत्। इतस्ततः मे संप्लवन विलोक्यते। हे दयानिधे ! माम् उत्तरितुं सुधेहि।

ावानुवादः—मेरे हृदय में जो कुछ सांसारिक कामनाओ की धाराए प्रवाहित हो रही है। उनमें मेरा मानस निरर्थक निमग्न न हो। उनमें होने वाला प्रवाह मुझे इतस्ततः आन्दोलित कर रहा है, अतः हे करुणानिधे मेरे पार जाने हेतु अवलम्वन वने।

**महत्त्वहीनंहि लभेत मानसम् निरापदं ते शरणं परात्परम्।**
**प्रयान्तु केचित् किरणास्तवानुगा, मदर्थमेवं परिरक्षितो भवे। ६९॥**

---

टिप्पणीः—( ६८ )

(१) सांसारिक व्यक्ति के लिए कई विकट परिस्थितियाँ उभर कर सामने आती है। वे व्यक्ति को प्रभावित किये विना नही रहती हैं। पर विचक्षण प्रज्ञासम्पन्न मानव ऐसी परिस्थिति में भी अपने आपको विचलित नहीं करता हुआ श्रेष्ठ लक्ष्य को ही सम्मुख रखता है। उसी तरह बालक जवाहर ने विचित्र संसार के प्रभावो के वीच अपने आपको सभलने के लिए सर्वोच्चादर्श परमात्मा को समझकर भावना भाई कि मेरी उच्च लक्ष्य के प्रति जो दृढास्था है। वही मुझे इन झझावतो से उवार सकती है। यही मेरा आत्म निवेदन प्रभु के चरणों में है।

विभूषित उन्होंने मुनिजीवन में प्रवेश किया।

**मुनेरिदं भावनमेव भावुकम् मुदान्विते मञ्जुलमानसेऽभवत्।**
**अपूर्णतापूर्तिकृतौ सहायकौ, प्रभो ! त्वदीयौ चरणौ समाश्रये ॥६४॥**

अन्वयः—मुनेः मुदान्विते मञ्जुलमानसे इदम् भावुकम् भावनम् एव अभवत्
प्रभो ! त्वदीयो चरणौ अपूर्णतापूर्तिकृतौ सहायकौ समाश्रये।

भावानुवादः—मुनिव्रत ग्रहण करने के अनन्तर उनके प्रसन्न मञ्जुल मानस
परमात्मसमर्पण की ऐसी विशिष्ट भावनाए उत्पन्न हुई कि—हे प्रभो !
अपनी अपूर्णता को पूर्णता प्रदान करने के लिए सहायक रूप में आपकी चर
श्रुत–चारित्रउपासना का आश्रय ग्रहण करता हूं।

**ममास्ति चाशा परपूरणीनवा, न विद्यते कोपिसमाश्रयोऽधुना।**
**अनाथनाथश्च विपत्तिरक्षिता, अनन्यभावेन भवन्तमाश्रये ॥६५॥**

अन्वयः—मम च आशा परपूरणी न वा। अधुना कोपि समाश्रयः अपि न विद्य
अनाथनाथः च विपत्तिरक्षिता (असि) अतः अनन्य भावेन भवन्तम् एव आश्र

भावानुवादः—हे प्रभो ! मेरी समस्तमनःकामनाएं दूसरों के द्वारा नहीं स्वयं
परिपूरित होगी और न कोई इस समय मेरा सहयोगी भी है। हे अनाथों
स्वामिन् ! एक मात्र तुम्हीं विपत्ति रक्षक हो। अतः अनन्य भाव से आप
ही आश्रय ग्रहण करता हूं।

**विकार सर्पाद् विषभीतिमास्थितः, पलाय्य यातः शरणं सुखावहम्।**
**विधाय नैजं भगवन् ! दयान्वितो, भयान्वितं मां परिरक्ष सत्वरम् ॥६६॥**

अन्वयः—अहम् विकारसर्पात् विपभीतिम् आस्थितः पलाय्य सुखावहं शरणं यातः
हे भगवन् ! नैज विधाय दयान्वितः सन् भयान्वितम् माँ सत्वरम् परिरक्ष।

भावानुवादः—विकार वासना रूपी नागो के भय से भीत हो, मैं पलायित हो
आपकी आनन्ददायिनी शरण मे आया हूं। हे दयानिधे ! भीति से मेरी र
[illegible] मुझे अपना बना लें।

**भवानि नाथोगमकः कदाचन, समीह एवोर्ध्वगतिं सदोज्ज्वलाम्।**
**[illegible] क्वापि व्रजेन्न मानसम्, भवेद् भवानेव भवान्तकारकः ॥६७॥**

वयः—अहम् कदाचन अधोगमकः न भवामि । मुदा (सदा) अचलाम् ऊर्ध्वं ातिम्एव समीहे । मानसम् क्वापि प्रलोभने न व्रजेत् । भवान् एव मम भवान्त-ारकः भवेत् ।

ावानुवादः—मेरी चेतना अधोगति से विरक्त रहे । मुझे अनवरत उर्ध्व-गति ी ही चाह हो । मेरा मानस किसी भी प्रकार के लोभ से आकृष्ट नही । मै र्वदा आपको ही आदर्श मानकर जीवन सफल करूं, मेरा अब पुनर्जन्म न हो, यही कामना है ।

**वहन्ति धाराः हृदि कामनाञ्चिताः, भवेन्न मे तत्र निमज्जनं मुधा ।**
**इतस्ततः संप्लवनं विलोक्यते, सुधेहिमामुत्तरितुं दयानिधे ।।६८।।**

न्वयः—मम हृदि कामनाञ्चिताः धाराः वहन्ति । तत्र मे मुधानिमज्जन न भवेत् । इतस्ततः मे संप्लवन विलोक्यते । हे दयानिधे ! माम् उत्तरितुं सुधेहि ।

ावानुवादः—मेरे हृदय में जो कुछ सांसारिक कामनाओं की धाराए प्रवाहित हो रही है । उनमे मेरा मानस निरर्थक निमग्न न हो । उनमे होने वाला प्रवाह ुझे इतस्ततः आन्दोलित कर रहा है, अतः हे करुणानिधे मेरे पार जाने हेतु अवलम्वन वने ।

**महत्त्वहीनहि लभेत मानसम् निरापदं ते शरणं परात्परम् ।**
**प्रयान्तु केचित् किरणास्तवानुगा, मदर्थमेवं परिरक्षितो भवे । ६९।।**

---

**टिप्पणीः**—( ६८ )

(१) सांसारिक व्यक्ति के लिए कई विकट परिस्थितियाँ उभर कर सामने आती है । वे व्यक्ति को प्रभावित किये बिना नही रहती हैं। पर विच-क्षण प्रज्ञासम्पन्न मानव ऐसी परिस्थिति में भी अपने आपको विचलित नहीं करता हुआ श्रेष्ठ लक्ष्य को ही सम्मुख रखता है । उसी तरह बालक जवाहर ने विचित्र संसार के प्रभावो के बीच अपने आपको सभलने के लिए सर्वोच्चा-दर्श परमात्मा को समझकर भावना भाई कि मेरी उच्च लक्ष्य के प्रति जो आस्था है । वही मुझे इन झझावतो से उवार सकती है । यही मेरा आत्म निवेदन प्रभु के चरणों में है ।

अन्वयः—मम हि महत्त्वहीनम् मानसम् ते परात्परम् निरापदं शरणं लभेत। तव
नुगाः केचित् किरणाः मदर्थम् प्रयान्तु । एवम् अहम् भवे परिरक्षितः स्याम्।

भावानुवादः—हे प्रभो ! मेरा सामान्य सा मानस आपकी निरापद सर्वश्रे
शरण को प्राप्त करे । आपकी कृपापूर्ण कुछ किरणें मुझे आप्लावित कर दें।
मैं संसार में पूर्णरूपेण सुरक्षित हो सकता हूं ।

**ततो महत्त्वं परिगृह्य दीक्षया, प्रपूर्य शं शक्तिसमाधिवत्तया ।**
**गुरोः कृपां प्राप्य प्रबुद्धमानसः प्रचक्रमे साधुसुवृत्तिपालने ॥७०॥**

अन्वयः—सततः दीक्षया महत्त्वम् परिगृह्य, शं शक्तिसमाधिवत्तया प्रपूर्य, गुरोः
कृपाम् प्राप्य, प्रबुद्धमानसः सन् साधु सुवृत्तिपालने प्रचक्रमे ।

भावानुवादः—इस प्रकार की समुपासना से समृद्ध होकर उन्होंने दीक्षा के गौरव
को हृदयंगम कर तथा गुरु चरणों की कृपा प्राप्त कर अपनी शक्ति को कषाय
शमनरूप समाधि में नियोजित किया और प्रबुद्ध चेता बन साध्वाचार के सद्
व्यवहार में प्रवृत्त हुए ।

**॥अवसाने वसन्ततिलकाछन्दः ॥**

**दीक्षातृषा व्यपगता महतीभवेभ्यो, धाराप्रवाहविधया परिवोधितोऽयम् ।**
**आदर्शजीवनविकासपथाधिरूढः, मुक्तेर्दिशामभिययौ यजनाभिरामः ॥७१॥**

अन्वयः—भवेभ्यः धाराप्रवाहविधया परिवर्धिता इयम् महती दीक्षातृषा व्यपगता।
स आदर्शजीवनविकासपथाभिरूढः यजनाभिरामः सन् मुक्तेः दिशाम् अभिययौ।

भावानुवादः—जन्म परम्परा से धाराप्रवाह के रूप में परिवर्धित महती भागवती
दीक्षा की यह पावन पिपासा उपशान्त हो गई और वे साधनामयआदर्शजीवन
के विकास पथ पर आरूढ मुक्ति पथ पर चल पड़े ।

**इति द्वितीय सर्गः—**

समाप्त उद्भवविरतिसर्गो द्वितीयः-

श्रीमज्जवाहरयशोविजयाभिधाने,
नानेशसच्चरणयोश्चरितावधाने ।
श्री चन्द्रमौलिकविनिर्मितसत्प्रबन्धे,
पूर्णो द्वितीयजनिमोहविरागसर्गः ।।

अथ तृतीय सर्ग :

# मुनिजीवनसामाचारी सर्गः

(द्रुतविलम्बित छन्दः)

मुनिपथं जगृहे जयविग्रहो, ग्रहणधारण–शक्तिसमन्वितः ।
सकलजीवसमाश्रयहेतवे, हितकरं नवजीवनमास्थितः ॥१॥

अन्वयः—ग्रहणधारणशक्तिसमन्वितः, जयविग्रहः, सकलजीवसमाश्रयहेतवे हितकरम्, नवजीवनम्, आस्थितः समुनिपथम् जगृहे ।

भावानुवादः—ग्रहण–धारण से युक्त, तीव्रमेधा शक्तिसम्पन्न, विजयविग्रहतुल्य, जगजन्तुरक्षानिमित्तहितंकर नूतन जीवन धारण कर यशोविजयी मुनिजवाहर सतत सावधान हो मुनि–पथ पर गतिशील हुए ।

भगवतो नवदीक्षण–धारणात्, जिननिर्दिष्ट पथस्य समाश्रयात् ।
व्यपगता निखिला मलकालिमा, कनकतुल्यशरीरमदीप्यत ॥२॥

अन्वयः—भगवतः नवदीक्षणधारणात्, जिननिर्दिष्टपथस्य समाश्रयात्, निखिला मलकालिमा व्यपगता । तदा तस्य कनकतुल्यशरीरम् अदीप्यत ।

भावानुवादः—सर्वज्ञ–सर्वद्रष्टा जिनेश्वर प्रभुद्वारा निर्दिष्ट मार्ग के समाश्रय में भागवती दीक्षा अंगीकार करने से जीवन की समस्त कालिमा विलीन हो गई। दैहिक कान्ति कञ्चनवत् प्रदीप्त हो उठी ।

शुचिललाटसमुन्नतविग्रहो, मधुरवाग् प्रभया कलयाञ्चितः ।
परमरम्यमनोज्ञसमाकृतिः, व्रतरतः शुशुभे जिनदीक्षया ॥३॥

अन्वयः—स शुचिललाटसमुन्नतविग्रहः, मधुरवाक् कलयाप्रभया अञ्चितः, परम

रम्यमनोज्ञसमाकृतिः व्रतरतः जिनदीक्षया शुशुभे ।

भावानुवादः—पवित्र प्रदीप्त विशाल भाल, समुन्नतदेह, वाणी माधुर्य से विभूषित, समुज्ज्वल प्रभावलय से मण्डित, नयनाभिरामस्वरूप से उपशोभित उनका व्यक्तित्व, जैनेश्वरी दीक्षा के महाव्रतों के अनुशीलन में निरत हो. निखर उठा ।

**निज शरीर–कृते सुखवर्जने, परहिते समभावसमर्पणे ।**
**विमलसाधुसमाचरणेऽखिले, प्रतिपलं समचेष्टत सादरम् ।।४।।**

अन्वयः—स निजशरीरकृते सुखवर्जने, परहिते समभावसमर्पणे, अखिले विमलसाधु-समाचरणे, प्रतिपलम् सादरम् समचेष्टत ।

भावानुवादः—वैयक्तिक–दैहिक सुखो के परित्याग एवं परहितार्थसमता–सिद्धान्त के अनुशीलन द्वारा साध्वाचार की समस्त सुन्दर मर्यादाओं के पालन में अप्रमत्त भावेन सादर संलग्न हुए ।

**भुवनदृश्यपदार्थकदम्बके, विषमयेममतामयवर्जितः ।**
**निजचरित्रपवित्रविधायकः, अरमतात्मसमुन्नतिकर्मणि ।।५।।**

अन्वयः—विषमये भुवनदृश्यपदार्थकदम्बके, ममताऽमयविवर्जितः, निजचरित्र–पवित्र-विधायकः, आत्मसमुन्नतिकर्मणि, अरमत ।

भावानुवादः—वैषम्यभावसमन्वितसमस्तजागतिक द्रव्य–पदार्थों के प्रति ममत्व रोग रहित हो । अपने चारित्र के पावित्र्य मे तथा आत्मोन्नति साधक कार्यों में निरत हुए ।

**निजकृतित्वबलेन महीयसा, दयनपालनभावविभूषितः ।**
**निखिलजीवसुरक्षणदीक्षितोऽ, भवदसौ परमेश्वरतत्परे ।।६।।**

अन्वयः—असौ दयनपालनभावविभूषितः, निखिलजीवसुरक्षणदीक्षितः, महीयसा निजकृतित्वबलेन परमेश्वर–तत्परे अभवत् ।

भावानुवादः—अनुकम्पा भाव से अनुप्राणित, समस्त प्राणियों की रक्षा हेतु [illegible] स्वीकार कर के अपने समुन्नत पौरुष के द्वारा परमात्मपदप्राप्ति हेतु [illegible] हुए ।

**स्वयमियं करणेन फलश्रुतिः, कथनमत्र सदा परिवर्जितम् ।**
**भवति मोदकनामविधानतः, कथमहो परितृप्तिरनाशिनाम् ।।७।।**

अन्वयः—स्वय करणेन इयम् फलश्रुतिः (भवति) अत्र सदा कथनम् परिवर्जितम् (अस्ति) अनाशिनाम् मोदकनामविधानतः अहो ! कथम् परितृप्तिः भवति ।

भावानुवादः—स्वयं पुरुषार्थ के द्वारा ही फल प्राप्ति सम्भव है । केवल शब्दोच्चारणरूपकथन वर्जित है (अपर्याप्त है) । भोजन नही खाने वाले को क्यो मोदक के नाममात्र से तृप्ति हो सकती है ?

**दुरितपापमयं प्रविहाय सः, सुकृतिधर्मचयं समुपाश्रयन् ।**
**निखिलबन्धनभेदनहेतवे, मुनि–पथेन जगाम समाहितः ।।८।।**

अन्वयः—स दुरितपापमयं प्रविहाय सुकृतिधर्मचयं समुपाश्रयन्, निखिलबन्धनभेदनहेतवे समाहितः (सन्) मुनिपथेन जगाम ।

भावानुवादः—(अतः) वे समस्त दुरित पाप कर्मो का परित्याग कर सत्कर्मधर्माराधन के द्वारा कर्मबन्धनों के भेदनहेतु सजगवृत्यासंयम–पथ पर विचरण करने लगे ।

**परिषहो न शशाक विबाधितुम्, मुनिवरं विहितार्यकलापतः ।**
**चलितपादपमूलनशक्तिकम्, क्वचसमीरबलं नगमर्दने ।।९।।**

अन्वयः—परिषहः मुनिवरम् विहितार्यकलापतः विवाधितुं न शशाक । चलितपादपमूलनशक्तिकम् समीरबलम् नगमर्दने क्वच च (जायते) ।

भावानुवादः—किसी भी प्रकार के परीषह, संयमाराधना के उत्तम कर्तव्य से उन्हें प्रतिहत करने मे सक्षम नहीं हुए । जीर्ण–शीर्ण वृक्षों के उन्मूलन में समर्थ वायुवेग क्या पर्वतों को चलित करने में सक्षम हो सकता है ?

**जिन निरूपितधर्मविबोधकः, अगमवारिधिपोतसमप्रभः ।**
**निखिलमानवमोहनिराकृतौ, मुनिरसौ परिबोधपरोऽभवत् ।।१०।।**

अन्वयः—जिननिरूपितधर्मविबोधकः, अगमवारिधिपोतसमप्रभः, असौ मुनिः निखि-

लमानवमोहनिराकृतौ परिबोधपरः अभवत् ।

भावानुवादः—दुस्तीर्यसंसारोदधि से पार ले जाने वाले जहाज के समान, जिनेन्द्र-प्ररूपित धर्म के प्रभावक वे महामुनि निखिलमानवसमुदाय के मोहबन्धनों के निराकरण हेतु धर्मदेशना प्रदान करने लगे ।

**परिशशाक विधातुमलंमुनिः, परिगृहीतयमं नियमेन सः ।**
**परिषहान् परिसोढुमनारतम्, दृढतरं परिभावनमास्थितः ।।११।।**

अन्वयः—परिषहान् अनारतम् परिसोढुम् दृढतरम् परिभावनम् आस्थितः स मुनिः परिगृहीतयम नियमेन विधातुम् परिशशाक ।

भावानुवादः—संकल्पशील दृढभावना के साथ परीषहों के सहन करने में सक्षम वे मुनि महाव्रतरूपश्रमणमर्यादा के यथावत् पालन में अनवरत निमग्न थे ।

**हेमन्तर्तु वर्णनम्ः—**

**शरदनुक्रमकालगतेरयम्, विपुलशैत्यविवर्धितवैभवम् ।**
**सकलजीवसुखप्रदपूरकम्, ऋतुमवाप मनोहरहैमनम् ।।१२।।**

अन्वयः—अयम् मुनिः शरदनुक्रमकालगतेः विपुलशैत्यविवर्धनवैभवं सकल–जीव सुखप्रदपूरकम् मनोहरहैमनम् ऋतुम् अवाप ।

भावानुवादः—साधना मार्ग मे अनवरत गतिशील इस महामुनि ने कालक्रमागत विपुल शीतयुक्त, वैभव सम्पन्न, समस्तजीवसमूह के लिए सुखावह मनोरम हेमन्त ऋतु को प्राप्त किया । (सर्दी का काल आ गया) ।

**दिवसकार्यकरान् व्यथितान् निजे, समधिकार गृहे सुखितान्तथा ।**
**प्रमुदितान्प्रविधातुमलंनरान्, प्रववृतेदिवसो बलदायकः ।।१३।।**

अन्वयः—बलदायकःहेमन्तदिवसः दिवसकार्यकरान्, व्यथितान् नरान् निजे समधिकारगृहे सुखितान् तथा प्रमुदितान् अलम् विधातुम् प्रववृते ।

भावानुवादः—दिन–भर कार्य करने से व्यथित मानव समुदाय को अपने आश्रय

में सुखी तथा प्रसन्न बनाने वाले शक्ति प्रदाता हेमन्त के दिवस प्रवृत्त हुए। अर्थात् हेमन्त के आ जाने से कार्य मे कष्ट का अनुभव समाप्त हुआ।

**अभिभवेन चशैत्यसमाश्रितेः, गदमयो मुनिरेवमजायत ।**
**नवविहारविधेः समनन्तरम्, विवृतिहीनशिवे शिवमन्दिरे ॥१४॥**

अन्वयः—किन्तु मुनिः शैत्यसमाश्रितेः अभिभवेन नवविहारविधेः समनन्तरम् विवृति हीनशिवेशिवमन्दिरे एवम् गदमयः अजायत ।

भावानुवादः—तथापि नवदीक्षित मुनि प्रवर प्रथम विहार मे ही खुले हुए शिव-मन्दिर मे ठहरने के कारण सर्दी लगने से रूग्ण हो गये ।

**परमबोधसमर्पितमानसः, नहि जगाम रुजाममितामसौ ।**
**मगनलालमुनेर्निधनादहो, विचलितः प्रकृतेर्विभवादपि ॥१५॥**

अन्वयः—असौ मुनिः परमवोधसमर्चितमानसः अमिताम् रुजाम् नहि जगाम । अहो ! श्री मगनलालमुनेः निधनात् प्रकृतेः विभवादपिविचलितः ।

भावानुवादः—सम्यक्बोधसम्पन्न मानस वाले वे मुनि शारीरिक दृष्टि से रुग्ण नही रहे । किन्तु गुरु श्री मगनलाल जी म. सा. के निधन से मानसिक वैभव से विचलित हो उठे । मनोरोग से ग्रस्त हो गए ।

**उरगतुल्यदशा समजायत, मणिवियोगभवा मुनिमानसे ।**
**करगतं विभवं परिहाय ना, तदनुरूपरुजं सहते यथा ॥१६॥**

अन्वयः—मुनिमानसे मणिवियोगभवा उरगतुल्यदशा समजायत । यथा ना करगतं विभव परिहाय तदनुरूपरुजं सहते तथैव सोऽपि जातः ।

भावानुवादः—गुरुवर्य की वियोगानुभूति मे मुनि श्री का मानस ठीक उसी प्रकार हो गया । जैसे मणिधर नाग का मणि के खो जाने पर होता है । हस्तगत बहुमूल्य मणि के खो जाने पर मनुष्य निर्धनता से व्याकुल हो उठता है । वही स्थिति मुनिवर की हो गई ।

**गदमहो विमूनं ननु सूरिशः, स्थितिरजायत मानसमादिनी ।**
**प्रकृतिरस्य परीक्षणहेतवे, पुनरभूदतिबद्धपरिक्रमा ॥१७॥**

न्वयः—तनु गदमहः भूरिशः विसृतम् । मुनेः स्थिति. मानसमादिनी अजायत ।
प्रकृतिः अस्य परीक्षणहेतवे पुनः पुन. अतिबद्धपरिक्रमा अभूत् ।

ावानुवादः—वह वियोगानुभूतिजन्यस्वल्पव्यथा क्रमशः बढती गई और मानस विक्षिप्त-सा हो गया । मानो प्रकृति मुनिवर के धैर्य की परीक्षाहेतु सन्नद्ध हो गई हो ।

**ननु भवेन्मम शापितजीवनम्, विफलमेव समाप्तिरयं कदा ।**
**विपिनमध्यमुपागत एकलः, उत चरामि तपश्चरणं चरन् ॥१८॥**

न्वय·—(मुनिमनसि विचारः) मम विफलम् एव शापितजीवनम् ननु कदा समाप्तिमयम् भवेत् । उत विपिनमध्यम् एकलः उपागतः तत्रैव चरन् तपश्चरण चरामि ।

भावानुवादः—ऐसी विकट स्थिति मे विचार आन्दोलित हो उठे । मेरा यह अभिशापित जीवन निष्फल एव भारभूत हो गया है । कब यह समाप्त होगा । अथवा क्यो नही एकाकी जगल में जाकर साधना करू ?

**स्थिरमतिर्न तदा स विलोकितः, बहुविकल्पनजालवितानकम् ।**
**प्रतिपलं विविधैः परिभावनैः, समतनोद्व्यथिताः समसाधवः ॥१९॥**

अन्वयः—स तदा स्थिरमतिः न विलोकितः । प्रतिपल विविधैः परिभावनैः बहुविकल्पनजालवितानकम् समनोत् । ततः समसाधव· व्यथिताः ।

भावानुवादः—उस संकटापन्न स्थिति में उनका मानसिक विचलन तीव्र हो उठा । उन दिनो उन्हे स्थिर-मति नहीं देखा गया । प्रतिपल विभिन्न प्रकार की मानसिक कल्पनाओं मे तथा अनेक परस्पर विरोधी सकल्प-विकल्पों के ताने-वाने बुनते रहे । उनकी इस स्थिति को देखकर तत्कालीन निकटस्थ श्रमणवर्ग चिन्तित हो उठा ।

**प्रकृतिशान्त उपागत-चापलो, विषममध्यगतः रुग्भावनः ।**
**गदमये समयेऽपि विलोकितः, कुसुमरूपमहो ! इव कण्टके ॥२०॥**

अन्वयः— अहो! कण्टके कुसुमरूपम् इव तदा स गदमये रुमये अपि प्रकृतिशान्तः

उपागतचापल: विपममध्य गत: समभावन: विलोकित: ।

भावानुवाद:—आश्चर्य है कि काटों के मध्य स्थित पुष्प के समान उस मानसिक चांचल्य के क्षणों में भी मुनि श्री शान्त—प्रशान्त वने रहते । विषमतम-स्थिति में भी समत्व भावी ही वने रहे ।

**सततयोगसमाश्रितसेवया, मुनिवरो निगद: समजायत ।**
**समुपरागविपत्ति—महार्णवात्, शशि—सम: प्रभयाधिकयोद्धृत: ।।२१।।**

अन्वय:—समुपरागविपत्तिमहार्णवात् अधिकया प्रभयाउद्धृत: शशिसम: मुनिवर: सततयोगसमाश्रितसेवया निगद: समजायत ।

भावानुवाद:—निरन्तर स्वास्थ्य—योग की समुपासना एवं मुनि श्री मोतीलाल जी म. सा. आदि की समुचित सेवा से वे मुनि वैसे ही स्वस्थ हो गये । जैसे विपत्तिरूप महार्णव से ग्रस्त चन्द्रमा की प्रभा उद्धृत रहती है ।

**नगनदीपपरिभूषितभागके, नृपतिभोजसमर्चितशासने ।**
**नगरधारपदे मुनिराडसौ, प्रथमपावसवासमकल्पयत् ।।२२।।**

अन्वय:—असौ मुनि: नगनदीपरिभूषितभागके, नृपतिभोजसमर्चितशासने नगरधार-पदे प्रथमपावसवासम् अकल्पयत् ।

भावानुवाद:—इस महामुनि ने अपना प्रथम—वर्षावास पर्वत—नदियों से शोभित प्रान्त मे इतिहास प्रसिद्ध महाराज भोज की राजधानी धारानगरी में किया ।

**रसमयी कवितासरसापगा, मुनिमहोदयमानसरोवरात् ।**
**प्रथमवारमदीप्यत तत्र सा, जनमन:परिषिञ्चनकारिणी ।।२३।।**

अन्वय:— तत्र जनमन:परिषिंचनकारिणी रसमयी साकविता सरसापगा मुनिमहोदयमानसरोवरात् प्रथमवारम् अदीप्यत ।

भावानुवाद:—जनमन को प्रीत एवं पावन करने वाली, मधुरगीतों एवं कविताओं की सरस सरिता का प्रवाह प्रथम बार ही उस ऐतिहासिक नगरी में मुनि महोदय के मानस—मान सरोवर से प्रवाहित हो सुशोभित हुआ ।

प्रमुखलक्ष्यमभूत्सफलं ततः, सकलशास्त्रसमभ्यसनं कृतम् ।
नृपतिविक्रमसंजयिनीपुरे, अदित भाषणमाद्यमनोरमम् ॥२४॥

अन्वयः—ततः प्रमुखलक्ष्यम् सफलम् अभूत् । सकलशास्त्रसमभ्यसनम् कृतम् । नृपतिविक्रमसंजयिनीपुरे आद्यं मनोरमम् भाषणम् अदित ।

भावानुवादः—अनन्तर समस्त शास्त्रों के पूर्ण अध्ययन के द्वारा जीवन के मौलिक-लक्ष्य को सम्पन्न किया । और धार से उग्र विहार करते हुए महाराजा विक्रम की नगर उज्जयिनी पधारे । जहां आपने प्रथम मधुर सार्वजनिक प्रवचन दिया ।

धृतिगुणेन सुखं विहरन् मुनिः, जननमञ्जुलभूमिमुपागतः ।
श्रमणवन्दनलाभसमन्विता, प्रमुदिता सुखिता च बभूव सा ॥२५॥

अन्वयः—मुनिः धृतिगुणेन सुखं विहरन् जननमञ्जुलभूमिम् उपागतः । श्रमण-वन्दनलाभसमन्विता प्रमुदिता सा सुखिता च बभूव ।

भावानुवादः—अगाधधैर्यगुणसमन्वित मुनि ने उज्जैनी से सुखपूर्वक विचरण करते हुए अपने संसारपक्ष की मातृभूमि रमणीय धरा को सनाथित किया । अपने ही लाल को पाकर मुनिवन्दन के लाभ से प्रमुदित हो वह भूमि आनन्दमयी बन गई ।

कतिपये वचनैश्च विभाविताः, पशुविहिंसनपानकुकर्मतः ।
विरतिमापुरनर्थपरम्परा, व्यपगताजनि जीवनमुज्ज्वलम् ॥२६ ।

अन्वयः—भगवतः भाषणवचनैः च कतिपये विभासिताः । पशुविहिंसन-पानकुक-र्मतः विरतिम् आपुः । अनर्थपरम्परा व्यपगता । जीवनम् च उज्ज्वलम् अजनि ।

भावानुवाद—आप श्री के तत्कालीन प्रवचनो का सामान्यजनमानस पर इतना अधिक प्रभाव हुआ कि वहाँ अनेक व्यक्ति मांसभक्षण के निमित्त होने वाली पशुहिंसा एव सुरा-पान जैसे कुत्सितकर्म से मुक्त हो गए । अनर्थपरम्परा की समाप्ति के साथ ही जन-जन का जीवन समुज्ज्वल हो गया ।

अनशनं बहुलाभकरं मतम्, अशनतुल्यमिवेन्दनकारकम् ।
मदहरं निखिलेन्द्रियसंयमम्, प्रभुपदप्रपदीनसहायकम् ॥२७॥

अन्वयः—इन्दनकारकम् अशनतुल्यम् इव अनशनम् अपि बहुलाभकरम्, गदहर् निखिलेन्द्रियसंयमम्. प्रभुपदप्रपदीनसहायकम् मतम् ।

भावानुवादः—जैसे शरीरपुष्टिहेतु आहार आवश्यक है, वैसे ही रोग से मुक्ति दिलाने वाला, समस्त इन्द्रियों पर नियन्त्रण साधने वाला, शारीरिक एवं आध्यात्मिक दृष्टि से लाभप्रद प्रभु–पद तक पहुंचाने मे समर्थ उपवास आदि अनशन तप भी जीवन कल्याण के लिए आवश्यक माना गया है ।

**मुनिवरस्य विबोधकदेशनम्, श्रुतिपथे च विधाय विमुक्तिदम् ।**
**जिनमतं परिशोधकरं परम्, जगृहिरेऽधिकृता जनशासने ।।२८।।**

अन्वयः—जनशासने अधिकृताः मुनिवरस्य मुक्तिदम् विबोधकदेशनम् श्रुतिपथे च विधाय परमशोधकरम् जिनमतं जगृहिरे ।

भावानुवादः—मुनिप्रवर के कषायों से मुक्तिप्रदाता, ज्ञानप्रद, अध्यात्मप्रवचनपीयूष का पान कर अनेकजनशासन में नियुक्त राज्य कर्मचारियो ने आत्म संशोधक जैन धर्म स्वीकार किया ।

**मुनिवरेण विदत्तसुदेशनाम् श्रुतिपथां परिकर्तुमनेकशः ।**
**समुपजग्मुरिवाखिलमानवाः, सुरभिपुष्पचये मधुपालयः ।।२९।।**

अन्वयः—सुरभिपुष्पचयेमधुपालय इव अखिलमानवाः मुनिवरेण विदत्तसुदेशनाम् अनेकशः श्रुतिपथा परिकर्तुम् समुपजग्मुः ।

भावानुवादः—मुनि प्रवर के धर्मोपदेशश्रवणहेतु जनमानस उसी प्रकार आकृष्ट हो आने लगा । जैसे सुगन्धित पुष्पावली पर मधुकर पंक्ति पुनः–पुनः चली आती है ।

**नियतवादपदं प्रविहाय ते, व्यपसृता ननु "तेरहपन्थिनः" ।**
**कथमहो वरकेशरिसन्निधौ, स्थितिमियर्त्यचलां हरिणव्रजः ।।३०।।**

अन्वयः—ते तेरहपन्थिनः नियतवादपदं प्रविहाय ननु व्यपसृताः । अहो हरिणव्रजः वरकेशरिसन्निधौ अचला स्थितिम् कथम् इयर्ति ।

भावानुवादः—आपकी प्रतिभापूर्णतर्कणाशक्ति ने अत्यधिक ख्याति अर्जित की ...

परिणामतः जोधपुर में निश्चित किये गये शास्त्रार्थ में तेरापन्थी मुनिगण नियत स्थान पर उपस्थित नही होकर पलायन कर गये । यह स्वाभाविक ही है कि मृग-समुदाय विक्रान्तसिह के समक्ष कैसे ठहर सकता है ।

**यतिवरे सहसा समुपागते, मतिबलं विननाशविपक्षिणाम् ।**
**दिनपतावुदिते सहरश्मिभिः, तिमिरराशिरिवाखिलसन्निधौ ॥३१॥**

अन्वयः—सहरश्मिभिः उदिते दिनपतौ तिमिरराशिः इव यतिवरे सहसा समुपागते विपक्षिणाम् अखिलसन्निधौ मतिबलम् विननाश ।

भावानुवादः—जैसे सहस्त्ररश्मि के उदित होने पर अन्धकार भाग खडा होता है। ठीक उसी प्रकार तेरापन्थ के धर्म स्थान पर मुनि श्री के सहसा चले जाने पर उनकी चिन्तन क्षमता पलायित हो गई । अर्थात् वे दिग्भ्रमित से हो गए । वे मुनिश्री को देखते ही भयाक्रान्त हो असम्बद्ध भाषी हो उठे ।

**विपुललाभमयं समजायत, मृदुलहारि मुनेरुपदेशनम् ।**
**नवरसालफले सरस-प्रिये, भवति कस्य मनो न विमुग्धकम् ॥३२॥**

अन्वयः—मुनेः विपुललाभमयम् मृदुलहारि उपदेशनं समजायत । सरसप्रिये नवरसालफले कस्य मनः विमुग्धकम् न भवति ।

भावानुवादः—चूंकि मुनि श्री के उपदेश सुकोमल, मनोमुग्धकारी एवं लाभप्रद होते थे । अतः जनआकर्षण के केन्द्र थे । मधुर, सरस, नवीन आम्रफल में किसका मन मुग्ध नही होता ?

**विषयसुन्दररूपविवेचनात्, प्रभवशालिगभीरगुणान्वितात् ।**
**पदपदार्थ सुसंगतिकारणात् अधिगतं ननु भाषणकौशलम् । ३३॥**

अन्वय.—(तेन मुनिना) विपयसुन्दररूपविवेचनात् प्रभवशालिगभीरगुणान्वितात्, पद-पदार्थसुसगतिकारणात् ननु भाषणकौशलम् अधिगतम् ।

भावानुवादः—सुन्दर रूप से विषय के प्रतिपादन, प्रभावशाली एवं गम्भीरगुणान्वितविषयविवेचन, तथा शब्दअभिव्यञ्जना की मार्मिकता के कारण मुनिश्री को प्रवचन में पूर्णतयाकौशल्य प्राप्त था ।

**अमृतभाषणपानविधानतः, जनमनोऽव्यरमन्न कदाचन ।**
**परिगतं निजहस्तकरण्डके, अपचिनोति नरो नच हीरकम् ।।३४।।**

अन्वयः—जनमनः अमृतभाषणपानविधानतः कदाचन न व्यरमत् । नरः निजहस्त-करण्डके परिगतम् हीरकम् नच अपचिनोति ।

भावानुवाद —आपके अमृतोपमप्रवचनपान के पिपासुश्रोता प्रायः निर्निमेष से हो जाते थे । अर्थात् आपके प्रवचन में ऊबने को अवकाश नहीं मिल पाता। अमूल्यमणिवत् आपके प्रवचनों के हीरक अवसर कोई खोना नही चाहते ।

**सुबहुमानपुरस्सरकल्पितम्, विबुधवादकृते च निमन्त्रणम् ।**
**ननु मतं पुरधारनृपस्य नो, मुनिवरेण च पावसकारणात् ।३५।**

अन्वयः—मुनिवरेण पुरधारनृपस्य सुबहुमानपुरस्सर–कल्पितम् विबुधवादकृते च निमन्त्रणम् पावसकारणात् ननु नो मतम् ।

भावानुवादः—थादला पावस प्रवासकाल में विद्वद्समाज के साथ शास्त्रार्थहेतु आगत धारानरेश के निमन्त्रण को पूर्ण क्षमता होते हुए भी इसलिए अस्वीकार कर लिया कि वर्षावास मे जैन मुनि प्रवास नही करते ।

**गुणनिधिर्विजयी जयतारणे, विहितवादसभासदसन्निधौ ।**
**व्यजयताशुनिज परिपन्थिनम्, दयनदानविसारणपारगः ।।३६।।**

अन्वयः—जयतारणे गुणनिधिः दयनदानविसारणपारगः (मुनिः) विहितवादसभा-सदसन्निधौ निज परिपन्थिनम् आशु व्यजयत ।

भावानुवादः—गुणनिधि दया–दानधर्ममर्मज्ञ एव उसके प्रतिपादन में प्रवीणमुनि श्री ने जयतारण गाँव मे तेरहपन्थी मुनियों के साथ शास्त्रार्थ के नियमो के अनुसार नियत सभासदो के समक्ष शीघ्र ही विजय श्री प्राप्त की ।

**पशुवधं विजयादशमीदिने, प्रचलितं निषिषेध दयापरः ।**
**तदुपदेशन धर्मविधानतः, ह्यगणिता असवः परिरक्षिताः ।।३७।।**

अन्वयः—दयापरः (मुनिः) विजयादशमीदिने प्रचलितं पशुवधम् निषिषेध । तदु-पदेशनधर्मविधानतः हि अगणिताः असवः परिरक्षिताः ।

भावानुवादः—दयानिधिमहामुनि जी ने विजयादशमी को प्रचलित पशुवध का निषेध किया और अहिंसाधर्म के उपदेश से अगणित प्राणियों की प्राण रक्षा की ।

**कतिपये शिशवो मतिमन्दकाः, मुनिवरे व्यकिरन् शिलखण्डकम् ।**
**फलमहो ददते हतपादपाः, न किमपीत्यहकं क्षमणं व्यधात् ।।३८।।**

अन्वयः—(कस्मिश्चित् विहारप्रसगे) मतिमन्दकाः कतिपये शिशवः मुनिवरे शिलाखण्डकम् व्यकिरन् अहो ! हतपादपाः फलम् ददते । अहकम् तु न किमपि (ददे) इति समुनिः क्षमणं व्यधात् ।

..।दः—विहार प्रसंग पर किसी गाव में कुछ नासमझ बालकों द्वारा मुनि-
..र पत्थर फेंके जाने पर भी उन्होने यह चिन्तन कर उन्हें क्षमा कर
.. .. र की मार से वृक्ष भी फल देते हैं । मैं तो इन्हें कुछ भी नहीं
।

**विवेचनम्, नवनवं मुनिना च विशेषितम् ।**
**.. , विकसितं परिबोधनवोदयम् ।।३९।।**

विवेचनम् श्रुतिपथं परिकल्प्य विशेषितम् । तेन भवि-
..वा। ।द सत् विकसितम् ।

..गम वाक्यों की नूतन रूप से विभिन्न प्रकार की
..विशेष प्रचारित किया । परिणामतः आगम अध्येता
.. ल नस ज्ञान के नूतनप्रकाश से प्रभासित हुए ।

**..द .. निवेद्य स ।**
**निदेशनमाप्तवान् ।।४०।।**

.. सकम् गुरुमहोदयम् एव निवेद्य ननु
..वान् ।

..न के अनुशासक अपने आराध्य गुरुवय
नियतरूप में दक्षिणप्रान्त में विचरण

.]

**अमृतभाषणपानविधानतः, जनमनोव्यरमन्न कदाचन ।**
**परिगतं निजहस्तकरण्डके, अपचिनोति नरो नच हीरकम् ॥३४॥**

अन्वयः—जनमनः अमृतभाषणपानविधानतः कदाचन न व्यरमत् । नरः निजहस्त-करण्डके परिगतम् हीरकम् नच अपचिनोति ।

भावानुवाद —आपके अमृतोपमप्रवचनपान के पिपासुश्रोता प्रायः निर्निमेष से हो जाते थे । अर्थात् आपके प्रवचन मे ऊबने को अवकाश नही मिल पाता । अमूल्यमणिवत् आपके प्रवचनो के हीरक अवसर कोई खोना नही चाहते ।

**सुबहुमानपुरस्सरकल्पितम्, विबुधवादकृते च निमन्त्रणम् ।**
**ननु मतं पुरधारनृपस्य नो, मुनिवरेण च पावसकारणात् । ३५ ।**

अन्वयः—मुनिवरेण पुरधारनृपस्य सुबहुमानपुरस्सर–कल्पितम् विबुधवादकृते च निमन्त्रणम् पावसकारणात् ननु नो मतम् ।

भावानुवादः—थादला पावस प्रवासकाल में विद्वद्समाज के साथ शास्त्रार्थहेतु आगत धारानरेश के निमन्त्रण को पूर्ण क्षमता होते हुए भी इसलिए अस्वीकार कर लिया कि वर्षावास मे जैन मुनि प्रवास नही करते ।

**गुणनिधिर्विजयी जयतारणे, विहितवादसभासदसन्निधौ ।**
**व्यजयताशुनिज परिपन्थिनम्, दयनदानविसारणपारगः ॥३६॥**

अन्वयः—जयतारणे गुणनिधिः दयनदानविसारणपारगः (मुनिः) विहितवादसभा-सदसन्निधौ निज परिपन्थिनम् आशु व्यजयत ।

भावानुवादः—गुणनिधि दया–दानधर्ममर्मज्ञ एव उसके प्रतिपादन मे प्रवीणमुनि श्री ने जयतारण गांव मे तेरहपन्थी मुनियो के साथ शास्त्रार्थ के नियमों के अनुसार नियत सभासदो के समक्ष शीघ्र ही विजय श्री प्राप्त की ।

**पशुवधं विजयादशमीदिने, प्रचलितं निषिषेध दयापरः ।**
**तदुपदेशन धर्मविधानतः, हृयगणिता असवः परिरक्षिताः ॥३७॥**

अन्वयः—दयापरः (मुनिः) विजयादशमीदिने प्रचलितं पशुवधम् निषिषेध । तदु-पदेशनधर्मविधानतः द्विअगणिताः असवः परिरक्षिताः ।

भावानुवादः—दयानिधिमहामुनि जी ने विजयादशमी को प्रचलित पशुवध का निषेध किया और अहिंसाधर्म के उपदेश से अगणित प्राणियों की प्राण रक्षा की ।

**कतिपये शिशवो मतिमन्दकाः, मुनिवरे व्यकिरन् शिलखण्डकम् ।**
**फलमहो ददते हतपादपाः, न किमपीत्यहकं क्षमणं व्यधात् ।।३८।।**

अन्वयः—(कस्मिश्चित् विहारप्रसगे) मतिमन्दकाः कतिपये शिशवः मुनिवरे शिलाखण्डकम् व्यकिरन् अहो ! हतपादपाः फलम् ददते । अहकम् तु न किमपि (ददे) इति समुनिः क्षमण व्यधात् ।

भावानुवादः—विहार प्रसग पर किसी गाव मे कुछ नासमझ बालकों द्वारा मुनिप्रवर पर पत्थर फेंके जाने पर भी उन्होने यह चिन्तन कर उन्हें क्षमा कर दिया कि पत्थर की मार से वृक्ष भी फल देते है । मै तो इन्हे कुछ भी नहीं दे पा रहा हूं ।

**श्रुतिपथ परिकल्प्य विवेचनम्, नवनवं मुनिना च विशेषितम् ।**
**भविकभाजकमञ्जुलमानसम्, विकसितं परिबोधनवोदयम् ।।३९।।**

अन्वयः—मुनिना नवनव च विवेचनम् श्रुतिपथं परिकल्प्य विशेषितम् । तेन भविकभाजकमञ्जुलमानसम् परिबोध–नवोदयं सत् विकसितम् ।

भावानुवादः—मुनिप्रवर ने आगम वाक्यों की नूतन रूप से विभिन्न प्रकार की व्याख्याए प्रस्तुत कर उन्हे सविशेष प्रचारित किया । परिणामतः आगम अध्येता सस्कारसम्पन्नश्रावकवर्ग के मजुलमानस ज्ञान के नूतनप्रकाश से प्रभासित हुए ।

**जिनवरार्चितशासन शासकम्, गुरुमहोदयमेव निवेद्य स ।**
**विचरितुं ननु दक्षिणदेशके, अनुनयेन निदेशनमाप्तवान् ।।४०।।**

अन्वयः—स अनुनयेन जिनवरार्चितशासनशासकम् गुरुमहोदयम् एव निवेद्य ननु दक्षिणदेशके विचरितुं निदेशनम् आप्तवान् ।

भावानुवादः—जिनेन्द्रप्रभुद्वारा अर्चित शासन के अनुशासक अपने आराध्य गुरुवय ने मुनि श्री ने विनयपूर्वक निवेदन कर नियतरूप ने दक्षिणप्रान्त में विचरण

हेतु अनुमति प्राप्त की ।

**उदयमाप्य निजं जनकाम्यया, रुचिरभास्करदीप्तिरपारधीः ।**
**प्रखरमोहनिराकृतयेकृती रविरिवाशु स दक्षिणमाययौ ।।४१ ।**

अन्वय.—स रुचिरभास्करदीप्तिः, अपारधीः कृती निजम् उदयम् आप्य जनकाम्यया प्रखरमोहनिराकृतये रविः इव आशु दक्षिणम् आययौ ।

भावानुवाद:—दिवाकर सम तेजस्वी, प्रतिभापुञ्ज, निष्णातविद्वान् महामुनि जी ने आत्म-बोध प्राप्त कर, सर्वत्र सघनमोहतम को दूर करने हेतुजनहित कामना से सूर्यवत् शीघ्र दक्षिण दिशा में प्रस्थान कर दिया ।

**युगीनदेशदशावर्णनम्:-**

**दुरभिचारविहिंसनमारणै:, असुमतामपि भेदनशातनैः ।**
**दुरभिसन्धिविधानविमर्दनैः, सकलदेशदशा विकलाभवत् ।।४२।।**

अन्वयः—(तदानीन्) दुरभिचारविहिसनमारणैः असुमताम् अपि भेदन शातनैः दुरभिसन्धिविधानविमर्दनैः सकलदेशदशा विकला अभवत् ।

भावानुवादः—तत्कालीन साम्राज्य (अंग्रेजी) शासननीति के दुरभिसंधि के कारण प्राणिवधछेदन-भेदनउत्पीडन, छल-छद्म आदि के द्वारा सम्पूर्ण देश की दशा विकल हो गई थी ।

गगननण्डलपूरणमश्रुभिः, निखिलमानवतापनिपीडनैः ।
प्रतिपलं परिशापितमेदिनी, सकलमेव विदीर्णमलोक्यत ।।४३।।

**वसनहीननराः प्रसृतव्यथाः, ललितलास्यसुधासरित. स्त्रियः ।**
**विगतमानविलज्जितविग्रहाः, समभवन् विधुरार्दितबालकाः ।।४४।।**

अन्वयः—प्रसृतव्यथावसनहीननराः (जाता;) ललितलास्यसुधासरितः स्त्रियः विगत-मानविलज्जितविग्रहाः (जाता) बालकाः च विधुरार्दिता; समभवन् ।

भावानुवादः—प्रायः मानव वस्त्रहीन (गरीब) दुखी ही थे । सौन्दर्य-सुधा-सरित-स्त्रियाँ भी स्वाभिमान रहित नग्न सी सलज्ज शरीरी तथा बालक व्याकुल हो गये थे ।

**विपुलवित्तमतो गतमेवहा, करगतामिलिता दयनीयता ।**
**दुरितदुःखदुरासददानवैः, गगनपुष्पमिवाजनि शर्मनः ।।४५।।**

अन्वयः—हा ! अतः विपुलवित्तम् गतम् एव । करगता दयनीयता मिलिता । दुरितदुःखदुरासददानवैः नः शर्म गगनपुष्पम् इव अजनि ।

भावानुवादः—हा ! खेद है कि पुण्य-धरा भारत भू से विपुलधन तो पहले ही विदेश चला गया था । दयनीय दीनता ही हस्तगत रही थी । दुरितदु;ख-रूपकठिनदानवों से हम भारतीयों का कल्याण तो आकाश-कुसुमवत् ही हो गया था ।

**किमपि नो निजकं वसुधातले, सकलमेव पराश्रितमञ्चितम् ।**
**परनिपीडनमाप्य सुशान्तिदम् शरणमस्ति कुतः सुखदं नृणाम् ।।४६।।**

अन्वयः—वसुधातलेकिमपि निजकम्नो । सकलम्एव पराञ्चितम् अंचितम् ।पर-निपीडनम् आप्य नृणाम् सुशान्तिदम् सुखद शरण कुत. अस्ति ।

भावानुवादः—इस पुनीत वसुन्धरा पर अपना कहने योग्य कुछ भी तो नही बचा था । सभी कुछ पराधीन ही था । सर्वत्र परतन्त्रता का साम्राज्य था । शत्रुओं से निपीडित होने से शक्ति प्रदाता शरण कहां थी ? सभी अनाथ थे ।

**गमनभाषणलेखनमर्शनम् श्वसनभोजनपानविलोकनम्**
**शयनखेलनमत्र परैर्हृतं, विषमयो जनता परतन्त्रता ।४७।।**

अन्वयः—अत्र गमनभाषलेखनमर्शनम् श्वसनभोजनपानविलोकनम्, शयनखेलनम्

अत्र परैर्हृतम्, विषमयी परतंत्रता जनिता ।

भावानुवादः—यहा पर चलना, बोलना, लिखना, सोचना, श्वास लेना (जीना। भोजन, पान, देखना, शयन करना, क्रीडा सभी कुछ पराधीन था । अर्थात् सभी पर गौरांगो (अंग्रेजों) का अधिकार था । भारतीयो के लिए सर्वत्र विषैली पराधीनता उत्पन्न कर दी गई थी ।

**धनिकवर्गसमृद्धिरजायत, प्रभवतः प्रगतेः पदमन्वहम् ।**
**मनुजता पशुता समतामयी, विषमता प्रतिवीथि विषम्भरिः ॥४८॥**

अन्वयः—प्रगतेः पदे प्रभवतः धनिकवर्गसमृद्धिः अन्वहम् अजायत । मनुजता समतामयी जाता । प्रतिबीथि विषम्भरिः विषमता एव (अजनि) ।

भावानुवादः—प्रगति पथ पर अधिकाँशतः धनिक वर्ग ही समृद्धि के रूप में बढता जा रहा था । मानवता पशुवत् हो चली थी । गली–गली मे विषाक्त विषमता ही दृष्टिगोचर होती थी ।

**करगतो विभवः परिभ्रंशितः, प्रतिपदं ह्यपमान–परम्परा ।**
**विकृतरूपविमर्दितभारतम्, विरतभासमदृश्यत भारतम् ॥४९॥**

अनन्यः—करगतः विभवःपरिभ्रंशितः । प्रतिपदम्हिअपमान–परम्परा आसीत् । भारतम् विकृतरूपविमर्दितभारतम् विरतभासम् अदृश्यत ।

भावानुवादः—हस्तगत सम्पत्ति भी छीन ली जाती थी । पद–पद पर अपमान एवं तिरस्कार की परम्परा प्रसृत थी । सर्वत्र प्रकाश प्रदाता भारत विकृत एवं विमर्दित होने मे प्रकाश विहीन दिखाई देता था । सम्पूर्ण श्री नष्ट हो गई थी ।

**भुवन–भास्करतुल्यसमादृतेः, जनिभुवः सततंविकृताकृतेः ।**
**मुनिवरो धृतसंयममानसः, स्थितिमिमां बुबुधे विबुधोपमः ॥५०॥**

अन्वयः—विबुधोपमः मुनिवरः धृतसंयममानसः भुवनभास्करतुल्य समादृतेः विकृताकृतेः जनिभुवः इमाम् स्थितिम् बुबुधे ।

भावानुवादः—बुद्ध तुल्य धृति आदि संयम गुणों से अलंकृत–मानस मुनिप्रवर ने

द्वारा सूर्यवत् समादर योग्य पृथ्वी की यह विकृत दशा छिपी नही रही उन्होंने देश दुर्दशा को समझ लिया ।

देशेनवीनंजागरणम्: -

**नवनवं ननु जागरणं जने, भवदसौ परिवीक्ष्य च भारते ।**
**परिददौमुनिकल्पमनुस्मरन्, हितकरं निजयोगमनारतम् ।।५१।।**

अन्वय:—असौ (मुनि:) भारते नवनव भवत् जागरण परिवीक्ष्य मुनिकल्पम् अनुस्मरन् हितकरम् निजयोगम् अनारतम् परिददौ ।

भावानुवाद:—तत्काल भारतवर्ष में (स्वाधीनता संग्राम के रूप मे) होने वाले नये-नये जागरण को देखकर मुनिमर्यादा की अक्षुण्णता की स्मृति रखते हुए इस महामुनि ने भी निरन्तर अपना-अमूल्य हितकर योगदान दिया ।

**निखिलभारतवर्षमजायत, नवयुगस्य, सरूपमनेकशः ।**
**विपुल शान्तिविधायकमानवाः, सुगमशान्तिपथं समुपाश्रिताः ।।५२।।**

अन्वय.—निखिलभारतवर्षम् अनेकशः नवयुगस्य स्वरूप अजायत ।विपुलशान्ति-विधायकमानवाः सुगम शान्तिपथं समुपाश्रिताः (जाताः) ।

भावानुवादः—आपके मार्मिक प्रवचनो से सम्पूर्ण भारत मे नव युग के जागरण का बोध हुआ। प्रशस्त शान्ति विधायक, जन-समूह सुगम शान्ति पथ के पथिक हुए। मानव समुदाय में शान्ति का प्रसार हुआ ।

**मुनिवरश्च तदा प्रहरिव्रजै, र्निजगतेर्विधिना बहुवीक्षितः ।**
**न किमपीह फलं करयोर्गतम्, अजनि वायसदन्तपरीक्षणम् ।।५३।।**

अन्वयः—तदा मुनिवरः निजगतेः विधिना प्रहरिव्रजै बहुनिरीक्षितः । (तेषाम्) करयोः इह किमपि फलम् न गतम् । तत् वायसदन्तपरीक्षणम् अजनि ।

भावानुवाद—राष्ट्र के तत्कालीन धर्म-नेता उस महामुनि की धर्मान्वित राष्ट्रीय गतिविधियों का ब्रिटिश-शासन के राज्य कर्मचारी गण सतर्कता एवं सूक्ष्मता, पूर्वक निरीक्षण करते, किन्तु वहां उन्हे कुछ भी राज्य विरुद्ध प्रवृत्ति दिखाई

नही देती । उनका निरीक्षण 'काक दन्त परीक्षण" वत् निष्फल ही रहता।

**सामाजिकक्रान्तिः—**

**पठनपाठनसंस्कृतपद्धतिम्, अरभतातिशयां फलदायिनीम् ।**
**कृतविरोधसशक्तनिरासनैः, गतयुगस्य कृतं परिवर्तनम् ।।५४।।**

अन्वयः—(स) कृतविरोधसशक्तनिरासनैः अतिशयां फलदायिनी पठन-पाठन सस्कृतपद्धतिम् अरभत । ततः तेन गतयुगस्य सम्प्रदाये परिवर्तनम् कृतम् ।

भावानुवादः—आपने सस्कृत भाषा के अतिशय फलदायी अध्यापन का प्रारम्भ साधु-साध्वी वर्ग में अनेक विरोधों के निरास के साथ किया । फिर तो पूर्व धारणाए बदल गयी । सभी सम्प्रदायो में विद्वान् पण्डितों द्वारा सस्कृतादि का अध्ययन-अध्यापन प्रारम्भ हो गया ।

**हितकरं श्रुतसस्कृतशिक्षणम्, प्रथितसंस्कृतिरत्र सुरक्षिता ।**
**निज पुरातनरूपविनीतये, अमरवागतिशायि सहायिका ।।५५।।**

अन्वयः—श्रुत संस्कृतशिक्षणम् हितकरम् अस्ति । अत्र प्रथित संस्कृतिः सुरक्षितास्ते । निज पुरातन रूपविनीतये अमरवाक् अतिशायिसहायिका (वर्तते) ।

भावानुवादः—(उनका चिन्तन था कि) संस्कृत शिक्षाहितावह है । उसमें भारतीय सुप्रसिद्ध संस्कृति बहुत हद तक सुरक्षित है । भारत की पुरातन संस्कृति के वोध मे सस्कृत भापा सहायिका है ।

**मुनिजनस्य कृते समजायत, व्यवसितिः पठनस्य सुसंयता ।**
**सुरगिरः स्वयमेव समाहित. पठनमेवमसौ समपादयत् ।।५६।।**

अन्वयः—मुनिजनस्यकृते सस्कृतपठनस्य सुसयता व्यवसितिः समजायत । असौ स्वयमेव समाहितः सन् सुरगिरः पठनम् एवम् समपादयत् ।

भावानुवादः—चरितनायक मुनि श्री ने स्वयं समाहित होकर सस्कृत भाषा में प्रावीण्य प्राप्त किया । तया अध्ययन-शील मुनियों के लिए सस्कृत अध्ययन की समुचित व्यवस्था की गई ।

**समभवत्स कदापि रुजान्वित., प्रकृति-हेतुकठोरपरीक्षणैः ।**
**उदतरत्स्वयमेव सुसंयमैः, किमपि नैव भयं भवितात्मन; ।।५७।।**

अन्वयः—स कदापि प्रकृतिहेतुकठोरपरीक्षणैः रुजान्वितः समभवत् । ताम् सुसंयमैः स्वयमेव उदतरत् । भवितात्मनः किमपि भयं न एव (भवति) ।

भावानुवादः—यदा-कदा वेदनीय कर्म के उदय स्वरूप प्रकृति से परीक्षा लिये जाने पर वे रूग्ण भी हो जाते, किन्तु स्वय की सयमसाधना से ही उसमें उत्तीर्ण हो जाते । क्योंकि आत्मा और शरीर का भेद विज्ञान जिन्हें हो जाता है, उन्हें किसी प्रकार का भय नही रहता है ।

**नयनदोषजभूतगणादिजाम्, गदजनिं मनुतां मनुजव्रजः ।**
**मुनिवरस्य-दिशाकर-देशने, परमहो ! मतमात्मविडम्बनम् ।।५८।।**

अन्वयः—मनुजव्रजः नयनदोषजभूतगणादिजाम् गदजनिम् मनुताम् । परम् मुनिवरस्य दिशाकरदेशने अहो ! इदम् मतम् आत्मविडम्बनम् एव ।

भावानुवादः....मानव नेत्र दोष (नजर) भूत-प्रेतादि से समुत्पन्न रोगों में भले ही विश्वास करे, किन्तु मुनि श्री के प्रभावोत्पादक दिग्बोधक प्रवचनों में उन्हें अन्धविश्वास आत्म-विडम्बना ही माना है ।

**गुरुवरस्य सुसेवनकारणात्, कतिपये मुनयो गणिनो वृताः ।**
**प्रथमतो ननु तेषु मतो गुणैः, मुनिवरोपि समाहितमानसः ।।५९।।**

अन्वयः—कतिपये मुनयः गणिनः वृताः, गुरुवरस्य सुसेवनकारणात् ननु तेषु समाहितमानसः मुनिवरः अपि प्रथमतः गुणैः मतः ।

भावानुवाद।—संघ की समुचित व्यवस्था के लिए महान् तेजस्वी आचार्य श्री श्री लाल जी म. सा. ने कुछ गणियों को नियुक्त किया । उनमे गुरुदेव की अनन्य-सेवा के कारण तथा गुणाधिक्य से प्रसन्न मानस हो गणि के उच्चतम पद पर प्रथमतः आपको निर्वाचित किया ।

**लोकमान्यतिलकमिलनम्:-**

**गुणिजनस्य च वन्दनहेतवे, नयनलाभकृते परमः सुधीः ।**
**जनमतस्तिलकोपि समागतः, सकलदेशसुराज्यविधायकः ।६०।**

अन्वयः—सकलदेशसुराज्यविधायकः परमः सुधीः जनमतः तिलकः (लोकमान्य बाल गगाधर तिलक) गुणि जनस्य वन्दनहेतवे नयनलाभकृते च समीपे सेवायाम् समागतः ।

भावानुवादः—"स्वराज्य हमारा जन्मसिद्धअधिकार है" इस संवाद के संस्थापक जनमान्य परम विद्वान् लोकमान्यबालगगाधरतिलक भी नेत्र–तृषाउपशान्तिहेतु गुरुदेव के दर्शनार्थ एव वन्दनार्थं उपस्थित हुए ।

**मुनिवरेण च साकमतन्द्रिताः, तिलकनेतुरतीवसुखाकरे ।**
**युगविभूतिसमागमदर्शने, जनिनताः जनताः समुपागता ।।६१।।**

अन्वयः—मुनिवरेण च साकम् तिलकनेतु; अतीव सुखाकरे युगविभूतिसमागमदर्शने अतन्द्रिता; जनिनताः जनताः समुपागता. ।

भावानुवादः—मुनिप्रवर के साथ राष्ट्रनेतालोकमान्यतिलक के अत्यन्तप्रीतिकर मिलन के अर्थात् धर्मनायक एव राष्ट्रनेता युग विभूतियों के अतोव सुखकर सम्मिलन को देखने हेतु निसर्गतः विनीत जनता उपस्थित हुई ।

**चरितनायकबुद्धिचमत्कृतः, तिलक एवमभाषत भाषया ।**
**मधुरया सितसम्भृतसारया, जनमनांसिमतेरनुरञ्जयन् ।।६२।।**

अन्वयः—चरितनायकबुद्धिचमत्कृत. तिलकः सितसम्भृतसारया मधुरया भाषया जनमनांसि अनुरञ्जयन् मतेः एवम् अभाषत ।

भावानुवाद.—चरितनायकमुनिश्री की प्रवचनशैली एव चमत्कृतिपूर्णप्रतिभा से पूर्ण प्रभावित होकर तिलक महोदय ने अपने सारगर्भित भाषण मे बौद्धिक आधार पर जनमानस को प्रसन्न करते हुए इस प्रकार कहा ।

मुनिरमो गुणवृन्दपयोनिधिः, जिननिदिष्टपथस्य निदेशकः ।
यतिवरो यमिनां मुनिपुंगवो, विरतिधर्मविबोधनभास्करः ।।६३।।

अन्वय.—असौ मुनि. गुणवृन्दपयोनिधिः, जिननिदिष्टपथस्य निदेशकः । यमिना-

यतिवरः, मुनिपुंगवः, विरतिधर्मविबोधनभास्करः (अस्ति) ।

भावानुवादः—"प्रिय बन्धुओं ! अभी आपने इन विद्वान् मुनि श्री का प्रवचन सुना । ये मुनि वास्तव में गुणों के समुद्र है । जिनेन्द्र द्वारा निर्दिष्टपथ के निदेशक है । समस्त संयम साधकों में विशिष्ट संयमी है । मुनिवृन्दसर्वश्रेष्ठ है । निवृत्तिधर्मरूपीकमल के विकास के लिए सूर्यवत् है ।

**सकलरागविर्विजितमानसः, जनसमाजसमर्जितकीर्तिकः ।**
**वचनवीचिसुधाकरशान्तिदः, मुनिजवाहर एव सतां मतः ।।६४।**

अन्वयः–सकलरागविर्वजितमानसः, जनसमाजसमर्जितकीर्तिकः, वचनवीचिसुधाकर-शान्तिदः, मुनि जवाहर एव सतां मतः (अस्ति) ।

भावानुवादः—इनका मानस समस्त राग–द्वेषात्मक विचारों से परे है । इस जन-मेदिनी को देखते हुए लगता है । इनकी कीर्ति जनमानस में बहुत दूर तक व्याप्त है । अमृतोपम वचन प्रवाह से जन–जन को शान्ति प्रदाता ये मुनि जवाहर ही विद्वद्मान्य है ।

**ममभतेश्चिरकालिकसंशयो, मुनिवरस्य वचांसिनिपीय च ।**
**व्यपगतो जिनबोधनवोदयात्, परमलाभभृतंहृतमानसम् ।।६५।।**

अन्वय –मुनिवरस्य वचाँसि निपीय जिनबोधनवोदयात् मम मतेः चिरकालिक-संशयः व्यपगतः । हृतमानसम् च परमलाभभृतम् (जातम्) ।

भावानुवादः—मुनिप्रवर के प्रवचन पीयूष के द्वारा जैन–धर्म के विषय में मेरे मानस के सभी संशय समाप्त हो गये है । आज मुझे जैन–दर्शन की मौलिक धारणाओं का नवीन बोध हुआ है । मुनिश्रेष्ठ की ओर आकृष्ट होकर आज मैं बहुत लाभान्वित हुआ हूं ।

**सकलजीवविघातनिवर्तनम्, शुभमनोज्ञसुकर्मणिवर्तनम् ।**
**जनजनेषु दयापरिपालनम्, जिनवरार्चितसंस्कृतिरुत्तमा ।।६६।।**

अन्वयः—सकलजीवविघातनिवर्तनम्, शुभमनोज्ञसुकर्मणिवर्तनम्, जनजनेषु दयापरि-पालनम्, जिनवरार्चितसंस्कृतिः उत्तमा (अस्ति) ।

भावानुवाद:—समस्तजीवहिंसा से विरक्त होना, प्रशस्ततम कर्तव्यों में प्रवृ
तथा जन-जन में दया की प्रतिष्ठापिका जिनेन्द्र देव द्वारा प्ररुपित सत्क
निश्चय ही परमोत्तम है ।

यदपि तेन कृतम् मुनिसंशनम् तदपि तद्गुणसम्भृतचेतसा ।
यदि सुमेषु च सौरभसम्पदा, सरति सोपवनेषु समन्ततः ।।६७।।

अन्वय:—यदपि तेन मुनिसंशनम् कृतम् । तदपि तद्गुणसम्भृतचेतसा कृतम् । यदि
सुमेषु सौरभसम्पदा (भवति) साउपवनेषु समन्ततः सरति ।

भावानुवाद:—मुनिश्री के गुणों से अत्यधिक प्रभावित होकर ही तिलक महोदय
ने उनके व्यक्तित्व की भूरि-भूरि प्रशंसा की थी । यदि सुमनो मे सुगन्ध होगी
तो वह उपवन में चारों ओर सहज ही प्रसृत हो जाती है ।

वुधसमागमनम् —

इयमभूदतिशायिपरम्परा, प्रतिदिनं मुनिदर्शनहेतवे ।
मिलितुमप्यभिवन्दितुकामुकाः, वुधजनाः सविधे समुपागताः ।।६८।।

अन्वय:—प्रतिदिन मुनिदर्शनहेतवे मिलितुम् अभिवन्दितु कामुकाः अपि वुधजनाः
तस्य सविधे समुपागताः । इयम् अतिशायिपरम्परा आसीत् ।

भावानुवाद:—यह तत्कालीन विशिष्ट परम्परा ही वन गई थी, कि मुनिप्रवर के
दर्शन एवं वन्दन हेतु स्वेच्छा से प्रतिदिन विद्वानव्यवित उपस्थित हुआ करते
थे ।

वसन्तर्तु वर्णनम्:—

मधुपवृन्दनिपीतसुपंकजो, नवरसालरसान्वितकाननो ।
मलय-वातविकम्पितपादपो, नवपलाशपलाशवनोऽवनो ।।६९।।

अन्वय:—अवनो मधुपवृन्दनिपीतसुपंकजः, नवरसालरसान्वितकाननः, मलयवातवि-
कम्पितपादपः, नवपलाशपलाशवनः मधुमयः समय इति परेणान्वयः ।

भावानुवाद:—अब वसन्त ऋतु का आगमन हुआ । पृथ्वी पर मधुकर पंकजों पर

मधुपान कर रहे है । नूतन आम्र मंजरियों से कानन शोभित है । शीतल मन्द-सुगन्धित मलयज समीर से पादप प्रकम्पित है । नवपत्रपलाश वन शोभित है।

**नवलमंजरिकासुरभिर्नवः, किशलयाञ्चितवल्लिवितानको ।**
**मधुमयः समयः समुपागतो, मुनिवरो बुबुधे निजमानसे ॥७०॥**

अन्वयः—नवलमंजरिकासुरभिः किशलयाञ्चितवल्लिवितानकः नवः मधुमयः समयः समुपागत इति मुनिवरः निजमानसे बुबुधे ।

भावानुवादः—मुनि प्रवर को ज्ञात हुआ कि नूतन आम्र मंजरी से सुवासित कोमल–कोमल पत्रों से युक्तलतावितान वाला बसन्त पृथ्वी पर उपशोभित है।

**सकलसाधु विमर्शपुरस्सरम्, गुरुवरः स्वपदं मुनये मुदा ।**
**श्रुतधरो ननुदातुमियेष स, प्रहितवान् कमपीत्वरमेधसम् ॥७१॥**

अन्वयः—स श्रुतधरः गुरुवरः सकलसाधुविमर्शपुरस्सरम् मुदा स्वपदं मुनये दातुम् ननु इयेष । तदर्थम् कमपि इत्वरमेधसम् जनम् तदन्तिके प्रहितवान् ।

भावानुवादः—इसी भव्य–रमणीय वेला मे श्रुतपारगामी आचार्य श्रेष्ठ श्री श्रीलाल जी म. सा. के मानस में अपना अधिकार पूर्ण उत्तरदायित्व समस्त मुनि-मण्डल से परामर्श के साथ मुनि श्री जवाहरलाल जी चरितनायक जी को अर्पित करने की इच्छा उत्पन्न हुई । तदनुसार एक विज्ञश्रावक अभिप्राय प्राप्त कर मुनि-प्रवर के पास पहुंचा ।

**परमसौ न चकारमतिं तथा, ध्रुवनिषेधपरः समजायत ।**
**यतनपूर्वकमात्मसुसाधके, भवति लोभरतिर्नमहात्मनि ॥७२ ।**

अन्वयः—परम् असौ तथा मति न चकार । ध्रुवनिषेधपरः एव समजायत । यतन-पूर्वकम् आत्मसुसाधके महात्मनि लोकरतिः न भवति ।

भावानुवादः—किन्तु मुनि प्रवर ने आचार्य पद लेने से मना कर दिया । निश्चित ही वे पदलिप्सा से कोसों दूर थे । उनके मानस मे पद की कामना तक नहीं थी: क्योंकि सप्रयत्न आत्म–साधना में निरत महात्मा पद–लिप्सा से दूर ही रहते हैं । उनके मानस को पद का लोभ नहीं छूता है ।

## दुर्भिक्षवर्णनम्:-

**पतितमेवमकालमनभ्रतः, निधनतामुपजग्गुरनेकशः ।**
**पशुनराः परिहाय निजानसून्, हृदयकं द्रवितं दययान्वितम् ॥७३॥**

अन्वयः—अनभ्रतः अकालम् पतितम् एव । पशुनराः निजान्असून् परिहाय अनेकशः निधनताम् उपजग्मुः । (तस्य मुनेः) दयान्वितम् हृदयकम् द्रवितम् ।

भावानुवादः—बिना बादल के बिजली के गिरने के समान ही भूमण्डल पर सहसा अकाल की काली घटा घिर आई । अनेक पशु-पक्षी ही नही मानव भी काल-कवलित हो गये । इस कारुणिक दृश्य से करुणावत्-हृदय मुनिश्री द्रवित हो उठे ।

**दयादानधर्मेध्रुवं देशनाभूत्, जनाबोधिता आर्तिहानाय नूनम् ।**
**प्रभावेण सत्यं मुनेरेव तत्र, व्यवस्था कृता भोजनाच्छादनादेः ॥७४॥**

अन्वयः—तदा मुनिवरस्य दयादान धर्मदेशना अभूत् । आर्तिहानाय तेन नूनम् जनाः बोधिताः । तत्र सत्यम् मुनेः एव प्रभावेण तेषाम् भोजनाच्छादनादेः व्यवस्था कृता ।

भावानुवादः—तत्कालीन हृदयद्रावक अवस्था को देखकर मुनिप्रवर ने दया-दान सम्बन्धित देशना प्रवाहित की । अपनी मर्यादा में दीन-दुःखियों को कष्ट मुक्त करने के लिए जनता को प्रबोधित किया । मुनि प्रवर के मार्मिक एवं कारुणिक उपदेशों से जन-जागरण हुआ। सम्पन्न वर्ग ने यथाशक्ति अकाल पीड़ितों की भोजनादि की व्यवस्था को ओर अपना ध्यान केन्द्रित किया ।

तृतीयोमुनिजीवनसर्गः समाप्तः ।

# अथ चतुर्थः युवाचार्यसर्गः

## प्रकृतिवर्णनम्:-

### शरदृतुवर्णनम्:—

स्वच्छावदातं ककुभस्वरूपम्, पयोधरानैव नभः–प्रदेशे ।
शान्तं पयः सर्पति सत्सरित्सु, तलं च तासां विमलं विभाति ।।१।।

अन्वयः—ककुभस्वरूपं, स्वच्छावदातम् (अस्ति) । नभःप्रदेशे पयोधराः न एव । सत्सरित्सु शान्तम् पयः सर्पति । तासाम् (सरिताम्) तलम् च विमलं विभाति ।

भावानुवादः—सभी दिशाएं स्वच्छ एवं प्रसन्न है । आकाश मेघ रहित है । निरन्तर प्रवहमान सरिताओ मे स्वच्छ–शान्त जल प्रवाहित हो रहा है । तथा उनका तल निर्मल रूपेण शोभायमान है ।

नीरेऽखिले पंकजरम्यराजिः, द्विरेफमालाञ्चित–सर्वभागा ।
श्रुतिप्रियस्वादसुधासमानो, गुञ्जारसारोविपिनेषु रम्यः ।।२।।

अन्वयः—अखिले नीरे पकजरम्यराजिः (अस्ति) (सा) द्विरेफमालाञ्चितसर्वभागा (अस्ति) । श्रुतिप्रियस्वादसुधासमानो रम्यः गुञ्जारसारः विपिनेषु (अस्ति) ।

भावानुवादः—जल के सम्पूर्ण विस्तार में कमल पुष्प की रमणीय पक्ति है । और उसके प्रत्येक पार्श्व मे भ्रमर पंक्ति है । जिसका सुधा स्वादवत् श्रुतिप्रिय-गुञ्जारव वनों में परिव्याप्त हो रहा है ।

प्रवाति वातः त्रिविधो मनोज्ञः, सन्तर्पण.प्राणबलेन्द्रियाणाम् ।
शाखा–प्रभा प्रोन्नतपादपानाम्, वनावनौ नृत्यति पल्लवालिः ।।३।।

अन्वयः—प्राणबलेन्द्रियाणां सन्तर्पणः । त्रिविधः मनोज्ञः वातः प्रवाति ।

वनी शाखा प्रभा (रोचते) । प्रोन्नतपादपानाम् पल्लवालिः नृत्यति ।

भावानुवादः—प्राण, बल एवं इन्द्रियों को संतृप्त करने वाली शीतल–मन्द–सुगन्ध वायु प्रवहमान है । वनों में शाखा–प्रशाखाओं की प्रभा से सम्पृक्त तरुपत्र नृत्य कर रहे हैं ।

**नीरेमलं नैव न पंकशंका, कुत्रापि, पन्थाः गतिमांश्चकास्ति ।**
**सरोवरे दीव्यतिपंकजश्रीः, हंसाः पयोनालतलात् पिबन्ति ।।४।।**

अन्वयः—नीरेमलं न एव (अस्ति) । कुत्र अपि पंकशंका (नास्ति) । पन्थाः गतिमान् चकास्ति । सरोवरे पकजश्रीः दीव्यति । हंसाः नालतलात् पयः पिबन्ति ।

भावानुवादः—(ऋतु परिवर्तन के कारण) अब जल का मटमैलापन समाप्त हो गया है । कीचड़ की दशा भी नही रही है । सभी मार्ग गतियोग्य हो गये हैं। सरोवरों में कमल खिले है और- हंस कमलनाल से दुग्ध–पान कर रहे है ।

**जन्मापि नो सम्प्रति जीवराशेः, नराश्च लीना व्यवसायकृत्ये ।**
**शनैः शनै; शोषमुपैति नीरम्, जलाशयेभ्यो जलसम्भृतेभ्यः ।।५।।**

अन्वयः—सम्प्रति जीवराशेः जन्म अपि नो । नराः च व्यवसायकृत्ये लीनाः (सन्ति) । जलसम्भृतेभ्यः जलाशयेभ्यः नीरम् शनैः शनैः शोषम् उपैति ।

भावानुवादः—चूंकि शरद ऋतु काल है । अत; जीवोत्पत्ति अधिक नही है । सभी मनुष्य अपने–अपने कार्य मे सलग्न है । सरोवरों का पानी सूखने लगा हैं ।

**दिवापतेर्दीप्तिरतीवतीव्रा, ज्योत्स्ना सुधासारमयी चरात्रौ ।**
**सरस्सु पुष्यन्ति च कैरवाणि, सरन्ति धारा; पयसां धरायाम् ।।६।।**

अन्वयः—दिवापतेः दीप्तिः अतीवतीव्रा, । रात्रौ च सुधाधारा मयी ज्योत्स्ना । सरस्सु कैरवाणि च पुष्यन्ति । धरायाम् पयसां धाराः सरन्ति ।

भावानुवादः—दिन में दिवानाथ तेज चमकता है । रात्रि मे चन्द्रिका में सुधा-धारा प्रवाहित है । सरिताओं मे समुज्ज्वल कमल खिल रहे हैं । पृथ्वी पर

निर्मल जलधाराएं प्रवाहित हो रही है ।

**मनोरमायां भुवमागतायाम्, इत्थं शरद्यार्तवसम्पदायाम् ।**
**प्रवासवासं मुनयो विधाय, विहर्तु मैच्छन्प्रशमप्रधानाः ॥७॥**

अन्वयः—प्रशमप्रधानाः मुनयः इत्थम् मनोरमायाम् आर्तवसम्पदायाम् भुवम् शरदि आगतायाम् प्रवासवासं विधाय विहर्तुम् ऐच्छन् ।

भावानुवादः—इस प्रकार अनेक विशेषताओं से समन्वितमनोरम शरदृऋतु के पृथ्वी पर आगमन पर तथा वर्षावास की समाप्ति पर प्रशान्तरसप्रधान मुनिवृन्द विहारचर्या की अभिकांक्षा करते है ।

**श्रीलालपूज्यश्रिय आप्यदेहम्, प्रावर्धत व्याधिरतीवतीव्रः ।**
**तदा गुरुः स शमनैकवृत्तिः, व्यचारयत् बुद्धिमतां वरिष्ठः ॥८॥**

अन्वयः—अतीवतीव्रः व्याधिः श्रीलालपूज्यश्रियः देहम् आप्य प्रावर्धत । तदा शमनैकवृत्तिः बुद्धिमता वरिष्ठः गुरुः व्यचारयत् ।

भावानुवादः—आचार्य श्री श्रीलाल जी म. सा. के रुग्ण शरीर को प्राप्त कर व्याधि का प्रकोप तीव्ररूपेण वृद्धि पाने लगा । तब प्रशान्त–चेता प्राज्ञश्रेष्ठ गुरुवर्य ने यो चिन्तन किया ।

**स्वास्थ्यं समीचीनमहो मदीयम्, नैवास्ति नित्यं क्षयमेति शक्तिः ।**
**विनश्वरंवीचिसमं शरीरम्, तथापि जातं जरयाभिभूतम् ॥९॥**

अन्वयः—अहो! मदीयं स्वास्थ्यम् समीचीनम् न एव अस्ति । शक्तिः नित्यम् क्षयम् एति । वोचिसमं विनश्वरम् शरीरम् (अस्ति) । तथापि जरयाभिभूतं जातम् (अस्ति) ।

भावानुवादः—चिन्तनीय है । मेरा स्वास्थ्य समीचीन नही है । दैहिकशक्ति नित्यप्रति क्षीण हो रही है । नदी तरंगों के समान विनश्वर शरीर वृद्धावस्था से आक्रान्त हो गया है ।

**संघस्य भद्रं सततं विधेयम्, विश्वासभूमिर्नहि कायरूपम् ।**
**रोगप्रभावात्पतनं नितान्तं, मृत्योरनेकानि च साधनानि ॥१०॥**

अन्वयः—सघस्य भद्रम् सतत विधेयम् । कायरूपम् विश्वासभूमिः नहि । रोगप्रभावात् (तस्य) पतनम् नितान्तम् (निश्चितम्) । मृत्योः च अनेकानि साधनानि (सन्ति) ।

भावानुवादः—शरीर पर विश्वास नहीं किया जा सकता है । इसकी विनश्वरता अवश्यम्भावी है; क्योंकि मृत्यु के मार्ग साधन अनेक है । अतः सघहित साध लेना चाहिये ।

**योग्याय शान्ताय परिष्कृताय, धर्मस्य संघस्य च रक्षकाय ।**
**सिद्धान्तबोधाय जगद्धिताय, कस्मै युवाचार्यपदं प्रदेयम् ॥११॥**

अन्वयः—योग्याय, शान्ताय, परिष्कृताय, धर्मस्य, संघस्य च रक्षकाय सिद्धान्त बोधकाय जगद्धिताय कस्मै (मुनये) युवाचार्यपदप्रदेयम् इति ।

भावानुवादः—(संघ हित के लिए) योग्य, शान्त परिपक्व विचारों वाले जैन-सिद्धान्त के पूर्ण ज्ञाता, धर्म और सघ की मर्यादाओ के संरक्षक, समस्त प्राणियो के हितकांक्षी किसी मुनिपुंगव को युवाचार्यपद प्रदान करना चाहिये ।

**सर्वेषु शिष्येषु च सम्प्रदाय, संरक्षकं योग्यतमं विनम्रम् ।**
**सत्साधु सम्पूर्णगुणैरुपेतम्, चारित्रनेतारमलं चिकाय ॥१२॥**

अन्वयः—स सर्वेषु शिष्येषु च सम्प्रदाय–संरक्षकं, योग्यतमं, विनम्रम्, सम्पूर्णगुणैः उपेतम् चारित्रनेतारम् (मुनि श्री जवाहरम्) अलम् चिकाय ।

भावानुवादः—उन्होंने समस्त शिष्य समुदाय के श्रद्धापात्र संरक्षक, अप्रतिमविनम्र, साधुता के सम्पूर्ण गुणों से अलंकृत, योग्यतम महामुनि चरितनायक श्री जवाहर को युवाचार्यपदहेतु मनसा चयन किया ।

**चचार सोऽयं मुनिभिः समेतः, दाक्षिण्यदेशे प्रथित–प्रभावः ।**
**आचार्यदेवो निजनिश्चयं तं, व्याख्यानकाले प्रकटीचकार ॥१३॥**

अन्वयः—(तदा) प्रथितप्रभावः मुनिभिः समेतः स अयम् दाक्षिण्यदेशे चचार ।
आचार्यदेवः तम् निश्चयम् व्याख्यानकाले (सभायाम्) प्रकटीचकार ।

भावानुवादः—उस समय विश्रुतकीर्तिसम्पन्न महामुनि श्री जवाहर अन्य सहयोगी के साथ भारत के दक्षिणाञ्चल महाराष्ट्र प्रान्त मे विराजमान थे । (अतः) आचार्यदेव ने मनसा चिन्तित अपने उस निश्चय को प्रवचन के मध्य श्रावकों के समक्ष अभिव्यक्ति दी ।

**श्रुत्वाविचारं गुरुसन्निदिष्टम्, हर्षान्वितं श्रावकमण्डलीकम् ।**
**कृतं च सर्वैरभिनन्दनेन, समर्थितं तद्वचनं वरीयः ।।१४।।**

अन्वयः—श्रावक मण्डलीकम् गुरुसन्निदिष्टम् विचारम्, श्रुत्वा हर्षान्वितम् (अभवत्) सर्वैःअभिनन्दनेनतद्वरीय. वचनम् समर्थितम् कृतम् ।

भावानुवादः—आचार्यगुरुदेव के श्रीमुख से निर्दिष्ट विचार मन्थन का श्रवण कर समस्त श्रावक समुदाय हर्षान्वित हुआ । सभी उपासकों ने उस मंगल वचन का अभिनन्दन पूर्वक समर्थन किया ।

**कायश्रिया सम्भृत एव जातो, यथा तथैव प्रतिभाविशिष्टः ।**
**शिष्यैर्वृतोऽशोभतसर्वकाले, नभस्स्थतारानिकरैरिवेन्दुः ।।१५।।**

अन्वयः—यथा स कायश्रिया सम्भृत एव जातः तथा एव प्रतिभाविशिष्टः ।
नभस्स्थतारानिकरैः इन्दुः इव शिष्यैः वृतः सर्वकालेअशोभत ।

भावानुवादः—(क्योंकि) वे मुनिप्रवर जैसे दैहिक सौन्दर्यश्री से शोभित थे । वैसे ही आन्तरिक शोभा-प्रतिभा के भी धनी थे । आकाश में दीप्तिमन्त सितारों के मध्य शशिवत् शिष्य समुदाय के मध्य उपशोभित होते थे ।

**[illegible] मुखं सूर्यसमानकान्ति, वचः सुधास्राविविशेषतोऽभूत् ।**
**[illegible] मधुरं स्वरूपम्, तन्मानसं माननगायितं च ।।१६।।**

अन्वयः—(तस्य) मुखम् सूर्यसमानकान्ति दीप्तम् आसीत् । [illegible] वचः [illegible]

स्त्रावि अभूत् । येन एव मधुरम् स्वरूपम् दृष्टम् तत् मानसम् माननगायितम् (अभवत्) ।

भावानुवादः—मुनि श्री के सौम्यमुख पर सूर्य सी तेजस्विता थी । उनके वचनों में अमृत सा माधुर्य प्रवाहित होता था । जिन्होंने भी उनके सौम्य-सस्मित रूप को देखा उसका मन वही पर्वतवत् सादर अचल हो गया ।

**देशस्य भागे ननु दाक्षिणात्ये, धर्मप्रचारं शिववीरतुल्यम् ।**
**कृतवान् मुनीन्द्रः प्रशमैकवृत्तिः, धर्मध्वजोऽभूत्परिधूयमानः ।।१७।।**

अन्वयः—प्रशमैकवृत्तिः मुनीन्द्रः देशस्य ननु दाक्षिणात्ये भागे शिववीरतुल्यम् धर्मप्रचारं कृतवान् । (तेन) धर्मध्वजः परिधूयमानः अभूत् ।

भावानुवादः—प्रशान्तात्मा मुनि प्रवर ने दक्षिणप्रान्त में शिवाजी के पराक्रम के समान विशुद्धधर्म का प्रचार किया और सत्य धर्म की ध्वजा फहराई ।

**समाजधर्मस्य कुरीतिकन्दम्, पाखण्डपूर्णान्धपरम्परां च ।**
**मुक्तिप्रयायी च कषायजेता, व्याचक्रमे धर्मधुरन्धरोऽसौ ।।१८।।**

अन्वयः—मुक्तिप्रयायी कषायजेता, धर्मधुरन्धरः असौ समाजधर्मस्य कुरीतिकन्दकम्, पाखण्डपूर्णान्धिपरम्परा च व्याचक्रमे ।

भावानुवादः—मुक्तिमार्ग पर गतिशील, कषायजयी धर्मधुरीण मुनि श्री ने (तत्कालीन दक्षिण प्रान्त के प्रवास काल मे) समाज और धर्म मे चली आ रही कुरीति एवं अन्धश्रद्धा को तथा पाखण्ड पूर्ण अज्ञान परम्परा पर करारा प्रहार किया ।

**धर्मस्य नावो मुनिकर्णधारम्, सांयात्रिकाः प्राप्यभृशं प्रसन्नाः ।**
**पोतं क्षमं मोक्षपथं प्रयाताः, प्रमोदमाप्ताश्चयथार्थनिष्ठाः ।।१९।।**

अन्वयः—मोक्ष पथप्रयाताः यथार्थनिष्ठाः (जनाः) क्षमं पोत प्राप्य भृश प्रसन्नाः सांयात्रिकाः इव धर्मस्य नावः मुनिकर्णधारं प्राप्य च प्रमोदम् आप्ताः ।

भावानुवादः—सामुद्रिक यात्री जैसे सुन्दर–सक्षम जहाज को प्राप्त कर प्रसन्न हो उठते है। उसी प्रकार मोक्ष मार्ग की ओर गतिशील सम्यक्श्रद्धा सम्पन्न धार्मिक जन धर्मनैया के खिवैया मुनि श्री (जवाहर) को प्राप्त कर प्रमुदित हो उठे।

**संघस्य भावं परिभाव्य पूज्य, श्रीर्घोषयामास दिनं प्रशस्तम् ।**
**धीरं युवाचार्यपदे नियोक्तुम्, सो व्यानशेहर्षवहत्प्रवाहः ॥२०॥**

अन्वयः—पूज्य श्री (श्रीलालः) संघस्य भावं परिभाव्य धीरं युवाचार्यपदे नियोक्तुम् प्रशस्तदिनं घोषयामास। सः हर्षवहत्प्रवाहः व्यानशे।

भावानुवादः—संघ के वरिष्ठ सदस्यों के विचारों को सम्यक्तया जानकर आचार्य श्री श्रीलाल जी म. सा ने धीर–वीर मुनिपुंगव को युवाचार्य पद प्रदान करने हेतु प्रशस्त दिवस की घोषणा कर दी। फलतः सर्वत्र प्रसन्नता की लहरे प्रसृत हो गई।

**येनैव वृत्तं सुखदं नवीनम्, श्रुतं श्रुतेःशं सुधया समानम् ।**
**तेनैव प्रस्तावितमेवमेतत्, समर्थित हार्दिकभावनाभिः ॥२१॥**

अन्वयः—येन एव सुखद नवीनम् श्रुतेः शम् सुधया समानम् वृत्त श्रुतम्। तेन एव एवम् प्रस्तावितम् एतत् हार्दिकभावनाभिः समर्थितम् च।

भावानुवादः—जिस किसी ने इस नूतन, सुखद, कर्णप्रिय, कल्याणकारी सुधावत् मधुरसंवाद को सुना। उसी ने इस प्रस्ताव को हार्दिक सद्भावना के साथ अनुमोदन एवं समर्थन प्रदान किया।

**तत्सूचनां प्राप्य महामुनीन्द्रो, न मोदमानः परिलक्षितोऽभूत् ।**
**परन्तु जातः स विचारसिन्धौ, मग्नो भृशं स्वक्षमतां विमृश्यन् ॥२२॥**

अन्वयः—महामुनीन्द्रः तत्सूचनां प्राप्य मोदमानः परिलक्षितः न अभूत्। परन्तु स स्वक्षमतां विमृश्यन् विचारसिन्धौ मग्नः (अभवत्)।

भावानुवादः—किन्तु महामुनि श्री जवाहर इस सन्देश का श्रवण कर प्रसन्न

दिखाई नहीं दिये । वे अपनी क्षमता के विषय में विमर्श करते हुए विचार समुद्र में अवगाहन करने लगे ।

**ततश्च संघाधिकृताः महान्तः, प्रत्युत्तरं नो परिलभ्य धीराः ।**
**तेन प्रतिग्राहयितुं पदं तत्, यतीन्द्रपार्श्वे समुपागतास्ते ॥२३॥**

अन्वयः—ततः संघाधिकृताः धीराः ते महान्तः प्रत्युत्तरं नो परिलभ्य तेन (मुनिना) तत्पदम् प्रतिग्राहयितुम् यतीन्द्रपार्श्वे समुपागताः ।

भावानुवादः—जब मुनि श्री की ओर से सन्देश का कोई प्रत्युत्तर प्राप्त नही हुआ । तो संघ के वरिष्ठ गम्भीर श्रावकगण युवाचार्यपद स्वीकार करने का आग्रह लेकर उनके (मुनिश्री के) चरणों में पहुचे ।

**अनेकशस्तैः परिपूज्यमानः, प्रकारजातैः विधिबोधितः स ।**
**मेने गुरोर्निश्चयमेव मत्वा. तेने प्रमोदस्य ततं वितानम् ॥२४॥**

अन्वयः—अनेकशः तैः पूज्यमानः प्रकारजातैः विधिबोधितः स गुरोः निश्चयमेव मत्वा (त) मेने । प्रमोदस्य ततं वितान तेने ।

भावानुवादः—उन श्रावकों की पुनः-पुनः की जाने वाली प्रार्थना एव विनयविधि पूर्वक निवेदन को मानकर तथा अपने आराध्य गुरुदेव के दृढ निश्चय को जान-कर सन्देश को स्वीकार कर लिया । तथा सर्वत्र प्रसन्नता का वितान तान दिया ।

**चिताः कथं नोभिमताः तदर्थम् । आचार्यवर्यैः श्रुतबोधदक्षाः ।**
**वर्तेऽधुनाधर्मरतो दवीयान् । भारं मतो बोढुमहं किमर्थम् ॥२५॥**

अन्वयः—तदर्थम्आचार्यवर्यैः श्रुतबोधदक्षाः (परे) अभिमता कथं न चिताः ? अहम् अधुना धर्मरतः दवीयान् वर्ते । (तथापि) भार वोढुम् अह समर्थः किमर्थमतः ।

भावानुवादः—(तथापि मुनिश्री चिन्तन करने लगे) आचार्य श्री ने युवाचार्य पद के लिए श्रुत ज्ञान मे पारंगत अन्य मुनि पुंगवों का चयन क्यों नहीं किया ? मैं तो इस समय धर्म प्रभावक के रूप में दूरस्थ दक्षिण प्रान्त में भ्रमणरत

साधारण साधक हूं। फिर मुझ पर ही यह भार क्यो डाला जा रहा है ?? वहन करने में सक्षम कैसे माना है ?

**राज्यस्य तंत्रं प्रथते यथेदम्, लोकानुकूलं ननु शक्तिशालि ।**
**तथैव संघोपि पथा प्रयाति, सुचारुणा सम्मतशासनेन ॥२६॥**

अन्वयः—यथा इदम् लोकानुकूलं शक्तिशालि राज्यस्य तंत्रम् ननु प्रथते । तथा एव संघः अपि सुचारुणा सम्मतशासनेन पथा प्रयाति ।

भावानुवादः—जैसे सांसारिकदृष्टि से लोकानुकूल शक्तिशाली राजतन्त्र प्रसिद्धि को प्राप्त करता है। वैसे ही धर्मसंघ भी सामान्य–असामान्य सभी व्यक्तियों के विचार व्यवहार सहयोग से ही प्रशस्त मार्ग पर गतिशील होता है। अर्थात् जैसे जनतन्त्रीय शासन के लिए प्रजा की सम्मति आवश्यक होती है। उसी प्रकार धार्मिक शासन के लिए भी अभीष्ट है।

**पृष्टाश्चये ये मुनयो वयस्याः, सर्वे प्रकृत्या च समानमानाः ।**
**सदानुकूलाः परिलक्षितास्ते, योगं यथा सिद्धिरुपैति दिव्या ॥२७॥**

अन्वयः—यथा दिव्या सिद्धिः योगम् उपैति । तथा ये ये वयस्याः मुनयः (अत्र) पृष्टाः । ते सर्वे प्रकृत्या समानमानाः सदानुकूलाः परिलक्षिताः ।

भावानुवादः—(इसी आधार पर) जैसे योगों को दिव्य सिद्धि प्राप्त होती है। वैसे ही मुनिश्री ने जिस–जिस मुनिप्रवर से परामर्श लिया वे सभी समस्वभावी अनुकूल ही प्रतीत हुए। सभी ने उनके युवाचार्य पदोत्सव का एक स्वर से समर्थन प्रदान किया।

**विहाय शिष्यान् पठने रतान्तान्, आचार्यसेवामभिपत्तुकामः ।**
**ततो मुनीन्द्रश्चलितो यशस्वी, श्रुत्वा च वृत्तं सकलाः प्रसन्नाः ॥२९॥**

अन्वयः—ततः यशस्वी मुनीन्द्रः आचार्यसेवाम् अभिपत्तुकामः सन् पठने रतान् तान् शिष्यान् विहाय चलितः । वृत्तं च श्रुत्वा सकलाः नरः प्रसन्नाः (जाता) ।

भावानुवादः—(अनन्तर) यशस्वी मुनिप्रवर श्री (जवाहर) आराध्यचरण आचार्य देव को सन्निधि प्राप्त करने हेतु अध्ययनरत सहयोगी मुनियों को उधर दक्षिण प्रान्त में ही छोड़कर चल पड़े। इस संवाद को प्राप्त कर सभी परम-प्रसन्न हुए।

**मेवाड प्रान्ताद् गुरवः प्रयाताः, दाक्षिण्यदेशात् मुनिरग्रगामी।**
**बभूव मुख्यंहि महोत्सवस्य, स्थानं निदिष्टं रतलामरत्नम् ॥२९॥**

अन्वयः—गुरवः मेवाड प्रान्तात् प्रयाताः। मुनिः दाक्षिण्यदेशात् अग्रगामी अभवत्। महोत्सवस्यहि मुख्यम् स्थानम् रतलामरत्नम् निर्दिष्टम् बभूव।

भावानुवादः—चूंकि युवाचार्य महोत्सव हेतु स्थान रत्नवत् शोभास्पद रत्नपुरी (रतलाम) निश्चित किया गया था। अतः मेवाड़ प्रान्त से आचार्य श्री ने और दक्षिण प्रान्त से मुनि श्री ने रतलाम के लिए प्रस्थान किया।

**पदे-पदे स्वागतमेव जातम्, अभूतपूर्वं नवभाविनश्च।**
**वैशिष्ट्य युक्तस्य सदाशयस्य, प्राचार्यदेवस्य गुणाश्रयस्य ॥३०॥**

अन्वयः—वैशिष्ट्ययुक्तस्य, गुणाश्रयस्य, सदाशयस्य, नवभाविनः, प्राचार्यदेवस्य! च पदे-पदे अभूतपूर्वम् स्वागतम् एव जातम्।

भावानुवादः—अनेक विशेषताओं से मण्डित, गुणों के केन्द्र, पवित्रता की प्रतिमूर्ति नूतनभावी आचार्य श्री का पद-पद पर अभूतपूर्व स्वागत हुआ।

**उत्साहशक्तिर्विपुला नवीना, व्यवर्धतश्रावक मण्डलीषु।**
**राकापतिं प्रेक्ष्य यथा समुद्रे प्रोत्तुंगवीचेर्लहरी विभाति ॥३१॥**

अन्वयः—यथा समुद्रे राकापतिं प्रेक्ष्य प्रोत्तुंगवीचेः लहरी विभाति। तथा एव श्रावक मण्डलीषु नवीना विपुला उत्साहशक्तिः व्यवर्धत।

भावानुवादः—शरद पूर्णिमा के चन्द्र के अवलोकन से जैसे उत्तुंग तरंगें वृद्धि पाती है। सुशोभित होती हैं। वैसे ही श्रावक मण्डलो के मध्य नूतन उत्साह पूर्णशक्ति का विकास हुआ।

**पूज्यो गुरुः पूर्वत आगतोऽभूत्, तत्रैव प्राप्तो मुनिरप्रमत्तः ।**
**सूर्यश्च चन्द्रश्च विभात एकम्, पदं समाश्रित्य विभापरीतौ ॥३२॥**

अन्वयः—पूज्यः गुरुः पूर्वत एव आगतः अभूत् । तत्र एव अप्रमत्तः मुनिः प्राप्तः । सूर्यः च चन्द्रः च एकम् पदम् समाश्रित्य विभापरीतौ (सन्तौ) विभात इव ।

भावानुवादः—आचार्य श्री का (रतलाम नगर में) पहले ही पदार्पण हो गया । इधर मुनिश्री का पदार्पण भी हुआ । तत्कालीन शोभा ऐसी भासित होती थी कि जैसे रवि–शशि दोनों ही एक साथ एक स्थान पर उदित होकर दीप्त हो रहे हो ।

**अस्मै प्रयुक्तं दिनमागतं तत्, प्रतीक्षितं सर्वजनैरजस्रम् ।**
**सूर्योदयोऽदीप्यत नव्यरूपो, महोत्सवं द्रष्टुमनाः समग्रम् ॥३३॥**

अन्वयः—सर्वजनैः अजस्रम् प्रतीक्षितं, अस्मै प्रयुक्तं तत् दिनम् आगतम् । समग्रम् महोत्सवं द्रष्टुमनाः नव्यरूपः सूर्योदयः अदीप्यत (इव) ।

भावानुवादः—सभी के द्वारा चिर प्रतीक्षित युवाचार्यपदप्रदान करने का वह नियत दिवस समुपस्थित हो गया ।(तत्कालीन वातावरण को देखते हुए) लगता था, जैसे समस्त महोत्सव की मनोरम छटा के दर्शन हेतु ही आज के सूर्य का उदय हुआ है ।

**विभिन्नदेशान्नु समागतं तम्, विचित्रवेशं वचसामगम्यम् ।**
**भावात्मकं भास्वरभावनं च, कः स्यातुमीशो जनतासमूहम् ॥३४॥**

अन्वयः—विभिन्न देशात् नु समागतम् विचित्रवेशम् वचसाम् अगम्यम्, भावात्मकं भास्वरभावनम् तम् भावात्मकं जनतासमूहम् कः स्यातुम् ईशः (अस्ति) ।

भावानुवादः—विभिन्न प्रान्तों से समागत, विचित्र वेश–विन्यास से उपशोभित वचनातीत भावात्मकता लिए विशुद्धभावनायुक्त उस जन–समूह का कथन कौन कर सकता है ।

भावानुवादः—(अनन्तर) यशस्वी मुनिप्रवर श्री (जवाहर) आराध्यचरण आचार्य देव को सन्निधि प्राप्त करने हेतु अध्ययनरत सहयोगी मुनियों को उधर दक्षिण प्रान्त में ही छोड़कर चल पड़े। इस संवाद को प्राप्त कर सभी परम-प्रसन्न हुए।

**मेवाड प्रान्ताद् गुरवः प्रयाताः, दाक्षिण्यदेशात् मुनिरग्रगामी।**
**बभूव मुख्यंहि महोत्सवस्य, स्थानं निदिष्टं रतलामरत्नम् ॥२९॥**

अन्वयः—गुरवः मेवाड प्रान्तात् प्रयाताः। मुनिः दाक्षिण्यदेशात् अग्रगामी अभवत्। महोत्सवस्यहि मुख्यम् स्थानम् रतलामरत्नम् निर्दिष्टम् बभूव।

भावानुवादः—चूंकि युवाचार्य महोत्सव हेतु स्थान रत्नवत् शोभास्पद रत्नपुरी (रतलाम) निश्चित किया गया था। अतः मेवाड़ प्रान्त से आचार्य श्री ने और दक्षिण प्रान्त से मुनि श्री ने रतलाम के लिए प्रस्थान किया।

**पदे-पदे स्वागतमेव जातम्, अभूतपूर्वं नवभाविनश्च।**
**वैशिष्ट्य युक्तस्य सदाशयस्य, आचार्यदेवस्य गुणाश्रयस्य ॥३०॥**

अन्वयः—वैशिष्ट्ययुक्तस्य, गुणाश्रयस्य, सदाशयस्य, नवभाविनः, आचार्यदेवस्य! न पदे-पदे अभूतपूर्वम् स्वागतम् एव जातम्।

भावानुवादः—अनेक विशेषताओं से मण्डित, गुणों के केन्द्र, पवित्रता की प्रतिमूर्ति नूतनभावी आचार्य श्री का पद-पद पर अभूतपूर्व स्वागत हुआ।

**उत्साहशक्तिर्विपुला नवीना, व्यवर्धतश्रावक मण्डलीषु।**
**राकापति प्रेक्ष्य यथा समुद्रे प्रोत्तुंगवीचेर्लहरी विभाति ॥३१॥**

अन्वयः—यथा समुद्रे राकापति प्रेक्ष्य प्रोत्तुंगवीचेः लहरी विभाति। तथा एव श्रावक मण्डलीषु नवीना विपुला उत्साहशक्तिः व्यवर्धत।

भावानुवादः—शरद पूर्णिमा के चन्द्र के अवलोकन से जैसे उत्तुंग तरंगें वृद्धि पाती है। सुशोभित होती हैं। वैसे ही श्रावक मण्डलो के मध्य नूतन [illegible] उत्साह पूर्णशक्ति का विकास हुआ।

**पूज्यो गुरुः पूर्वत आगतोऽभूत्, तत्रैव प्राप्तो मुनिरप्रमत्तः ।**
**सूर्यश्च चन्द्रश्च विभात एकम्, पदं समाश्रित्य विभापरीतौ ।।३२।।**

अन्वयः—पूज्यः गुरुः पूर्वत एव आगतः अभूत् । तत्र एव अप्रमत्तः मुनिः प्राप्तः । सूर्यः च चन्द्रः च एकम् पदम् समाश्रित्य विभापरीतौ (सन्तौ) विभात इव ।

भावानुवादः—आचार्य श्री का (रतलाम नगर में) पहले ही पदार्पण हो गया । इधर मुनिश्री का पदार्पण भी हुआ । तत्कालीन शोभा ऐसी भासित होती थी कि जैसे रवि-शशि दोनों ही एक साथ एक स्थान पर उदित होकर दीप्त हो रहे हों ।

**अस्मै प्रयुक्तं दिनमागतं तत्, प्रतीक्षितं सर्वजनैरजस्रम् ।**
**सूर्योदयोऽदीप्यत नव्यरूपो, महोत्सवं द्रष्टुमनाः समग्रम् ।।३३।।**

अन्वयः—सर्वजनैः अजस्रम् प्रतीक्षितं, अस्मै प्रयुक्तं तत् दिनम् आगतम् । समग्रम् महोत्सव द्रष्टुमनाः नव्यरूपः सूर्योदयः अदीप्यत (इव) ।

भावानुवादः—सभी के द्वारा चिर प्रतीक्षित युवाचार्यपदप्रदान करने का वह नियत दिवस समुपस्थित हो गया ।(तत्कालीन वातावरण को देखते हुए) लगता था, जैसे समस्त महोत्सव की मनोरम छटा के दर्शन हेतु ही आज के सूर्य का उदय हुआ है ।

**विभिन्नदेशान्नु समागतं तम्, विचित्रवेशं वचसामगम्यम् ।**
**भावात्मकं भास्वरभावनं च, कः ख्यातुमीशो जनतासमूहम् ।।३४।।**

अन्वयः—विभिन्न देशात् नु समागतम् विचित्रवेशम् वचसाम् अगम्यम्, भावात्मकं भास्वरभावनम् तम् भावात्मकं जनतासमूहम् कः ख्यातुम् ईशः (अस्ति) ।

भावानुवादः—विभिन्न प्रान्तों से समागत, विचित्र वेश-विन्यास से उपशोभित वचनातीत भावात्मकता लिए विशुद्धभावनायुक्त उस जन-समूह का कथन कौन कर सकता है ।

**नो स्थानपर्याप्तिरभूत्तदर्थं, मुपाश्रये स्थातुमलं न जाताः ।**
**अतो बहिर्मार्गपथे स्थितास्ते, मौनाश्रिताः श्राद्धजना बभूवुः ॥३५॥**

अन्वयः—तदर्थम् स्थानपर्याप्तिः नो अभूत् । (जनाः) उपाश्रये स्थातुम् अलम् न जाताः । अतः श्राद्धजनाः ते बहिर्मार्गपथे स्थिताः मौनाश्रिताः बभूवुः ।

भावानुवादः—(महापुरुषों की धवल कीर्ति से प्रभावित) इतना अधिक जनसमूह एकत्रित हो गया कि वह नियत विशाल स्थान भी छोटा पड़ गया । इतनी अधिक जनमेदिनी वहाँ समा नही सकी । (परिणामतः) अनेक धर्मश्रद्धालु राजमार्ग पर स्थित होकर मौनपूर्वक कार्यक्रमों का दर्शन कर रहे थे ।

**शास्तेर्यथारूपमलोकि सुस्थम्, तथा न लब्धं क्वचिदन्यकार्ये ।**
**समागते पूज्यवरे सभाया, मुदस्थुरेवं गुरुवन्दनार्थम् ॥३६॥**

अन्वयः—यथा शास्तेः स्वस्थम् रूपम् आलोकि तथा क्वचिद् अन्य कार्ये न लब्धम् । सभायाम् पूज्यवरे समागते गुरुवन्दनार्थम् एवं (सर्वे जनाः) उदस्थुः

भावानुवादः—अनुशासन बद्धता का जो विहंगम हृदय वहां परिदृष्ट हुआ । वह अन्यत्र किसी जनसभा में नही हुआ । आचार्य गुरुवर के चरण ज्योंही सभा स्थल पर पड़े समस्तजन–समुदाय भावपूर्ण अभिवन्दना हेतु उठ खड़ा हुआ ।

**आचार्यवर्येण समंगलं च, प्राग्नन्दिसूत्र पठितं विशिष्टम् ।**
**सम्बोधयन्नागतमण्डलं स, सन्देशदानाय प्रवर्तितोऽभूत् ॥३७॥**

अन्वयः—आचार्यवर्येण प्राक् समङ्गलम् विशिष्टम् नन्दिसूत्रम् पठितम् । स आगत मण्डलम् सम्बोधयन् सन्देशदानाय प्रवर्तित. अभूत् ।

भावानुवादः—युवाचार्य पद प्रदान की आगमिकविधि का प्रारम्भ करते हुए आचार्यप्रवर ने सर्वप्रथम मंगलाचरण पूर्वक विशिष्ट नन्दिसूत्र का पाठ किया अनन्तर वे आगतजनसमूह एवं भावीयुवाचार्य को सम्बोधित करने में प्रवृत्त हुए ।

**सन्मङ्गलं–चास्ति शरीर हानम् अमगलं नो जनिरेव बोध्या ।**
**'स्पर्न मृत्युमपीह दृष्ट्वा' भयं च शोकश्चविसर्जनीयो ॥३८॥**

अन्वयः—नः शरीरहानः सन्मंगलं च अस्ति । नः जनिः एवं अमंगलं बोध्या । इह उपस्थितमृत्युम् अपि दृष्ट्वा भयं शोकः च विसर्जनीयौ ।

भावानुवादः—(आपेक्षिक दृष्टि से) शरीर परित्याग भी सन्मगल है । हां, उत्पत्ति को (किसी दृष्टि से) अमगल माना जा सकता है । अतः समक्षप्रस्तुत मृत्यु को देखकर भी भयाकुल एवं शोकाकुल नहीं होना चाहिये ।

**संघस्य सन्मार्गपथे प्रयाणम्, भवेदजस्रं परिचिन्तनीयम् ।**
**स्वार्थेन साकं च परार्थवृत्तिः, ध्यानेन बोधेन च साधनीया ॥३९॥**

अन्वयः—संघस्य प्रयाणं सन्मार्गपथे भवेत् इति अजस्र परिचिन्तनीयम् । स्वार्थेन साकम् च परार्थवृत्तिः ध्यानेन बोधेन च साधनीया ।

भावानुवादः—स्वअर्थ–सिद्धि के साथ ज्ञान एवं ध्यान साधना के द्वारा परोपकृति के प्रति भी जागृति होनी चाहिये । सदा यह चिन्तन सन्मुख रहे कि संघ का सुपथ पर गमन हो ।

**कर्तव्यनिष्ठा, प्रतिभा विशिष्टा, प्रौजस्विनी वाक् सरलः स्वभावः ।**
**सर्वे गुणाः काञ्चनमाश्रितास्ते, ततो युवाचार्यपदं निधेहि ॥४०॥**

अन्वयः—ते कर्तव्यनिष्ठा विशिष्टा प्रतिभा, ओजस्विनी वाक् सरलः स्वभावः, इति सर्वे गुणाः (त्वाम्) कांचनम् आश्रिताः तत् (त्वम्) युवाचार्यपदं निधेहि ।

भावानुवादः—जैसे विशुद्ध स्वर्ण मे सभी गुण माने जाते है । वैसे ही आप में भी कर्तव्य निष्ठा, प्रकाण्ड प्रतिभा, मधुर एवं सरल स्वभाव आदि सद्गुणों का सद्भाव है । अतः आप युवाचार्यपद स्वीकार करे ।

**मोहो न माया जगतीप्रपञ्चे, तथापि संघस्य सुरक्षयापि ।**
**समाजकल्याणविधेयमस्ति, विशेषतः साधुजनैरतन्द्रम् ॥४१॥**

अन्वयः—(यद्यपि) जगती–प्रपञ्चे मोहःमाया न । तथापि संघस्य सुरक्षया अपि साधुजनैः अतन्द्रम् विशेषतः समाजकल्याणविधेयम् अस्ति ।

भावानुवादः—यद्यपि संसार के प्रपञ्चों से विरक्त मुनियों को मोह-माया आसक्ति नही होती है। तथापि सघ की सुरक्षा द्वारा भी उन्हें आत्मकल्याण अवश्य करना चाहिये।

**प्रवर्तिते सघपथे समग्रे, वीरेण रत्नत्रयसाधनेऽस्मिन्।**
**सर्वव्यवस्थाकरणोपयोगि, विशिष्टमाचार्यपदं प्रशस्तम् ॥४३॥**

अन्वयः—वीरेण रत्नत्रयसाधने समग्रे प्रवर्तिते अस्मिन् संघपथे सर्वव्यवस्थाकरणोपयोगि विशिष्टम् आचार्यपदम् प्रशस्तम् उक्तम्।

भावानुवादः—रत्नत्रय की सम्यगाराधना हेतु प्रभु महावीर ने इस समाज मे संघ की सुन्दर व्यवस्था के लिए अत्यन्त उपयोगी आचार्य पद को अतिविशिष्ट स्थान प्रदान किया।

**मयापि लब्धा युवराजतासीत्, प्रदीयते सैव तथैव तुभ्यम्।**
**देया त्वया योग्यतमाय कस्मै, काले वृता त्यागपरम्परेयम् ॥४३।**

अन्वयः—मया अपि युवराजता लब्धा आसीत्। सा एव तथा एव तुभ्य प्रदीयते। त्वया (अपि) सायोग्यतमाय कस्मै काले देया। इयम् त्यागपरम्परा वृता (अस्ति)।

भावानुवादः—मैंने भी आचार्य परम्परा के रूप में युवाचार्य (एवं आचार्य) पद प्राप्त किया था। अब उसी पद पर मैं तुम्हें प्रतिष्ठित कर रहा हूं। समय उपस्थित होने पर तुम्हें भी इसे किसी योग्य को अर्पित करना है। त्याग भावना की यही परम्परा यहाँ (इस शासन में) स्वीकृत की गई है।

**संघस्य शास्तेर्यदि सूत्रमेतत्, प्रदीयते तेकरयोरिदानीम्।**
**भयं न किंचिन्मम मानसेऽस्ति, रक्ष्यं भवेद् भाविनिकालयाशा ॥४४॥**

अन्वयः—यदि संघस्य शास्तेः एतत् सूत्रं इदानीम् ते करयोः प्रदीयते। मम मानसे किंचिद् भय न अस्ति। भाविनि काले तत् रक्ष्यं भवेत् (इति) आशा (अस्ति)।

भावानुवादः—संघ व्यवस्था का समस्तदायित्व तुम्हारे सशक्त हाथों में दिया जा रहा है । अतः मेरे मानस में इसका किंचित् भी भय नही है । क्योंकि मुझे आशा (विश्वास) है कि यह शासनव्यवस्था भविष्य मे भी सुरक्षित रहेगी ।

**ततः स्वयं प्रावरणं प्रदाय, तं यौवराज्ये व्यधितागमज्ञः ।**
**दीप्ति समासाद्यरवेः सकाशात्, पद्मंयथासौ मुमुदे मुनीन्द्रः ।।४५।।**

अन्वयः—ततः आगमज्ञः स्वयं प्रावरण प्रदाय तम् यौवराज्ये व्यधित । असौ मुनीन्द्रः रवेः सकाशात् दीप्ति समासाद्य पद्मम् यथा मुमुदे ।

भावानुवादः—(इस सामयिक सन्देश के) अनन्तर आगमज्ञ आचार्य श्री ने अपने कर-कमलों द्वारा आचार्य पद का परिधान (चादर) मुनिश्री को प्रदान कर उन्हे युवाचार्य पद पर समासीन कर दिया । अब मुनि श्री (जवाहर) रवि-किरणो से प्रभासित कमल के समान सुशोभित होने लगे ।

**अस्मिन्विधाने मुनयो महान्तो, योगं ददुः प्रेमभरेण पूर्णम् ।**
**सूर्योदये सादितदिव्यरूपे प्रकाशराशिः स्वयमभ्युपैति ।।४६।।**

अन्वयः—अस्मिन् विधाने महान्तः मुनयः प्रेमभरेण योग ददुः । (यतः) सादित-दिव्यरूपे सूर्योदये प्रकाशराशिः स्वयम्अभ्युपैति ।

भावानुवादः—जिस प्रकार दिव्य प्रभा मण्डित सूर्य के उदय पर प्रकाशराशि उसे स्वतः घेर लेती है । उसी प्रकार युवाचार्य प्रदान के इस पुनीत विधान मे अन्य अनेक मुनि पुंगवो ने भी सम्मतिपूर्वक योगदान दिया ।

**सर्वोऽपि संघोऽस्य कृतामजस्रम् संपालयेत्तांसकलामनुज्ञाम् ।**
**यथा मदीयां विनयेन भक्त्या, अवत्ययं सन्ततमप्रमादः ।।४७।।**

अन्वयः—अय सर्वः अपि संघः यथा मदीयाम् आज्ञाम् विनयेन भक्त्या च सन्ततम् अप्रमादः सन् अवति । तथैव अस्यापि कृताम् सकलाम् ताम् अनुज्ञाम् सम्पाल-येत् ।

भावानुवादः—(अनन्तर जनता की ओर उन्मुख होकर आचार्य श्री ने कहा) यह

चतुर्विध संघ जिस प्रकार विनय एवं भक्ति–पूर्वक मेरी आज्ञा का निरन्तर आराधन करता है। वैसे ही अब इन युवाचार्य श्री की आज्ञा का यथातथ्य पालन करे।

**प्रस्तावित साधुकृतानुमोदम्, प्रेम्णा तथा श्राद्धसमर्थितं सत्।**
**पूर्ति जगामाशु विधेयरूपम्, जयेन साकं परिपारितं च ।।४८।।**

अन्वय—गुरुणा प्रस्तावितम् साधुकृतानुमोदम् तथा प्रेम्णाश्राद्धसमर्थितं सत् विधेयरूपम् आशु पूर्तिम् जगाम। तत् जयेन साकम् परिपारित च (अभवत्)।

भावानुवादः—आचार्य द्वारा प्रस्तावित निर्देश समस्तमुनिमण्डल द्वारा अनुमोदित एवं श्रावकसमाजद्वारा समर्थित होता हुआ तुरन्त नियम बद्धता को प्राप्त हो गया। तथा जयनादो के साथ पूर्णरूपेण पारित भी हो गया।

**दीप्त्या श्रिया चापि विभासमानो, विराजमानो गुरुवन्दनाभिः।**
**जनैश्च सर्वैः परिवीक्ष्यमाणः, प्रोचे युवाचार्य इमाः सुवाचः ।।४९।।**

अन्वयः—दीप्त्या श्रिया च अपि विभासमानः गुरुवन्दनाभिः विराजमानः, सर्वैः जनैः च परिवीक्ष्यमाणः युवाचार्य इमाः सुवाचः प्रोचे।

भावानुवादः—युवाचार्यत्व की श्री तथा दीप्ति से प्रभावित, सभी श्रद्धालुओं द्वारा श्रद्धापूर्वकवन्दन के साथ परिदृश्यमान युवाचार्य श्री ने इस प्रकार भावाभिव्यक्ति की।

**समग्रसाधोः सहयोगसाध्याम्, लब्ध्वा कृपां शासनदेवतायाः।**
**गुरोश्च संघस्य विधेयरूपम्, आज्ञामहं तां शिरसा वहामि ।।५०।।**

अन्वयः—अहम् समग्रसाधोः सहयोग साध्याम् गुरोः संघस्य च विधेयरूपाम् ताम् आज्ञाम् शासनदेवतायाः कृपाम् लब्ध्वा शिरसा वहामि।

भावानुवाद.—समग्रमुनि मण्डल के सुन्दर सहयोग से साध्य, गुरुदेव एवं संघ के अवश्य करणीय निर्देश को मैं शासनदेव की कृपा के साथ स्वीकार करता हूं।

**गुरूपदिष्टे जनताहितार्थे, न देशना काप्यवशिष्यते मे ।**
**पदार्थसार्थेऽशुमताप्रदीप्ते, तत्र प्रदीपस्यकिमस्ति योग ।५१।।**

अन्वय:—जनहितार्थे गुरूपदिष्टे (सति) मे कापि देशना न अवशिष्यते । अंशुमता पदार्थसार्थे प्रदीप्ते सति तत्र प्रदीपस्य योग: किमस्ति ?

भावानुवाद:—जैसे सहस्त्ररश्मि के उदित हो जाने पर दीप-प्रभा अकिंचित् कर हो जाती है । वैसे ही श्रद्धेय गुरुवर्य के उपदेश के उपरान्त इस सन्दर्भ में मेरे लिए बोलने को कुछ भी शेष नहीं रह जाता है ।

**श्रद्धास्पदं शासनशासकस्य, सम्मानपूर्णं पदमस्ति लोके ।**
**क्षेत्रे च धर्मस्य महो वरीयः, श्रीसंघसेवात्मकमेव मन्ये ।।५२।।**

अन्वय.— लोके शासनशासकस्य श्रद्धास्पदम् सम्मानपूर्णम् पदम् अस्ति । धर्मस्य च क्षेत्रे वरीय: मह: (अस्ति) अहम् तत् श्रीसघसेवात्मकम् एव मन्ये ।

भावानुवाद:—जिन शासन मे युवाचार्य का पद अति सम्मानपूर्णपद है । धर्म के क्षेत्र मे इसे अतिश्रेष्ठतम प्रतिष्ठा प्राप्त है । तथापि मे इसे संघसेवा का समुचित अवसर ही मानता हूं ।

**मन्येत संघो विरतं महान्तम्, श्रेष्ठं विशिष्ट जनवन्दितं मां ।**
**आचार्यपूज्यास्पदसंप्रतिष्ठम्, स्वकीयदृष्ट्या खलु साधकोऽहम् ।।५३।।**

अन्वय:—सघ: विरतम् महान्तम् श्रेष्ठम् विशिष्ट जनवन्दितम्, आचार्यपूज्यास्पदसप्रतिष्ठम् माम् मन्येत । किन्तु अहम् स्वकीयदृष्ट्या खलुसाधक: (अस्मि) ।

भावानुवाद:—सघ भले ही मुझे विरत श्रेष्ठ, विशिष्ट तथा अभिवन्द्य आचार्य के रूप मे मानता हो । किन्तु मै तो अपने आपको एक सामान्यसाधक ही मानता हूं ।

**आचार्य देवस्य महोपकारम्, नो वक्तुमीशामयि विद्यते वाक् ।**
**यदस्ति मे तत्कृपयैवजातम्, कृतज्ञतामेव मुदाश्रयामि ।।५४।।**

अन्वयः—आचार्यदेवस्य महोपकारम् वक्तुम् मयि ईशावाक् नो विद्यते । मे यदस्ति तत् सर्वम् तत्कृपया एव जातम् । अतः मुदा कृतज्ञताम् एव आश्रयामि ।

भावानुवादः—आचार्य देव के महान् उपकारों को मैं सीमित शब्दों में नही बांध सकता हूं । मैं जो कुछ हूं । वह उनकी कृपा का ही प्रतिफल है । मैं केवल प्रसन्नतापूर्वककृतज्ञता ही ज्ञापित कर सकता हूं ।

**श्री संघकल्याणविधानकारि, जिनेन्द्रसंशासनसेवनं च ।**
**उद्देश्यमेतन्मम जीवनस्य, विश्वासये पूज्यमहं प्रसंगे ॥५५॥**

अन्वयः—श्रीसंघकल्याणविधानकारि, जिनेन्द्रसंशासनसेवनं च मम जीवनस्य एतत् उद्देश्यम् अस्ति । अत्र प्रसंगे अहम् पूज्यम् विश्वासये ।

भावानुवादः—आज के इस महोत्सव प्रसंग पर मैं श्रद्धेय आचार्यदेव को विश्वास दिलाता हूं कि "जिनेन्द्र शासन की सेवा एवं संघ कल्याण यह मेरे जीवन का उद्देश्य होगा ।

**व्याख्यान पुष्पाकिरणेन तेन विभूषिताः सर्वनरो नितान्तम् ।**
**जयस्य शब्दो विततो भवान्ते । चेत्थं युवाचार्यपदं स पेदे ॥५६॥**

अन्वयः—तेन व्याख्यानपुष्पाकिरणेन सर्वनरः नितान्तम् विभूषिताः । ततः जयस्य शब्दः भवान्ते विततः । इत्थम् स युवाचार्यपदम् पेदे ।

भावानुवादः—इस प्रकार युवाचार्य श्री के प्रवचन रूप पुष्प–वृष्टि से जन–जन का मन आनन्दविभोर हो उठा । प्रांगण जयनादों से अनुगुञ्जित हुआ और इस प्रकार युवाचार्य पदोत्सव सम्पन्न हुआ ।

**ततो दयादानविधान शिक्षा प्रचार कार्येषु च सम्भवत्सु ।**
**प्रचारकाणामुपयोगितायाम् ध्यानं गतं जैनसमुन्नतार्थम् ॥५७॥**

अन्वयः—ततः सम्भवत्सु दयादानविधानशिक्षाप्रचार कार्येषु जैन समुन्नतार्थम् प्रचारकाणाम् उपयोगितायाम् तस्य ध्यानम् गतम् ।

भावानुवादः—अनन्तर युवाचार्य श्री का ध्यान धर्मांग दया-दान की मौलिक विचारणा एवं जैन धर्म-शिक्षा के व्यापक प्रचार तथा जैनदर्शन की समुन्नतिहेतु प्रचारक वर्ग की उपयोगिता की ओर आकृष्ट हुआ।

**प्रचारकाः सन्ति पुरातनास्ते, कालानु.शिष्टाः मुनयो विशिष्टाः।**
**आगारधर्मापि तथा विधातुम् सत्यं समाजेन नियोजनीयः। ५८॥**

अन्वयः— ते पुरातनाः कालानु:शिष्टाः विशिष्टाः मुनयः, प्रचारकाः स्वतः। (सन्ति)। समाजेन तथा विधातुम् आगारधर्मा अपि सत्य नियोजनीयः।

भावानुवादः—प्राचीनकाल से ही विशिष्ट मुनिजन मर्यादित रहते हुए स्वयं प्रचार रत रहते रहे हैं। तथापि समाज के लिए चिन्तनीय है, कि धर्मप्रचार हेतु गृहस्थप्रचारको को भी नियुक्त करे।

**सर्वं समारोहभवं समाप्य, विधिं गता श्रावकमण्डली सा।**
**ततो युगौ पूज्यवरौ वरेण्यौ, विहारमाचक्रतुरिन्दुतुल्यौ ॥५९॥**

अन्वयः—सा श्रावकमण्डली समारोहभव सर्वं विधि समाप्य गता। ततः वरेण्यौ युगौ पूज्यवरौ इन्द्रतुल्यौ विहारम् आचक्रतु,।

भावानुवादः—इस प्रकार समारोह के सुन्दररूप से सम्पन्न हो जाने पर श्रावक समुदाय अपने-अपने स्थान को गया और इधर जन-जन अभिवन्द्य शशिवत्-सौम्य आचार्यप्रवर एवं युवाचार्य ने भी मुनिवृन्द के साथ वहां से प्रस्थान कर दिया।

**सहैव जातो नगरीविहारो, धर्मोपदेशं महसाचरन्सन्।**
**ततो युवाचार्य इतो वियुज्य, गतः सशिष्यः पटुमेदपाटम् ॥६०॥**

अन्वयः—सह एव नगरीविहारो जातः। महसा धर्मोपदेशम् चरन् स युवाचार्यः ततः इतः वियुज्य सशिष्यः पटुमेदपाटम् गतः।

भावानुवादः—दोनों पूज्य पादों का विहार नगरी (ग्राम) तक तो साथ-साथ ही हुआ। अनन्तर युवाचार्य श्री अपने ओजस्वी प्रवचनो से [illegible]

करते हुए सहयोगी मुनिवृन्द के साथ मेवाड़ (उदयपुर) की ओर प्रस्थित हुए

**स्वजीवनेऽभ्युन्नतिमेव यातुम् स्वयं युवाचार्यवरस्य पूर्णा ।**
**मासीत्समीहा च गुरोर्हृदन्तो, विहारमन्यत्र समादिदेश ॥६१॥**

अन्वय:—गुरो: हृदन्त: स्वजीवने स्वय युवाचार्यस्य पूर्णाम् अभ्युन्नतिम् ए यातुम् च समीहा आसीत् । अत: अन्यत्र विहारम् स समादिदेश ।

भावानुवाद:—आचार्य श्री के हृदय में यह समीहा थी कि अपने जीवनकाल में ही मै युवाचार्य श्री की अभ्युन्नति का दर्शन कर लू । अतएव उन्होने युवाचार्य श्री को अन्यत्र स्वतन्त्र विहार की आज्ञा प्रदान की ।

**आत्मानमेवं सगुरोर्वियोज्य, संघश्रियं संविदधान एव ।**
**साकं प्रबुद्धैर्मुनिभिर्महात्मा, ग्रामानुवासं विजहार धीरः ॥६२॥**

अन्वय:—स महात्मा धीर: एवम् आत्मान गुरो: वियोज्य सघश्रियं संविदधान: प्रबुद्धै: मुनिभि: साक ग्रामानुवास विजहार ।

भावानुवाद: (गुरुदेव के आदेश को प्राप्त कर) अगाध धैर्यनिधि महात्मा युवाचार्य श्री ने गुरुवर से पृथक् होकर सघ की श्री वृद्धि करते हुए प्रबुद्ध मुनियो के साथ ग्रामानुग्राम भ्रमण किया ।

प्रवासवासे प्रथमे प्रशस्ते, श्रीमद्युवाचार्यमहोदयस्य ।
धर्मप्रचारेण सहैव जातम् व्याख्यानपीयूषविशेषपानम् ॥६३॥

अन्वय:—प्रथमे प्रशस्ते प्रवासवासे श्रीमदयुवाचार्यमहोदयस्य धर्मप्रचारेणसह एव व्याख्यानपीयूषविशेषपानम् जातम् ।

भावानुवाद:—युवाचार्य पद के प्रथम प्रशस्त प्रवास–वास मे ही युवाचार्य श्री के द्वारा धर्म प्रचार के साथ जनता ने प्रवचन पीयूष का पान किया ।

प्रयत्नजातं सफलं न जातम्, सत्सम्प्रदायस्यमतैकतायाम ।
तस्मादहो धर्मभयस्य जाता, देशस्य दीना ननु दुर्दशापि । ६४॥

अन्वय.—सत् सम्प्रदायस्य मतैकतायां तस्य प्रयत्नजातम् सफल न जातम् । तस्मात् अहो ! धर्ममयस्यदेशस्य ननु दीना दुर्दशा अपि जाता ।

भावानुवाद:—(इसी कालावधि में युवाचार्य श्री ने स्थानकवासी सम्प्रदायो की एकता के लिए वहुत प्रयास किये) किन्तु वे प्रयास सफल नही हुए । खेद है कि इस विघटन के द्वारा धर्मप्राण भारत वर्ष की यह दयनीय दुर्दशा हुई ।

**ग्रामीणदुर्दशावर्णनम्:-**

**वंशानुगाऽकिञ्चनता प्रपीनम्, परस्परंद्वेषपयोधिलीनम् ।**
**अभावमीनं व्यथितम नितान्तम्, शिक्षाविहीनं प्रभयापिहीनम् ।।६५ ।**

अन्वय:—(तेन) वंशानुगाऽकिचनता—प्रपीनम्, परस्पर द्वेषपयोधिलीनम् अभाव-मीनम्, नितान्त व्यथितम् शिक्षाविहीनम् प्रभया अपि हीनवासस्य दीनस्वरूपम् व्यलोकिइति चतुर्थेनान्वय: ।

भावानुवाद:—(ग्रामीण क्षेत्रों के अपने परिभ्रमण काल मे) उन्होंने गॉवों की दीन दशा देखी । ग्राम व्यवित कुलक्रमानुगतदरिद्रता, तज्जनित अभाव एवं आपसी वैमनस्य से पीड़ित है । लोग नितान्त व्यथित, अशिक्षित एवं प्रभा से रहित है ।

**कुरीतिगम्यं विरसं विपन्नम्, पथच्युतं शोषितपीडित च ।**
**श्रिया यशोभीरहित विरूपम्, रोगार्दित दीनरवं दरिद्रम् ।।६६।।**

अन्वय:—तेन कुरीतिगम्यम् विरस विपन्नम् पथच्युतम् शोषितपीडितम् श्रियाय-शोभि. रहितम् विरूपम् रोगार्दितम् दीनरवं दरिद्रम् च (दीन स्वरूपम् व्य-लोकि) ।

भावानुवाद:—उन्होने ग्राम्य जीवन की दशा देखी—वहां कुरूढियों का साम्राज्य है । लोग नीरस, विपन्न, पथभ्रष्ट, शोषित एवं शोभारहितजीवन जी रहे है । विरूप, रूग्ण एवं आर्तव्यक्तियों की बहुलता है ।

**बुभुक्षित नग्नमतीवशुष्कम्, पिपासित रूक्षमनल्पकष्ट ।**
**मृणार्दित शापितजीवनं च, सम्मूर्च्छित यौवन एव वृद्धम् ॥६७।**

अन्वयः—बुभुक्षितम् अतीवनग्नम् शुष्कम् पिपासितम् रूक्षम्, अनल्पकष्टम्, ऋणार्दितम्. शापितजीवनम् संमूर्च्छित यौवने एव वृद्धं च (व्यलोकि) ।

भावानुवाद:—उन्होंने देखा कि गाँवों के लोग अत्यन्त क्षुधित, अल्पवस्त्र, शुष्क रूक्ष तृषित आदि अनेक कष्टों से पीड़ित है । कर्ज से व्यथित, अनुशोषित जीवन वाले सम्मूर्च्छित एव यौवन में ही वृद्ध से प्रतीत होने वाले हैं ।

**पदातिना साधुसमन्वितेन, सूक्ष्मेक्षिकापूर्णविलोकनेन ।**
**दयालुना धर्मविकासकेन, व्यलोकि वासस्य च दीनरूपम् ॥६८॥**

अन्वय:—साधुसमन्वितेन सूक्ष्मेक्षिकापूर्णविलोकनेन पदातिना धर्मविकासकेन दयालुना तेन वासस्य च दीनरूपम् व्यलोकि ।

भावानुवाद.—सूक्ष्मदृष्टया अवलोकन पूर्वक मुनिसमुदाय के संयुक्त पदयात्रा करते हुए करुणार्द्र हृदय युवाचार्य श्री ने ग्राम्य–जन–जीवन की दयनीय स्थिति का अवलोकन किया ।

**स्थाने च यत्रैवगतोमहात्मा, भाग्य मत तस्य पदस्य सेर्ष्यम् ।**
**द्रोणे च वृष्टे भुविपर्वतेऽपि, बिन्दु न सर्वत्र लभेतस्वात्याः ॥६९॥**

अन्वय.—महात्मा यत्र एव स्थाने च गतः । तस्य पदस्य भाग्यम् सेर्ष्यम् मतम् । भुविपवते अपि द्रोणे च वृष्टे स्वात्याः सर्वत्र (जनः) बिन्दुम् न लभेत ।

भावानुवाद.—जहा–जहा युवाचार्य श्री के पद चरण हुए वह क्षेत्र ईर्ष्या का विषय बन गया। अर्थात् अन्य स्थानो का जन समुदाय वही दृश्य अपने यहा भी चाहता था । किन्तु, समस्त पृथ्वी एवं पर्वत पर वृष्टि होने पर भी स्वातीबूंद सर्वत्र उपलब्ध नहीं होती है ।

**अशान्तिवातावरणे समस्ते, देशे दयाधर्मविभावनेन ।**
**सदा मनोयोगविधानपूर्वम्, शान्तेश्च साम्राज्यमसौततान ॥७०॥**

अन्वयः—असौ समस्ते अशान्तिवातावरणे देशे दयाधर्मविभावनेनसदा मनोयोग-विधानपूर्वम् शान्तेश्च साम्राज्यम् ततान ।

भावानुवादः—उन्होंने देश के उस अशान्त वातावरण की स्थिति में अहिंसादया के प्रचार-प्रसार के द्वारा मनोयोगपूर्वक शान्ति का साम्राज्य प्रसृत किया ।

**कृतं महत्त्वेन समंविधेयम् श्रुतं च सूत्रार्थपदं प्रकामम् ।**
**गतं च यत्रापि दयार्द्रदृष्ट्या, सर्वं प्रशस्तं पदमेव जातम् ।।७१।।**

अन्वयः—तेन महत्वेन समविधेयम् कृतम् । प्रकाम सूत्रार्थपदम् च श्रुतम् । दयार्द्र-दृष्ट्या यत्रापि गतम् । सर्वपदम् प्रशस्तम् एव जातम् ।

भावानुवादः—उन्होने महत्वपूर्ण विधेय तथ्यों का ही अनुशीलन किया । अधिका-धिक सूत्रार्थ पदो का श्रवण किया । वे अपनी करुणापूतदृष्टि लिए जहा भी गये, वह समस्त क्षेत्र ही पवित्र प्रशस्त हो गया ।

**देशे, समाजे, निजसम्प्रदाये, सूत्रार्थदाने जनसम्मितौ च ।**
**अमोघरत्नत्रयसंश्रयेण, साफल्यमाप्तं निखिले प्रयासे ।।७२।।**

अन्वयः—तेन देशे, समाजे, निजसम्प्रदाये, सूत्रार्थदाने, जन-सम्मितौ च अमोघर-त्नत्रय-सश्रयेण निखिलप्रयासे साफल्यम् आप्तम् ।

भावानुवादः—उन्होने रत्नत्रय के सम्यगाश्रय के द्वारा तथा आगमव्याख्याओं के द्वारा देश, समाज एवं निजसम्प्रदाय के अभ्युत्थान के प्रत्येक प्रयास में सदा सफलता प्राप्त की ।

**प्रभावयुक्तस्य वचोनिशम्य, पन्थाः श्रितो धर्ममयो जनौघैः ।**
**जीवैश्च लब्धोऽभयदानराशिः, त्यागादिकृत्यं विदधुस्तदीयाः ।।७३।।**

अन्वयः—प्रभावयुक्तस्य तस्य वचः निशम्य जनौघैः धर्ममयः पन्थाः श्रितः । जीवैश्च अभयदानराशिः लब्धः । तदीयाश्च त्यागादिकृत्यं विदधुः ।

भावानुवादः— युवाचार्य के प्रभावोत्पादक हृदय-स्पर्शी प्रवचनो के द्वारा अनेक व्यक्तियों ने अध्यात्ममार्ग प्राप्त किया । उनके मार्मिक उपदेशो से हजारों

प्राणियों को अभयदान मिला। तथा अनेक श्रावक बन्धुओं ने विभिन्न प्रका
के त्याग-प्रत्याख्यान लिये।

**तत्रापि बोधस्य विधेर्विधाने, लग्नो मनोयोग-पुरस्सरं स।**
**श्रोतुं वचो धर्मसुधाभिषिक्तम्, ध्यानं च धर्तुं व्रतिनोऽभियाताः ॥७४॥**

अन्वयः—स तत्रापि बोधस्य विधेः विधाने मनोयोगपुरस्परं लग्नः। तस्य धर्म
सुधाभिषिक्तं वचः श्रोतुम् ध्यानम् च धर्तुम् तस्य समीपे व्रतिनः अभियाताः।

भावानुवादः—व्यक्तिगत साधना के साथ उनका सम्पूर्ण मनोयोग जन-जन क
ज्ञानप्रदान करने में नियुक्त हो गया। उनके सुधासिक्तअध्यात्मप्रवचनपानहे
तथा आत्मलीनता में वृद्धि हेतु उनके पास अनेक व्रतनिष्ठ श्रावक उपस्थि
होते थे।

**देशस्य धर्मस्य च दुर्दशायाः, तथा समाजस्य मनुष्यतायाः।**
**तमस्स्वरूपं प्रतिरोधकारि, निदानमज्ञानमसौ विवेद ॥७५॥**

अन्वयः—असौ देशस्य धर्मस्य तथा समाजस्य मनुष्यतायाः च दुर्दशायाः तमस्स्व
रूपम् प्रतिरोधकारि निदानम् अज्ञानम् एव विवेद।

भावानुवादः—उन्होंने माना कि देश, समाज एवं मानवता की दुर्दशा तथा इसक
अन्धकाराच्छन्न स्थिति का एक ही कारण है-जन-जन में व्याप्त 'अज्ञान'।

**बलं विना नैव यया जयोऽस्ति, श्रद्धां विना नैव श्रुतस्यसिद्धिः।**
**वित्तं विनानैव समाजसौख्यम्, तथैव बोधेन बिना न मोक्षः ॥७६॥**

अन्वयः—यथा बलं विना जयः नैव अस्ति। श्रद्धां विना श्रुतस्य सिद्धिः नैव।
वित्त विना समाजसौख्यम् नैव। तथाएव बोधेनविना मोक्षः न एव।

भावानुवादः—जैसे शक्ति के अभाव में विजयश्री दुर्लभ है। श्रद्धा के अभाव में
श्रुतज्ञान की सिद्धि उपलब्धि असम्भव है। धन के विना भौतिक सुख प्राप्त
नहीं होता है। उसी प्रकार सम्यग् ज्ञान के अभाव में मोक्ष भी असम्भव है।

**रोगादिनाशाय सुभेषजं स्यात्, वस्तुप्रकाशाय च दीपवर्तिः ।**
**तृषापनोदाय सुशीतलं वा:, अज्ञाननाशाय तथास्तु शिक्षा ।।७७।।**

अन्वयः—यथा सुभेषज रोगादिनाशाय स्यात् । वस्तुप्रकाशाय य च दीपवर्त्तिः । तृषापनोदाय सुशीतलं वाः स्यात् । तथा एव अज्ञाननाशाय शिक्षा अस्तु ।

भावानुवादः—जैसे रोग मुक्ति हेतु समीचीन औषधि, वस्तु प्रकाश हेतु दीप-वर्त्तिका एवं प्यास उपशान्ति हेतु जल आवश्यक होता है । उसी प्रकार अज्ञान की परिसमाप्ति हेतु सुशिक्षा की आवश्यकता है ।

**नो व्येति कालः समएवनित्यम्, पलं-पलं संपरिवर्त्तते सः ।**
**दिनश्य पश्चाद् भवतीह रात्रिः: निशावसाने दिवसोदयोऽपि ।।७८।।**

अन्वयः— कालः सम एव नित्यम् नो व्येति । स पलं-पलं परिवर्त्तते । इह दिनस्य पश्चात् रात्रिः भवति । निशावसाने दिवसोदयः अपि (जायते) ।

भावानुवादः—(उन्होंने कहा) समय सदा समान व्यतीत नहीं होता है । वह प्रतिक्षण परिवर्तित होता रहता है । यहां दिन के पश्चात् रात्रि आती है । और रात्रि व्यतीत होने पर पुनः दिन का उदय होता है ।

**श्री लाल पूज्यो ननु कल्यकाले, औदारिकं कायमपास्य रुग्णम् ।**
**सद्यः प्रयातो दिवमेवमित्यम् वृत्तं श्रुतं तेन विदारकं तत् ।।७९।।**

अन्वयः—श्रीलाल पूज्यः ननु कल्यकाले रुग्णम् औदारिकम् कायम् अपास्य सद्यः इत्थम् दिवम् एव प्रयातः । तेन तत् विदारकम् वृत्तम् श्रुतम् ।

भावानुवादः—(अपने इस प्रचार प्रवास की अवधि में ही एक दिन) युवाचार्य श्री ने सुना कि—आराध्य देव पूज्य श्री श्रीलाल जी म. सा. (कल) ब्राह्म-मुहूर्त मे रूग्ण देह का परित्याग कर दिव्यधाम को प्राप्त हो गए हैं ।

**सहसा श्रुतिवज्रदारुणम्, तन्नो जातमलं विदारकम् ।**
**विकटे समये स कातरो, नाजनि घोरपरीषहं गतः ।।८०।।**

अन्वयः—सहसा श्रुतिवज्रदारुणम् तत् (वृत्तम्) विदारकम् नो अलम् जातम्। घोरपरीषहं गतः स विकटे (अपि) समये कातरः न अजनि।

भावानुवादः—श्रुति के लिए वज्रवत् दारुण इस समाचार को सहसा सुनकर भी युवाचार्य श्री आत्मद्रष्टा बने रहे। उनके लिए यह सन्देश हृदय विदारक नही हुआ। वे विकट परीषह को प्राप्त होकर भी कातर नही हुए। सन्देश प्राप्त हुआ। उस समय उनके बेले दो उपवास का तपश्चरण था। उन्होंने उसे आगे बढ़ाकर आठ दिवस का उपवास कर दिया।

श्रीमज्जवाहरयशोविजयाभिधाने,
नानेशसच्चरणयोश्चरितावधाने।
श्री चन्द्रमौलिकविनिर्मितसत्प्रबन्धे,
तुर्यो जगाम फलतां युवराजसर्गः॥

चतुर्थःसर्गः समाप्तः।

# आचार्य सर्ग:

पंचम सर्ग:–

संघस्य सेवां विधिना विधाय, प्रोच्चे युवाचार्यपदे स्थितः सन् ।
प्रातः प्रभापूर्णरवेः समानो, नूत्नं स आचार्यपदं प्रपेदे ॥१॥

अन्वय:—प्रोच्चे युवाचार्यपदे स्थितः सन् विधिनासंघस्य सेवाँ विधाय प्रातः प्रभापूर्णरवेः समानः स नूत्न आचार्यपदम् प्रपेद ।

भावानुवाद:—युवाचार्यत्व के गरिमामय पद पर रहते हुए यथाविधि संघसेवा समर्पणा के साथ प्रातः कालीन प्रभा से प्रभासित सहस्र रश्मिवत् "आचार्य पद प्राप्त किया ।

शान्तिं प्रपन्ने–विरते विशुद्धे, चित्ते कथं शोकलवोऽभियायात् ।
सूर्योदये भास्वरसंप्रभाभिः, संजायते किं तमसो विलासः ? ॥२॥

अन्वय:—शोकलव शान्तिं प्रपन्ने विरते विशुद्धे चित्तेकथम् अभियायात् । भास्वरसप्रभाभि: सूर्योदये (सति) किम् तमस: विलास: संजायते ?

भावानुवाद:—जैसे निरभ्र आकाश में प्रभासमान दिवानाथ के उदित हो जाने पर अन्धकार कैसे स्थिर रह सकता है ? वैसे ही विरक्ति अनुरंजित परम शान्ति विशुद्ध चित्त में शोकांश की व्याप्ति कैसे हो सकती है ?

वाग्मी विभाभिश्च विभासमान:, पट्टेच षष्ठे सुविराजमानः ।
दिदेव सोऽत्यर्थगुणान्दधानः, तिग्मांशुतुल्यः शमनप्रधानः ॥३॥

अन्वय:—विभाभि: च विभासमान: षष्ठे च पट्टे सुविराजमान: ग्मां
शमनप्रधान: अत्यर्थगुणान् दधानः स दिदेव ।

भावानुवाद:—आर्य सुधर्मा स्वामी के ७९ वें पाट पर तथा पूज्य श्री तपोमूर्ति हुक्मीचन्द जी म. सा. के ६ (छठे) पाट पर विराजित होने पर दिव्य प्रभा से प्रभासित सूर्यवत् तेजस्वी, परम शान्ति में निमग्न, प्रबलविमलगुणों के सधारक आचार्य भगवन् अत्यधिक शोभायमान हुए।

**पूर्णस्य पूर्णाप्तगुणैर्यतस्य, नवप्रभाभिश्च समन्वितस्य।**
**शोभा विशिष्टा ननु कापि जाता, रम्या प्रभातेषु यथाम्बुजश्रीः ॥४॥**

अन्वयः—पर्याप्तगुणैः यतस्य, पूर्णस्य नवप्रभाभिः समन्वितस्य च प्रभातेषु रम्या अम्बुजश्रीः यथा ननु का अपि विशिष्टा शोभा जाता।

भावानुवाद:—आचार्य देव की तत्कालीन शोभा, समस्त गुणों से संयत नूतन दैहिककान्ति से समन्वित, प्रात:कालीन जलज की शोभा के तुल्य विशिष्ट रूपेण ही प्रदीप्त हुई।

**पूर्वं च पट्टोपरि संस्थितानाम्, आचार्यरूपे भुविविश्रुतानाम्।**
**जिनेन्द्रकृत्शासन शासकानाम्, संक्षेपतः कीर्तनमाचरामि ॥५॥**

अन्वयः—पूर्वम् पट्टोपरिसंस्थितानाम् आचार्यरूपे भुवि विश्रुतानाम्, जिनेन्द्रकृत्-शासनशासकानाम् संक्षेपतः कीर्तनम् आचरामि।

भावानुवाद:—आपसे पूर्व पाट परम्परा के रूप में आचार्य पद से विभूषित, सुप्रसिद्ध जिनशासन के सम्यक्-अनुशासक आचार्य पचक का संक्षिप्त परिचय प्रस्तुत कर रहा हूं।

**सुधर्मसूरि प्रथिते सुपट्टे, बभूव हुक्मी गुरुनामधेयः।**
**आचार्यवर्यः पट्टदूरदर्शी, पथश्च नव्यस्य विभासकोऽसौ ॥६॥**

अन्वयः—सुधर्मसूरिप्रथिते सुपट्टे पट्टदूरदर्शी नव्यस्य पथः विभासकः असौ हुक्मी गुरुनामधेयः आचार्यवर्यः बभूव।

भावानुवाद:—आर्यसुधर्मा स्वामी से प्रवर्तित चौहत्तरवें पाट पर प्रकाण्डप्रतिभा सम्पन्न दीर्घदर्शी आगम सिद्धान्तानुसार अभिनव (क्रियापथ) प्रवर्तक "हुक्मीचन्द" इस संज्ञा से अभिसंज्ञित आचार्य श्रेष्ठ हुए।

**आत्मार्थिसाधुत्वसुधाविशिष्टाः, तस्मादिमे संयमसाधनाय ।**
**परिग्रहत्यागसमाश्रयेण, चारित्रवन्तो मुनयो बभूवुः ।।७।।**

अन्वयः—तस्मात् आत्मार्थिसाधुत्वसुधाविशिष्टाः, संयमसाधनाय, परिग्रहत्यागसमाश्रयेण, चारित्र्यवन्त. च मुनयः बभूवुः ।

भावानुवादः—आचार्य श्री हुक्मीचन्द जी म. सा. की इसी गौरवशाली परम्परा मे उनके अनन्तर साधुत्व–सुधा से अभिषिक्त परिग्रह त्याग के द्वारा कठोर चारित्र–धर्म के अनुपालक, संयमपथ पर गतिशील श्रमणरत्न हुए है । अर्थात् इस परम्परा का श्रमणवर्ग शिथिलाचार–उन्मूलन की दिशा मे प्रवृत्त हुआ ।

**पर्याप्तिमाप्तं जिनसम्प्रदाये, तमो विलीनं पटुदेशनाभिः ।**
**सावद्ययोगाद् विनिवृत्तिपूर्वम्, महाव्रतानां चरण प्रदीप्तम् ।।८।।**

अन्वयः—जिनसम्प्रदाये पर्याप्तिमाप्तं तमः पटुदेशनाभिः विलीनम् । सावद्ययोगात् विनिवृत्तिपूर्वम् महाव्रतानाम् चरणम् प्रदीप्तम् ।

भावानुवादः—जिनशासन के कुछ सम्प्रदायों में बहुत अधिक मात्रा में संव्याप्त-शिथिलाचार रूपी अन्धकार आचार्य श्री हुक्मीचन्द जी म. सा. की ओजस्वी देशनाओं के द्वारा विलीन हो गया । सावद्य प्रवृत्तियो की निवृत्ति के द्वारा महाव्रतो की आचरण परम्परा भी प्रदीप्त हो उठी ।

**आचारशैथिल्यमपास्तमेवम्, गतं स्वतन्त्राचरणं विलीनम् ।**
**धर्मस्य रोचिः पुनराविरासीत्, महात्मनोऽस्यैवसदोपदेशैः ।।९ ।**

अन्वयः—अस्य एव महात्मनः सदा उपदेशेन एवम् आचारशैथिल्यम् अपास्तम् । स्वतन्त्राचरणं विलीनं गतम् । धर्मस्य रोचिः पुनः आविरासीत् ।

भावानुवादः—आचार्यप्रवर के मर्मस्पर्शी प्रवचनो के द्वारा व्याप्तआचारसम्बन्धी शैथिल्य समाप्त हुआ । श्रमण वर्ग मे चली आ रही स्वच्छन्दवृत्ति भी समाप्त हो गई । पुनः इस धरा पर धर्म का प्रकाश प्रज्ज्वलित हुआ ।

**जातः तपस्याचरणेषु लग्नः, स्वाध्यायसत्यादिषु पूर्णमग्नः ।**
**शैत्ये च घोरे वसनैकधारी, परीषहं सोढुममोघशक्तिः ॥१०॥**

अन्वयः—परीषहं सोढुम् अमोघशक्तिः, स्वाध्यायसत्यादिषु पूर्णमग्नः, घोरे च शैत्ये वसनैकधारी तपस्याचरणे मग्नः जातः ।

भावानुवादः—(उन आचार्य श्री की देहतितिक्षा वृत्ति अनुपमेय थी) वे परीषह सहन करने में अमापशक्ति के धारक थे । स्वाध्याय सत्यादि की साधना में सतत संलग्न रहते । कठोरतम शीतकाल मे भी एक ही वस्त्र (चादर) धारण करते हुए उग्र तपश्चरण में लीन रहते थे ।

**गुणैर्विशिष्टात्सहनस्वभावात्, षड्जीवपालात् जनवन्दनीयात् ।**
**तस्मादसावाचरणप्रधानः, सत्सम्प्रदायश्च विनिर्गतोऽभूत् ॥११॥**

अन्वयः—असौ आचरणप्रधानः सत्सम्प्रदायः गुणैः विशिष्टात्, सहनस्वभावात् षड्जीवपालात्, जनवन्दनीयात्, तस्मात् (हुक्मीचन्द) विनिर्गतः अभूत् ।

भावानुवादः—चारित्र प्रधान, संयमीयगुणों से युक्त, परीषहजयी, षड्जीवनिकाय सरक्षक यह सम्प्रदाय उन विश्ववन्द्य महान् तपोधनी आचार्य श्री हुक्मीचन्द जी म. सा. से ही प्रवर्तित हुआ ।

**ज्ञात्वाविरुद्धं स्वगुरुं यथार्थम्, कृता प्रशंसा निजनिन्दनं च ।**
**प्रासीददस्मिन्गुरुरेकदेवो, व्यक्तः क्षमायाः महिमा विशिष्टः ॥१२॥**

अन्वयः—तेन स्वगुरुं विरुद्धं ज्ञात्वा यथार्थम् (तस्य) प्रशंसा कृता । निजनिन्दनं च कृतम् । तेन एकदेवः गुरुः अस्मिन् प्रासीदत् । क्षमायाः विशिष्टः महिमा व्यक्तः (अभवत्) ।

भावानुवादः—आचार्य श्री हुक्मीचन्द जी म. सा. ने देखा, कि मेरे गुरुदेव स्वयं शुद्धसंयम के अनुकूल नहीं चल रहे हैं । तथापि वे आत्मनिन्दा एवं गुरुप्रशंसा ही करते रहे । इससे गुरुवर्य प्रसन्न हुए कि इसकी कठोर क्रियाराधन की इच्छा प्रशस्त है ।

**तदा प्रसन्नः स गुरुः सभायाम्, व्याख्यानकाले पुनरेवमूचे ।**
**श्री हुक्मचन्द्रोऽस्ति महान्प्रतीकः, तुर्यारकस्यैव पवित्र–चेताः ॥१३॥**

अन्वयः—तदा प्रसन्नः स गुरुः सभायाम् व्याख्यानकाले पुनः एवम् ऊचे । पवित्र-चेताः श्री हुक्मीचन्द्रः तुर्यारकस्य एव महान् प्रतीकः (अस्ति) ।

भावानुवादः—अनन्तर प्रसन्न होकर गुरुवर्य (आचार्यश्रीलाल चन्द जी म. सा.) ने प्रवचन सभा के मध्य कहा कि—"पवित्रचेता मुनिश्रीहुक्मीचन्द जी चतुर्थ आरे के ही महान् प्रतीक है ।

**पूर्वं मया पूर्णविनिन्दितोऽपि, द्वेषं न चक्रे मयि कंचनापि ।**
**क्षमाप्रधानोत्तमसाधुरूपः सम्माननीयोऽखिलधर्मसंघैः ॥१४॥**

अन्वयः—मया पूर्वं पूर्णं विनिन्दितः अपि मयि कंचन अपि द्वेषम् न चक्रे । (अयम्) क्षमाप्रधानोत्तमसाधुरूपः अखिलधर्मसंघैः सम्माननीयः (स्यात्) ।

भावानुवादः—मैने कुछ समय पूर्व तक इनकी बहुत निन्दा की, किन्तु इन्होंने मुझसे कुछ भी द्वेष नही किया । वास्तव में ये क्षमामूर्ति उच्चकोटि के महा-मुनि है । सभी धर्मसंघों को चाहिये कि वे इनका हार्दिक सम्मान करें ।

**तत्सम्प्रदायो गुरुणा गृहीतः, उद्धार कर्मापि विधेः कलापे ।**
**चकार कल्पेन तदा सरेजे, संस्कारमासाद्य सुवर्णरूपः ॥१५॥**

अन्वयः—तत्सम्प्रदायः गुरुणा गृहीतः । स विधे कलापे कल्पेन उद्धारकर्म अपि चकार । तदा स संस्कारम् आसाद्य सुवर्ण रूपः सरेजे ।

भावानुवादः—और इस प्रकार पूज्य गुरुवर श्री लालचन्द जी म. सा. ने स्वयं मुनि श्री हुक्मीचन्द जी म. सा. द्वारा गृहीत कठोर संयमीय मर्यादाओं को ग्रहण कर लिया । इस प्रकार वे हुक्मीचन्द जी म. सा. कठोर क्रिया उद्धारक के रूप मे संस्कार प्राप्त स्वर्णवत् प्रदीप्त होने लगे ।

**तत्रैव तस्थौ तदनन्तरं च, आचार्यपट्टे शिवलालदेवः ।**
**महाप्रतापः परमस्तपस्वी, विशिष्टविद्वान् विदुषां वरेण्यः ॥१६॥**

अन्वयः—तदनन्तरं च तत्र एव (पट्टे) आचार्य पदे महाप्रतापः परम। तपस्वी विशिष्टविद्वान्, विदुषां वरेण्यः शिवलाल स्वामी तस्थौ ।

भावानुवादः—आचार्य प्रवर श्री हुक्मीचन्द जी म. सा. के पश्चात् उस परम्परा के आचार्य पद पर प्रचण्ड प्रतापवान् महातपोधनी, प्रकाण्डविद्वान्, विद्वत्पूज्य आचार्य श्री शिवलाल जी म. सा. प्रतिष्ठित हुए ।

**स्वस्यापरस्यापि मतस्य बोद्धा, धर्मोपदेशे नितरां समर्थः ।**
**मन्दायितं द्योतपथं प्रयातम्, तस्यैव हेतोर्जिनशासनं तत् ।।१७।।**

अन्वयः—स्वस्य अपरस्य अपि मतस्य बोद्धा धर्मोपदेशे नितरां समर्थः (आसीत्)। तस्य एव हेतोः मन्दायितं तत् जिनशासनम् द्योतपथं प्रयातम् ।

भावानुवादः—वे (आचार्य श्री शिवलाल जी म. सा.) स्वसिद्धान्त एवं पर-सिद्धान्त के विशिष्ट ज्ञाता थे । सक्षमधर्मप्रवक्ता थे । कालक्रम से मन्द हुआ जिनशासन उनके शासन काल में बहुत अधिक प्रकाशित हुआ ।

**सन्देहमासाद्य च कोपि यातः, तन्निर्णयार्थं स्वयमेव पार्श्वे ।**
**स्नेहेन पश्यन् मधुरैर्वचोभिः, चक्रे समाधानमनेकतर्कैः ।।१८।।**

अन्वयः—कः अपि सन्देहम् आसाद्य तन्निर्णयार्थम् स्वयम् एव (तस्य) पार्श्वे यातः । स्नेहेन पश्यन् मधुरैः वचोभिः अनेकतर्कैः समाधानम् चक्रे ।

भावानुवादः—यदि कोई जिज्ञासु उनके चरणों में समाधान हेतु उपस्थित होता तो वे अतिस्नेहदृष्टया अवलोकन कर यौक्तिक तर्कों द्वारा मधुर वचनों के द्वारा उसका समाधान करते ।

**तेजोविशिष्टः सवितेवदीप्तः, वायोरिवायं प्रथितः पवित्रः ।**
**सौम्याकृतौ चन्द्रयशोऽवदातो, धरासमानः सरलः क्षमायाम् ।।१९।।**

अन्वयः—सविता इव दीप्ततेजोविशिष्टः, वायोः इव पवित्रः प्रथितः, सौम्याकृतौ चन्द्रयशोऽवदातः क्षमायाम् सरलः धरासमानः (अभवत्) ।

भावानुवादः—वे सूर्यवत् प्रचण्ड तेजस्वी, पवनवत् पवित्र, चन्द्रवत् सौम्य, एवं निर्मलसुन्दर आकृति से युक्त तथा पृथ्वीवत् उदार क्षमाशील थे ।

**तृतीयपट्टं ह्युदयेनयुक्तम्, श्री सागरं प्राप गुणाभिलाषि ।**
**योग्यस्य योगेन च तस्य शोभा, रत्नं गतं कांचनसन्निधाने ।।२०।।**

अन्वयः—गुणाभिलाषि तृतीय–पट्टं हि उदयेन युक्तं श्रीसागरं प्राप योग्यस्ययोगेन च तस्य शोभा अभवत् । कांचनसन्निधाने रत्नं गतम् इव ।

भावानुवादः—गुणनिधान तृतीय पट्ट ने आचार्य श्री उदयसागरजी म. सा. को प्राप्त किया । अर्थात् आचार्य श्री उदयसागर जी म. सा. द्वारा इस पाट परम्परा का तृतीय पद उपशोभित हुआ । योग्य की सन्निधि से योग्य शोभित होता ही है । जैसे स्वर्ण को सन्निधि में रत्न ।

**आसीद् विशिष्टा स्मृतिशक्तिरस्य, बुद्धेरगाधं बलमेव दिव्यम् ।**
**व्याख्यानशैली ललिता नितान्तम्, चारित्रसम्पत्तिरतीव हृद्या ।।२१।।**

अन्वयः—अस्य स्मृतिशक्तिः विशिष्टा आसीत् । बुद्धेः अगाधं दिव्यम् बलम् एव । व्याख्यानशैली नितान्तम् ललिता । चारित्रसम्पत्तिः अतीव हृद्या (आसीत्) ।

भावानुवादः—आचार्य श्री उदयसागर जी म. सा. विशिष्ट स्मरण शक्ति के स्वामी थे । उनके पास दिव्य ऊर्जस्वल प्रतिभा थी । उनकी प्रवचनशैली लालित्य पूर्ण थी । तथा उनकी अगाध चारित्र शक्ति भी भव्य रमणीय थी ।

**गौराङ्गरूपः कमनीयकान्तिः, विशालभालः श्वसनीयनेत्रः ।**
**प्रभापरीतास्य मनोज्ञचन्द्र, पीयूषवाचस्पतिरद्वितीयः ।।२२।।**

अन्वयः—गौराङ्गरूपः, कमनीयकान्तिः, विशालभालः श्वसनीयनेत्र, मनोज्ञचन्द्रः अद्वितीयः पीयूषवाचस्पतिः (अभवत्) अस्यप्रभा परीता (आसीत्) ।

भावानुवादः—उनकी दैहिककान्ति भी गौरवपूर्ण प्रभास्वर थी । विशालभाल, आश्वासप्रदनेत्र, युगल तथा चन्द्रवत् सौम्य तथा पीयूष वर्षा वाणी में वे वृह-

स्पर्ति से प्रतिस्पर्धा करने वाले थे। तत्कालीन मुनिमण्डल मे अपनी सानी के वे एक ही थे। उनकी प्रभा सर्वत्र विकीर्ण थी।

**चतुर्थपट्टे मुनिचौथनामा, सूर्यो यथा पूर्वगिरौ दिदेव।**
**महाक्रिया-पात्र-पवित्र-साधुः, कषायहीनः सहनस्वभावः ॥२३॥**

अन्वयः—महाक्रियापात्रपवित्रसाधुः, कषायहीनः सहनस्वभावः मुनिचौथस्वामी आचार्यः चतुर्थपट्टे पूर्वगिरौ यथा सूर्यः दिदेव।

भावानुवादः—इस परम्परा के चतुर्थ पाट पर सम्पूर्ण श्रमण मर्यादा के अनुरूप परिपालक, कषायरहित, परीषहजेता प्रातःकालीन सूर्यवत् तेजस्वी चौथमल जी म. सा. सुशोभित हुए।

**सौम्यां सुरूपाकृतिमादधानः, बोधं जनेभ्यः सरसंददानः।**
**दोषं समग्रं त्वरया जहानः, आसीद्गुरुः स प्रशमप्रधानः ॥२४॥**

अन्वयः—स गुरुः सौम्यां सुरूपाकृतिम् आदधानः। सरसं बोधं जनेभ्यः ददानः। समग्रदोष त्वरया जहानः। प्रशमप्रधानः आसीत्।

भावानुवादः—वे गुरुवर्य सौम्य-दर्शनीय छवि वाले, जन-जन को सद्बोध प्रदाता समग्र दोष परित्यागी, शान्तवृत्तिप्रधान थे।

**चारित्रशुद्धिः विमला च बुद्धिः ज्ञानं विशिष्टं जनबोधकारि।**
**वाचः पटुत्वं भुविनिर्भयत्वम्, जज्ञेस्मृतेः शक्तिविचित्ररूपम् ॥२५॥**

अन्वयः—(तस्य) चारित्रशुद्धिः विमला च बुद्धिः जनबोधकारिविशिष्टं ज्ञानं। वाचः पटुत्वम्। भुवि निर्भयत्वम्। स्मृतेः शक्तिविचित्ररूपम् जज्ञे।

भावानुवादः—वे विशिष्ट चारित्र निधि, निर्मल प्रज्ञा के धनी रूप जन प्रबोधक, विशिष्ट ज्ञान के धारक प्रवचन पटु एवं स्मृति के अतुलनीय क्षमता के संवाहक थे।

**कर्त्तव्यनिष्ठो निरहंकृतिश्च, कारुण्यपूर्णः श्रुतबोधदोऽभूत्।**
**स्वात्मस्वरूपे परिनिष्ठितोऽसौ, लीनः कृतज्ञः स्वपरोपकारे ॥२६॥**

परस्पर नैक मतानि जज्ञिरे । शुभेषुकार्येषु विघ्ना च भवन्ति !

भावानुवादः—स्वाधीनता के लिए किये गये प्रयासो में ।इसलिए सफलता नही मिल पा रही है कि) विभिन्न दलों मे समन्वय स्थापित नही हो सका । यह सहज है कि अच्छे कार्यो में विघ्न आते ही है ।

## स्वाधीनता के विषय में आपश्री के उद्गार थेः—

स्वधर्मरक्षा न विदेशिशासने, विनष्टरूपा तत एव संस्कृतिः ।
ततः स्वरूपस्य महत्त्वमिच्छता, स्वतन्त्रताप्राणपणै विधीयताम् ।।४४।।

अन्वयः विदेशिशासने स्वधर्मरक्षा न । तत एव सस्कृतिः विनष्टरूपा जाता !
ततः स्वरूपस्य महत्त्वम् इच्छता (मानवेन) प्राणपणैः स्वतन्त्रता विधीयताम् ।

भावानुवादः—चूंकि विदेशी शासन मे स्वधर्म की रक्षा नही हो सकती है । अतः एव भारतीय संस्कृति का ह्रास हुआ है । अब स्वाधीनता के स्वरूप एवं महत्त्व को समझने वालों के लिए यह आवश्यक हो जाता है कि वे प्राणपण के साथ जन्मसिद्ध स्वाधीनता की प्राप्ति हेतु प्रयत्नशील बनें ।

अराज्यभावश्च विजृम्भतेतराम्, न लाभयोगः परतन्त्रजीवने ।
न जायते धर्मसुधाप्रपाणकम्, भवन्तु पाशपरिभेत्तुमुद्यताः ।।४५।।

अन्वयः—परतन्त्रजीवने अराज्यभावः विजृम्भतेतराम् । न कोऽपि लाभयोगः भवति ? धर्मसुधाप्रपाणकम् न जायते । अतः सर्वे पाशपरिभेत्तुम् उद्यताः भवन्तु ।

अन्वयः सदार्यवर्यस्य देशनादिभिः प्रभावजातेन सुधारसम्भृतिः अजायत । आभिः स्वयम् एव अनल्पभावतः समुज्ज्वलं वस्त्रम् धारितम् ।

भावानुवादः आचार्यदेव के इन ओजस्वी आगमिक उपदेशों से समाज परिष्कार के साथ विधवा महिलाओं पर भी गहरा प्रभाव पड़ा । अत्यधिक प्रभावोत्पादक सुधार हुआ । विधवाओं ने सादा समुज्ज्वल परिधान धारण किया ।

**विहाय कायस्य सृतं प्रसाधनम्, व्यधायि ताभिश्च समग्रजीवनम् ।**
**सुसंयतं तत्सरलं विशेषतो, बभौ तदार्या–महित–स्वरूपकम् ॥४१॥**

अन्वयः—कायस्य सृतं प्रसाधन विहाय ताभिः तत् समग्रजीवनम् विशेषतः सुसंयत सरलम् च व्यधायि । तदा तासाम् आर्यामहितस्वरूपकम् बभौ ।

भावानुवादः– उन्होंने शरीर के लिए अपेक्षित साधनों के अतिरिक्त सभी प्रसाधनों का परित्याग कर दिया । अपना समस्त जीवन सुसंयत एवं सादगी पूर्ण बना लिया और तब उनका श्रेष्ठ महिलोचित जीवन प्रशंसित हो चमक उठा ।

**सामाजिकजीवन के सन्दर्भ में आचार्यश्री का उपदेश थाः–**

**कठोरता स्वार्थसमाश्रयो नच, भवेत् कदाचिद्धिसमाजजीवने ।**
**न पाल्यते येन दया समन्ततः, परोपकारश्च, न मानवाऽभिधः ॥४२॥**

अन्वयः—कदाचित् हिसमाजजीवने कठोरता स्वार्थसमाश्रयः न च भवेत् । येन समन्ततः दया, परोपकारः च न पाल्यते समानवाभिधः न ।

भावानुवादः—सामाजिक जीवन में कभी भो कठोरता तथा स्वार्थपरायणता नहीं आनी चाहिये । जो व्यक्ति पूर्णरूपेण दयाभाव अथवा परोपकार का पालन नहीं करता । वह मानव कहलाने का भी अधिकारी नही है ।

**स्वतन्त्रता हेतु विधीयमानके, प्रयत्नजाते च दलानि दूरतः ।**
**परस्परं नैकमतानि जज्ञिरे, भवन्ति विघ्नाश्च शुभेषु कर्मसु ॥४३॥**

अन्वयः—स्वतन्त्रताहेतुविधीयमानके प्रयत्नजाते च दूरत एव दलानि नियन्तं

परस्पर नैक मतानि जज्ञिरे । शुभेषुकार्येषु विघ्ना च भवन्ति !

भावानुवादः—स्वाधीनता के लिए किये गये प्रयासों में (इसलिए सफलता नही मिल पा रही है कि) विभिन्न दलों में समन्वय स्थापित नही हो सका । यह सहज है कि अच्छे कार्यों में विघ्न आते ही है ।

## स्वाधीनता के विषय में आपश्री के उद्गार थेः—

**स्वधर्मरक्षा न विदेशिशासने, विनष्टरूपा तत एव संस्कृतिः ।**
**ततः स्वरूपस्य महत्त्वमिच्छता, स्वतन्त्रताप्राणपणं विधीयताम् ।।४४।।**

अन्वयः विदेशिशासने स्वधर्मरक्षा न । तत एव सस्कृतिः विनष्टरूपा जाता ! ततः स्वरूपस्य महत्त्वम् इच्छता (मानवेन) प्राणपणैः स्वतन्त्रता विधीयताम् ।

भावानुवादः—चूंकि विदेशी शासन में स्वधर्म की रक्षा नही हो सकती है । अतः एव भारतीय सस्कृति का ह्रास हुआ है । अब स्वाधीनता के स्वरूप एवं महत्त्व को समझने वालों के लिए यह आवश्यक हो जाता है कि वे प्राणपण के साथ जन्मसिद्ध स्वाधीनता की प्राप्ति हेतु प्रयत्नशील बने ।

**अराज्यभावश्च विजृम्भतेतराम्, न लाभयोगः परतन्त्रजीवने ।**
**न जायते धर्मसुधाप्रपाणकम्, भवन्तु पाशंपरिभेत्तुमुद्यताः ।।४५।।**

अन्वयः—परतन्त्रजीवने अराज्यभावः विजृम्भतेतराम् । न कोपि लाभयोगः भवति ? धर्मसुधाप्रपाणकम् न जायते । अतः सर्वे पाशपरिभेत्तुम् उद्यताः भवन्तु ।

भावानुवादः—यह स्वाभाविक है कि परतन्त्र जीवन में अराजकता का निवास होता है । निरन्तर अलाभ बना रहता है । धर्मसुधा का पान भी प्राप्त नहीं होता है । अतः यह नितान्त वांछनीय है कि देश के समस्त नागरिक देश में व्याप्त पराधीनता (गुलामी) को दूर करने के लिए प्रयत्नशील बनें ।

**सुखी कदा स्वर्णिमरम्यपिंजरे रमाकटाक्षैः परिवीक्षितोऽनिशम् ।**
**स्वतन्त्रतामेत्य वितत्य पक्षती, शुको नभस्युत्पतितुं समीहते ।।४६।।**

अन्वयः शुकः स्वर्णिमरम्यपिंजरे अनिशम् रमाकटाक्षैः परिवीक्षितः कदा सुखी भवति । स तु स्वतन्त्रताम् एत्य पक्षती वितत्य नभसि उत्पतितुं समीहते ।

भावानुवादः—स्वर्णनिर्मितपिञ्जर में रहता हुआ भी तथा वनिताओं के कटाक्ष भरे नयनों से सहलाया जाता हुआ भी शुक पक्षी (तोता) सुखी कहां होता है ? वह तो पूर्ण स्वतन्त्रता प्राप्त कर अपने दोनो पंखों को फैलाकर मुक्त गगन की सैर ही करना चाहता है ।

**अशान्तिसेना च विलोक्यते भृशम्, समाजपीडा परिलक्ष्यते ध्रुव ।**
**महेर्विषं यत्परिपीयतेऽधुना, निदानमेकं धनसंग्रहोऽवनौ ।।४७।।**

अन्वयः—भृशम् अशान्तिसेना विलोक्यते ।ध्रुवम् समाजपीडा परिलक्ष्यते । अधुना यत् अहेः विषम् परिपीयते । तत्र अवनौ एकम् निदानम् धनसग्रह एव !

भावानुवादः—सर्वत्र अशान्ति की सेना ही परिलक्षित होती है । सम्पूर्ण समाज पीड़ा से कराह रहा है । आज दुःख रूपी नाग–विष पीना पड़ रहा है। इसका एक ही करण है–पृथ्वी पर मानवों द्वारा अनीतिमय धन संग्रह का प्रसार ।

**जनिर्निवासो विविधं विकासनम्, सुरक्षणं यत्र च भोजनादिभिः ।**
**सुशैशवेयस्य रजस्सुखेलनम्, स्वदेशभक्तिः परमा विराजताम् ।।४८।।**

अन्वयः—यत्र जनिः, निवासः, विविधं विकासनम्, भोजनादिभिः च सुरक्षणम् । यस्य रजस्सु शैशवे खेलनम् जातम् । अतः परमास्वदेशभक्तिः विराजताम् ।

भावानुवादः—जिस पवित्र भू पर जन्मे, जिसकी धूलि में बाल्यकाल में खेले। विकसित हुए । तथा आज भी जहां रह रहे हैं । उस मातृ भू के प्रति स्वदेश प्रेम के रूप में भक्ति का भाव होना चाहिये ।

**स्वकीयवित्तं स्वमेवर्मार्जितम्, प्रयत्नसाध्यं श्रमसाधनादिभिः ।**
**समाजदेशस्य कृते यथारुचि; ममेतिनेदं च समर्प्यतां जनैः ।।४९।।**

अन्वयः श्रमसाधनादिभिः प्रयत्नसाध्यम् स्वकीयम् वित्तं स्वयम् एव अर्जितम् ।

तत् यथारुचि समाजदेशस्य कृते जनैः इदम् मम न इति समर्प्यैताम् ।

भावानुवादः—परिश्रम पूर्ण साधना के द्वारा उपार्जित अपनी सम्पत्ति को यथा-शक्ति देश एवं समाज के लिए इस भावना से समर्पित कर देना चाहिये कि "इस पर मेरा ही अधिकार नही है ।

**सदाधिकारोऽमितकर्मसाधने, न जातु जायेत फलेषु कामना ।**
**निकामभावेन कृतस्य कर्मण: फलस्य योगोऽस्तु समाजनिर्मितौ ।।५०।।**

अन्वयः—अमितकर्मसाधने सदा अधिकारः अस्तु । फलेषु जातु कामना न जायेत । निकामभावेन कृतस्यकर्मणः फलस्य च योगः समाजनिर्मितौ अस्तु ।

भावानुवादः—हमारा अधिकार अधिक से अधिक सत्कार्य करने मे है । फल की कामना मे नही । साथ ही निष्काम भाव से किये गये फल का विनियोग भी समाज के भव्य निर्माण के लिए होना चाहिये ।

**यथा न वित्तस्य फलम् समीहूयते तथैव भावोपि तपस्सुचर्यते ।**
**ममत्वमेतत् सकलेषु वस्तुषु, निरासनीयं दुरितान्निवृत्तये ।।५१।।**

अन्वयः—यथा वित्तस्य फलम् न समीहूयते । तथा एव तपस्सु भावः अपि चर्यते । दुरितात् निवृत्तये सकलेषु वस्तुषु एतत् ममत्वम् निरासनीयम् ।

भावानुवादः - समस्त पदार्थो में ममत्व—आसक्ति भाव का परित्याग कर देना चाहिये । जिससे सहजतया पापों की निवृत्ति हो जाय । जैसे धन के फल की कामना नही की जाती है । वैसे तप साधना के फल की कामना नहीं करनी चाहिये ।

**विशिष्टभक्तेषु बहुत्वसंख्यके, ष्वशेषपूज्यस्य धरामरुस्थले ।**
**प्रधानमन्त्रित्वपदे प्रतिष्ठिते, ह्यभूदसौ श्रीं महता महोदय: ५२।।**

अन्वयः—अशेष पूज्यस्य बहुत्व सख्यकेषु विशिष्टभक्तेषु धरामरुस्थले प्रतिष्ठिते प्रधानमन्त्रित्वपदे च असौ श्रीमेहता महोदय अभूत् ।

भावानुवादः—महिमा मण्डित आचार्यप्रवर के अनेक विश्व भक्तों में बीकानेर राज्य के प्रधानमन्त्री पद पर प्रतिष्ठित श्री "सर मन्नू भाई मेहता" भी एक थे ।

**सुपूज्यसन्देशनया प्रबोधनैः समाजमुन्नेतुमनाः विधेयकम् ।**
**सुबालवृद्धोद्वहनस्यरोधकमपारयत्तत्र विधानसम्मितौ ॥५३॥**

अन्वयः—स समाजम् उन्नेतुमनाः विधानसम्मितौ सुपूज्यसन्देशनया प्रबोधनैः सुबालवृद्धोद्वहनस्यरोधकम् विधेयकम् अपारयत् ।

भावानुवादः—आचार्य प्रवर के ओजस्वी प्रवचनों से प्रेरित होकर सर मन्नू भाई ने वहां की विधानसभा में बाल विवाह एवं वृद्ध विवाह का प्रतिबन्धक विधेयक (कानून) पास करवाया ।

**असौ विदेशे गमनाय तत्परो, नियुज्यते भारतभाग्यनिर्णये ।**
**तदा यथाशक्ति विवेकसम्बलो, विधास्यते तं नयधर्मपूर्वकम् ॥५४॥**

अन्वयः—यदा असौ विदेशे गमनाय तत्परः, भारतभाग्यनिर्णये नियुज्यते ! तदा यथाशक्ति विवेकसम्बलः नयधर्मपूर्वकम् तम् (निर्णयम्) विधास्यते ।

भावानुवादः—'राउण्ड टेबल कान्फ्रेन्स" में विदेश जाते हुए सर मन्नू भाई को आचार्य प्रवर ने उद्बोधन प्रदान किया कि "ये भारत-भाग्य निर्णय के लिए विदेश जाने को तत्पर है । इन्हें वहाँ यथाशक्ति विवेकपूर्वक भारत के भाग्य का निर्णय लेना चाहिये ।

**अमुष्य पन्थानमलंकरिष्यते, समुज्ज्वलं सत्यमनल्पशक्तिकम् ।**
**विवर्तते वस्तु सदैव भूरिशः परं तदेकं नियतं विभासते ॥५५॥**

अन्वयः—अनल्पशक्तिकं समुज्ज्वल सत्यम् अमुष्य (मेहता महोदयस्य) पन्थानं अलंकरिष्यते । वस्तु सदा एव भूरिशः विवर्तते । पर तत् एकम् सत्यम् नियत विभासते ।

भावानुवादः—"प्रचन्न शक्ति सम्पन्न समुज्ज्वल सत्य ही इनका मार्ग प्रश

करेगा। संसार के समस्त पदार्थों में परिवर्तन अवश्यम्भावी है, किन्तु एक मात्र सत्य ही अपरिवर्त्य रूप में प्रभासित होता है।

स्वतन्त्रबुध्द्या सुविचारमार्गणैः विहाय स्वार्थं च परार्थसिद्धये।
विधेय एवं च विवादनिर्णयस्तदैव नीतेश्च पदं प्रशस्यते।५६॥

अन्वयः—सुविचारमार्गणैः स्वतन्त्रबुध्द्या पदार्थसिद्धये स्वार्थ विहाय एवम् विवाद निर्णयः च विधेयः। तदा एव नीतेः पदम् प्रशस्यते।

भावानुवादः—"नीति का मार्ग तभी प्रशस्त होता है, जबकि प्रशस्त विचारशक्ति से स्वतन्त्र प्रज्ञा का उपयोग कर उपकार के लिए वैयक्तिक स्वार्थों का परित्याग कर विवादों का निर्णय किया जाय।

विरोधमार्गे यदि सर्वशक्तयः, प्रकामशक्ताः समुपस्थिताः भुवि।
समस्तविश्वस्य, नभीतिभावनम् तदापि सत्यस्य समाश्रयो भवेत्॥५७॥

अन्वयः—यदि विरोधमार्गे भुविसमस्तविश्वस्य प्रकामशक्ताः सर्वशक्तयः समुपस्थिताः (स्युः) तदापि भीतिभावन न। तदापि सत्यस्य समाश्रयः भवेत्!

भावानुवादः—पृथ्वी पर स्थितसमस्तविश्व की समग्र समर्थ शक्तियां भी यदि विरोध में उपस्थित हो जाय तथापि निर्भीकतापूर्वक सत्य का ही आश्रय लेना चाहिये।

सदा विधेया परमार्थतत्त्वतो, जनस्य सेवा जनिलाभमिच्छता।
निजार्यभक्त्या सुविचारपूर्वकम् विमर्शशीलेन नरेण सर्वथा॥५८॥

अन्वयः—विमर्शशीलेन नरेण निजार्यभक्त्या सुविचारपूर्वकं जनिलाभम् इच्छता परमार्थतत्त्वतः जनस्य सेवा सदा विधेया।

भावानुवादः—जीवन के परम उद्देश्य की अवाप्ति के इच्छुक चिन्तनशीलमानव के लिऐं आवश्यक है, कि वह परमोच्यभावपूर्णविचारों के द्वारा परमार्थ रूप से जन सेवा के प्रति समर्पित हो।

**इदं मदीयंत्वहमेवमीश्वरः अनेन पापस्य विभूतिरर्ज्यते ।**
**अतोहि गर्वस्य निरासहेतवे, सदैव सर्वस्वनिरास इष्यते ।।५९।।**

अन्वयः— 'इदम् मदीयम्'' तु अहम् एव ईश्वरः अस्मि । अनेन विचारेण पापस्य विभूतिः अर्ज्यते ! अतः गर्वस्य निरासहेतवे सदा एव सर्वस्वनिरासः इष्यते !

भावानुवादः—'' यह मेरा है । मै ही सर्वप्रकारेण शक्तिसम्पन्न हू ।'' इस प्रकार के अहकारमूलकविचारो से पाप की वृद्धि होती है । अतः अहकार वृत्ति के उन्मूलनहेतु सदा अपने सर्वस्व का भी त्याग करना चाहिये ।

**अयं च सर्वैः मनुजैरुपस्थितैः, सहानुभूतेरभिनन्दनादिभिः ।**
**विभूषणीयः शुभशंसनादिभिः, ध्रुवं गमिष्यन् निजदेशकार्यतः । ६०।।**

अन्वयः—अयम् मेहतामहोदयः निजदेशकार्यतः ध्रुव विदेश गमिष्यन् उपस्थितः सर्वैः मनुजैः सहानुभूतेः अभिनन्दनादिभिः शुभशंसनादिभिः च विभूषणीयः ।

भावानुवादः—''सर मन्नू भाई मेहता भारत के प्रतिनिधि के रूप मे भारतीय-संस्कृति का आदर्श प्रस्तुत करने के लिए विदेश जा रहे है । अतः सत्यनिष्ठा मे सफलता हेतु उपस्थित समस्त जन समूह की ओर से इन्हे सहानुभूति एवं शुभ कामनाओं से विभूषित करना चाहिये ।

---

**विशेष टिप्पणी.—**

सर मन्नू भाई मेहता अपनी सत्यनिष्ठा का परिचय देने के लिए, विदेश जा रहे है । भारतीय जनता सत्य की उपासिका रही है । सत्य की निष्ठावाले व्यक्तियो को प्रोत्साहित किया है । इस समय भी सत्यनिष्ठा की भावना रखने वाले सर मन्नू भाई मेहता की पूर्वोक्त भावना को उत्साहित करना जनता का कर्तव्य बनता है । वह गुण को प्रश्रय देना है । जो इन्हे प्रश्रय देते है, उसको सम्मानित करते है । वे गुणग्राही पुरुष व्यक्ति के माध्यम मे समाज मे सत्यनिष्ठा एव नैतिकता का वायु मण्डल पैदा करते है । अतः सत्यनिष्ठा वाले जन समुदाय को ऐसे गुणों को प्रोत्साहन देना अपना कर्तव्य मानना चाहिये ।

**अजर्य देशस्य समाजसेविनः प्रबोधिताः बोधविबर्धनादिभिः ।**
**स्वकीयसाधुत्वसमृद्धिपूर्वकम्, परोपकारान्न पराङ्.मुखोऽजनि ॥६१॥**

अन्वयः—आचार्यदेवेन अजर्यदेशस्य समाजसेविनः नराः बोधविबर्धनादिभिः प्रबोधिताः । स स्वकीयसाधुत्वसमृद्धिपूर्वकम् परोपकारात् पराङ्.मुखः न अजनि !

भावानुवादः—इस प्रकार आचार्यदेव ने भारत युवा सेवियों को बहुत अधिक प्रबोधित किया । अपनी श्रमण मर्यादाओं की समृद्धि को अक्षुण्ण रखते हुए भी वे परोपकार से विमुख नहीं हुए । अर्थात् उन्होंने श्रमणमर्यादा एवं परोपकार में समन्वय स्थापित किया ।

**यथा स्वदेशस्य कृते विबोधनम् स्वराष्ट्रभावस्य विचारणं भृतम् ।**
**तथैव धर्मस्य सुधारबोधनो वृतो, निजश्रावकलाभसिद्धये ॥६२॥**

अन्वयः - तत्र यथा स्वदेशस्य कृते विबोधनम् स्वराष्ट्रस्य भावस्य विचारणं भृतम् ! तथा एव निजश्रावकलाभसिद्धये धर्मस्य सुधारबोधनः अपि वृतः !

भावानुवादः—धर्म की यथेष्ट उन्नति की दृष्टि से आचार्यदेव मे स्वराज्य एवं देश जागरण के विचार बहुत गहरे थे । इसी दृष्टि से वे श्रावकसमुदाय में ज्ञान वृद्धि एवं धर्मविस्तार के सन्दर्भ में भी उद्बोधन देते थे ।

**न रात्रिकाले किमपीह भोजनम्, विपाचनीयं निजधर्मरक्षकैः ।**
**प्रजायते तत्र च जीवहिंसनम्, नचैव बुध्वाचरणीयमाविलम् ॥६३॥**

अन्वयः—निजधर्मरक्षकैः नरैः रात्रिकाले इह किमपि भोजनम् न विपाचनीयम् । तत्र च जीवहिंसन प्रजायते । बुध्वा न च एव आविलम् आचरणीयम् ।

भावानुवादः—आत्म-धर्म की सुरक्षा हेतु मनुष्यों के लिए आवश्यक है, कि वे रात्रि भोजन का परित्याग करे । और न रात्रि में भोजन आदि का पचन-पाचन ही करना चाहिये । क्योंकि उसमें बहुत जीवों की हिंसा होती है प्राणी की वहुलता को जानकर दोषयुक्त कार्य का सर्वथा वर्जन करना चाहिये ।

**परस्परं वैरमपास्तमेनसाम् पदं नराणाँ च परम्परागतम् ।**
**सुदेशनां पूज्यवरस्य भास्वराम् निपीय निर्बाधमनर्थशामिनीम् ।६४।।**

अन्वयः—पूज्यवरस्य अनर्थशामिनीम् भास्वराम् सुदेशना निपीय नराणाम् परस्प-रम् परम्परागतम् एनसाम् पदम् वैरम् अपास्तम् !

भावानुवादः—आचार्य प्रवर की समतामयी अनर्थ शामिनी मधुर देशनाओ का श्रवण कर अनेक व्यक्तियों का परम्परागत पाप वृद्धि का केन्द्र परस्पर का वैर सदा के लिए समाप्त हो गया । अर्थात् आचार्य श्रेष्ठ के प्रवचनो से अनेक स्थानों परपीढ़ियो से चला आ रहा पारस्परिक वैमनस्य समाप्त हो गया ।

**अनेकमर्त्याः व्यसनप्रपीडिताः, धनक्षयान्निर्धनतामुपागताः ।**
**पराश्रिताः कम्पितजीवितातुराः विभिन्नजातौ जनितास्तदुज्जहुः ।।६५।।**

अन्वयः—व्यसनप्रपीड़िताः धनक्षयात् निर्धनतामुपागताः पराश्रिताः कम्पितजीविता-तुराः विभिन्नजातौ जनिताः अनेकमर्त्याः तत् (वैरम्) उज्जहुः ।

भावानुवादः—यही नहीं आचार्य प्रवर के अमित प्रभाव के कारण ऐसे अनेका-नेक व्यक्तियों ने भी वैर विरोध का परित्याग कर दिया । जो पूर्व मे व्य-सनो से पीड़ित थे । सम्पत्ति के नष्ट हो जाने से निर्धनता का भार ढो रहे थे । पराधीन एव सशंक जीवन वाले तथा आतुर थे । एवं विभिन्न जातियो मे जन्म धारण करने वाले थे ।

**अजैनजीवा अपि जैनधर्मकाः विशेषतेरापथनामधारकाः ।**
**तथापरे मन्दिरमार्गमाश्रिताः, स्वय च सम्यक्त्वमुपाश्रयन्ततः ।।६६।।**

अन्वयः—ततः (तस्मात्) अजैनजीवाः जैनधर्मकाः विशेपतेरापथनामधारकाः तथा अपरे मन्दिरमार्गम् आश्रिताः स्वय सम्यक्त्वम् उपाश्रयन् !

भावानुवादः ऐसे अनेक व्यक्तियो ने आचार्यप्रवर से सम्यक्तत्त्व को समझ कर सम्यक् तत्त्व ग्रहण किया । जो कि जन्म से अजैन अथवा तेरहपन्थी एवं मूर्तिपूजक परम्परा के उपासक थे ।

**यदैव यत्रैव युगानुकूलकम् ददे स्वकीयां परिदेशनामसौ ।**
**स्वराष्ट्रनेतुः सदृशीं प्रभाविकीम् न साधुभाषां विजहौ कदाचन ।।६७।।**

अन्वयः—असौ यदा एव यत्र एव युगानुकूलकम् यथा स्यात्तथा स्वकीयाम् स्वराष्ट्र-नेतुः सदृशीम् प्रभाविकीम् परिदेशनाम् ददे । कदाचन साधुभाषा न विजहौ ।

भावानुवादः- राष्ट्र के महामान्य नेताओं के तुल्य आचार्यप्रवर ने भी जब कभी युगानुकूल ओजस्वीदेशनादी; किन्तु कभी भी श्रमणोचितमर्यादा अथवा साधु भाषा से इधर–उधर नही हुए ।

**प्रचालितो यः सफलः प्रजायते, स्वतन्त्रताप्राप्तिनिमित्तसंगरः ।**
**अहिंस्य धर्मस्य तदैव संस्थितिः भवेदतः तस्य समर्थनं हितम् । ६८।।**

अन्वयः—स्वतन्त्रताप्राप्तिनिमित्तसगरः प्रचालितः । स यदि सफलः प्रजायते ! तदा एव अहिंस्यधर्मस्य संस्थितिः भवेत् । अतः तस्य (सगरस्य) समर्थनम् हितम् ।

भावानुवादः—आचार्यश्री का कथन था कि यदि स्वतन्त्रता प्राप्ति का आन्दोलन जिससे असहयोग रूप युद्ध चल रहा है । सफल हो जाए तो अहिंसा, दान, दया, आदि धर्म प्रवृत्तियों का यथावत् पालन हो सकता है । अतः उसका समर्थन उपयोगी है ।

**विहारवृत्या च यथा स्वकल्पतः, विभिन्नभागेषु पदार्पणं कृतम् ।**
**तथैव सर्वत्र निरूपणं वृतम् जिनप्रणीतस्य मतस्य सार्थकम् ।६९।।**

अन्वयः—विभिन्नभागेषुयथा स्वकल्पतः विहारबृत्या पदार्पणं कृतम् । तथा एव जिनप्रणीतस्य मतस्य सार्थकम् विरूपणम् वृतम् ।

भावानुवादः—जैनमुनि मर्यादा के नियमानुसार देश के विभिन्न भागों मे जहां कही भी आचार्यप्रवर के चरणस्पर्श हुए । वहीं जिनप्रणीत सिद्धान्तों का व्यापक एवं सार्थक निरूपण सम्पन्न हुआ ।

**गुणस्य पूजाकरणाय भावुकैः कृतं च तस्मै पदवीप्रदानकम् ।**
**न पूज्यवर्येण धिया समीहिता, यथागता साच तथैव निवृता ।।७०।।**

अन्वयः—भावुकैः (श्रावकैः) गुणस्य पूजाकरणाय तस्मै च पदवीप्रदानकम् कृतम् । सापदवी पूज्यवर्येण धिया न समीहिता । सा यथागता तथैव निवृत्ता ।

भावानुवादः—आचार्य प्रवर के प्रति अनन्य आस्था निष्ठाबुद्धिजीवी श्रावकों ने उन्हें किसी पद से विभूषित करना चाहा; किन्तु अहंकारजयी आचार्यश्री ने उसे मन से भी स्वीकार नहीं किया । अर्थात् वह पद जैसे ही आया वैसे ही लौट गया ।

**(शिखरिणी छन्द)**

**स्वयं प्रज्ञा जाता, निखिलजनसंबोधकरणे,**
**समाजस्योन्नत्यै बहुसुयतितं योगनिरतैः ।**
**स्वेदेशस्यानल्पं, कृतममितकल्याणमनिशम्,**
**न तत् किं क्षेत्रंस्यात् यदिह नहि यातं गुरुवरैः ।।७१।।**

अन्वयः—निखिलजनसंवोधकरणे स्वय प्रज्ञा जाता ! योगनिरतैः तैः आचार्य-वर्यैः समाजस्य उन्नत्यै बहुसुयतितम् ! स्वेदेशस्य अनल्पं अमितकल्याणम् अनिशम् कृतम् ।तत् किं क्षेत्रम् नस्यात् यत् इह गुरुवरैः नहियातम् ?

भावानुवादः—समस्त मानव जाति को उद्वोधन देने हेतु आचार्यश्री मे प्रज्ञा का उन्मेष स्वतः जागृत हुआ । स्वतः योगनिरत रहते हुए उन्होंने समाजोन्नति हेतु अथक प्रयास किया । सदैव देशकल्याण के लिए सचेष्ट रहे । भारत में वह कौनसा क्षेत्र था जहां वे नहीं गये । अर्थात् उन्होंने बहुत भ्रमण किया ।

इति सामाजिक षष्ठः सर्गः -

श्रीमज्जवाहरयशोविजयाभिधाने,
नानेशसच्चरणयोः शरणावधाने ।
श्री चन्द्रमौलिकविनिर्मित सत्प्रबन्धे,
पूर्णोऽभवत्सफलषष्ठसमाजसर्गः ।

समाज सर्गः समाप्तः ।

## "अथ सप्तमः सर्गः–"

भ्रमणार्थं स्थलीक्षेत्रे, पूर्वमेव निवेदितम् ।
श्रावकैः संगतैर्भूत्वा, सर्वप्रान्तेषु विश्रुतैः ॥१॥

अन्वयः—सर्व-प्रान्तेषु विश्रुतैः श्रावकैः संगतैः भूत्वा स्थलीक्षेत्रे भ्रमणार्थम् पूर्वमेव निवेदितम् !

भावानुवादः—चूंकि सभी प्रान्तो के प्रसिद्ध श्रावक बन्धुओं ने सम्मिलित भाव से आचार्य देव से यह निवेदन किया कि आप श्री को स्थली प्रान्त में विचरण करना चाहिये ।

यदि सन्ति गुणाः पुसां प्रकाशोजायते भुवि ।
सौकुमार्यं शिरीषस्य शपथेन विभाव्यते ? ॥२॥

अन्वयः—भुवि यदि पुसां गुणाः सन्ति तर्हि प्रकाशः जायते । शिरीषस्य सौकुमार्यम् किं शपथेन विभाव्यते ?

भावानुवादः—यदि मानव में गुण है तो पृथ्वी पर उनका प्रकाश फैलता ही है । शिरीष पुष्प की सुकुमारता क्या शपथ दिलाकर बताई जाती है ?

गुरूणां चरणैः पूता, स्थलीयावद् भविष्यति ।
भाग्यं च प्रवलं तस्याः सद्यस्तावज्जनिष्यते ॥३॥

अन्वयः—स्थली गुरूणां चरणैः पूता यावत् भविष्यति । तावत् तस्याः भाग्यं च प्रवलं सद्यः । जनिष्यते ।

भावानुवादः—स्थली प्रदेश यदि आचार्य देव के पवित्र चरणों से पावन होगा; तो उसी समय उनके प्रवल सौभाग्य का भी उदय हो जायेगा ।

गुणानां ग्राहका लोके गुणानेवं विचिन्वते ।
वत्साश्चगोस्तनेक्षीरं जलौकाः रक्तमेवच ॥४॥

अन्वयः—लोके गुणानां ग्राहकाः एवम् गुणान् एव विचिन्वते । वत्साः च गोस्तने क्षीरम् तथा च जलौकाः रक्तम् एव च (चिनोति) ।

भावानुवादः—ससार में गुणग्राहक व्यक्तियों का ध्यान सदा गुणों पर ही जाता है । बछड़े गोस्तनों से दुग्ध पान करते है, जबकि जोक वही से रक्त पान करती है ।

**ये कदापि न संप्राप्ताः स्थलीभागं कदाचन ।**
**तत्रत्याखिलबाधानां तेषांभानंकथं भवेत् ।।५।।**

अन्वयः—ये कदापि कदाचन स्थलीभाग न संप्राप्ताः । तेषाम् तत्रत्याखिलबाधानां भानम् कथं भवेत् ?

भावानुवाद —जो कभी वीकानेर के स्थली प्रान्त मे नही गये । उन्हें वहाँ की होने वाली समस्त वाधाओं का वोध भी कैसे हो सकता है ?

**अथ पूज्यश्रियो जातं, प्रस्थान च स्थलीमुखम् ।**
**यत्रान्धतमसं तत्र, प्रद्योतो रविरोचिषाम् ।।६।।**

अन्वयः—अथपूज्यश्रियः प्रस्थानं च स्थलीमुखम् जातम् । यत्र अन्धतमसं तत्र रविरोचिषाम् प्रद्योतो (जायते) ।

भावानुवादः—अतः मुनिमर्यादानुसार भ्रमण करते हुए आचार्य श्रेष्ठ का बीकानेर राज्यान्तंगत स्थली प्रदेश की ओर पदार्पण हुआ । जहां घनघोर अन्धकार होता है । वही तो प्रकाश की अपेक्षा होती है । अर्थात् स्थली प्रान्तों में दयादान के सम्वन्ध में घटा टोप अन्धकार व्याप्त था । अतः वहां सत्य धर्म का प्रकाश करने हेतु आचार्य प्रवर का पदार्पण हुआ ।

**अनुरागेण पूज्यस्य, गमनात्पूर्वमेवहि ।**
**प्रधान मन्त्रिणा तत्र बीकाणस्य निदेशिताः ।।७।।**

अन्वयः—तत्र पूज्यवर्यस्य गमनात् पूर्वम् एवहि अनुरागेण वीकाणस्य प्रधानमन्त्रिणा मेहता महोदयेन कर्मचारिणः निदेशिताः ।

भावानुवादः—आचार्य प्रवर के वहां पदार्पण के पूर्व ही अनन्त भक्ति के कारण

तत्कालीन प्रधानमन्त्री सर मन्नू भाई मेहता ने समस्त राज्य कर्मचारियों को निर्देश दे दिये ।

राज्याधिकारिणो दिष्टाः मेहताख्येन पूर्णतः ।
विधेश्चपालनाभावे, दण्डस्यास्तां व्यवस्थितिः ॥८॥

अन्वयः—मेहताख्येन तेन पूर्णतः राज्याधिकारिणः दिष्टाः विधेः च पालनाभावे दण्डस्य व्यवस्थितिः आस्ताम् ।

भावानुवादः—उनका प्रथम निर्देश था कि मेरे आदेशों को यथावत् पाला जाय अन्यथा दण्ड की व्यवस्था होगी ।

"व्याख्याने पूज्यवर्यस्य बाधाकापि न जायताम् ।
प्रश्नोत्तरविधानेषु, सभ्यतायाः सुरक्षणम् ॥९॥

अन्वयः—पूज्यवर्यस्य व्याख्याने कापि बाधा न जायताम् । प्रश्नोत्तरविधानेषु सभ्यतायाः सुरक्षणम् भवेत् ।

भावानुवादः—चूंकि वे जानते थे कि वहां तेरापन्थ सम्प्रदाय के कट्टर हिमायती प्रवचन सभा आदि में उदण्डता पूर्ण व्यवहार के द्वारा व्यवधान उपस्थित करते हैं । अतः उन्होंने (मेहताने) (आदेश दिया कि आचार्यश्रेष्ठ श्री जवाहरलाल जी म. सा. के प्रवचनों में किसी भी प्रकार का व्यवधान नहीं किया जाय । महाराज श्री की सन्निधि में सम्पन्न होने वाले प्रश्नोत्तर के समय में भी सभ्यता का पूर्णरूपेण पालन किया जाय ।

तथा धर्मप्रचारेऽपि, वैजात्यं कोपि नाचरेत् ।
सर्वदा सर्वथाऽपेक्षा सभ्यतायाः समीह्यते ॥१०॥

अन्वयः—तथा धर्मप्रचारे अपि कोपि वैजात्यम् न आचरेत् । सर्वदा सर्वथा सभ्यतायाः अपेक्षा समीह्यते ।

भावानुवादः—उनके धार्मिक कार्यों में कोई उद्दण्डता नहीं करेगा । महाराज श्री के साथ सदैव पूर्णशिष्टता का व्यवहार अपेक्षित है ।

**सहयोगेनतस्यापि, दयादानप्रचारणे ।**
**पूज्यश्रीः सफलोजातो, विशेषः स्वात्मकारणात् ॥११॥**

अन्वयः—तस्य अपि सहयोगेन दयादान प्रचारणे पूज्यश्रीः सफलः जातः । विशेषः स्वात्मकारणात् एव !

भावानुवादः—आचार्य प्रवर का अमित अतिशय तो था ही। तथापि प्रधानमन्त्री के सहयोग के कारण भी दया दान के प्रचार में विशेष सफलता प्राप्त हुई ।

**इष्टं कार्यं सुसम्पन्नं शान्त्योत्साहेनभूरिशः ।**
**शान्तिदान्तिदयाभिश्च, रागद्वेषविवर्जनैः ॥१२॥**

अन्वयः—शान्तिदान्तिदयाभिः रागद्वेषविवर्जनैः शान्त्या, उत्साहेन च भूरिशः इष्टम् कार्यम् सुसम्पन्नम् ।

भावानुवादः—आचार्य प्रवर के समस्त समीहित प्रचार कार्य, शान्ति–क्षमा, आत्मदमन, दयावृत्ति, राग द्वेपवर्जन के द्वारा शान्ति एवं उत्साहपूर्वक सम्पन्न हुए ।

**यदेवचित्ते संश्लिष्टं तदेव परिपूरितम् ।**
**यत्रैव क्रमविक्षेपस्तत्रैव पद्मसम्भवः ॥१३॥**

अन्वयः—यत् एव चित्ते संश्लिष्टम् तत् एव परिपूरितम् जातम् । यत्र एव च क्रमविक्षेपः (क्रमः पादः) तत्र एव पद्मसम्भवः अजनि ।

भावानुवादः—चरित नायक आचार्य प्रवर के मानस में जो विचार उद्भूत होते, सहजतया सम्पन्न हो जाते । मानो कि जहाँ–तहाँ चरण न्यास होता कमल की उत्पत्ति हो जाती ।

**अस्मिन्स्थली प्रदेशेच, तेरापंथप्रभावतः ।**
**अज्ञान जृम्भणं जातं जैनसंघेषु भूरिशः ॥१४॥**

अन्वयः—अस्मिन् स्थली प्रदेशे जैन संघेषु तेरापंथप्रभावतः भूरिशः [illegible] जातम् ।

भावानुवादः—आचार्य प्रवर के वहा पधारने के पूर्व इस स्थली प्रान्त मे तेरापन्थ के प्रभाव से जैन धर्म के सम्बन्ध में अज्ञान ही अज्ञान प्रसृत था। वस्तुत स्थानीय जनता को जैन धर्म का सही बोध ही नही था।

**अन्धश्रद्धां विलोक्यैषां, साश्चर्यंमानसं भृशम् ।**
**जातं च करुणोद्रेकं भावरुग्णेषु भूरिशः ॥१५॥**

अन्वयः—एषाम् अन्धश्रद्धाँ विलोक्य भावरुग्णेषु भूरिशः मानसम् साश्चर्यम् करुणोद्रेकम् च जातम् ।

भावानुवादः—वहां के भावरुग्ण निवासियों के अन्धविश्वास को देखकर आचार्य प्रवर का मानस साश्चर्य करुणा से छलछला आया। अर्थात् उनकी धार्मिक अज्ञानता सम्बन्धी दयनीय दशा पर वे दयार्द्र हो उठे।

**हृदयं पूज्यवर्यस्य नवनीतसमप्रभम् ।**
**दयाविगलित जातं तेषामज्ञानपावकैः ॥१६॥**

अन्वयः—पूज्यवर्यस्य नवनीतसमप्रभम् हृदयं तेषाम् अज्ञानपावकैः दयाविगलितम् जातम् ।

भावानुवादः—पूज्यप्रवर का नवनीतवत् कोमल हृदय वहां के लोगो के अज्ञान रूपी अग्नि से दया से द्रवित हो उठा।

**तदुद्धारप्रयत्नोऽभूत् सरलं कार्य न कुत्रचित् ।**
**सहनं कष्टरोगाणां, महायत्नोप्यपेक्षितः ॥१७॥**

अन्वयः—तदुद्धारप्रयत्नःअभूत् । कार्यं कुत्रचित् न सरलम् । कष्टरोगाणा सहन जातम् । महायत्नः अपि अपेक्षितः (अभवत्) ।

भावानुवादः—आचार्य प्रवर ने उनके उद्धार हेतु प्रयत्न प्रारम्भ किया, किन्तु यह कोई सरल कार्य नही था। स्थान-स्थान पर व्यवधान रूपी रोगो का सामना करना पड़ा। तथा अनेक बार महाप्रयत्न भी अपेक्षित हुए।

**बहुबारं सहैवैतैः संगमः समजायत ।**
**मेनिरे बोधिताः नैव, श्वपुच्छप्रकृतिं गताः ॥१८॥**

अन्वयः—एतैः सहतेरापन्थिनाम् बहुबारं संगमः समजायत । बोधिताः अपि मेनिरे न एव । श्वपुच्छप्रकृतिं गताः ।

भावानुवादः—आचार्य प्रवर के साथ तेरापन्थ संघ प्रमुखों का बहुत बार सवाद हुआ, किन्तु कोई भी हठधर्मिता को छोड़ने को तत्पर नही था । श्वान पुच्छ की तरह उनकी प्रवृत्ति में कोई अन्तर नही आया ।

**धर्मस्य विषये तेषां मान्यता चाप्यसंगता ।**
**तत्र तेन सुधारार्थं यतितं फलितं न च ॥१९॥**

अन्वयः—तेषाम् धर्मस्य विषये मान्यता अपि च असंगता (आसीत्) तत्र तेन सुधारार्थम् यतितम् किन्तु फलितम् न च ।

भावानुवादः—तेरापन्थियों की धर्म विषयक मान्यता सयुक्ति नहीं थी । आचार्य श्री ने उसके परिष्कार हेतु बहुत प्रयत्न किये, किन्तु उसमे यथेष्ट सफलता नही मिली । अधिकाँश व्यक्तियों का दुराग्रह दूर नही हुआ । वे सद्धर्म से वञ्चित ही रहे ।

**स्थलीरंगस्थली तेरापन्थस्य लोकविश्रुता ।**
**कथं पर-प्रवेशः स्यात् दुर्भेद्यादुर्गनिर्मितिः ॥२०॥**

अन्वयः—तेरापन्थस्य लोकविश्रुतास्थली रंगस्थली (आसीत्) तत्र परप्रवेशः कथम् स्यात् दुर्भेद्या दुर्गनिर्मितिः आसीत् !

भावानुवादः—स्थलीप्रदेश प्रतिवादी तेरापन्थियों का लोकप्रसिद्ध नाटकगृह था । यहां इस प्रकार की किलाबन्दी की नई थी; कि अन्य धर्मावलम्बी प्रवेश ही नहीं पा सकें ।

**पूज्यश्रियोपि संजज्ञे, संप्रवेशे विबाधनम् ।**
**काठिन्यं विविधं तत्र बैघुर्यस्यापि दर्शनम् ॥२१॥**

अन्वयः—पूज्यश्रियः अपि संप्रवेशे विवाधनम् संजज्ञे । तत्र विविधम् काठिन्यम् । वैधुर्यस्यापि दर्शनम् जातम् ।

भावानुवादः—आचार्य प्रवर को भी वहां प्रवेश पाने में अनेक प्रकार की बाधाओं कठिनाइयों एवं कष्टों का सामना करना पड़ा ।

परन्तु जनलाभार्थं, कष्टं सोढ्वापि भूरिशः ।
प्रवेशमुचितं मेने, वीराः भीताः कदाचन ? ॥२२॥

अन्वयः—परन्तु जनलाभार्थ भूरिशः कष्टं सोढ्वापि स (आचार्यः) प्रवेशम् उचितम मेने । वीराः भीताः कदाचन (नैवभवन्ति) ।

भावानुवादः—तथापि जनलाभ हेतु अनेक कष्टों को सहन करते हुए भी आचार्य प्रवर ने वहां पहुंचना उचित समझा । क्योंकि वीर पुरुष कभी भयभीत नहीं होते हैं ।

कदापि भगवान्वीरोऽनार्यक्षेत्रं गतोऽभवत् ।
स्थली न तादृशं क्षेत्रं तथा ऽसद्धर्मरंगभूः ॥२३॥

अन्वयः—कदापि भगवान् वीरः अनार्यक्षेत्रम् गतः अभवत् । स्थलीन तादृशम् (अनार्य) क्षेत्रम् । तथापि असद्धर्मरंगभूः (मञ्चः) अभवत् ।

भावानुवादः—भगवान् महावीर तो कभी अनार्यभूमि में भी पधारे । जबकि यह स्थली प्रदेश अनार्य भूमि तो नहीं थी; किन्तु अधर्म की रंगस्थली अवश्य बनी हुई थी । सद्धर्म प्रचारकों का वहाँ अल्पल्प ही प्रवेश होता था ।

तत्रत्याः वहवो भ्रान्ताः दयादाने न मन्वते ।
सेवां परोपकारं च मन्यन्ते ऽधर्ममेव ते ॥२४॥

अन्वयः—तत्रत्याः वहवः भ्रान्ताः दयादाने न मन्वते । ते सेवाम् परोपकार न अधर्मम् एव मन्यन्ते !

भावानुवादः—वहाँ के अनेक वन्धु (तेरापन्थी) श्रावक भ्रान्त धारणा वश दया

दान को नहीं मानते । प्रत्युत वे सेवा तथा परोपकार को भी अधर्म के रूप में ही स्वीकार करते है ।

बहुमूल्यगुणद्वेषि, धर्मस्य पंकलक्ष्मकम् ।
मार्जयितुं धरायाश्च समैच्छद्गुरुपुंगवः ।।२५।।

अन्वयः—गुरुपुंगवः धर्मस्य बहुमूल्यगुणद्वेषि पंकलक्ष्मकम् च धरायाः मार्जयितुम् समैच्छत् !

भावानुवादः—आचार्यश्रेष्ठ ने वहाँ धर्म के बहुमूल्य गुणदया–दान पर विद्वेष रखने वाले उन बन्धुओं की पृथ्वी पर व्याप्त उनकी भ्रान्तधारणारूप कर्दम को धोने का साफ करने का विचार किया ।

## ग्रीष्मऋतु वर्णनम्ः–

प्रसगतः ग्रन्थकार स्थलीप्रदेश का प्राकृतिक एवं सामाजिक वर्णन प्रस्तुत करते हैं ।

निदाघे आतपस्तीक्ष्णो, वात्यावातिनिरन्तरम् ।
जीवन्ति मानवा दीनाः मरौभाग्ये न केवलम् ।।२६।।

अन्वयः—मरौ निदाघे (ग्रीष्मे) आतपः तीक्ष्णः भवति । वात्या निरन्तरम् वाति । दीनाः मानवाः केवल भाग्येन एव जीवन्ति ।

भावानुवादः—मरुप्रदेश मे ग्रीष्म ऋतु में बहुत तेज तपन होती है । निरन्तर उत्तप्त हवाओं वाली आँधियां चलती है । वहां के दीन–हीन मानव तो केवल भाग्य के आधार पर ही जीते है ।

मिलन्ति बालुकातप्ते कृच्छ्रेण जलविप्रुषः ।
अपर्याप्ताः श्रमेणैव ग्रीष्मकालोऽसुखावहः ।

अन्वयः—बालुकातप्ते जलविप्रुषः कृच्छ्रेण श्रमेणैव अपर्याप्ताः मिलन्ति । अतः मरौ ग्रीष्मकालः असुखावह एव भवति !

भावानुवादः—बालुका प्रधान उस सतप्त प्रदेश में जल की बूंदे भी अति परिश्रम से उपलब्ध होती हैं। वह भी स्वल्प मात्रा में। अतः मरुप्रदेश में ग्रीष्मकाल दुःखप्रद ही होता है।

मरौवीरा नराः धन्याः घोरसाधनतत्पराः।
कथं जीवन्ति कोवेत्ति, अदेवादेवमातृकाः ॥२८॥

अन्वयः—मरौ अदैवा (भाग्यहीना) देवमातृकाः (वर्षामातृकाः) घोरसाधनतत्पराः नराः वीराः धन्याः सन्ति। ते कथ जीवन्ति। इति कः वेत्ति!

भावानुवादः—कुदैव से ग्रसित होने पर भी मरु प्रदेश निवासी वे लोग धन्य और साहसी हैं, जो केवल बरसात के जल से अपना निर्वाह करते है और समस्त पारिवारिक एव सामाजिक साधना में निरत रहते हैं। वे वहा कैसे जीवित रहते हैं? इसे सामान्य व्यक्ति केसे समझ सकता है?

बालुकाभिः मुखं पूर्णं शुष्कतालुश्चमानवः।
विवृतचञ्चवो दीनाः, खगाः पानीयलुब्धकाः।

अन्वयः—निदाघे सर्वेषां बालुकाभिः मुखम् पूर्णम् जायते। मानवः शुष्कतालुः पानीयलुब्धकाः दीनाः खगाः विवृतचञ्चव. (भवन्ति)।

भावानुवादः—ग्रीष्म ऋतु में वहां के निवासियों के चेहरों पर प्रायः धूलिकण चिपक जाते हैं। तृषावश तालु (कण्ठ शुष्क हो जाता है। तृषित दीन-पक्षी भी तृष्णा शान्ति के लिए अपनी चञ्चु प्रायः खुली रखते हैं।

आपगा चमरौ कापि बालुकाभिः सदोर्मिला।
आपादमस्तकं यत्र स्नान्ति धन्वनिवासिनः ॥३०॥

अन्वयः—मरौ बालुकाभिः सदोर्मिला कापि आपगा वहति। यत्र धन्व (मरु-) निवासिनः आपादमस्तकम्–स्नान्ति!

भावानुवादः—मरुप्रदेश में ग्रीष्मऋतु में प्रतिदिन हवा से उड़ने वाले बालु कणों की ऊर्मियां ऐसी लगती हैं, जैसे कोई नदी वह रही हो। जिसमें स्थानीय लोग आकण्ठ स्नान करते रहते है।

**वर्षा नैव शरन्नैव, वसन्तोऽपि चदुर्लभः ।**
**शैत्यातपौ च जायेते षड्ऋतोरत्र का कथा ??**

अन्वयः—अत्रमरौ वर्षा न एव, शरद् च न एव, बसन्तः अपि चदुर्लभः, किन्तु शैत्यातपौ च जायेते । अत्र षड्ऋतोः का कथा ??

भावानुवादः—यहां वर्षा, शरद् एवं बसन्त ऋतुएं नहीं होती है । मुख्यतया सर्दी एवं ग्रीष्म दो ही ऋतुएं होती है । षड् ऋतुओं की तो बात ही कहां है ?

**वारीणिदर्शयन्त्येव वित्तानीह करग्रहे ।**
**ददतोऽपि न यच्छन्ति कृपणा नीरदाः मरौ ॥३२॥**

अन्वयः—इह मरौ कृपणाः नीरदाः करग्रहे वित्तानि इव वारीणि जलानि एव दर्शयन्ति । ददतः अपि न यच्छन्ति ।

भावानुवादः—इस प्रदेश में मेघ भी कृपण हो जाते है, जो जलरूप धन को हाथ में लेकर दिखाते भर है, वे दातार होने पर भी नही देते ।

**चलन्तीष्वपि बात्यासु स्वछन्दासु च भूरिशः ।**
**प्रकृतेर्विपरीतं च मानवोऽपि रजस्वलः ॥३३॥**

अन्वयः—भूरिशः स्वछन्दासु चलन्तीषु वात्यासु मानवः अपि रजस्वलः धूलि धूसरितः । पक्षे स्त्रीवत् रजोधर्मयुक्तः । प्रकृतेः विपरीतं च दृश्यते ।

भावानुवादः—इस प्रदेश में प्रकृति से विपरीत ही दृश्य दिखाई देता है । स्वछन्दता पूर्वक चलने वाली हवाओं से मनुष्य भी रजस्वल (धूल धूसरित) हो जाते है । जवकि रजस्वला होना नारी देह की प्रकृति है ।

**प्रभूतेषु मरावेव विस्मयेषु समन्ततः ।**
**पराश्चर्यं मया दृष्टं मानवोऽपि रजस्वलः ॥३४॥**

अन्वयः—मरौ एव प्रभूतेषु समन्ततः विस्मयेषु मया पराश्चर्यम् दृष्टम् यद् अत्र मानवः अपि रजस्वलः दृश्यते !

भावानुवाद:—अनेक आश्चर्यो में मरु प्रदेश में एक आश्चर्य यह भी देखा गया कि यहां के पुरुष भी रजस् युक्त होते है।

भोक्तुं योगो न भोग्यानां वारिणो न च विप्रुषः।
पद्मिन्यः पूगले रम्या. स्वर्गतुल्यं मरुस्थलम् ॥३५॥

अन्वय:—भोग्यानाँ भोक्तुं योगः न, वारिणः विप्रुषः अपि न च तथापि पूगले (ग्रामे) रम्याः पद्मिन्यः (स्त्रियः) दृश्यन्ते ! अतः मरुस्थलम् स्वर्गतुल्यम् बोध्यम्।

भावानुवाद:—यहां सासारिक भोग्य पदार्थो के भोगने का योग नही है। क्योंकि यहाँ पानी की बूंदे भी कम उपलब्ध होती है। फिर भी यह प्रदेश स्वर्गतुल्य कहलाता है, क्योंकि यहाँ "पूगल की सुन्दर पद्मिनियाँ" प्रसिद्ध है।

दृष्ट्वा कारुण्यमायाताः कृतभूरिपरिश्रमान्।
स्वकं कं पाययन्त्येव कूपाः स्वल्पजला अपि ॥३६॥

अन्वय:—अत्र स्वल्पजलाः अपि कूपाः कारुण्यम् आयाताः सन्तः, कृतभूरिपरिश्रमान् नरान् दृष्ट्वा स्वक कम् (जलम्) पाययन्ति एव।

भावानुवाद:—यहाँ के अत्यन्त गहरे कूवे अल्प जलवाले होते है, फिर भी वे करुणा कातर होकर परिश्रम करने वाले मानवों को देखकर उन्हे अपना जल पिलाते है।

जनानां नैव सम्मर्दः कीटाणूनां न भीतयः।
निर्मक्षिकं निराबाधं, सुखदंमरुमण्डलम् ॥३७॥

अन्वय:—जनानां सम्मर्दः न एव, कीटाणूनां च भीतयः न। मरुमण्डलम् निराबाधं निर्मक्षिकम् सुखदम् अस्ति।

भावानुवाद:—यहां मरु प्रदेश में जन संकुलता का अभाव है, यहाँ मक्खियों का भी प्रायः अभाव है। संक्रामक कीटाणु भी नही होते है। अतः यह क्षेत्र समस्त बाधाओं से रहित है, अतिशय सुखद है।

**अभावे सर्ववृक्षाणां वल्लरीणां विशेषतः ।**
**मरावर्कसमाश्लिष्टे चैरण्डोपि द्रुमायते । ३८।।**

अन्वयः—अर्क (सूर्य) समाश्लिष्टे मरौ सर्व वृक्षाणाम् अभावे विशेषतः बल्लरी (लता) णाम् च अभावे एरण्डः अपि द्रुमायते !

भावानुवादः—यहाँ रवि का आतप अधिक सतप्त रहता है । केवल एक आक का वृक्ष ही हरा होता है । अतः लता कुञ्ज एवं सघन वृक्षावली से रहित इस प्रदेश में "निरस्त पादपे देशे एरण्डोऽपि द्रुमायते–" अर्थात् वृक्ष रहित प्रदेश में एरण्ड का वृक्ष ही वृक्ष माना जाता है" वाली उक्ति चरितार्थ होती है ।

**पत्रैः फलैश्च संकीर्णम् कण्टकैरपि शोभितम् ।**
**नात्युच्छ्रितं धराश्लिष्ट बदरीणां च गुल्मकम् ।।३९।।**

अन्वयः—अत्र बदरीणा च गुल्मकम् कथंभूतम् (झाड़ी) पत्रैः फलैः संकीर्णम् । कण्टकैः अपि शोभितम् । न अतिउच्छ्रितम् धराश्लिष्टम् च विभाति ।

भावानुवादः—यहां कुछ बेरों की झाड़ियाँ भी दिखाई देती है, कंटकाकीर्ण होती हुई भी पत्तों ऐव फलो से लदी रहती है । पृथ्वी से कुछ ऊपर शोभित होती है ।

**स्वल्पशाखादिसंपृक्तपत्रैश्च सहिता मरौ ।**
**पथिकानां कृते प्राप्या शमीच्छायैव केवलम् ।।४०।।**

अन्वयः—मरौ पथिकानाँ कृते स्वल्पशाखादिसंपृक्तपत्रैः च सहिता शमीछाया ऐवं केवलं प्राप्या (भवति) ।

भावानुवादः—पथिकों की विश्रान्ति के लिए यहां पत्तों से लदी हुई लघु शाखाओं वाला शमी तरु (खेजड़े) की छाया ही उपलब्ध होती है ।

**नान्यत्र रमते रम्या प्रान्त एव मरुस्थले ।**
**जनसम्मर्दभीतेयं लक्ष्मीरागत्य पुष्कला ।।४१।।**

अन्वय:—रम्या लक्ष्मीः अन्यत्रप्रान्ते न रमते । अतः मरुस्थले प्रान्ते एव आगत्य जनसम्मर्दभीता इयम् पुष्कलासती तिष्ठति !

भावानुवाद:—रम्य लक्ष्मी भी इस मरु प्रान्त को छोड़कर अन्यत्र जाना नही चाहती । मानो वह भी मनुष्यों की भीड़ से भयभीत होकर समस्त निधि के के साथ यही आकर निवास करती है ।

**सिकतायां गतिः क्लिष्टा श्रमः श्रान्तिः पदे पदे ।**
**समीहाग्रे प्रयातु च पादौ पश्चात्प्रधावत. ।४२।:**

अन्वय:—सिकतायां गतिः (गमन) क्लिष्टा । श्रमः शान्तिः च पदे पदे अस्ति ! नरस्य यात्रिणः समीहातु अग्रे प्रयातुम् भवति, किन्तु बालुकाकारणात् पादौ पश्चात् एव प्रधावतः ।

भावानुवाद:—यहां पर बालुका पर पदचरण करना अति कठिन होता है। अतः पद–पद पर परिश्रम जन्य थकान का अनुभव होता है । पद यात्रियो का मानस तो आगे गति करने को होता है; किन्तु पैर पुनः–पुनः पीछे दौडते हैं ।

**कृषकाः कृषिकर्तारो विरक्ताः भूप्रपञ्चतः ।**
**वातुलेऽपि प्रदेशेऽस्मिन् प्रकृत्या मितभाषिणः ।।४३।।**

अन्वय:—कृपिकर्त्तारः भूप्रपञ्चतः विरक्ताः कृषकाः वातुले अपि अस्मिन् प्रदेशे प्रकृत्या मितभाषिणः (भवन्ति) !

भावानुवाद:—अन्य प्रवृत्तियों से विरक्त अपने कृपिकर्म में रत रहने वाले कृषक वायुप्रधान इस देश में निसर्गतः अल्पभाषी होते है ।

**प्राकृती सुपमा रम्या, चक्षुषोर्न विरोधनम् ।**
**हृदयाह्लादकम् दृश्यं, घन्वदेशे पदे पदे ।।४४।।**

[अन्व]यः –धन्वदेशे पदे–पदे रम्या प्राकृती सुपमा, चक्षुपोः अवरोधनम् न । हृदं

च दृश्यम् हृदयाह्लादकम् च भवति ।

भावानुवादः—मरु प्रदेश में पद–पद पर रेतीले टीलों की एक अलग ही प्रकार की प्राकृतिक शोभा है । जिधर चाहें उधर दृष्टि प्राप्त करें, नेत्रों के लिए कोई अवरोध नही है । यहां के सभी दृश्य हृदय को आनन्दित करने वाले है ।

**शान्तिरेव समाशान्तिः दृश्यते विजनेवने ।**
**यदाकदा खगारावः श्रूयते केवलो दिवि ।।४५।।**

अन्वयः— अत्र विजने वने शान्तिः समाशान्तिः एव यदा कदा दिवि केवलः खगारावः श्रूयते ।

भावानुवादः—यहाँ के निर्जन वनों में पूर्णतः शान्ति का ही साम्राज्य है । कहीं-कही केवल पक्षियो का कलरव ही सुनाई पड़ता है ।

**उत्पतन्तः खगाः खे च दृश्यन्ते पक्तिबद्धकाः ।**
**मनोज्ञा मधुरालापा वैतालिकसमा समाः ।।४६।।**

अन्वयः— खे च उत्पतन्तः पक्तिबद्धकाः मनोज्ञाः मधुरालापाः समाः वैतालिक-समाः च खगाः दृश्यन्ते ।

भावानुवादः—आकाश में भी पक्ति बद्ध उड़ते हुए समान रूप, वैतालिकवत् मनोज्ञ मधुर आलाप करते हुए पक्षीगण दिखाई देते है ।

**बधका नैव नाराचैः नैव शाकुनिकास्तथा ।**
**घ्नन्ति जीवान्नते क्रूराः मरावानायहस्तकाः ।।४७।।**

अन्वयः—अत्र मरौ नाराचैः वधकाः न एव । तथा शाकुनिकाः च न एव । आनाय (जाल) हस्तकाः क्रूराः तेजीवान् न घ्नन्ति !

भावानुवादः—इस प्रदेश में तीरों से शिकार करने वाले वधिक, जाल में फंसा कर चिड़ियों को मारने वाले क्रूर मानव भी नहीं है । यहाँ प्रायः जीवों को

नहीं मारा जाता है ।

**शुष्कं च जीवनं सर्वं सरसत्वं क्व विद्यते ।**
**तथापि रसमाधातुं यतन्ते वीरवृत्तयः ।।४८।।**

अन्वयः—सर्वं च जीवनम् शुष्कम् सरसत्वं क्व विद्यते । तथापि अत्र वीरवृत्तयः मानवाः रसम् आधातुम् यतन्ते ।

भावानुवादः—यहां के आम व्यक्तियों का जीवन प्रायः नीरस होता है । सरसता प्राय: नहीं है । तथापि वीरवृत्ति वाले यहां के पुरुष जीवन को सरस बनाने में प्रयत्नशील रहते हैं ।

**सर्वथाऽभावसंक्रान्तं, प्रकृते: कोपभाजनम् ।**
**दुर्भिक्षपीडितं नित्यं व्यथते मरुमण्डलम् ।।४९।।**

अन्वय:—मरुमण्डलम् सर्वथा अभावसंक्रान्तम् । प्रकृते: कोपभाजनम् दुर्भिक्षपीडितं नित्यम् व्यथते !

भावानुवाद:—सम्पूर्ण मरुस्थल प्रायः दुर्भिक्ष का शिकार होकर प्रकृति प्रकोप का भाजन बना रहता है । अतएव यह अभावों की प्रचुरता से भी व्यथित रहता है ।

**गोवंशवर्णनम्:—**

**स्वार्थं चोपार्जयन्त्यस्ता: सुपुष्टिं वर्धयन्ति च ।**
**"गावो मे मातरः सन्तु" इहैव घटते ध्रुवम् ।।५०।।**

अन्वयः—ता: गावः स्वार्थं च उपार्जयन्त्यः सुपुष्टिं च वर्धयन्ति । तर्हि "गावो मे मातर: सन्तु" इति कथनम् इह एव ध्रुवम् घटते (संगतं) भवति !

भावानुवाद:—नागरिकों की आर्थिक स्थिति को सुदृढ़ बनाने का एकमात्र स्रोत यहां का गोवंश है । और वही उनकी शारीरिक एवं मानसिक पुष्टि भी करता है । इसीलिए "गायें हमारी माताएं हैं" यह लोकोक्ति यहीं पूर्ण चरितार्थ

होती है ।

जायन्ते वृषभायाभ्यः क्षीरं सर्पिश्च लभ्यते ।
गोलोकद्युतयः पूताः केषां रक्ष्याः न धेनवः ॥५१॥

अन्वयः—याभ्यः वृषभाः जायन्ते क्षीरम् सर्पिः च लभ्यते । ताः गोलोकद्युतयः पूताः च भवन्ति । इति धेनवः केषाम् रक्ष्याः न !

भावानुवादः—जिनसे दूध, दधि, और धृत के साथ बैल भी प्राप्त होते है, वे गोलोक की चमकने वाली गाये सर्वथा रक्षणीय है ।

प्रष्ठौहः वृषभान् लोकाः लभन्ते गोभ्य एव तान् ।
कृषिकर्मकरान्दक्षान् रक्ष्यास्ताः सर्वतोऽर्थतः ॥५२॥

अन्वयः—लोकाः गोभ्यः एव प्रष्ठौहः वृषभान् कृषिकर्म करान् भारदक्षान् लभन्ते । इति ताः सर्वतः अर्थतः रक्ष्याः सन्तु ।

भावानुवादः—कृषक लोग दक्ष बैलों को गायों से ही प्राप्त करते है, जो कि कृषिकर्म एवं भार वहन आदि कार्यो के उपयोग में आते है ।

कृषिकर्मरताः लोकाः सा च साध्यागवादिभिः ।
कृषिप्रधानदेशेस्मिन् धेनूनां गौरवं महत् ॥५३॥

अन्वयः—लोकाः कृषिकर्मरताः । सा (कृषिः) च गवादिभिः साध्या । अस्मिन् कृषिप्रधानदेशे धेनूनाँ महत् गौरवम् (वर्तते) ।

भावानुवादः—यहां के निवासी कृषि प्रधान है । कृषि कार्य गोवंश–बैलों से ही सम्पन्न होता है । अतः इस कृषि प्रधान देश में गौ का महत्त्व सर्वाधिक है ।

शिशिरे वालुकादशावर्णनम्:–

असीमबालुकाराशिः विस्तृतः शीतकालिके ।
प्रभाते करकातुल्यः भृशंशीतायते ध्रुवम् ॥५४॥

अन्वयः—विस्तृतः असीम बालुकाराशिः शीतकाले प्रभाते करका (बर्फ) तुल्यः ध्रुवम् भृशम् शीतायते ।

भावानुवादः—यहां शीतकाल में सर्वत्र फैले हुए बालू के टीले अत्यन्त ठण्डे हो जाते है । बालुका कण हिमवत् शीतल हो जाते है ।

**समीरवर्णनम्ः—**

**कदापि मध्यमो वेगः कदाचित्प्रबलो वहन् ।**
**निहन्ति हृदयं सद्यः पथिकानां शराइव ।।५५।।**

अन्वयः—समीरस्य कदापि मध्यमः वेगः भवति । कदाचित् च स प्रबलो वहन् सद्य. पथिकानाँ हृदयं शरा इव निहन्ति ।

भावानुवादः—शीत ऋतु में यहां कभी मध्यम एव कभी तीव्र पवन की शीत लहरे चलती है, जो पथिकों के शरीर में तोरवत् चुभन उत्पन्न कर देती है ।

**निर्वाधमयते वात्या, स्वागताय च यात्रिणाम् ।**
**अपारबालुकापुञ्जः उद्युंक्ते मरुमण्डले ।।५६।।**

अन्वयः—अत्र वात्या यात्रिणा स्वागताय च निर्वाधम् अयते । मरुमण्डले अपार- वालुकापुञ्जः सदा उदयुंक्ते । (तत्परः तिष्ठति) ।

भावानुवादः—मरु प्रदेश में यात्रियों के स्वागत के लिए या तो बालू राशि या निर्वाधरूप से प्रवहमान आधियां तत्पर रहती है ।

**औष्ण्यं सूर्यात्समासाद्य, वालुकाभक्तिभावतः ।**
**पथिकानाञ्च पादेषु, वित्तमर्पयते यथा ।।५७।।**

अन्वयः— अत्र वालुका भक्ति भावतः सूर्यात् औष्ण्यम् समासाद्य पथिकानां च पादेषु वित्तम् यथा अर्पयते ।

भावानुवादः—यहां की बालुका से सूर्य से प्राप्त गर्मी को पथिकों के चरणों मे

के समान समर्पित कर देती है ।

उष्णता करपत्राभा, शैत्यधर्मौ च घातुकौ ।
जलाभावोऽन्तकः क्रूरः मृत्युशास्त्रपरीक्षणम् ।५८।।

अन्वयः - अत्र करपत्राभा (करौता) उष्णता शैत्यधर्मौ च घातुकौ । क्रूरः जलाभावान्तकः (यमः) अत्र सर्वम् मृत्युशास्त्रपरीक्षण च भवति ।

भावानुवादः ग्रीष्म ऋतु में पड़ने वाली वहां की उष्मा करौते के समान काटने वाली और शीत ऋतु की सर्दी जीवन हरने वाली होती है । जल का अभाव क्रूर यमराज के समान होता है । ये सभी यहां मृत्यु क्षणों के परीक्षण के समान होते हैं ।

सर्वसाधनसम्पन्ननराणां दुर्दशापथि ।
विहारे तत्र साधूनां किं वक्तव्यं विशिष्यते ।।५९।।

अन्वयः—अत्र पथि सर्वसाधनसम्पन्ननराणाम् अपि दुर्दशा भवति । तत्र विहारे साधूनाम् किं वक्तव्यम् विशिष्यते ।

भावानुवादः—ऐसी मरु भूमि में सर्व भौतिक साधन सम्पन्न मनुष्य की भी दुर्दशा होती है, तो वहा पादविहारो के साधको के विषय में तो कहना ही क्या बचता है ?

एतादृशे मरौ स्वार्था; विचरन्तोमिलन्ति च ।
पूज्यश्रीसदृशः कोऽपि, विरल एव लभ्यते ।।६०।।

अन्वयः—एतादृशे मरौ स्वार्थाः मानवाः विचरन्तः सन्तः मिलन्ति; किन्तु पूज्य-श्रीसदृशः महात्मा कोपि विरलः एव लभ्यते ।

भावानुवादः—ऐसे मरु स्थलों में स्वार्थ साधना में निरत व्यक्ति तो भ्रमण करते हुए मिल ही जाते है, किन्तु पूज्य श्री (चरित नायक) जैसे परोपकारपरायण महात्मा का मिलना विरल ही होता है ।

प्रातःकालीनशैत्यं च तपसाऽवारयत्सुधीः ।
मध्याह्नघोर सन्तापं हृतकारुण्यनिर्झरैः ॥६१॥

अन्वयः—स सुधीः प्रातः कालीनशैत्यं च तपसा अवारयत् । मध्याह्नघोर सन्तापम् हृतकारुण्यनिर्झरैः अवारयत् ।

भावानुवादः—(अपने स्थली प्रान्त के भ्रमणकाल में) वे प्रातःकालीन शीत को तप साधना के द्वारा दूर करते थे । मध्याह्न की विपुल ग्रीष्म को हृदय की करुणा से शान्त कर लेते थे ।

पूज्यश्रिया दयार्द्रेण, कृतं सद्धर्मयोजनम् ।
तैस्तत्र विहिता बाधा, येषामुद्धारहेतवे ॥६२॥

अन्वयः—दयाद्रेण येषाम् पूज्यश्रिया उद्धारहेतवे सद्धर्मयोजनं कृतम् तत्र तैः एव बाधा विहिता ।

भावानुवादः—दयानिधिपूज्यप्रवर ने जिनके उद्धार हेतु वहां सद्धर्म उपदेश का उपक्रम किया । उन्हीं में से कुछ लोगों ने व्यवधान उपस्थित किया ।

अपकारेऽप्युपकारः स्यात् अमृतं विषनिष्कृतिः ।
अपमाने कृतं मानं मुनेः क्षन्तुर्निदर्शनम् ॥६३॥

अन्वयः—अपकारे अपि उपकारः स्यात् विषनिष्कृतिः मूल्यम् अमृतम् । अपमाने मानम् कृतम् इति विषये क्षन्तुः मुनेः निदर्शनम् ।

भावानुवादः—"अपकार कर्ता पर भी उपकार की दृष्टि हो । विष का भी मूल्य अमृत दिया जाय तथा अपमान का उत्तर सम्मान से दिया जाय" क्षमासिन्धु आचार्यप्रवर ने यही उदाहरण प्रस्तुत किया ।

यथा यथाऽगता बाधा तथा संकल्पवर्धनम् ।
जातं पूज्यश्रियः कार्ये मसकै रुध्यतेऽनिलः ॥६४॥

[अन्वय]ः—पूज्यश्रियः कार्ये यथायथा बाधा आगता । तथा तथा तस्य संक[ल्प]

बर्धनं जातम् । किम् मशकै: अनिल: रुध्यते ? कदापि न ।

भावानुवाद:—ज्यों–ज्यों आचार्यश्री के कार्यों में व्यवधान उपस्थित हुए । त्यों-त्यों उनकी संकल्प शक्ति भी प्रबलतम होती गई । विपुलबाधाओं से भी कार्यावरोध नहीं हुआ । क्या तुच्छ प्राणी मच्छरों के द्वारा स्वच्छन्द वायुप्रवाह को रोका जा सकता है ।

यदा भगवत: पादौ पेदाते दुर्गमण्डले ।
तेरापन्थसमाजस्य तदाचित्तं भयाकुलम् ॥६५॥

अन्वय:—तेरापन्थ समाजजस्य दुर्गमण्डले (किला) यदा पूज्यश्रिय: भगवत: पादौ पेदाते । तदा तत्र (परेषां) चित्तम् भयाकुलम् जातम् ।

भावानुवाद:—तेरापन्थ समाज के गढ स्वरूप स्थली प्रान्त में जब आचार्यचरण का पदार्पण हुआ तो वहाँ के तथाकथित धार्मिक प्रतिपन्थियों (तेरापन्थियों) का चित्त भयाक्रान्त हो गया ।

सद्धर्मप्रचारस्य रोधनार्थं परै: कृता: ।
सकला योजनाव्यर्था: तम: सूर्योदये यथा ॥६६॥

अन्वय:—सूर्योदये तम: यथा तस्य सद्धर्म प्रचारस्य रोधनार्थम् परै: कृता सकला: योजना: व्यर्था; जाता: ।

भावानुवाद:—जैसे सूर्योदय होते ही निबिडतम अन्धकार पलायित हो जाता है । वैसे ही आचार्यदेव के सद्धर्मप्रचार के कार्य मे व्यवधान डालने हेतु उनके द्वारा नियोजित समस्त योजनाएं सहज ही विफल हो गयी ।

स्वामिना कालुरामेण मेलनं पथ्यजायत ।
तेरापन्थसमाजस्य गुरो: पूज्यश्रियोऽपिच ॥६७॥

अन्वय:—पथि तेरापन्थसमाजस्य स्वामिना कालूरामेण गुरो: पूज्यश्रिय: अपि मेलनम् अजायत ।

भावानुवादः—एक बार मार्ग में चलते हुए ही तेरापन्थ समाज के आचार्य कालूरामजी स्वामी से आचार्यश्री का मिलन हो गया ।

उचितं त्विदमेवस्यात् द्वयोरैतिह्यमेलने ।
सतत्त्वनिर्णयो वीतरागमार्गस्य निश्चयः ।।६८।।

अन्वयः—द्वयोः ऐतिह्यमेलने उचितम् तु इदमेव स्यात्, यत् वीतरागमार्गस्य निश्चयः सतत्वनिर्णयः भवेत् ।

भावानुवादः—उचित तो यह था कि दानों के ऐतिहासिक मिलन में वीतराग मार्ग का सम्यग् निर्णय पूर्वक निश्चय हो जाता ।

परं परो न तच्चक्रे प्रतिष्ठाभंगसाध्वसात् ।
यत्नेनासादितं मानमेरण्डः कथमुज्झति ।।६९।।

अन्वयः—परम् परः प्रतिष्ठाभगसाध्वसात् तत् न चक्रे । एरण्डः यत्नेनासादितम् मानम् कथम् उज्झति ।

भावानुवादः—किन्तु प्रतिष्ठा भंग के भय से प्रतिपक्षियों ने इसे स्वीकार नहीं किया। यह स्वाभाविक ही है कि एरण्ड का वृक्ष भी प्रयत्न प्राप्त प्रतिष्ठा कैसे त्याग सकता है ?

गोचरीचरणे युक्ताः साम्यभावेन साधवः ।
पूज्यश्रियः समाजग्मुः तेरापन्थिगृहेष्वपि ।।७०।।

अन्वयः—पूज्यश्रियः साधवः साम्यभावेन गोचरीचरणे युक्ताः तेरापन्थिगृहेषु अपि समाजग्मुः ।

भावानुवादः—आचार्यप्रवर के सहवासी सन्त गण भिक्षाचरी के समय समताभाव से तेरापन्थियों के घरों में भी जाते थे ।

तत्र तद्श्रावकैः पात्रे प्रस्तरादिकमर्पितम् ।
किं कर्म किमकर्मेति, नाजानन्मूढचेतसः ।।७१।।

अन्वयः—तत्र साधुपात्रे तत् श्रावकैः प्रस्तरादिकम् अर्पितम् । मूढचेतसः कि कर्म किम् अकर्म इति न अजानन् !

भावानुवाद:—किन्तु (तेरापन्थ) श्रावकों ने उनके पात्रों में पत्थर एवं राख आदि डाल दिये । उन नासमझ अज्ञ प्राणियों ने कर्त्तव्य अकर्त्तव्य का भी समुचित बोध नही किया ।

तादृशं चकृतं कर्म तेषाम् एव हि शोभते ।
जडोऽपि नेदृशं कार्य कर्त्तुम् शक्तः कदाचन ।।७२।।

अन्वय:—तादृशंचकृत कर्म तेषाम् एव हि शोभते । जडः अपि इदृश कार्यम् कदाचन कर्त्तुम् न शक्तः ।

भावानुवाद:—उनका ऐसा व्यवहार उन्हें ही शोभा देता है । क्योंकि अतिमूढ व्यक्ति भी ऐसा नही कर सकता है ।

कदाचित्साधुपात्रेषु श्वशावकप्रदापनम् ।
अपशब्दस्य संचारो ऽसभ्यतायाः प्रदर्शनम् ।।७३।।

अन्वय:—कदाचित् साधुपवात्रेषु (श्रूयते) श्वशावकप्रदापनम् अपशब्द संचारः असभ्यताया. च प्रदर्शनम् कृतम् ।

भावानुवाद:—कभी–कभी तो यहाँ तक हुआ कि उन अन्धश्रद्धालुओं ने मुनियों के लिए भिक्षा पात्र में कुत्तों के बच्चे तक डाल दिये । अपशब्द के व्यवहार के साथ असभ्यता का प्रदर्शन भी किया ।

केवलं वचनेनैव व्यवहारेऽपि सर्वथा ।
एतेनैते परिज्ञाताः दयाधर्मस्य वैरिणः ।।७४।।

अन्वयः—केवलं वचने न एव, सर्वथा व्यवहारेपितथैव कृतम् । एतेन एते दयाधर्मस्य द्वेषिण परिज्ञाताः ।

भावानुवादः—केवल कथन ही नही, उन्होने आचरण में इसी प्रकार

ष्टता का प्रदर्शन किया। इससे यह स्पष्ट जाना जा सकता है; कि वे दया-धर्म के प्रति द्वेष भावना रखते थे।

सुमेरुसदृशो धैर्ये गम्भीरः सागरोपमः।
क्षमायां वसुधातुल्यः दृढ़संकल्पभूषितः ।।७५।।

अन्वयः आचार्यवर्यः धैर्ये सुमेरु सदृशः सागरोपम. गम्भीरः, क्षमायाम् वसुधा-तुल्यः दृढसंकल्पभूषितः च आसीत्।

भावानुवादः—आचार्य प्रवर तो सुमेरु पर्वतवत् धीर महोदधिवत् गम्भीर एव पृथ्वीवत् क्षमाशील एव दृढ संकल्पी थे।

खलः करोति दुर्वृत्तं स्वभावस्तस्य तादृशः।
साधुः करोति सद्वृत्तं स्वभावस्तस्यतादृशः ।।७६।।

अन्वयः—खलः दुर्वृत्तम् करोति। तस्य स्वभावः तादृशः भवति। साधुः सद्-वृत्तम् करोति। तस्य स्वभावः तादृश एव भवति।

भावानुवादः—दुराचरण करना दुर्जन का स्वभाव होता है। तो साधु सज्जन का स्वभाव सदाचरण ही होता है।

सूर्यस्तीव्रोऽनलोदीप्तः चन्द्रमा मृगलांछनः।
चन्दनं जडतायुक्तं पूज्यश्रीरिवतानि नो ।।७७।।

अन्वयः—सूर्यः तीव्रः अनलोदीप्तः चन्द्रमामृगलांछनः। चन्दनं जडतायुक्तम् तानि पूज्यश्रीः इव नोसन्ति।

भावानुवादः— आचार्यप्रवर को रवि–शशि, अनल एवं चन्दन किसी से भी उप-मित नहीं किया जा सकता है। क्योंकि सूर्य तीव्र आतप देता है। चन्द्रमा मृगलाञ्छन युक्त होता है। अग्नि तीव्रज्वलनशील होती है। तथा चन्दन जड़ता युक्त होता है।

तमसा सूर्यसम्भारः काचेन मणिगौरवम्।
यथा विवर्धते दुष्टैः तथाऽख्यातिः सतामपि ।।७८।।

अन्वयः—यथा तमसा सूर्यसंभारः । काचेन मणिगौरवम् विवर्धते तथा दुष्टैः सताम् अपि आख्यातिः विवर्धते ।

भावानुवादः—जैसे अन्धकार के द्वारा सूर्य की, एव काँच के टुकड़े से मणि की शोभा बढ़ती है । वैसे ही दुर्जनों के कारण सज्जनों के सम्मान में भी सहज वृद्धि होती है ।

व्यवहारं खलानां च, पूज्यश्रीसहनं तथा ।
विलोक्य जनता जज्ञे, वस्तुतत्त्वं यथार्थतः ।।७९ ।

अन्वयः—जनता खलानां च व्यवहारम् तथा पूज्यश्रीसहनं विलोक्य यथार्थतः वस्तुतत्त्वम् जज्ञे ।

भावानुवादः—स्थानीय जनता ने असत् श्रद्धासम्पन्न दुर्जनो के व्यवहार का एवं आचार्यप्रवर के सौजन्यपूर्ण व्यवहार का अवलोकन कर सहजतया वस्तुतत्त्व को समझ लिया ।

रहस्यं विवृतं जातं धर्मतत्त्वस्य वस्तुतः ।
रत्नकाचपरिज्ञानं रात्निकस्यैव जायते ।।८०।।

अन्वयः—धर्मतत्त्वस्य वस्तुत रहस्यं विवृतं जातम् । रत्नकाचपरिज्ञान रात्निकस्य एव जायते ।

भावानुवादः—धर्म तत्त्व का सम्यग् रहस्य उद्घाटित हो गया । रत्न तथा कांच की परीक्षा तो जौहरी कर ही लेते है ।

नवींने च पदे सोऽत्र पूजितोऽभूद्विशेषतः ।
वैदुष्यं कारणं तत्र सदाचारोऽपि तादृशः ।८१।।

अन्वयः—अत्र नवीने च पदे असौ विशेषतः पूजित अभूत् । तत्र वैदुष्यम् तादृशः सदाचारः अपि कारणम् (मतम्) ।

भावानुवादः—आचार्यप्रवर की महिमा का विस्तार यहां स्थली प्रदेश मे बहुत

हुआ। यहाँ वे विशेष रूपेण पूजित हुए। इसका प्रभूत कारण था उनकी विद्वत्ता एव चारित्रनिष्ठा।

**विद्वद्भिः पूजितोऽत्यर्थं जैनधर्मस्य देशकः।**
**आगतोऽभूत्स्थली प्रान्ते करुणापृक्तमानसः ॥८२॥**

अन्वयः—जैनधर्मस्य देशकः विद्वद्भिः अत्यर्थं पूजितः (आचार्यवर्यः) करुणापृक्तमानसः स्थलीप्रान्ते आगतः अभूत्।

भावानुवादः—करुणापूत मानस, विद्वत्समाज द्वारा अतिशय पूज्य, जैनधर्म के महात्तम सन्देश वाहक आचार्यप्रवर स्थली प्रान्त में परिभ्रमण करते रहे।

**सद्धर्मस्य प्रचाराय, करुणावरुणालयः।**
**गालिकां संस्तुतिं मेने कष्टं जीवनसाधनम् ॥८३॥**

अन्वयः—करुणावरुणालयः सः सद्धर्मस्य प्रचाराय गालिकाम् संस्तुतिम् तथा कष्टं जीवनसाधनम् मेने।

भावानुवादः—करुणानिधि आचार्यप्रवर ने सद्धर्मप्रचारहेतु विपक्षियों द्वारा प्रयुक्त अपशब्दों को भी स्तुति माना। तथा कष्टों को आगे बढ़ाने का साधन स्वीकार किया।

**तस्यसत्पुरुषस्यैव व्याख्यानेन प्रभाविताः।**
**अनेके मानवास्तत्र सम्यक् श्रद्धां समाश्रिताः ॥८४॥**

अन्वयः—तत्र तस्यसत्पुरुषस्य एव व्याख्यानेन प्रभाविताः अनेके मानवाः सम्यक् श्रद्धाम् समाश्रिताः अभवन्!

भावानुवादः—उन महाप्रभु आचार्यदेव के प्रवचनों से प्रभावित हो अनेक व्यक्तियों ने सम्यक्त्व रत्न आत्मबोध प्राप्त किया। अर्थात् उन्होंने जिनवाणी का ज्ञान प्राप्त किया।

**यदा श्रुतं धर्मतत्त्वं श्रीमुखात्सद्विवेचितम्।**
**अज्ञासिषुः समग्रंतद् भ्रान्तिर्दूरेगताखिला ॥८५॥**

अन्वयः—यदा पूज्यश्रीमुखात् विवेचितम् धर्मतत्त्वं श्रुतम् । तद् अखिला भ्रान्तिः दूरे समागता । तदा मानवाः तत् समग्रम् धर्मतत्त्वम् यथार्थतः अज्ञासिषुः !

भावानुवादः—आचार्यदेव द्वारा विवेचित धर्मतत्त्व को जब लोगों ने सुना तो उनकी अनेक भ्रान्तिया स्वतः निर्मूल हो गई । तथा उन्हें धर्म के यथार्थ स्वरूप का बोध हुआ ।

लम्बया ग्रीवयाऽत्यर्थं कष्टकान्युपमर्दतः ।
दासेरकान् विचित्रांश्च चैतान्वातमजांस्तथा ॥८६॥

अन्वयः—लम्बयाग्रीवया अत्यर्थं कष्टकानि उपमर्दतः विचित्रान् दासेरकान् तथा वाएतान् वातमजान् (मृगान्) पश्यन्तः विजह्रुरिति परेणान्वयः ।

भावानुवादः—स्थलीप्रदेश के वन प्रान्त के विचरण काल मे आचार्यप्रवर ने लम्वी ग्रीवा से कांटों का चर्बरण करते हुए ऊटों की तथा वनप्रदेश में स्वछन्द भ्रमण करते हुए मृगों को सहज रूपेण देखते हुए विचरण किया ।

चरन्तीः विपुलाः गाश्च घटोध्नीः संगतामिथः ।
विपिने विविधैवर्गैं विकीर्णास्तृणसन्ततीः ॥८७॥

अन्वयः—मिथः संगताः घटौध्नीः विविधैः वर्णैः विकीर्णाः विपिने तृणसन्ततीः चरन्तीः विपुलाः गाः (च) पश्यन्तः विजह्रुरिति परेणान्वयः !

भावानुवादः—एक दूसरे से सटी हुई दीर्घ थनो वाली चित्र–विचित्र रूपों को लिए हुए जंगल में घास चरती हुई गो माताओं के सामने से (विहार किया)।

लघुपादे स्थितान् पिच्छ–भारान् भावेन विभ्रतः ।
विना वाद्यंविनागानं यथातालं यथालयम् ॥८८॥

अन्वयः—लघुपादे स्थितान् भावेन पिच्छभारान् विभ्रतः वाद्यं गानं विना यथातालं यथालयन् नृत्यतः वर्हिणः (पश्यन्तः) (विजह्रुरिति परेणान्वयः) ।

भावानुवादः—अपने पतले पैरों पर स्थित नृत्य के भाव से दीर्घ पूंछ के भार

को धारण करने वाले, बिना वाद्य एव सगीत के सम्यक् ताल एवं लय से नृत्य करते हुए मयूरों के प्राकृतिक स्वागत के साथ (आचार्यप्रवर ने विचरण किया ।

**क्वचित्पादपछायासु केकारावं वितन्वतः ।**
**नृत्यतश्चमयूरीभिरुद्ग्रीवान्वर्हिणो बहून् ॥८९॥**

अन्वयः—क्वचित्पादपछायासु केकाराव वितन्वतः मयूरीभिश्च सह नृत्यतः उद्ग्रीवान् बहून् बर्हिणः च (पश्यन्तः) (विजह्रुरिति परेणान्वय ) !

भावानुवादः—कही-कही तरुतले अपने केकारव द्वारा मयूरियों के साथ नृत्य करते हुए दीर्घ ग्रीवा सम्पन्न मयूरों पर दृष्टिपात हुआ जो सहज ही विहार भूमि की श्रीवृद्धि कर रहे थे ।

**आरोहञ्चावरोहं ते कुर्वन्तः पथिवालुके ।**
**पश्यन्तः प्राकृतंदृश्यं विजह्रुर्मुनिभि: सह ॥९०॥**

अन्वयः—बालुके पथि आरोहम् अवरोह च कुर्वन्तः ते मुनिभिः सह प्राकृतदृश्यम् पश्यन्तः विजह्रु ।

भावानुवादः—आचार्यप्रवर मार्ग में आगत बालू के टीलो पर चढते-उतरते हुए तथा प्राकृतिक दृश्यों का अवलोकन करते हुए मुनिवृन्द के साथ कल्पानुसार भ्रमण करते थे ।

**तेरापन्थस्य साधुभ्यः ऋते ऽन्यस्मै न दीयताम् ।**
**रक्षणं नैवकर्तव्यं म्रियमाणस्य कस्यचित् ॥९१॥**

अन्वयः—तेरापन्थस्य साधुभ्यः ऋते अन्यस्मै न दीयताम् । म्रियमाणस्य कस्यचित् (जीवस्य) रक्षणम् न एव कर्तव्यम् ।

भावानुवादः—इस क्षेत्र में तेरापन्थ की यह मान्यता फैली हुई थी कि "तेरापन्थ के साधुओं के अतिरिक्त अन्य किसी को कुछ भी दान नहीं देना चाहिये। क्योंकि उसमें एकान्त पाप होता है । मरते हुए किसी प्राणी की रक्षा भी नहीं करनी चाहिये ।

अन्यथा पापमाख्यातमेकान्तेनेतिवादिनः ।
मतस्य खण्डन जातं पूज्यश्रीधर्मदेशनैः ।।९२।।

अन्वयः—अन्यथा पापम् आख्यातमिति एकान्तेनेति वादिनः (पूर्वपक्षस्य) मतस्य खण्डनम् तत्रपूज्यश्री धर्मदेशनैः जातम् ।

भावानुवादः—अन्यथा एकान्त पाप होता है । ऐसा करने वाले विपक्षियों के मत का निरसन यत्र–तत्र होने वाले आचार्यश्री के उपदेशों से सहज ही हो गया । अर्थात् चिरकाल से व्याप्त भ्रान्त धारणाओं का निरसन आचार्यश्री के प्रवचनों से हो गया ।

दयादानस्य चाख्यानं श्रोतुं येऽन्ये समागताः ।
वृत्तिस्तेषां समुच्छिन्ना जातास्ते न पराङ्.मुखाः ।।९३।।

अन्वयः—ये अन्ये दयादानस्य च आख्यान श्रोतुम् समागताः तेषाम् (विपरीता) वृत्तिः समुच्छिन्ना । ते च पराङ्.मुखाः न जाताः तेपि अनुकूला एवाभवन् ।

भावानुवादः—जो भी व्यक्ति आचार्यप्रवर के दया–दान सम्बन्धी प्रवचन सुनने उपस्थित हुए । उनकी मिथ्या धारणाएं दूर हुयी तथा वे भी सद्धर्म के अनुकूल हो गए ।

बहिष्कारस्य नो चिन्ता, सुधापानं समीहितम् ।
यत्र गंगावहेत्तत्र पल्ल्वलस्य च का कथा ?? ।।९४।।

अन्वयः—तेषाम् बहिष्कारस्य चिन्तानो । तेषाम् सुधापानं समीहितम् आसीत् । यत्र गंगावहेत् तत् पल्ल्वलस्य च का कथा वर्तते ??

भावानुवादः—जो परिपन्थी किन्तु जिज्ञासु व्यक्ति प्रवचन श्रवण हेतु उपस्थित होने, उन्हे अपने सघ से वहिष्कार की कोई चिन्ता नही थी । उन्हे तो अमृत पीना था । जहा गंगा प्रवहमान हो वहां क्षुद्र जलाशय की वात ही क्या ? जलाशय को त्याग कर गंगाजल का उपयोग ही महत्त्वपूर्ण माना जाता है ।

बहुशोवादचर्चायै समाहूता न सगता· ।
प्रकाशेकौशिको गन्तु कदा कुत्र समीहते ? ॥९५॥

अन्वयः—(ते पूर्वं पक्षधराः) वादचर्चायै समाहूताः अपिन सगताः (न आगताः) कौशिकः प्रकाशे गन्तुम् कदा कुत्र च समीहते ?

भावानुवादः—उन परिपन्थियों को अनेक बार वादचर्चा के लिए भी निमन्त्रित किया किन्तु वे नही आए । उल्लू प्रकाश मे जाने की इच्छा कैसे कर सकता है ?

सम्प्राप्ताः गुरवः पश्चात् पूर्वं कीर्तिः समागता ।
सौरभं प्रथमं याति कुसुमं तदनन्तरम् ॥९६॥

अन्वयः—तेषाम् कीर्तिः पूर्वम् समागता । ते गुरवः पश्चात् सम्प्राप्ताः । प्रथमं सौरभ याति तदनन्तरम् च कुसुमम् दृश्यते ?

भावानुवादः–ग्रामों एव नगरों में आचार्यश्री के पदार्पण के पूर्व ही उनकी कीर्ति पहुंच जाती थी । क्योकि पुष्प के पूर्व ही उसका सौरभ पहुंच जाता है ।

पूज्यश्रीणां प्रभावेण तेरापन्थस्य वागुरात् ।
बहूनां मोचनं जातं धर्माभासाद् विशेषत· ॥९७॥

अन्वयः—पूज्यश्रीणाम् प्रभावेण धर्माभासात् तरापन्थस्य वागुरात् बहूनां मोचनं विशेपतः जातम् !

भावानुवादः—आचार्यप्रवर के उधर के विचरण काल मे तेरापन्थ की मिथ्या धारणाओं के बन्धन से अनेक व्यक्तियों को मुक्ति मिली । उन्हे सद्धर्म का सम्यग् बोध हुआ ।

तेषां रागोन कुत्रैव, द्वेषश्चापि न कैरपि ।
यत्रैव गमनं जातं समभून्नवजीवनम् ॥९८॥

:—तेषाम् (श्री मज्जवाहराचार्याणाम्) कुत्र एव रागो न । कैः अपि ...

द्वेषः च अपि न । यत्र एव तेषाम् गमन जातम् । तत्र एव नवजीवनम् समभूत् !

भावानुवादः—आचार्यप्रवर को न किसी पर राग था और न द्वेष । अतएव वे जहा भी गए । वही नवजीवन का उदय हुआ ।

यत्रैवधर्मसम्भारे विषमाधारणाऽभवत् ।
गुरुपादे समायाते तस्याः जातं प्रमार्जनम् ।।९९।।

अन्वयः—यत्र एव धर्मसम्भारे (कस्यापि) विषमा धारणा अभवत् । गुरुपादे समायाते सति तस्याः (धारणायाः) प्रमार्जनम् जातम् !

भावानुवादः—चूंकि पूज्य आचार्यदेव समाधान देने मे अत्यन्त दक्ष थे । अतः जहाँ भी जिसको भी धर्म के विषय में विषम धारणा ने घेरा । आचार्य चरणों मे पहुचने पर विषम धारणाओं का उन्मूलन हो गया ।

व्याख्याने यदि संबाधा, चागता कापि कुत्रचित् ।
विनष्टा सर्वथा जाता जनमंगलकारणात् ।।१००।।

अन्वयः—कुत्रचित् (तेषाम्) व्याख्याने यदि कापि संबाधा आगता । सा जन-मगलकारणात् सर्वथा विनष्टा जाता ।

भावानुवादः—जब कभी कदाचित् उनके प्रवचन में व्यवधान उपस्थित हुआ । तो वह जन–जन की मंगल भावना के कारण सर्वथा विनष्ट हो गया ।

बहुशो जनतागत्य कीर्तिलुब्धाऽकृतात्मना ।
स्वागतं भक्तिभावेन प्रवेशो नगरे ततः ।।१०१।।

अन्वयः—पूर्वं बहुशः कीर्तिलुब्धा जनता आगत्य भक्तिभावेन आत्मना तेषाम् स्वागतम् अकृत (किया) । ततः तेषाम् नगरे प्रवेशः (आसीत्) ।

भावानुवादः—आचार्यप्रवर की कीर्ति सुवास से आकृष्ट होकर भक्तिभावना से प्रेरित हो जनता स्वतः स्वागतार्थ उपस्थित हो जाती । अनन्तर ग्रामों में

अथवा नगरों में प्रवेश होता था ।

समग्रेच स्थलीप्रान्ते विहृत्य जनमानसम् ।
गुणौघैरात्मसात् चक्रुरयस्कान्तनिभाः सुभाः ॥१०२॥

अन्वयः—अयस्कान्तनिभाः सुभाः (तेगुरवः) समग्रेचस्थलीप्रान्ते विहृत्य गुणौघैः जनमानसम् आत्मसात् चक्रुः !

भावानुवादः—प्रकाश पुञ्ज गुरुवर्य ने सम्पूर्ण स्थलीप्रान्त में भ्रमण कर अपने विशिष्ट गुणों के द्वारा जनमानस को चुम्बकवत् आकृष्ट कर अपना बना लिया ।

कुत्रचिद्वैदिकैर्मन्त्रैः वैदिकाऽद्वैतमानिनः ।
स्वागतं विदधुस्तेषामाचारेण प्रभाविताः ॥१०३॥

अन्वयः—तेषाम् आचारेण प्रभाविताः (सन्तः) कुत्रचित् वैदिकाऽद्वैतमानिनः वैदिकमन्त्रैः तेषाम् स्वागतम् विदधुः !

भावानुवादः—आचार्य प्रभु के महिमामय व्यक्तित्व से प्रभावित होकर अनेक स्थानों पर अद्वैतवादीवैदिक विद्वानों ने वैदमन्त्रों के द्वारा उनका स्वागत किया ।

ग्रामे ग्राम्याः वनेवन्याः नगरेषु च नागराः ।
विद्यालयेषु विद्वान्सः स्वागतं विदधुः परम् ॥१०४॥

अन्वयः—तेषाम् ग्रामे ग्राम्याः । वनेच वन्याः । नगरे नागराः । विद्यालयेषु विद्वान्सः च परम् स्वागतम् विदधुः ।

भावानुवादः—ग्रामों में ग्रामवासियों ने नगरों में नागरिकों ने तथा वन में वनवासियों ने तथा विद्यालयों में विद्वानों में आचार्यदेव का भावभीना स्वागत किया ।

परैः ग्रामे तृषा—तप्तैः विहारे साधुभिः क्वचित् ।
सचित्तं सलिलं पीतं कृतं मिथ्याभिरोपणम् ॥१०५॥

अन्वयः—तैः (अवृद्धिः) ग्रामे विहारे क्वचित् तृषार्तैः आचार्यसाधुभिः सचित्तम् सलिलं पीतम् इति मिथ्याभिरोपणम् कृतम् ।

भावानुवादः—विहार चर्या के प्रसंग पर किसी स्थान पर विपक्षियों ने आचार्य-प्रवर पर यह मिथ्या आरोप लगाया कि "प्यास सन्तप्त इनके सन्तों ने अमुक स्थान में सचित्त जल लिया ।

कल्पिताऽसत्यरक्षार्थं प्रभूतं पापमर्जितम् ।
कूटसाक्ष्यकृतेऽस्वानां वित्तलोभोऽपिदर्शितः ॥१०६॥

अन्वयः—तैः कल्पिताऽसत्यरक्षार्थम् प्रभूतम् पापम् अर्जितम् । कूटसाक्ष्यकृते अस्वानाम् (निर्धन) । वित्तलोभः अपि दर्शितः ।

भावानुवादः—और इस असत्य की रक्षा हेतु उन्होंने निर्धन व्यक्तियों को धन का प्रलोभन दिया और बहुत अशुभ कर्मों का उपार्जन किया ।

सन्देहनिविवृत्यर्थं यत्नः कोपि न तैः कृतः ।
अन्ते सत्यस्य विजयोजातस्ते च पराजिताः ॥१०७॥

अन्वयः—तैः सन्देहविनिवृत्यर्थम् कोपि यत्नः न कृतः । अन्ते सत्यस्य विजयः जातः ते च पराजिताः अभवन् ।

भावानुवादः—आचार्यप्रवर ने इस मिथ्या आरोप के निवारण हेतु विशेष प्रयत्न नहीं किया । तथापि वह स्वतः दूर हो गया । अन्त में सत्य विजयी हुआ और परिपन्थियों को पराजय का मुंह देखना पड़ा ।

कूटसंभाषणं नित्यं, धर्मतत्त्वेप्रतारणम् ।
मिथ्या समाश्रयो धर्मो, दयादानस्य वैरिणाम् ॥१०८॥

अन्वयः—दयादानस्य वैरिणाम् नित्यम् कूटसम्भाषणम् धर्मतत्त्वे प्रतारणम्, मिथ्या समाश्रयः च धर्मः (अस्ति) ।

भावानुवादः—दया-दान विरोधियों का यह धर्म हो गया है, कि सदा मगर

का आश्रय लेना, अत्याचरण करना, एवं धर्म की आड़ में भावुक जनता को ठगना ।

अतिवृष्टावनावृष्टौ दुर्भिक्षे शत्रुपीडने ।
ईतिभीतिसमायुक्ते ते च दानं न कुर्वते ॥१०९॥

अन्वयः—ते च अतिवृष्टौ, अनावृष्टौ, दुर्भिक्षे, शत्रुपीडिते, ईतिभीतिसमायुक्ते (समयेपि) दानम् न कुर्वते !

भावानुवादः—वे दान विद्वेषी सूखा पड़ने पर, बाढ़ आने पर देश पर दुःकाल की छाया पड़ने पर अथवा शत्रुओं की चढ़ाई होने पर तथा ईतिभीति के प्रसंग पर भी कभी दान नही देते है । और उनके मुनिजन भी इसके लिए उपदेश नही देते हैं ।

तथाच करणंपापं मन्यन्ते भ्रान्तचेतसः ।
तद्धर्मगुरवश्चेत्थमुत्सूत्रं ब्रुवतेऽन्यथा ॥११०॥

अन्वयः—ते भ्रान्तचेतसः तथा च करणं पापं मन्यन्ते । तद्धर्मगुरवः इत्यम् अन्यथा उत्सूत्रम् ब्रुवते !

भावानुवादः—वे भ्रान्तचित्त होकर इस प्रकार के दान कार्य में पाप मानते हैं; क्योंकि उनके परममान्य गुरु भी ऐसी ही सूत्र विरुद्ध प्ररूपणा करते हैं ।

केषामपि च जीवानां रक्षणं ते न कुर्वते ।
एतादृशोपि धर्मोऽस्ति महदाश्चर्यं धरातले ॥१११॥

अन्वयः—ते केषामपि च जीवानां रक्षणं न कुर्वते । धरातले एतादृशः अपि धर्मः अस्ति । इति महदाश्चर्यम् (विद्यते) !

भावानुवादः—वे किसी भी प्राणी की रक्षा नही करते हैं । यह महान् आश्चर्य का विषय है; कि पृथ्वी पर ऐसा भी धर्म है ।

## स्थली चरितसर्गः—

संवत्सरीदिने सर्वैः कृतं कार्यविरोधनम् ।
मांसादैरपि तत्रैव विरोधो दर्शितः परैः ॥११२॥

अन्वय.—संवत्सरी दिने सर्वैः मांसादैः अपि कार्यविरोधन कृतम् । तत्र एव दिने परैः विरोधः दर्शितः !

भावानुवादः—आचार्यप्रवर के उपदेश से प्रभावित हो शौकरिकों (कसाइयों) ने भी अपना जीव हिसा का कार्य सवत्सरी महापर्व को बन्द रखा, किन्तु विरोधियो ने तो उस दिन भी विरोध का प्रदर्शन किया ।

गोचरीग्रहणे बाधा बहुधा पातिता यदा ।
जातानो सफलारोधे प्रत्याख्यानमकारयन् ॥११३॥

अन्वयः—गोचरीग्रहणे बहुधा एभिः बाधापातिता । यदा रोधेसफलो ना जाताः । तदा अपि प्रत्याख्यानम् अकारयन् !

भावानुवादः—भिक्षा प्रदान करने का भी निज श्रावकों को मुनियों द्वारा निषेध किया गया, किन्तु जब इसमें सफलता नही मिली तो उन्होंने श्रावक-श्राविकाओं को प्रत्याख्यान करवाया कि "इन्हें (साधुमार्गियों) को भिक्षा नहीं देना ।

श्रोतुमपिन गन्तव्यं व्याख्यानं तस्यकर्हिचित् ।
वृष्टे देवे धरायां च मार्दवं जायतेऽखिलम् ॥११४॥

अन्वयः—तस्य (पूज्यमहाराजस्य) व्याख्यानं श्रोतुम् अपि कर्हिचित् न गन्तव्यम् । इति प्रत्याख्यानम कारितम् । धरायाम् च वृष्टे देवे अखिलं मार्दवम् जायते एव !

भावानुवादः—श्रावकों को यह नियम भी करवाया कि उनके (आचार्यश्री के) प्रवचनों के श्रवण हेतु भी नहीं जाना; किन्तु इसका भी प्रवुद्ध जीवियों पर प्रभाव नही हुआ । यह स्वाभाविक है कि पृथ्वी पर वर्षा के होने पर मृदुता अपने आप आ जाती है ।

**रोधनेऽपिऽकथं रुद्धः प्रवाहः पयसां भुवि ।**
**यथा यथा विरोधोऽभूत् जिज्ञासा वर्धिता तथा ॥११५॥**

अन्वयः—भुविपयसां प्रवाहः रोधने अपि अथं रुद्धः (जायते) यथा यथा त
विरोधः अभूत् ! तथा तथा (जनानाम्) जिज्ञासावर्धिता जाता ।

भावानुवादः—जैसे–जैसे पूज्यश्री के प्रवचन आदि का विरोध हुआ । वैसे-वै
मनुष्यों की प्रवचन श्रवण की जिज्ञासा बढ़ती गई । धरा पर प्रवहमान ज
धारा को कैसे रोका जा सकता है ?

**व्याख्यानानि च जातानि चत्वरे य चतुष्पथे ।**
**यैश्चलाभान्विता जाता नराः सर्वेसमन्ततः । ११६॥**

अन्वयः—चत्वरे चतुष्पथेच तस्य व्याख्यानानि जातानि ।यैः च सर्वे नरः समन्त
लाभान्विताः जाताः ।

भावानुवादः—आचार्यश्री के प्रवचन चौक, आँगन एवं चौराहों जैसे सार्वजनि
स्थलों पर होते थे । जिससे सभी प्रकार के मानव लाभान्वित होते थे ।

**विद्वद्भिः सेविते वित्तैः दयादानपरायणे ।**
**रामदुर्गे समाहूताः वादार्थं नागताः परे ॥११७॥**

अन्वयः—विद्वद्भिः सेविते वित्तैः दयादानपरायणे रामदुर्गे (नगरे) परे (ते
पन्यिनः) वादार्थं समाहूताः परम् ते (तदर्थम्) नागताः !

भावानुवादः—रामगढ नगर में, जहां विद्वानों धनाधीशों एवं दयादान प्रेमियों
निवास था । विद्वानों के समक्ष विपक्षियों को शास्त्रार्थ (वाद–चर्चा) के लि
आमन्त्रित किया गया किन्तु पराजय के भय से वे नहीं आये ।

**जीवरक्षा दयादानं शास्त्रेषु बहुवर्णितम् ।**
**परोपकारसाम्राज्यं वर्धनीयं विशेषतः ॥११८॥**

अन्वयः—शास्त्रेषु जीवरक्षादयादानम् बहुवर्णितम् (अस्ति) । विशेषतः परो
कारसाम्राज्यम् (एव वर्धनीयम्) ।

भावानुवादः—आगमों में जीवरक्षा एवं दया–दान का बहुत अधिक एवं सम्यग् विवेचन है। अतः विशेष रूप से संसार में दया दान रूप परोपकार के साम्राज्य को विकसित करना चाहिये।

जैनधर्मस्तु वीराणां कापुरुषस्य नैवसः।
सिंहीक्षीरं यथापात्रे स्वर्णस्यैव प्रदुह्यते ।।११९।।

अन्वयः—जैनधर्मः तु वीराणाम् (अस्ति)। सः कापुरुषस्य न एव। यथा स्वर्णस्य एव पात्रे सिंहीक्षीरम् प्रदुह्यते!

भावानुवादः—जैनधर्म कायरों का नहीं, वीरों का धर्म है। जैसे सिहनी का दूध स्वर्ण पात्र में स्थिर रहता है। दूहा जाता है वैसे ही इस धर्म का पालन समुन्नत वीर पुरुष ही कर सकते हैं।

व्याख्यानं श्रोतुमायान्ति भाग्यवन्तो विचारकाः।
सुलभबोधिपात्राणि सत्यजिज्ञासुव्यक्तयः ।।१२०।।

अन्वयः—भाग्यवन्तः विचारकाः सुलभबोधिपात्राणि सत्यजिज्ञासुव्यक्तयः व्याख्यानं श्रोतुम् आयान्ति!

भावानुवादः—आचार्यप्रवर के प्रवचन श्रवणार्थ परम सौभाग्यशाली, धर्मतत्त्व विचारक ज्ञान के विशिष्ट पात्र एवं सत्य के जिज्ञासु व्यक्ति ही विशेष आते थे।

विविधेषु प्रसगेषु जातो दीक्षामहोत्सवः।
आत्मोन्नतिकराः जीवाः साधुधर्मेश्च दीक्षिताः ।।१२१।।

अन्वयः—विविधेषु प्रसंगेषु दीक्षामहोत्सवः जातः। आत्मोन्नतिकराः जीवाः साधुधर्मे च दीक्षिताः (अभवन्)।

भावानुवादः—आचार्यप्रवर के इस भ्रमण काल में अनेक स्थानों पर भागवती दीक्षाएं भी सम्पन्न हुयीं। आत्मोन्नति के इच्छुक अनेक मुमुक्षु विविध प्रसंगों पर दीक्षित हुए।

अनेके दीक्षिताः सत्यश्रद्धायां स्वयमात्मना ।
उपलब्धिः परा जाता, पूज्यश्रीणां स्थली भुवि ।

अन्वयः—सत्य श्रद्धायाम् स्वयम् आगत्य अनेके आत्मना दीक्षिताः स्थलीभुवि पूज्यश्रीणां परा उपलब्धिः जाता !

भावानुवादः—सत्य श्रद्धा समन्वित अनेक व्यक्ति स्वयं आचार्यप्रवर के समीप आकर दीक्षित हुए । इस प्रकार स्थलीप्रदेश में आचार्यप्रवर को विशेष सफलता हस्तगत हुई ।

मन्दाक्रान्ता छन्दः—

भ्रामं भ्राम विपुलमतिना ग्रामवासेष्वजस्रम् ।
सार्धं पूतैर्मुनिजनचयैर्दीन धर्मोपकारे ।।
कारुण्याप्तेन मृदुवचसा साधनासस्थितेन ।
दुर्गस्थल्यां बहुलजनता, बोधिता बोधकेन । १२३।।

अन्वयः—ग्रामवासेषु अजस्रम् भ्रामंभ्राम दीनधर्मोपकारे पूतैः मुनिजनचयैः सार्धम् साधनासस्थितेन बोधकेन विपुलमतिना कारुण्याप्तेन मृदुवचसा दुर्गस्थल्यां निखिलजनताः बोधिताः !

भावानुवादः—इस प्रकार प्रकाण्ड प्रतिभा के धनी, कोमल कलित वचन वाले करुणानिधि, परोपकार निरत आचार्य प्रवर के मुनि मण्डल के साथ ग्राम-ग्राम में निरन्तर भ्रमण से बहुत अधिक जनता प्रतिबोधित हुई ।

सर्वजांगलभागेषु भ्रामंभ्राममुपादिशन् ।
इन्द्रप्रस्थं जगामाशु भक्त्याकृष्ट उदारधीः ।।१२४।।

अन्वयः—उदारधीः (आचार्यः) सर्वजाँगल भागेषु भ्रामंभ्रामम् उपादिशन् तत्र जनताभक्त्या आकृष्ट (इव) इन्द्रप्रस्थम् आशु जगाम !

भावानुवादः—इस प्रकार स्थली प्रान्त में जाँगल प्रदेश बीकानेर संभाग में अविरत पाद चरण करते हुए धर्मोपदेश प्रदान करते रहे । अनन्तर उदार चेता आचार्यप्रवर दिल्ली की जनता के भक्ति पूर्ण आग्रह से आकृष्ट होकर दिल्ली

की ओर प्रस्थित हुए ।

इतिहासविशिष्टेऽस्मिन् नगरे विश्वविश्रुते ।
देशनाऽस्यामृता जाता नन्दने वाग्पतेर्यथा ।।१२५।।

अन्वयः—इतिहास विशिष्टे विश्वविश्रुते अस्मिन् नगरे नन्दने वाग्पतेः यथा अस्य (भगवत् आचार्यस्य) अमृता देशना जाता !

भावानुवादः—विश्वविश्रुत ऐतिहासिक नगरी दिल्ली में आचार्यप्रवर की अमृत तुल्या प्रवचन वर्षा इस प्रकार हुई । जैसे नन्दन वन में वृहस्पति का प्रवचन होता है ।

श्रीमज्जवाहरयशोविजयाभिधाने,
नानेशसच्चरणयोः शरणावधाने ।
श्री चन्द्रमौलिकविनिर्मितसत्प्रबन्धे,
पूर्णःस्थलीचरितसप्तमसारसर्गः ।

समाप्तः सप्तम सर्गः ।

## अथ अष्टमः प्रभावना सर्गः

अपने इस परिभ्रमण के द्वारा समाज में धार्मिक जागरण का सिंहनाद करते हुए श्रद्धेय चरित नायक ने यह जाना कि अब अपनी शारीरिक स्थिति को देखते हुए वैयक्तिक साधना हेतु संघीय दायित्व किसी योग्य मुनि पुंगव के कन्धों पर आरोपित कर देना चाहिए। अर्थात् उन्होंने युवाचार्य पद प्रदान करने का संकल्प किया:—

**उपेन्द्रवज्रा छन्दः**

**ततो युवाचार्य पदं प्रदातुम्, विचारणाभून्निजसंघमध्ये।**
**उपैति तद् गौरवशालि सन्तम् रवेर्यथा रश्मिरदभ्रपद्मम् ॥१॥**

अन्वयः—ततः (गणेशिमुनये) युवाचार्यपदम् प्रदातुम् निजसंघमध्ये विचारणा अभूत्! रवेः रश्मिः अदभ्रपद्मम् यथा तद् गौरवशालि पदम् सन्तम् उपैति!

भावानुवादः—संघ में किसी योग्य मुनि प्रवर को युवाचार्य बनाने की विचारणा हुई। जैसे रवि किरणें कमल को प्रफुल्लता प्रदान करती हैं। वैसे ही यह गरिमामय पद किसी योग्य मुनि पुंगव को ही प्राप्त होता है।

**गुणाग्रणीः गौरवमादधानो, गुरुप्रियो गर्वलवैर्विहीनो।**
**गभीरचित्त. प्रकृतेर्विनीतो, मुनिर्गणेशो मनसोपनीतः ॥२॥**

अन्वयः—गुणाग्रणीः गौरवम् आदधानः गुरुप्रियः गर्वलवैर्विहीनः गम्भीरचित्तः प्रकृतेः विनीतः मुनिः गणेशः सर्वैः मनसा उपनीतः!

भावानुवादः—आचार्यप्रवर के चिन्तन को मनोभूमि में वह योग्य मुनि पुंगव मुनि गणेश। क्योंकि वे गुणजनों में अग्रगण्य, अभिमान के लेश से रहित, विनम्रप्रकृति वाले, गम्भीरचित्त, गौरवशाली होने से गुरुप्रिय थे।

**बुधेषु मुख्यः प्रतिभाप्रधानः, विभिन्नभाषापरिबोधशाली ।**
**गुरुप्रसेवाकरणैकवीरः यथार्थनामा सबभूवधीरः ।।३।।**

अन्वयः—बुधेषु मुख्यः प्रतिभाप्रधानः विभिन्नभाषापरिबोधशाली, गुरुप्रसेवाकरणैकवीरः सः धीरः (गणेशः) यथार्थनामा बभूव !

भावानुवादः—विद्वत् शिरोमणि, विविधभाषाओं के परिज्ञाता, महान् प्रतिभा के स्वामी गुरुसेवा समर्पित, आत्मजयी, महाधीर मुनि श्री गणेशीलाल जी (यथा नाम तथा गुण) थे ।

**अमंस्त संस्तावममोघरूपम्, कृतं च संघेन सदानुकूलम् ।**
**तरिं जलौधाद् प्रचलत्तरंगात् नयेत कूलं ननुकर्णधारः ।।४।।**

अन्वयः—(सः) संघेन सदानुकूलम् अमोघरूपम् च कृतम् प्रस्तावम् अमंस्त । कर्णधारः एव प्रचलत्तरगात् जलौधात् तरिम् ननु कूलम् नयेत !

भावानुवादः—स्वय की इच्छा नही होते हुए भी आराध्य गुरुदेव की आज्ञा से उन्होंने युवाचार्य पद इसलिए स्वीकार कर लिया कि 'जैसे सुशिक्षित नाविक ही चचल तरंगों से युक्त समुद्र से नौका को पार से जाता है ।" वैसे ही आचार्य के विना संघीय व्यवस्थाए सुन्दर रूप से सम्पन्न नहीं हो सकती हैं ।

**कले च काले शिशिरावसाने मधोर्मुखे रम्यतरे सुमाढ्ये ।**
**पिकालिसंकूजितकाननेऽस्मिन्, महोत्सवोऽसौ नियतो बभूव ।।५।।**

अन्वयः—असौ युवाचार्य पदवीदानमहोत्सवः शिशिरावसाने कले मधोर्मुखे रम्यतरे, सुमाढ्ये (पुष्प समन्विते) पिकालिसंकूजितकाननेऽस्मिन् काले नियतः बभूव !

भावानुवादः—युवाचार्य चादर प्रदान महोत्सव शिशिर ऋतु की परिसमाप्ति एवं रमणीय मनोभिराम पुष्पो से परिपूर्ण तथा कोकिल-भ्रमरादि से अनुगुञ्जित काननवाले बसन्त ऋतु के प्रारम्भ में नियत किया गया ।

**पुराणपत्रापगमान्तकाले, नवीनरूपं धरतेवनश्रीः ।**
**तथैव सज्जा परमोत्सवस्य, कृतामनोज्ञाभिनवा समग्रा ।।६।।**

अन्वयः—यथा वनश्रीः पुराणपत्रापगमान्तकाले नवीनरूपं धरते । तथा एव
मोत्सवस्य मनोज्ञा अभिनवा समग्रासज्जाकृता ।

भावानुवादः—प्राचीन पत्रों के गिर जाने पर बसन्त ऋतु में वनों की शोभा नूतन रूप धारण कर लेती है । वैसे ही इस अध्यात्मिक परमोच्च महोत्सव की समग्र रूप से अभिनव मनोज्ञ सजावट की गई ।

**चतुर्विधंतीर्थमुपाजगाम, शुभागतिः साधुमता समानाम् ।**
**विशिष्टरूपं नगरस्य जातम्, यदर्जितं तत्सुलभंन लोके ॥७॥**

अन्वयः—तत्र महोत्सवे चतुर्विधं तीर्थम् उपाजगाम ! समानाम् (सर्वेषाम्) शुभागतिः (स्वागतम्) साधु मता । नगरस्य विशिष्टंरूपम् जातम् । तत्र यद् अर्जितम् तत् लोके कुत्रापि सुलभम् न ।

भावानुवादः—(जावद नगर में होने वाले) उस महान्-उत्सव में साधु-साध्वी, श्रावक-श्राविका रूप चतुर्विध सघ उपस्थित हुआ । सभी का समुचित स्वागत हुआ । नगर का धर्मनगरी के रूप में विलक्षण रूप हो गया । वहां जो कुछ पाया देखा वह अन्यत्र दुर्लभ था ।

**समापतन्ती नगरस्य शोभा, नवर्णनीया मतिमद्भिरेषा ।**
**अभूतपूर्वां परिदृश्य लोकाः स्वनेत्रलाभं सफलं प्रपन्नाः ॥८॥**

अन्वयः—एषा नगरस्य समापतन्ती शोभा मतिमद्भिः वर्णनीया न । लोकाः अभूतपूर्वाम् ताम् परिदृश्य सफलं स्वनेत्रलाभम् प्रपन्नाः !

भावानुवादः—नगर की प्रत्यक्ष दिखाई देने वाली तत्कालीन शोभा का वर्णन प्रज्ञापुञ्ज व्यक्ति भी नहीं कर सकते । उस अभूतपूर्व शोभा को देखकर समस्त जनता ने अपने नेत्रों के लाभ को सफल माना था ।

**स्वभक्तिभावेन समागतानाम्, प्रभूतनृणां सकला व्यवस्था ।**
**विचित्रचित्राऽभवदञ्जसैव, न पार्यते किं करणाय यत्नैः ॥९॥**

अन्वयः—समागतानाम् प्रभूतनृणाम् स्वभक्तिभावेन सकला व्यवस्था अञ्जसा एव

विचित्रचित्रा अभवत् । यत्नैः किंकरणाय नपार्यते ?

भावानुवादः—बाहर से आगत हजारों व्यक्तियों की नगरवासियों द्वारा भक्ति-भाव से की गई व्यवस्था भी अत्यन्त विचित्र थी । लगता था थोड़े से व्यक्तियों ने इतनी सुन्दर व्यवस्था कैसे करली । किन्तु ऐसा कौनसा कार्य है जो प्रयत्न के द्वारा सम्पन्न नहीं हो सकता है ।

**यदात्मभावेन जनाः समेताः, बभूव शोभा ननुकापि दिव्या ।**
**समग्रमास्थानपदस्यदृश्यम्, विलोक्य नेत्रे सफले च जाते ॥१०॥**

अन्वयः—यदा जनाः आत्मभावेन समेताः । तदा कापि दिव्या शोभा ननु बभूव ! आस्थान पदस्य (मच) समग्रम् दृश्यम् विलोक्य नेत्रे च सफले जाते !

भावानुवादः—चूंकि वहां सभी धर्मप्रेमी आत्मीय भाव से एकत्र हुए । अतः वहाँ की समस्त शोभा भाव तरंगे स्वतः ही दिव्य हो गयीं । आचार्य प्रवर के उच्चासन की रचना को देखकर तो नेत्र पवित्र ही हो गये । इसके पश्चात् कुछ भी देखना शेष नही रहा ।

**यथा वसन्ते सुषमा बनेषु, नवीनपत्राणि च पादपेषु ।**
**तथैवमुत्साहविशेषशक्तिः जने जने दृश्यत एव सर्वैः ॥११॥**

अन्वयः—यथा वसन्ते वनेषु सुषमा । पादपेषु च नवीनपत्राणि च दृश्यन्ते । तथा एव जने जने सर्वैः उत्साहविशेषशक्तिः दृश्यते एव !

भावानुवादः—जैसे वसन्त ऋतु में वृक्षों पर नूतन पत्र दिखाई देते हैं । वन की शोभा अप्रतिम हो जाती है । वैसे ही वहां सभी व्यक्तियों को जन-जन में उत्साह एवं उमंग का विशेष भाव दृष्टिगोचर हुआ ।

**सतां सतीनाञ्च सरित्प्रवाहः समुद्रपूज्यश्रियमाजगाम ।**
**सवन्दनादर्शनसंस्तवैश्च, विशेषतोनिर्वृतिमापपूर्णाम् ॥१२॥**

अन्वयः—सताम्, सतीनाम् च सरित्प्रवाहः समुद्रपूज्यश्रियम् आजगाम ! सवन्दनादर्शनसंस्तवैः च विशेषतः पूर्णाम् निर्वृतिम् आप !

भावानुवादः—सरित प्रवाह की तरह श्रमण–श्रमणियों का प्रवाह पूज्यआचार्य श्री रूपी समुद्र में उपस्थित हुआ। दर्शन, वन्दन एवं संस्तुति से वह आनन्द विभोर हो उठा।

**निरापदक्षेत्र पदे प्रशस्ते, पदं कृतं चारुतरं विशाले।**
**ततो यतो विस्तृतिमाप भावः, सुदेशनादेः गुरुणा प्रदत्तः ॥१३॥**

अन्वयः—(आचार्येण) प्रशस्ते विशाले निरापदक्षेत्रपदे यतः चारुतरं पदम् कृतम्! ततः सुदेशानादेः गुरुणा प्रदत्तः भावः विस्तृतिम् आप!

भावानुवादः—आचार्यप्रवर ने प्रवचन स्थल पर पधार कर सुन्दर, निरापद विशाल आसन को सनाथित किया। अनन्तर उनकी प्रवचनामृतधारा विस्तृत हो सर्वत्र व्याप्त हो गई।

**रविप्रकाशातिशयप्रकाशाः, भवन्ति तीर्थंकरनामधेयाः।**
**विशिष्टबोधान्तर्यामिनश्च, न सन्ति लोके ऽप्यधुनास्तिमन्तः ॥१४॥**

अन्वयः—रविप्रकाशातियप्रकाशाः तीर्थंकरनामधेयाः विशिष्टबोधान्तर्यामिनः भवन्ति! लोके ते अधुना अस्तिमन्तः न सन्ति।

भावानुवादः—आचार्यप्रवर का संक्षिप्त सारगर्भित प्रवचन था–"सूर्य से अधिक प्रकाशक, विशिष्ट ज्ञान में रमण करने वाले तीर्थंकर महाप्रभु का अस्तित्व वर्तमान काल में नही होता है।

**न कापि तेषां च कुतोऽप्यपेक्षा, स्वयं प्रभासाः विनिवृत्तकामाः।**
**प्रबोधकाः केवलबोधरूपा, अभावयेषां गुरवोऽपि युक्ताः ॥१५॥**

अन्वयः—स्वयंप्रभासाः, विनिवृत्तकामाः, प्रबोधकाः, केवलबोधरूपाः, (भवन्ति) तेषां च कुतोपि कापि अपेक्षा न। एषाम् अभावे गुरवः अपि युक्ताः (भवन्ते)!

भावानुवादः—"स्वयं प्रभावन्त निवृत्तकाम, प्रबोध दाता, समस्त अपेक्षाओं से रहित, केवल ज्ञानी भी वर्तमान में नही होते हैं। अतः इस काल में इनके

स्थान पर गुरु (आचार्य) को ही माना जाता है। महाचारपइण्णा में कहा गया "तित्थयरो समो सूरी"।

**अपेक्षया ते भुविवर्तमानाः, सहायमासाद्य च संघमेतम् ।**
**प्रकुर्वते बोधमनल्पमस्य, तदार्यमाचार्यपदं प्रपन्नाः ॥१६॥**

अन्वयः–ते तत् आर्यम् आचार्यपदम् प्रपन्नाः भुवि अपेक्षया वर्तमानाः एतम् संघ च सहायम् आसाद्य अस्य (संघस्य) अनल्पम् बोधम् प्रकुर्वते !

भावानुवादः—वे आचार्य गरिमामय आचार्य पद को प्राप्त कर अपेक्षा से पृथ्वी पर केवलीवत् रहते हुए सघ के आध्यात्मिक उत्थान में सहयोग प्रदान कर इसकी व्यवस्था के लिए विशिष्ट बोध प्रदान करते है।

**तपस्विसाधोः परिचर्यकार्ये, सहायतां च विदधाति संघः ।**
**तदैव ते तस्य सुचारुपूर्तिम् विधातुमीशाः परितो भवन्ति ॥१७॥**

अन्वयः—संघः तपस्विसाधोः परिचर्यकार्ये सहायतां च विदधाति ! तदा एव ते (साधवः) तस्य (स्वकर्मणः) धर्मस्य सुचारुपूर्तिम् परितः विधातुम् ईशाः भवन्ति !

भावानुवादः—"संघ व्यवस्था के इस कार्य में चतुर्विध तीर्थ भी तपस्वी श्रमण अथवा रुग्ण मुनि की परिचर्या में अपना यथाविथि सहयोग प्रदान करता है। तभी वे मुनि एवं आचार्य धर्मोन्नति के कार्य में पूर्णतया सक्षम होते हैं।

**सुदेशनां प्राप्य निपीतवन्तः, सुधां प्रकामं तृषिताः नरश्च ।**
**ततो युवाचार्यपदे प्रधाने स्थितं समेतुं विकलावभूवुः ॥१८॥**

अन्वयः—पूर्वम् तृपिताः नरः च सुदेशनां प्राप्य प्रकामं सुधाम् निपीतवन्तः। ततः प्रधाने युवाचार्य पदे स्थितं तम् समेतुं विकला बभूवुः !

भावानुवादः—आचार्यदेव के श्रीमुख से सुदेशनासुधा का समस्त पिपासु जनों ने आतृप्त पान किया। किन्तु अब युवाचार्य पद के महान् अधिकारी श्री गणेशी लाल जी म. सा. को देखने के लिए उत्कण्ठित एवं व्यग्र हो उठे।

**ततो विशाले जनतासमूहे, समागते देशनदानपश्चात् ।**
**तदार्यवर्येण ददे समायाम् स्वमुत्तरीयं स्वयमेवतस्मै ।।१९।।**

अन्वयः—ततो विशाले जनता समूहे समागते देशनदानपश्चात् तदाआर्यवर्ये सभायाम् स्वम् उत्तरीयम् स्वयम् एव तस्मै ददे !

भावानुवादः—अनन्तर विशाल जन समुदाय की उपस्थिति में "नन्दी सूत्र" पाठ एवं प्रवचन के पश्चात् उसी जनसभा में आचार्य श्रेष्ठ श्रीमज्जवाह ने अपना उत्तरीय (चादर) स्वयं अपने कर कमलों से मुनि श्री गणेशिला जी म. सा. को प्रदान किया । अर्थात् उन्हे अपना उत्तराधिकार समर्पि किया ।

**तदत्रकृत्ये परसाधवोऽपि, यथायथं मोदपुरस्सरं ते ।**
**ददुश्च योगं महितं सुयोगे, तदा युवाचार्यपदं स पेदे ।।२०।।**

अन्वयः—ते परसाधवः अपि सुयोगे अत्र कृत्ये मोदपुरस्सरं यथायथं महितम् ददुः । तदा सः युवाचार्यपदं पेदे !

भावानुवादः—आत्म शोधन के इस महान कार्य में अन्य मुनि प्रवरों ने भी दित मना यथायोग्य प्रशंसित योग प्रदान किया । और इस प्रकार उन्हें यु चार्य पद प्राप्त हुआ ।

**गणेशनाम्ना च यतः प्रसिद्धो बभूव सेशश्च गुरुर्गणस्य ।**
**गुणैः पदं लब्धमतः सहर्षम्, यथार्थनामाजनिसौम्यमूर्तिः ।।२१।।**

अन्वयः—यतः गणेशनाम्ना च प्रसिद्धः स गुरुः गणस्य ईशः च बभूव । सह गुणैः पदम् लब्धम् । अतः असौ सौम्यमूर्तिः यथार्थनामा अजनि !

भावानुवादः—चूंकि वह सौम्य मूर्ति गणेश इस नाम से ही प्रसिद्ध थे, अब युवाचार्य पद प्राप्ति के पश्चात् वे वस्तुतः गण के स्वामी हो गये । गुणों के द्वारा ही उन्होंने यह पद प्राप्त किया । अतः वे "यथा नाम गुण" वाले हो गये ।

**शुभाभिशंसा पदमास्थितोऽसौ, महत्त्वपूर्णं जनवन्दनीयम् ।**
**स्वकीयसंघस्य परोन्नतिं स्वैः विधास्यतीत्थं स्वविधाकलापैः ॥२३॥**

अन्वयः—असौ महत्त्वपूर्णं जनवन्दनीयम् पदम् आस्थितः सन् स्वैः स्वविधाकलापैः स्वकीयसंघस्य परोन्नतिम् विधास्यति इति शुभाभिशंसा (मम आचार्यस्य वर्तते) !

भावानुवादः—"चादर समर्पण के प्रसंग पर आचार्य प्रवर ने शुभ कामना प्रस्तुत करते हुए कहा—"जिन शासन के महत्त्वपूर्ण जन-जन से अभिबन्द्य युवाचार्य पद पर समासीन होकर ये (युवाचार्य) अपने महनीय कर्त्तव्यों के द्वारा संघ की महान उन्नति करेगे ।

**यतश्च गीतार्थविमादहीनः प्रभूत सूत्रार्थविशेषबोधः ।**
**स्वयं सुसंयामपथप्रयाता, तदैवमन्यान्नपि संविदध्यात् ॥२४॥**

अन्वयः—यतः च गीतार्थविमादहीनः, प्रभूत सूत्रार्थविशेषबोधः (अस्ति) । एव स्वय सुसंयामपथप्रयाता विद्यते । तदा एवम् अन्यान अपि (स्वतुल्यान्) संविदध्यात् !

भावानुवादः—"चूंकि ये भगवद् वचन-आगम वाणी के सूत्रार्थ रूप से विशेष ज्ञाता, एव यथावत् उपासक है । साथ ही स्वय साधना निरत-संयमपथ के अडिग पथिक है । अतः अन्य संघ सदस्यों-शिष्यो को भी अपने तुल्य बना लेंगे ।

**महोज्ज्वलाचार्यपदं प्रशस्तम्, गुरुत्वभावः परिरक्षणीयः ।**
**प्रवर्तनीया ननु नेमिवृत्तिः, यथान सीमां विजहाति सिन्धुः ॥२४॥**

अन्वयः—प्रशस्तम् महोज्ज्वलाचार्यपदम् (अस्ति) । गुरुत्वभावः परिरक्षणीयः । ननु नेमिवृत्तिः प्रवर्तनीया । यथा सिन्धुः सीमाम् न विजहाति । तथैव त्वयापि विधेयम् !

भावानुवादः—जिन शासन में आचार्य का पद प्रशस्ततम एवं समुज्ज्वल माना गया है । अतः गुरुत्वभाव की रक्षा हेतु रथ-चक्रवत् जिन मार्ग पर चलना होता है । जैसे समुद्र अपनी मर्यादा को नहीं त्यागता । वैसे ही आचार्य को भी मर्यादाबद्ध होना होता है ।

**न केवलं पदमहं ददामि, परं समस्तोपि ददाति संघः ।**
**अतो महत्त्वं विपुलं प्रपन्नम् पदस्य सर्वैरभिनन्दितस्य ।।२५।।**

अन्वयः—केवलम् अहम् पदम् न ददामि । परं समस्तः अपि सघः ददाति । अतः सर्वैः अभिनन्दितस्य अस्य पदस्य महत्त्वम् विपुलम् प्रपन्नम् अस्ति !

भावानुवादः—मुनिश्री को यह पद केवल मैं ही नहीं दे रहा हूं, अपितु समस्त संघ दे रहा है । अतः सभी से अभिनन्दित होने से इस पद की गरिमा बहुत बढ़ जाती है ।

## प्रभावना–सर्गः–

**अनेकसद्भिश्च समर्थित सत्, तथैव कैरप्यनुमोदितं च ।**
**पदं विरूढं नियतं समानम्, सगौरव सांधिकमण्डलीषु ।।२६।।**

अन्वयः—अनेकसदभिः च समर्थितम् सत् तथा एव कैः अपि अनुमोदितम् च सांधिकमण्डलीषुसगौरवं नियतम् समानम् तत्पदम् विरूढम् !

भावानुवादः—अनेक महापुरुषों से समर्थित एवं विपुलजनों से अनुमोदित होने से यह युवाचार्य पद नियमतः संघ का गौरवपूर्ण सम्माननीय पद माना जाता है।

**तथैव सर्वाभिरपीहमानम्, प्रवर्तिनीभिश्च समर्थितं स ।**
**उदात्तभावेन तदातुसर्वैः सदाशयैः संस्तुतमेव जातम् ।।२७।।**

अन्वयः—तत्पदम् तथा एव सर्वाभिः प्रवर्तिनीभिः समीहमानम् समर्थितम् सत् (शुशुभे) । तदातु सर्वैः सदाशयैः उदात्तभावेन संस्तुतम् एव जातम् !

भावानुवादः—यह प्रशस्त युवाचार्य पद समस्त मुनिवृन्द एवं श्रमणीवृन्द से प्रशंसित एवं समर्थित होता हुआ शोभित हो रहा है । अतएव सभी धर्म श्रद्धालु भद्रपुरुषों के द्वारा विशेष रूप से संस्तुत भी है ।

**स्वकीयशुद्धं विमलैर्विचारैः पथश्च हुक्मीगुरुचालितस्य ।**
**भासनात्सद्विविधैर्गुणौघैः सुदीपको वीरपथस्य भूयात् ।।२८।।**

अन्वयः—आचार्यस्य शुभाशंसा (अयम् युवाचार्यः) स्वकीयशुध्दैः विमलैः विचारैः हुक्मीगुरुचालितस्य पथः विभासनात् सद् विविधैः गुणौघैः वीरपथस्य (अपि) सुदीपकः भूयात् !

भावानुवादः—इस प्रकार आचार्य प्रवर ने नवोदित युवाचार्यश्री के प्रति शुभाशंसा व्यक्त की। और अन्त में कहा कि मेरी यही भावना है; कि ये अपने विशुद्ध–विमल विचार एवं आचार से तथा अपने विविध सयमीय गुणों से वीर प्रभु के शासन को तथा महातपोघनी श्री हुक्मीचन्द जी म, सा. द्वारा प्रचलित अनुशासन मार्ग को प्रकाशित करें।

**प्रपञ्चहीनो मधुरप्रवक्ता गभीरसिन्धुर्विजितेन्द्रियश्च ।**
**सुशान्तरूपोऽप्यनगारवृत्तिः गुरुर्गणेशो ननुभावितात्मा ॥२९॥**

अन्वयः—प्रपञ्चहीनः, मधुर प्रवक्ता, गभीरसिन्धुः, विजितेन्द्रियः च सुशान्तरूपः अपि अनगारवृत्तिः ननु भावितात्मा गणेशः गुरुः (बभूव) !

भावानुवादः—चूंकि मुनिश्री गणेशीलाल जो साधुवृत्ति मे निरत सांसारिकप्रपञ्चों से विरक्त, मधुरभाषी सागरवत् गम्भीर, जितेन्द्रिय, प्रशान्तआत्मा, एवं आत्मस्वरूप के विज्ञाता थे।

**तमार्यमाचार्यपदे विधाय, जवाहरो रात्निकएव जातः**
**विशुद्ध हेम्नीतररत्नयोगैः विभासकार्यान्निव भूषणस्य ॥३०॥**

अन्वयः—तम् आर्यम् (गणेशम्) आचार्यपदे विधाय जवाहरः विशुद्ध हेम्निइतररत्नयोगैः नवभूषणस्य विकासकार्यात् रात्निकः एव जात; !

भावानुवादः—अतः उस श्रेष्ठ चरित्रनिधि को युवाचार्य पद पर नियुक्त कर आचार्य श्रीजवाहर ने निश्चित ही जौहरी का विशुद्ध पद प्राप्त कर लिया। जैसे जौहरी किसी स्वर्णभूषण को रत्न से अलंकृत कर उसकी शोभा मे वृद्धि कर देता है। वैसे ही आचार्यप्रवर ने नुनिश्री गणेशीलाल जी के साथ युवाचार्य पद का योग कर उनकी शोभा की श्रीवृद्धि की है।

**तदुत्तरे तुंगपदं प्रपन्नो जगाद गम्भीरगिरागरीयान् ।**
**प्रसादयन्सर्वमनांसि भाव सुधाप्रवाहं परिवर्धयन्सः ॥३१॥**

अन्वयः—सः तुंगपदं प्रपन्नः गरीयान् सर्वमनांसि प्रसादयन् भावसुधाप्रवाहं परिवर्धयन् तदुत्तरे गम्भीरगिरा जगाद ।

भावानुवादः—अनन्तर सर्वोन्नत पद प्राप्त गौरवास्पद युवाचार्य श्री ने समस्त जनता के मन को प्रमुदित करते हुए गम्भीर गिरा में भावसुधा को प्रवाहित करते हुए उसके उत्तर में इस प्रकार कहा ।

**बलं मदीये हृदये विभातु, नयानिभारं प्रहितं चयेन ।**
**प्रदत्तमादेशमहं सुखेन, वहानि पूर्णं शिरसा नतेन ।।३२।।**

अन्वयः—मदीये हृदये वलं विभातु । येन प्रहितं भारंनयानि । अहम् प्रदत्तम् आदेशमृनतेन शिरसा सुखेन पूर्णम् वहानि !

भावानुवादः—मै अधिक कुछ नही कहकर यही भावना प्रगट करता हूं; कि मेरे हृदय में उस शक्ति का प्रकाश प्राप्त हो, जिससे कि मैं आचार्य भगवन् के आदेशों का नतमस्तक हो पालन कर सकूं । तथा दिये गये भार का सम्यक् प्रकारेण वहन कर सकूं ।

**स्वशक्तिलाभाय नतः परेशः, विशेषरूपेण च वन्दितोऽपि ।**
**तदर्थमाचार्यवरोऽपिभूयः निवेद्यते भक्तिभरेण भूरि ।।३३।।**

अन्वयः—स्वशक्तिलाभाय परेशः नतः । विशेषरूपेणवन्दितः अपि । तदर्थं भूयः आचार्यवरः अपि भक्तिभरेण भूरि निवेद्यते !

भावानुवादः—मैंने आत्मशक्ति की उपलब्धि हेतु प्रभु को नमन किया है । उनकी सभक्ति वन्दना की है और इसी दृष्टि से अत्यन्त भक्ति भाव से आचार्य चरणों मे भी निवेदन करता हूं ।

**इदं मदीये विततं शरीरे, तदुत्तरीयं गुणवद्वरीयः ।**
**गुणस्य लाभो मयितेन तूर्णम्, भवेदजस्रं गुरुणा प्रदत्तम् ।।३४।।**

अन्वयः—मदीये शरीरे गुणवद् वरीयः गुरुणाप्रदत्तम् इदम् तदुत्तरीयम् विततम् अस्ति । तेन मयि तूर्णम् अजस्रम् गुणस्य लाभः भवेत् ।

भावानुवादः—मेरे शरीर पर गुरुदेव द्वारा प्रदत्त यह गुणवान् (गुण अर्थात् धागों से निर्मित) चादर डाली गई है। मै चाहता हूं कि मुझे भी शीघ्र ही ऐसे गुणों की प्राप्ति हो।

कृपां गुरोः प्राप्य निसर्गजाताम् वहेय भारं मयि संघबद्धम्।
सहायमासाद्यरजोऽपिनूनम्, प्रयाति लोक नभसः समीरम् ॥३५॥

अन्वयः—निसर्गजाताम् गुरोः कृपाम् प्राप्य मयिसंघबद्धम् भारम् वहेय। रजः अपि नूनम् समीरम् सहायम् आसाद्य नभसः लोकम् प्रयाति !

भावानुवादः—गुरुदेव की नैसर्गिक कृपा को प्राप्त कर मैं संघ द्वारा प्रदत्त भार का वहन कर सकूं। क्योंकि हवा का सहयोग प्राप्त कर रज कण भी आकाश में पहुच जाता है।

तदार्यवर्यस्य गुणाकरस्य सुदेशनादानदयापरस्य।
समर्हिते तुंगपदे प्रशस्ते विधायतं निर्वृतिमापचेतः ॥३६॥

अन्वयः—तदा आर्यवर्यस्य गुणाकरस्य सुदेशनादान दयापरस्य तस्य चेतः समर्हिते तुंगपदे प्रशस्ते तम् विधाय निर्वृतिम् आप !

भावानुवादः—आर्य श्रेष्ठ गुणनिधि प्रकाण्ड प्रवक्ता दया दान के सम्यगुपदेष्टा आचार्यप्रवर का चित्त वन्दनीय प्रशस्त युवाचार्य पद मुनिश्री गणेशीलाल जी को प्रदान कर अत्यन्त शान्ति—समाधि को प्राप्त हुआ।

ततः कियत्कालगमादनल्पः, स्वसम्प्रदायस्य व्यवस्थितेश्च।
समक्षमेवं सकलं विधातुम्, विचार्य भारोऽभिमतः प्रदत्तः ॥३७॥

अन्वयः—ततः कियत्कालगमात् स्वसम्प्रदायस्य व्यवस्थितेः समक्षम् एवम् सकलं विधातुम् अभिमतः अनल्पः भारः अपि प्रदत्तः !

भावानुवादः—इसके अनन्तर कुछ समय उपरान्त सम्प्रदाय की समस्त व्यवस्था का सम्पूर्ण दायित्व भी अपने समक्ष ही अभिमत पूर्वक प्रदान कर दिया।

## विहारभकम्पवर्णनम्ः–

**तदाप्रसंगेन विहार भागे, प्रपन्नभूचालवलेर्चयस्य ।**
**निदर्शनं शक्तिसमन्वितेन, चकारवाचा वचसामधीशः ।।३८।।**

अन्वयः—वचसाम् अधीशः सः विहारभागे प्रपन्नभूचालवलेर्चयस्य निदर्शनम् तदा प्रसंगेन शक्तिसमन्वितेन वाचा चकार !

भावानुवादः—वाग्वैभव के स्वामी आचार्यप्रवर ने विहार प्रान्त में आए भूकम्प के समय करुणा से द्रवित होकर अपनी मर्यादा एव शक्ति के अनुसार व्यथा निवारण हेतु सामयिक प्रवचन दिये ।

**विनाशकारी जनकष्टदायी विशेषलोपी सुखसम्पदायाः ।**
**जातो महानर्थकरो जगत्यामभूतपूर्वः प्रकृतेः प्रकोपः ।।३९।।**

अन्वयः—विनाशकारी जनकष्टदायी सुखसम्पदायाः विशेषलोपी, महान अनर्थकरः जगत्याम् अभूतपूर्वः प्रकृतेः प्रकोपः (भूकम्पः) जातः !

भावानुवादः—पृथ्वी पर (बिहारप्रान्त में) महाविनाशकारी मानवमात्र को पीड़ित करने वाला, सुखसम्पत्ति का विनाशक, महाअनर्थकारी भूकम्प के रूप में अभूतपूर्व प्रकृति प्रकोप हुआ है ।

**मृता अनेके परिमर्दिताश्च, विचूर्णिताः क्रन्दनकारिणोऽन्ये ।**
**धरापदे केऽपि समाधिमग्नाः, नराः व्यजायन्त तुदा–प्रपीनाः ।।४०।।**

अन्वयः—तत्र अनेके मृताः ! परिमर्दिताः च । अन्ये क्रन्दनकारिणः विचूर्णिताः। के अपि धरापदे समाधिमग्नाः इत्थं नराः तुदाप्रपीनाः व्यजायन्त ।

भावानुवादः—उस उत्पीडनकारी भूकम्प में अनेक व्यक्ति मारे गये । अनेक चिल्लाते हुए चूर्ण–चूर्ण हो गये । अनेक चट्टानों से मसले गये और अनेक पृथ्वी के फट जाने से उसी मे समाधिस्थ हो गये । इस प्रकार जनसमूह दर्द से अत्यन्त व्यथित हुआ है ।

अनेकशो भोज्यपदार्थवस्त्रगृहाद्यभावेन भृशंव्यथन्ते ।
चलाचलं वित्तमपारमत्र, गतं धरायां च पलेन सर्वम् ॥४१॥

अन्वयः—अनेकशः भोज्यपदार्थवस्त्रगृहाद्यभावेन भृशंव्यथन्ते । अत्र अपारम् सर्वं चलाचलं वित्तम् पलेन धरायाम् गतम् !

भावानुवादः—वहां अनेकों व्यक्तियों की चल-अचल सभी प्रकार की सम्पत्ति पल मात्र में पृथ्वी के भीतर समा गई है । अतः अनेकों व्यक्ति अशन-वसन एव आवास आदि के अभावों में पीड़ित हो रहे हैं ।

नराः प्रभूताः विकलाँगमन्तः, तथापि वज्राहतजीविताशाः ।
विकामयन्ते भवतां कृपान्ते, समीहमानाः विवशा नितान्तम् ।।४२॥

अन्वयः—विकलांगमन्तः प्रभूताः नराः तथापि वज्राहतजीविताशाः ते नितान्तं विवशाः समीहमानाः भवताँ कृपाम् विकामयन्ते !

भावानुवादः—अनेकों सुखाभिकाक्षी अंग हीन हो जाने से जीवन से निराश होकर भी विवशता पूर्वक आप (धनाधीशों) की ओर कातर दृष्टि से देख रहे है । आपकी कृपा की कामना कर रहे हैं ।

उपस्थितं तत्प्रलयस्वरूपम् विधानकार्यं सकलं विलीनम् ।
यदत्र पूर्वं सुखसज्जितं तत्, लयावशेषस्य विरूपमास्ते ।।४३॥

अन्वयः—तत्प्रलयस्वरूपम् उपस्थितं । सकलं विधानकार्यम् विलीनम् जातम् । अत्र यत् पूर्वम् सुखसज्जितं जातम् । तत् सर्वम् लयावशेषस्य विरूपम् आस्ते !

भावानुवादः—वह प्रलय का ही स्वरूप उपस्थित हो गया है । समस्त सुन्दर विधानकार्य समाप्त हो गये हैं । यहा जो कुछ भी सुखपूर्वक सजाया गया था, विनष्ट होकर विकृतरूप मे दृष्टिगोचर हो रहा है ।

भयंकरं कष्टमुपेतमास्ते, मुधाप्यमीषां ननुजीवितानाम् ।
अगम्दरोगाभिभवे विरूपे अपेक्ष्यते सारसहायतैव ।।४४॥

अन्वयः—अमीषाँ जीवितानान् केन अपि भयंकरं कष्टम् उपेतम् आस्ते। विशे अगम्यरोगाभिभवे सारसहायता एव अपेक्ष्यते !

भावानुवादः—वहां का जन-जीवन किसी प्रकोप से अत्यन्त संकटापन्न स्थिति में पहुंच गया है। अगम्य रोगग्रस्त हो जाने पर वे आप (सम्पन्न) लोगों के केवल सहयोग की अपेक्षा रखते है।

**मुदामया स्मार्यत एवमत्र नरेषु कर्तव्यवरस्वरूपम्।**
**जिनप्रणीतेषु वरागमेषु, निरूपितं दानदयामहत्त्वम् ॥४५॥**

अन्वयः—अत्र विषये एवम् मुदा मया नरेषु कर्तव्यवरस्वरूपम् स्मार्यते ! जिन-प्रणीतेषु वरागमेषु दानदयामहत्त्वम् निरूपितम् वर्तते।

भावानुवादः—जिनप्रणीतश्रेष्ठआगमों में दया-दान का बहुत महत्त्व प्रतिपादित हुआ है। मैंने तो प्रसग वश आपको मानव-कर्तव्यों का प्रसन्नता पूर्वक स्मरण मात्र करवाया है।

**नवीनरूपे क्रियमाणकार्ये, पुनः प्रतिष्ठानमये जनाना।**
**मपेक्ष्यते सर्वविधोऽपि योगः, यथाबलं सर्वजनैः प्रदत्तः ॥४६॥**

अन्वयः—जनाना पुनः प्रतिष्ठानमये नवीनरूपे क्रियमाणे कार्ये यथावलं सर्वजनैः प्रदत्तः सर्वविधः अपि योगः अपेक्ष्यते !

भावानुवादः—असहाय वेघरवार मनुष्यों के पुनः व्यवस्थित होने हेतु नूतन रूप से किये जाने वाले परोपकार के कार्य में सभी के द्वारा दिये गये सहयोग में योगदान अपेक्षित है।

**सदार्यवर्यप्रतिवोधनस्य, दयार्द्रभावेन हिताय जन्तोः।**
**फलं च जातं परमोपकारि, सहायतामाचरितुं प्रवुद्धाः ॥४७॥**

अन्वयः—दयार्द्रभावेन जन्तोः हिताय सदार्यवर्यस्य प्रतिवोधनस्य परमोपकारि फलं च जातम्। यत् जना। सहायताम् आचरितुम् प्रवुद्धाः !

भावानुवादः—पीड़ित मानवों के लिए करुणार्द्रभाव से दिये गये आचार्यप्रवर के हृदयस्पर्शी उपदेशों का यह परिणाम हुआ कि दानवीर लोग भूकम्प पीड़ित व्यक्तियों की सहायता हेतु तत्पर हो गये ।

**मदनमोहनमालवीयसाक्षात्कारः—**

**समाजसेवाव्रतिनो महान्तः समागताः पूज्यसुवन्दनार्थम् ।**
**तथैव सौभाग्यवशान्मनस्वी, त्वशिश्रियत्त मृदुमालवीयः ॥४८॥**

अन्वयः—समाजसेवाव्रतिनः महान्तः पूज्यसुवन्दनार्थं समागताः । तथा एव सौभाग्यवशात् मनस्वी मृदुमालवीयः (मदनमोहनः) तन्तु अशिश्रियत् !

भावानुवादः—समाज एवं देश सेवा का महान् व्रत ग्रहण करने वाले अनेक व्यक्ति आचार्यप्रवर की चरण वन्दना हेतु उपस्थित होते थे । इसी क्रम में एक बार महामना श्रीमदनमोहनमालवीय भी आचार्यचरणों की सेवा में उपस्थित हुए ।

**गुणान् हिसंश्रुत्य समागतोऽभूत्, विशिष्टबोधस्य गरीयसश्च ।**
**स्वयं समाकृष्टइवाशुपार्श्वे यथारविन्दं भ्रमरः प्रयाति ॥४९ ।**

अन्वयः—भ्रमरः यथा अरविन्द प्रयाति । तथा एव विशिष्टबोधस्य गरीयसः च हि गुणान् संश्रुत्य स्वयं समाकृष्ट इव आशुपार्श्वे (मालवीयः) समागतः अभूत् !

भावानुवादः—जैसे कमल—गन्ध से आकृष्ट होकर मधुकर कमल पुष्प के समीप पहुंच जाता है । वैसे ही विशिष्ट ज्ञानी एवं गरिमामय चारित्रिक गुणों से आकृष्ट होकर ही श्रीमदनमोहनमालवीय जी शीघ्र ही गुरुदेव के चरणों में पहुंच गये ।

**अनेन विश्वस्य महोपकारी युगानुरूपः परिचालितोऽस्ति ।**
**प्रदातुकामेन सदार्यशिक्षाम् प्रसिद्धविद्यालय उच्चकोटिः ॥५०॥**

भावानुवादः—महामना मदन मोहन मालवीय जी ने सद्शिक्षा के विस्तार की कामना से विश्व के लिए महान् उपकारक युगानुकूल उच्चकोटि के सुप्रसिद्ध काशी विश्वविद्यालय की स्थापना की है।

**विराजते देवनदीतटेऽसौ, विशालरूपो युगधर्मधारी।**
**स्वदेशिभावस्य विबोधकारी महाश्मशाने भुविकाशिकायाः ॥५१॥**

अन्वयः—काशिकायाः महाश्मशाने भुवि देवनदीतटे विशालरूपः युगधर्मधारी स्वदेशिभावस्य विबोधकारी असौ (विश्वविद्यालयः) विराजते !

भावानुवादः—युगधर्म के अनुसार प्रचालित, स्वदेश के प्रति भ्रातृत्वभाव का उद्बोधक यह विशाल विश्वविद्यालय काशी की महाश्मशान भूमि पर गंगा नदी के तट पर उपशोभित हो रहा है।

**महानुभावस्य सुयत्नजातै रभूतपूर्वः श्रियमेति नित्यम्।**
**अनेन सर्वस्य जनस्य जातु, विधीयते साधुमहोपकारः ॥५२॥**

अन्वयः अयम् अभूतपूर्वः महानुभावस्य सुयत्नजातैः नित्यं श्रियम् एति। अनेन सर्वजनस्य जातु साधुमहोपकारः विधीयते।

भावानुवादः—ज्ञानसाधना का यह अभूतपूर्व केन्द्र विश्वविद्यालय श्री मालवीय जी के सत्प्रयत्नों के द्वारा प्रतिदिन अपनी श्री को बढ़ा रहा है। इसके द्वारा मनुष्यों का महान् उपकार सम्पन्न हो रहा है।

**यथा पुरागोधनरक्षणार्थम्, महेन्द्रगर्वस्य निरासनाय।**
**नगस्य चर्याचरणाय कृष्णः अधारयत्पर्वतमंगुलाग्रे ॥५३॥**

अन्वयः—यथा पुरा कृष्णः नगस्य चर्याचरणाय, गोधनरक्षणार्थम् महेन्द्रगर्वस्य निरासाय च पर्वतम् अगुलाग्रे अधारयत् !

भावानुवादः जैसे प्राचीन काल में कर्मयोगी श्रीकृष्ण ने गोधन की रक्षा हेतु इन्द्र के अभिमान का पराभव करने हेतु तथा गोवर्धन पर्वत की पूजा प्रतिष्ठा ... उसे अंगुलियों के अग्रभाग पर धारण किया था।

**तदा च गोपाः स्वबलानुसारम् सहायतांचक्रुरमर्त्यरूपाः ।**
**तथैव सर्वस्य सुयोगदानमपेक्षितं तिष्ठति बोधिमद्भिः ॥५४॥**

अन्वयः—तदा च अमर्त्यरूपाः गोपाः स्वबलानुसारम् सहायतां चक्रुः । तथा एव बोधिमद्भिः सर्वस्य सुयोगदानम् अत्र अपेक्षितं तिष्ठति ।

भावानुवादः—तब देवरूप से अवतीर्ण ग्वालों ने अपनी शक्ति के अनुसार उस कार्य में सहयोग प्रदान किया था । उसी प्रकार से मालवीय जी के इस कार्य में सभी बुद्धिवानों के द्वारा सभी सुयोगदान अपेक्षित है ।

**तुतोष पूज्यस्य सुदेशनाभिः स्वदेशसेवी जननायकोऽसौ ।**
**विराजते कोपि महाविभूतिः ममौ धरायां ननु साधुरूपे ॥५५॥**

अन्वयः—स्वदेशसेवी, जननायकः, असौ पूज्यस्य सुदेशनाभिः तुतोष ! असौ कोपि महाविभूतिः विराजते । ननुयः साधुरूपेधरायां ममौ ।

भावानुवादः—देश के महान् सेवक, जन–नायक श्री मालवीय जी आचार्यप्रवर के प्रवचनों से अत्यन्त प्रभावित हो कह उठे । 'आचार्यप्रवर कोई महान् विभूति हैं, जो आज पृथ्वी पर मुनि रूप में विराजमान हैं ।

**कृताप्रशंसा बहुमुक्तकण्ठम्, सुबोधसूर्यस्य शशिप्रभेण ।**
**जनैः स्वकार्येषु विशेषबुद्धौ, सहैव दृष्टौ रविचन्द्ररूपौ ॥५६॥**

अन्वयः—शशिप्रभेण (मालवीयेन) सुबोधसूर्यस्य गुरुदेवस्य बहुमुक्तकण्ठम् प्रशंसा कृता । स्वकार्येषु विशेषबुद्धौ रविचन्द्ररूपौ जनैः सहैव दृष्टौ !

भावानुवादः—शशिवत्–सौम्य श्री मालवीय ने रविवत् तेजस्वी आचार्यप्रवर की मुक्तकण्ठ से भूरि–भूरि प्रशंसा की । अपने–अपने कर्तव्य क्षेत्र में सजग चन्द्र एवं रविवत् दोनों महापुरुषों का जनता ने एक साथ साक्षात्कार प्राप्त किया ।

त्रिपाठिकृतगुरुवन्दनाः—

**विशेषविद्वान् कविलेखकश्च गवेषको रामनरेशनामा ।**
**त्रिपाठिवर्यः समुपाजगाम, सुवन्दितुं पूज्यवरं सुवाचम् ॥५७॥**

अन्वयः - विशेष विद्वान् कविलेखकः, गवेपकः, त्रिपाठिवर्यः, रामनरेशनामा, सुवाचम् पूज्यवरम् सुबन्दितुं समुपाजगाम ।

भावानुवादः—विद्वद् मिलन के इसी क्रम में उद्भट विद्वान् महान् कवि एवं लेखक तथा विशिष्ट अन्वेषक श्री रामनरेश त्रिपाठी भी महान् वाग्मी आचार्यप्रवर की चरण वन्दना हेतु उपस्थित हुए ।

**भयैर्विहीनं प्रियवादिनं च, बुधं यतीशं युगधर्मबोधम् ।**
**पवित्रचारित्रतपोऽभियुक्तं जवाहराचार्यमहंनतोऽस्मि ।।५८।।**

अन्वयः—अहम् भयैः विहीनम्प्रियवादिनं बुधं यतीशं युगधर्मबोधम् पवित्रचारित्र्यतपोभियुक्तम् जवाहराचार्यम् नतः अस्मि !

भावानुवादः—(और उन्होंने कहा) "प्रकाण्ड पण्डित, प्रिय वादी, वीतभय यति (मुनि) वर्ग के अधिष्ठाता युगधर्म के द्रष्टा, पवित्र चारित्र एवं तपस्या से परिभूत आचार्यश्रीजवाहर की मै रामनरेश त्रिपाठी वन्दना करता हूं ।

**दयालुता यस्य समग्रजीवे, कठोरता संयमपालनेषु ।**
**प्रभावना धर्मविचारकार्ये तमार्यकृत्यं गुरुमाश्रयामि ।।५९।।**

अन्वयः—अहम् यस्य समग्रजीवे दयालुता, संयमपालनेषु कठोरता, धर्मविचारकार्ये प्रभावनावर्तते अहम् आर्यकृत्यं गुरुम् आश्रयामि !

भावानुवादः—समस्त जगज्जन्तुओं पर दयावृत्तिवाले, संयम की कठोर आराधना करने वाले, धर्म अनुचिन्तन एवं उसके प्रसारकार्य में प्रभावक, प्रशस्त आचार-विचार वाले, आचार्य गुरुदेव की मैं वन्दना करता हूं ।

कपायहीनं सहनस्वभावम्, जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
चरित्रपूतं चरणप्रचारम् निरञ्जनं तंगुरुमानतोऽहम् ।।६०।।

अन्वयः—अहम् कषायहीनम्, सहनस्वभावम्, जितेन्द्रियं, बुद्धिमतां, वरिष्ठम्, चरित्रपूत, चरणप्रचारम्, निरंजनं तम् गुरुम् आनतः अस्मि !

अन्वयः—कषायरहित, परिषहजयी, जितेन्द्रिय, प्रज्ञापुञ्ज, पवित्रचरित्रनिधि, धर्म के निर्दोष प्रचारक इस गुरु को मेरे अगणित नमन हैं ।

युगपुरुषद्वयसम्मेलनम्ः—

**महात्मगान्धी युगबोधचेता उपस्थितोऽभून्ननुराजकोटे ।**
**सदार्यवर्यस्य सुदर्शनार्थम् निलीय काले स्वयमेव पार्श्वे ॥६१॥**

अन्वय:—युगबोधचेता: महात्मगान्धी सदार्यवर्यस्य सुदर्शनार्थम् निलीय काले राजकोटे स्वयमेव आचार्यपार्श्वे ननु उपस्थित: अभूत् !

भावानुवाद:—(इसी क्रम मे) आचार्यप्रवर की धवलकीर्ति का विस्तार सुनकर युगप्रबोधक, राष्ट्रपिता, महात्मा गांधी भी स्वत: आकर्षित हो जनता की भीड़ से बचने के लिए छिपकर समय पर राजकोट में आचार्यप्रवर के चरणों में उपस्थित हुए ।

**गतेर्विधानेन गुरोः सदैव विशेषरूपेण यतौरतोऽभूत् ।**
**इतोऽपि पूर्वं बहुधा मिमेल, प्रभावितस्तत्समुदारवृत्या ॥६२॥**

अन्वय:—स सदा एव गुरो: गते: विधानेन यतौ विशेष रूपेण रत: अभूत् ! तत्समुदारवृत्या प्रभावित: इत: अपि पूर्वम् तेन गुरुणा सह बहुधा मिमेल !

भावानुवाद:—आचार्यप्रवर की अध्यात्मसाधना एवं सामाजिकपरिष्कारसम्बन्धी उपदेशों के क्रिया कलापों से प्रभावित होने से महात्मा गांधी आचार्यप्रवर पर अनन्य श्रद्धा रखते थे । आचार्यश्री की परमउदारवृत्ति से प्रभावित हो वे इससे पूर्व भी अनेकों बार आचार्यश्री से मिले थे । (उन्होने) गाँधीजी ने अपने वक्तव्य मे एक बार कहा था—"भारत में दो जवाहर की पेटियां हैं । एक आपश्री (जवाहरलाल जी म. सा.) धर्म क्षेत्र के जवाहर हैं । और दूसरे राजनीति मे पं. जवाहरलाल नेहरू ।

**मतोऽसिवन्द्योऽसि गुरुप्रवीर यतो गृहीतोऽपि महात्मगांधी ।**
**इतोऽधिकं किंशशिनो महत्त्वम् प्रसादयेद्यज्जलधिं गभीरम् ॥६३॥**

अन्वयः—हे गुरुप्रवीर ! त्वं मतः असि । वन्द्यः असि । यतः महात्मा गान्धी अपि भवता गृहीतः । इतः अधिकं शशिनः किं महत्त्वयत्स गम्भीरम् जलधिं अपिप्रसादयेत् ।

भावानुवादः— हे श्रेष्ठतम गुरुवर ! आप निश्चित ही सर्वमान्य एवं सर्ववन्द्य हो । क्योंकि जन–जन के महामान्य महात्मागांधी भी आपसे प्रभावित हो अवनत हो गए । चन्द्रमा की इससे अधिक महिमा क्या हो सकती है; कि वह परम गम्भीर समुद्र को भी प्रसन्न कर देता है ।

**महात्मनीत्थं जगतां समग्रः, समादरस्तत्र विशेषरूपः ।**
**बभूव मान्योपि तथापि तेन, पदं गुरोः सर्वसमर्थितं तत् ।।६४।।**

अन्वयः—इत्थम् महात्मनि (गान्धिमहोदते) विशेषरूपः जगतां समग्रः समादरः आसीत् । तथापि तेन (महात्मना) गुरुः मान्यः अपि बभूव । तत् गुरोः पदम् सर्वसमर्थितम् सम्पन्नम् !

भावानुवादः—महात्मा गांधी के प्रति संसार के सभी शान्तिप्रिय देशों का विशेष समादर था । जब उनके द्वारा भी आचार्यप्रवर सर्वथा मान्य हुए तो उनका गरिमामय पद सहज ही सर्वसमर्थित होकर विश्वपूज्य हो गया ।

**अनेकनेतार उपागतास्ते, सुदर्शनार्थं ननु वन्दनाय ।**
**प्रियो यथासीत्सकलस्य जन्तोः तथाऽभवद् वल्लभवल्लभोपि ।।६५।।**

---

**प्रभावना सर्ग ८ श्लोक ६५, ६६ का विशेष टिप्पण.–**

वीतराग देव द्वारा उपदिष्ट साधुधर्म की परिपालना करने आले आचार्य श्री जवाहर समस्त भव्यों के वन्दनीय पूजनीय थे । देव भी ऐसे महापुरुषों के चरण चिन्हो मे नतमस्तक होते हुए अपने आपको भाग्यशाली समझते हैं । पर देवों के समान आम जनता की प्रज्ञा ऐसे विशिष्ट पुरुषो को पहचानने की नही होती है । वह तो रोजी रोटी की अधिक जिज्ञासु होती है । उस [illegible] यक बात कहने वाले को जनता सर्वेसर्वा मानती है । गान्धी जी अहिंसा [illegible] मुख्यता से जनता की अभिलषित वस्तु के विषय में प्रतिपादन करते [illegible] थे । इसलिए वे साधारण जनता के सर्वमान्य नेता के रूप में स्थापित हुए । जब गांधीजी ने अपनी सूक्ष्म प्रज्ञा से आचार्य जवाहर को पहचाना, तो वे उनके चरणों में नतमस्तक हो गये । इस दृश्य को देखकर सामान्य जनता भी आचार्यवर्य जवाहर के धर्मनिष्ठ विश्ववन्द्य गरिमामय पद को समझने में सक्षम बनी ।

अन्वयः—गुरुदेवस्य सुदर्शनार्थम् तथा वन्दनायते अनेक नेतारः उपागताः अभवन् ! स सकलस्य जन्तोः यथा प्रियः सदासीत् ! तथा वल्लभवल्लभः अपि अभवत् !

भावानुवादः—आचार्यप्रवर के दर्शन एवं वन्दन हेतु अनेक गणमान्य नेता आते थे। वे सहज ही जनप्रिय थे। जनप्रिय नेताओं तथा महात्मा गाँधी के भी प्रिय होने के कारण वे (आचार्यप्रवर) जन–जन के उच्चतम प्रिय हो गये।

**वल्लभभाईपटेलसंगमः—**

**पटेल नामाखिलदेशमान्यः, बभूव वज्रायितकर्मवीरः।**
**स्वकीयसौभाग्यमलंचकार, विधाय संवन्दनमस्य साधोः ॥६६॥**

अन्वयः—अखिलदेशमान्यः वज्रायितकर्मवीरः पटेलनामा बभूव। स अस्य साधोः सवन्दनं विधाय स्वकीयसौभाग्यम् अलचकार।

भावानुवादः—कठोरकर्मवीर, सम्पूर्ण देशमान्य, वल्लभभाई पटेल ने भी, आचार्य गुरुदेव के दर्शन कर अपने सौभाग्य को अलंकृत किया था।

**प्रशसनं पूर्वमकारि तेन, समाधिपूर्तेः जनतासमक्षम्।**
**न कोपि जातः पुरुषो धरायाम् प्रभावितो नो गुरुदेशनाभिः ॥६७॥**

अन्वयः—तेन जनतासमक्षं समाधिपूर्तेः पूर्वम् प्रशंसनम् अकारि ! न कोपि पुरुषः धरायातम् जातः यः गुरुदेशनाभिः प्रभावितो नो अभवत् !

भावानुवादः—वल्लभभाई पटेल ने समाधिलीन आचार्यदेव की पूर्व में ही जनता के समक्ष प्रशंसा की कि भूमण्डल पर ऐसा कौनसा व्यक्ति है, जो आचार्यश्री के प्रवचन पान से प्रभावित नहीं हुआ है ?

**विद्या समेतः कुशलः क्रियासु, पटुश्च सूत्रार्थविशिष्टबोधः।**
**युगानुकूलः युगबोधकारी यथार्थवक्ता गुरुणा समानः ॥६८॥**

अन्वयः—न आचार्यभगवान् क्रियासमेतः क्रियानुकुशलः पटुः सूत्रार्थविशिष्टबोधः

अन्वयः—हे गुरुप्रवीर ! त्वं मतः असि । वन्द्य. असि । यतः महात्मा गान्धी अपि भवता गृहीतः । इतः अधिकं शशिनः कि महत्त्वयत्स गम्भीरम् जलधिं अपिप्रसादयेत् ।

भावानुवादः— हे श्रेष्ठतम गुरुवर ! आप निश्चित ही सर्वमान्य एवं सर्ववन्द्य हो । क्योंकि जन-जन के महामान्य महात्मागांधी भी आपसे प्रभावित हो अवनत हो गए । चन्द्रमा की इससे अधिक महिमा क्या हो सकती है; कि वह परम गम्भीर समुद्र को भी प्रसन्न कर देता है ।

**महात्मनीत्थं जगतां समग्रः, समादरस्तत्र विशेषरूपः ।**
**बभूव मान्योपि तथापि तेन, पदं गुरोः सर्वसमर्थितं तत् ॥६४॥**

अन्वयः—इत्थम् महात्मनि (गान्धिमहोदते) विशेषरूपः जगता समग्रः समादरः आसीत् । तथापि तेन (महात्मना) गुरुः मान्यः अपि बभूव । तत् गुरोः पदम् सर्वसमर्थितम् सम्पन्नम् !

भावानुवादः—महात्मा गांधी के प्रति संसार के सभी शान्तिप्रिय देशों का विशेष समादर था । जब उनके द्वारा भी आचार्यप्रवर सर्वथा मान्य हुए तो उनका गरिमामय पद सहज ही सर्वसमर्थित होकर विश्वपूज्य हो गया ।

**अनेकनेतार उपागतास्ते, सुदर्शनार्थं ननु वन्दनाय ।**
**प्रियो यथासीत्सकलस्य जन्तोः तथाऽभवद् वल्लभवल्लभोपि ॥६५॥**

---

**प्रभावना सर्ग ८ श्लोक ६५, ६६ का विशेष टिप्पण—**

वीतराग देव द्वारा उपदिष्ट साधुधर्म की परिपालना करने आले आचार्य श्री जवाहर समस्त भव्यों के वन्दनीय पूजनीय थे । देव भी ऐसे महापुरुषों के चरण चिन्हों मे नतमस्तक होते हुए अपने आपको भाग्यशाली समझते हैं पर देवों के समान आम जनता की प्रज्ञा ऐसे विशिष्ट पुरुषों को पहचानने की नही होती है । वह तो रोजी रोटी की अधिक जिज्ञासु होती है । उस वि[illegible] यक बात कहने वाले को जनता सर्वेसर्वा मानती है । गान्धी जी अहिंसा [illegible] मुख्यता से जनता की अभिलषित वस्तु के विषय में प्रतिपादन करते [illegible] थे । इसलिए वे साधारण जनता के सर्वमान्य नेता के रूप में स्थापित हुए, जब गांधीजी ने अपनी सूक्ष्म प्रज्ञा से आचार्य जवाहर को पहचाना, तो उनके चरणों में नतमस्तक हो गये । इस दृश्य को देखकर सामान्य जनता [illegible] आचार्यवर्य जवाहर के धर्मनिष्ठ विश्ववन्द्य गरिमामय पद को समझने में [illegible] बनी ।

अन्वयः—गुरुदेवस्य सुदर्शनार्थम् तथा वन्दनायते अनेक नेतारः उपागताः अभवन् ! स सकलस्य जन्तोः यथा प्रियः सदासीत् ! तथा वल्लभवल्लभः अपि अभवत् !

भावानुवादः—आचार्यप्रवर के दर्शन एवं वन्दन हेतु अनेक गणमान्य नेता आते थे। वे सहज ही जनप्रिय थे। जनप्रिय नेताओं तथा महात्मा गाँधी के भी प्रिय होने के कारण वे (आचार्यप्रवर) जन-जन के उच्चतम प्रिय हो गये।

**वल्लभभाईपटेलसंगमः—**

**पटेल नामाखिलदेशमान्यः, बभूव वज्रायितकर्मवीरः।**
**स्वकीयसौभाग्यमलंचकार, विधाय संवन्दनमस्य साधोः ॥६६॥**

अन्वयः—अखिलदेशमान्यः वज्रायितकर्मवीरः पटेलनामा बभूव। स अस्य साधोः संवन्दन विधाय स्वकीयसौभाग्यम् अलचकार।

भावानुवादः—कठोरकर्मवीर, सम्पूर्ण देशमान्य, वल्लभभाई पटेल ने भी, आचार्य गुरुदेव के दर्शन कर अपने सौभाग्य को अलंकृत किया था।

**प्रशसनं पूर्वमकारि तेन, समाधिपूर्तेः जनतासमक्षम्।**
**न कोपि जातः पुरुषो धरायाम् प्रभावितो नो गुरुदेशनाभिः ॥६७॥**

अन्वयः—तेन जनतासमक्षं समाधिपूर्तेः पूर्वम् प्रशंसनम् अकारि ! न कोपि पुरुषः धरायातम् जातः यः गुरुदेशनाभिः प्रभावितो नो अभवत् !

भावानुवादः—वल्लभभाई पटेल ने समाधिलीन आचार्यदेव की पूर्व में ही जनता के समक्ष प्रशंसा की कि भूमण्डल पर ऐसा कौनसा व्यक्ति है, जो आचार्यश्री के प्रवचन पान से प्रभावित नहीं हुआ है ?

**श्रिया समेतः कुशलः क्रियासु, पटुश्च सूत्रार्थविशिष्टबोधः।**
**युगानुकूलः युगबोधकारी यथार्थवक्ता गुरुणा समानः ॥६८॥**

अन्वयः—स आचार्यभगवान् श्रियासमेतः क्रियासुकुशलः पटुः सूत्रार्थविशिष्टबोधः

युगानुकूलः युगबोधकारी, यथार्थवक्ता गुरुणा समानः आसीत् !

भावानुवादः—वास्तव में आचार्यप्रवर अनन्त अध्यात्मश्रीसम्पन्न, संयमक्रियाओं में कुशल, सूत्रार्थ के विशिष्ट ज्ञाता, युगानुकूलप्रबोधप्रदाता यथार्थ प्रवक्ता एवं वृहस्पतिवत् प्रज्ञा निधि थे ।

**तथैव राज्ञां गणना न कापि, समाभवन् भक्तियुताः कियन्तः ।**
**कुटीरप्रासादसमग्रवासे, समानरूपेण समाजितोऽयम् ॥६९॥**

अन्वयः—तस्य समक्षे राज्ञाम् अपि तथैव न कापि गणना आसीत् । कियन्तः भक्तियुताः समाभवन् । कुटीरप्रासादसमग्रवासे अयम् (गुरु.) समानरूपेण सभाजितः अभवत् !

भावानुवादः—तत्कालीन राजा–महाराजाओं की भी आचार्य गुरुदेव के समान प्रतिष्ठा नही थी । उनके अनेक भक्त थे । गरीबों की झोंपड़ी से लेकर राज-महलों तक आचार्यप्रवर आदृत एवं पूजित थे ।

**स्वदेशभागो ननु कोपि भूयात् गतोहि यत्रैवसमर्चितः सः ।**
**गुणोहि पूज्यो भवतीहलोके, न नामरूपे नवयोन लिंगम् ॥७०॥**

अन्वयः—स्वदेशभागः ननु कः अपि भूयात्, सहि यत्रैव गतः तत्रैव समर्चितः अभवत् । इह लोके गुणः हि पूज्यः भवति ! नाम रूपे न । वयः न । लिंगम् न भवति !

भावानुवादः—गुरुदेव जहाँ भी गए पूजित हुए । चाहे वह भारत का कोई भी प्रदेश क्यों न हो । क्योंकि संसार में गुण की ही सर्वत्र पूजा होती है । नाम, रूप, आयु अथवा लिंग की नहीं ।

यथा प्रदेशे ननु दाक्षिणात्ये प्रभावशाली च मतोबभूव ।
तथैव तद् गुर्जररम्यभागे समाभवद् वन्दितपूजितश्च ॥७१॥

अन्वयः—यथा दाक्षिणात्ये प्रदेशे ननु स प्रभावशालीमतः च बभूव । तथा तद् गुर्जररम्यभागे अपि वन्दित पूजितश्च समभवत् !

भावानुवादः—आचार्यप्रवर जैसे दक्षिण में महाप्रभावक के रूप मे प्रसिद्ध हुए। वैसे ही धर्ममय रमणीय गुजरात की भूमि मे भी जैन-जन द्वारा अभिवन्दित एवं पूजित हुए।

**उवास वर्षासमयेन तत्र, प्रभावनासीद् ध्रुवधर्मकृत्ये ।**
**नवीनसंजागरणं च जातम्, विशिष्टलाभोऽजनि संविभागे ।।७२।**

अन्वयः—तत्र वर्षासमयेन उवास । ध्रुवधर्मकृत्ये प्रभावना आसीत् । नवीन जागरण च जातम् । तत्र गुर्जरसविभागे विशिष्टलाभः अजनि !

भावानुवादः—गुजरात की पावन धरती पर उन्होंने कुछ वर्षावास व्यतीत किये। धार्मिक प्रवृत्ति में अभूतपूर्व प्रभावना हुई । धर्म के क्षेत्र मे नूतन जागरण हुआ और गुजरात प्रान्त को अलभ्य लाभ प्राप्त हुआ ।

**उदारदृष्ट्या ननु देशनाभिः, समत्वयोगेन विशेषतश्च ।**
**युतश्च लाभेन समस्त एव, जले स्थले स्यन्दत एव देवः ।।७३।।**

अन्वयः—उदारदृष्ट्या देशनाभिः विशेषतः च समत्वयोगेन समस्त एव लाभेन युतः अभवत् ! यतः देवः (मेघः) जले स्थले च स्यन्दत एव !

भावानुवादः—जैसे मेघ जल एवं स्थल पर समान रूप से बरसता है। वैसे ही आचार्यप्रवर के द्वारा भी उदार देशनाओं एवं सर्वोच्च समत्व योग के माध्यम से सभी लाभान्वित हुए ।

### अन्ते उपजातिछन्दः—

**सर्वत्र देशे भुवि भारतेऽस्मिन्, जातः प्रसिद्धः परमोपकारी ।**
**हिमाद्रिगर्वोन्नतसानुशोभा सदैव रम्यातिविशिष्टरूपा ।।७४।।**

अन्वयः—अस्मिन् भारते भुविदेशे सर्वत्र परमोपकारी प्रसिद्धः जातः । तस्य च सदैव रम्या अतिविशिष्टरूपा हिमाद्रिगर्वोन्नतसानुशोभा अभवत् !

भावानुवादः—भारत वर्ष की इस अध्यात्म भूमि पर आचार्य प्रभु सर्वत्र परम

उपकारकर्ता के रूप में प्रसिद्ध हुए । सदैव रमणीय, एवं अतिविशिष्ट हिमालयवत् उनकी कीर्ति भी ख्यापित हुई ।

इन्द्रवज्रा छन्दः—

**यत्रैव यातः सहितः पदातिः, शिष्यैर्वृतस्तत्र यशोजयश्रीः ।**
**वादे जयी सर्वत एव जातः, शक्तो हि को वातरयं निरोद्धुम् ॥७५॥**

अन्वयः—शिष्यैः वृतः सहितः पदातिः यत्र एव यातः । तत्र यशोजयश्रीः जाता। सर्वत्र एव वादेजयी जातः । वातरयम् निरोद्धुम् कः हि शक्तः भवेत् ।

भावानुवादः—जनहित के उद्देश्य से शिष्य समुदाय के साथ पदयात्रा करते हुए आपश्री का जहां भी पदार्पण हुआ । वहीं यश—कीर्ति एवं जयश्री ने उनका स्वागत किया । विपक्षियों के वाद—प्रतिवाद में सर्वत्र विजयी हुए । वायुवेग को अवरुद्ध करने में समर्थ हो ही कौन सकता है ?

इति अष्ठमः सर्गः—

श्रीमज्जवाहरयशोविजयाभिधाने,
नार्वेशसच्चरणयोः शरणावधाने ।
श्री चन्द्रमौलिकविनिर्मितसत्प्रबन्धे,
पूर्णःप्रभावनमयोष्टमसर्ग एषः ।

अष्टमः सर्गः समाप्तः ।

## अथ नवमः सर्गः

### सुभाषितात्मकः–

**(उपजातिवृत्तम्)**

**विद्वद्वरेण्यस्य विदांवरस्य, युगप्रधानस्य युगन्धरस्य ।**
**यशोऽवदातस्य चरित्रनेतु, निदर्शनं सूक्तिचयस्य किंचिद् ।।१।।**

अन्वयः—विद्वद्वरेण्यस्य, विदांवरस्य, युगप्रधानस्य, युगन्धरस्य, यशोवदातस्य, चरित्रनेतुः, सूक्तिचयस्य, किंचित् निदर्शनम् (क्रियते) ।

भावानुवादः—विद्वत् श्रेष्ठ, विद्वत्पूज्य, युगप्रधान, युगीन चेतना के संवाहक, निर्मल-यशस्वी, चरित्रनायक, श्रीमज्जवाहराचार्य द्वारा प्रयुक्त सूक्तियों का कुछ निदर्शन किया जाता है ।

**चिन्तामणेः कल्पतरोः समस्य, संशामकस्याखिलरोगराशेः**
**रत्नस्य सूक्तेश्च गुणाकरस्य, महत्त्वमेतत्परिभावनीयम् ।।२।।**

अन्वयः—चिन्तामणेः, कल्पतरोः समस्य, अखिलरोगराशेः संशामकस्य, गुणाकरस्य चरित्रनेतुः रत्नस्य (इव) सूक्तेः च एतत् महत्त्वंपरिभावनीयम् ।

भावानुवादः—चूंकि आचार्यप्रवर द्वारा प्रवचन पर प्रयुक्त सूक्तियाँ अनमोल मुक्ता के तुल्य हैं । अतः गुणनिधि, कल्पतरु तथा चिन्तामणि के समान भाव-रोग को नष्ट करने वाले श्री मज्जवाहराचार्य की सूक्तियों का महत्त्व अवश्य मननीय है ।

**निशम्य सूक्तीः प्रसभं तदुक्तीः निष्ठाश्रिताः धर्मपथं चरन्ति ।**
**श्रद्धानवन्तश्च नराः शमार्थम्, यथा निधिं प्राप्य रमन्ति दीनाः ।।३।।**

अन्वयः—श्रद्धानवन्तः नराः तदुक्तीः सूक्तीः प्रसभं निशम्य निष्ठाश्रिताः (सन्तः) शमार्थं दीनाः यथा निधिं प्राप्य रमन्ति (तथा) धर्मपथं चरन्ति !

भावानुवादः—श्रद्धावान–व्यक्ति आचार्यप्रवर द्वारा प्रदत्त सूक्तियों का श्रवण कर वैसे ही धर्म पर चल पड़ते हैं। जैसे कि मन. शान्ति का इच्छुक निर्धन व्यक्ति बहुमूल्य निधि प्राप्त कर प्रसन्न हो उठता है।

### मातृभाषाः–

**पदं प्रधानं हृदि मातुरेव, दास्याः कदाचिन्नहि सत्यमेतत् ।**
**तथा स्वभाषा जननीसमाना, मान्या बुधैर्नान्यविदेशिभाषा ॥४॥**

अन्वयः—हृदि मातुः एव पदम् प्रधानम् (भवति) नहि कदाचित् दास्याः इति । एतत् सत्यम् । तथा स्वभाषा जननीसमाना (भवति) । बुधैः सा मान्या । अन्यविदेशिभाषा न मान्या ।

भावानुवादः—यह सत्य है कि मानवहृदय में माता के लिए सर्वोच्च स्थान होता है। दासी के लिए नहीं। मातृभाषा भी माता के तुल्य ही समादरणीय है। विदेशी भाषाओं को वह स्थान नही मिल सकता है।

### भौतिक वैभवम्:–

**धनं मलीनं भुवि पंकतुल्यम्, प्रक्षालनापेक्षमहो न मान्यम् ।**
**अकिंचनत्वे न च भूतिचिन्ता, तद्भूषणं स्वात्मधनस्य दिव्यम् ॥५॥**

अन्वयः—प्रक्षालनापेक्षम् पंकतुल्यम् धनं ननु मलीनम् अहो न मान्यम् । अकिंचनत्वे च भूतिचिन्ता न । तत (अकिंचनत्वम्) स्वात्मधनस्य (नरस्य) दिव्यम् भूषणम् ।

भावानुवादः—भौतिक वैभव कीचड़ के समान है। उसकी आसक्ति से आत्मा मलीन बनती है। कीचड़ लगने पर उसे प्रक्षालित करना अपेक्षित होता है। अतः आपेक्षितदृष्टि से निर्धनता ही अच्छी है, क्योंकि वहां चिन्ता कम सताती

है। जो आत्मतत्त्व को ही वास्तविक समझते हैं, उनके लिए निर्धनता दिव्य आभूषण के रूप में होती है।

तपः शक्तिः—

तुष्यन्ति देवास्तपसाभिभूता, स्तेनैव सर्वर्द्धिजनिर्जगत्याम् ।
तीर्थंकरत्व ननु दुर्लभं नो तपोमयं विश्वमिदं समग्रम् ॥६॥

अन्वयः—तपसाभिभूताः देवाः तुष्यन्ति । तेन एव जगत्यां सर्वर्द्धिजनिः (जायते) । तत् तीर्थंकरत्वम् अपि नहि दुर्लभम् । इदम् समग्रं विश्वं तपोमयम् इति !

भावानुवादः—तप की शक्ति अपार है । तप के द्वारा देवता भी काँप उठते हैं। और वे तपस्वी के चरणों की शरण ग्रहण करते है । तप से ऋद्धि सिद्धि सुख सम्पत्ति सभी कुछ उपलब्ध होता है । तीर्थंकरत्व की सर्वोत्तम ऋद्धि भी तपस्वी के लिए दुर्लभ नही है । संक्षेप में यह समस्त विश्व ही तपोमय है ।

नीतिमार्गः—

अन्यायरोधस्य भवेत्प्रबोधो, जायेत शक्तेरपि तत्र शोधः ।
चिन्ताप्यऽसूनान्नु नैवकार्या, न्याय्यैव वृत्तिर्व्रतिभिर्विधेया ॥७॥

अन्वयः—अन्यायरोधस्य प्रबोधः भवेत् । तत्र शक्तेः अपिशोधः जायेत । ननु असूनाम् चिन्ता अपि न एव कार्या । व्रतिभिः न्याय्या च वृत्तिः विधेया !

भावानुवादः—प्रत्येक मानव को यथाशक्ति अन्याय प्रतिकार के प्रति सक्रिय होना चाहिये । इस कार्य में मृत्यु की भी चिन्ता नहीं होनी चाहिये । व्रत-धारी व्यक्तियों को तो नीतिमार्ग का ही अवलम्बन लेना चाहिये ।

मृगयानिषेधः—

मृगाः अरण्यस्य विभूषणानि, तेजीवितुं शक्ततमाः नृतुल्याः ।
विज्ञाय व्यर्थान्नु तान् कदाचित्, स्वप्नेपि हन्तुन्न कृताधिकारः ॥८॥

अन्वयः—मृगाः अरण्यस्य विभूषणानि सन्ति ! ते नृतुल्या एव जीवितुं शक्ततमाः। कदाचित् तान्व्यर्थान् विज्ञाय स्वप्नेऽपि हन्तुम् ननु नकृताधिकारः अस्ति !

भावानुवादः—मृग वन की शोभा बढ़ाने वाले होते हैं। वे भी मानव की तरह ही जीवित रहने के अधिकारी हैं। व्यर्थ समझकर किसी को भी उन्हें मारने का स्वप्न में भी अधिकार नहीं है।

**ब्रह्मचर्य्यम्:-**

**रसायनं शक्तिकरं सशक्तम्, दिव्यं च तेजो विदधाति नित्यम्।**
**न दुर्लभं किंचिदपीह यस्मात्, तद् ब्रह्मचर्यं परिपालनीयम् ।।९।।**

अन्वयः—शक्तिकरं सशक्तम् रसायनम् अस्ति। तद् नित्यं दिव्यं तेजः च विदधाति। इह यस्मात् किंचिद् अपि दुर्लभम् न। तत् ब्रह्मचर्यम् सर्वैः परिपालनीयम्।

भावानुवादः—जो अपरिमेय शक्ति प्रदाता, अनुपम रसायन है। प्रतिपल दिव्य तेजस्विता की सर्जना करने वाला है। तथा विश्व में जिसके लिए कोई भी कार्य दुर्लभ नही है। उस ब्रह्मचर्य का परिपालन प्रत्येक व्यक्ति को करना चाहिये।

**तथाकथितंविज्ञानम्:-**

**मनुष्यतायेन विकासमेति, समानभावेन च मान्यमेव।**
**विवर्धते पाशववृत्तिरस्मात् तन्नैव विज्ञानपदं लभेत ।।१०।।**

अन्वयः—येन मनुष्यता विकासम् एति ! तत् सामान्यभावेन च मान्यम् एव। अस्मात् पाशववृत्तिः विवर्धते तत् विज्ञानपदम् न एव लभेत !

भावानुवादः—जिसके द्वारा मानवता विकास को प्राप्त होती है। उसे समन्वययोग कहा जा सकता है। किन्तु उसे विज्ञान नहीं कहा जा सकता है कि जिसमे पशुता की वृद्धि होती है।

**सम्पत्तेरुपयोगः—**

**इदं मदीयं ममता न युक्ता, तयैव पापस्य जनिध्रुवेयम्।**
**नेदं ममेति स्वयमेव वित्तम् समाजकल्याणकृतौ समर्प्यम् ।।११।।**

अन्वयः—इदं मदीयं इति ममता न युक्ता । तया एव पापस्य जनिः ध्रुवा एव । इदम् मम न इति स्वयम् एव सर्वम् वित्तम् समाजकल्याणकृतौ समर्प्यम् !

भावानुवादः—"यह वैभव मेरा है" धन के प्रति ऐसा ममत्वभाव परिवर्जनीय है। क्योंकि उस ममत्व भाव से निश्चित ही पाप कर्मो का बन्धन होता है। यह धन सदा मेरे पास स्थिर रहने वाला नहीं है। इस प्रकार का चिन्तन कर उस धन का स्वयं ही समाज कल्याण के कार्यों में उपयोग कर देना चाहिये।

**कष्टसहनम्:—**

**सन्त्येव कष्टानि महान्ति भूमौ, जेतुं प्रयत्नोपि सदा विधेयः।**
**तद्रोदनं दुःखविवर्धनार्थम्, तद्वर्जनं लाभकरं प्रशस्तम् ।।१२।।**

अन्वयः—धरायाम् महान्ति कष्टानि सन्ति एव। तानि जेतुं सदा प्रयत्नः विधेयः। तद् रोदनम् दुःखविवर्धनार्थम् । तद्वर्जनं प्रशस्तम् लाभकरं भवति ।

भावानुवादः—यह सत्य है कि पृथ्वी पर बड़े-बड़े कष्ट है, किन्तु उन पर विजय प्राप्त करने का प्रयत्न अपेक्षित है। कष्टों को देखकर रुदन करना कष्टों को बढ़ाता ही है। अतः उसका वर्जन लाभप्रद होता है।

**आत्मा का मूल्य:—**

**दृश्यं च दृष्ट्वा न रमेत तत्र, द्रष्टुः कदा विस्मरणं च युक्तम्।**
**रत्नस्य मुद्रां करयो विलोक्य सात्मेति वाच्यं किमनर्घ्यमत्र ।।१३।।**

अन्वयः—दृश्यं च दृष्ट्वा तत्र न रमेत । द्रष्टुः कदा विस्मरणं युक्तम् करयोः रत्नस्य मुद्राम् विलोक्य सा आत्मा इति च अत्र अनर्घ्यम् किम् इति वाच्यम् ??

भावानुवादः—अंगुली में बहुमूल्य हीरे की अंगूठी देखकर आप यह कह सकते हैं कि अगूठी का मूल्य अधिक है । या आप का । अर्थात् अंगूठी अधिक मूल्यवान है या आत्मा ? तात्पर्य यह है कि केवल भौतिक दृश्य पदार्थो में ही रमण नहीं करना चाहिये । भौतिक पदार्थों के द्रष्टा चैतन्य को भूल जाना उचित नही है ।

आभूषण:-

**शीलेन शोभा न तु भूषणेन, कायस्य जायेत विनश्वरस्य ।**
**स्त्रीभिर्न लोभोपि तदत्र कार्यो, गुणेषु भूयान्ननु पक्षपातः ॥१४॥**

अन्वयः—विनश्वरस्य कायस्य शोभाशीलेन भवति । नतु भूषणेन । तत् अत्र (भूषणे) स्त्रीभिः लोभः अपि न कार्यः । ननु गुणेषु पक्षपातः भूयात् !

भावानुवादः—शरीर विनश्वर है तथापि इसकी शोभा आभूषणों से नही पवित्र स्वभाव से ही होती है । अतः महिलाओं को चाहिये कि आभूषणों के प्रति ममत्व भाव नही रखें । उनका अनुराग सदैव गुणों पर होना चाहिये ।

भारतीय किसानः-

**देशस्य सद्भाग्यमतीवदीप्तम्, यन्नाढ्यतुल्याः कृषकाः प्रताराः ।**
**शुद्धा विनीताः कृषिकर्मवीराः तदन्यथा कृच्छ्र निपातनैव ॥१५॥**

अन्वयः—यत् कृषकाः आढ्यतुल्याः प्रताराः न इति देशस्य अतीव दीप्तम् सद् भाग्यम् अस्ति । ते कृषिकर्मवीराः शुद्धाः विनीताः सन्ति । तदन्यथा तु कृच्छ्र, निपातना एव !

भावानुवादः—देश का यह अत्यन्त सौभाग्य है कि यहां के ग्राम कृषक वर्ग ने अधिकांश धनाधीशों की तरह ठगविद्या नही सीखी है । वे विनीत, शुद्धहृदय, एवं कृषिकर्म मे वीर है । यदि ऐसा नहीं होता । तो कहा नहीं जा सकता कि भारत को कितनी कठिनाईयो का सामना करना पड़ता ।

**परमात्म-पद-प्राप्तिः—**

**प्राप्त्यै पदस्येश्वरनायकस्य संसाधनानां परमस्य पुंसो ।**
**हिताय जीवस्य युगान्तकारि प्रबोधितं विंशतिसूत्रमेतत् ।।१६।।**

अन्वयः—ईश्वर नायकस्य पदस्य प्राप्त्यै परमस्यपुंसः संसाधनानां हिताय जीवस्य युगान्तकारि एतत् विशंतिसूत्रम्प्रबोधितम् !

भावानुवादः—प्रभु ने परम पुरुषार्थ की साधना में लीन साधक के लिए तीर्थंकर पद प्राप्ति के बीस बोलों का प्रबोध दिया है ।

**दु खमुक्तिः—**

**क्रमप्रवृत्तासु दलद्दशासु, न रागवैरद्युतयो विधेयाः ।**
**समत्वभावश्च सुरक्षणीयः, दुःखाद् विमुक्तेरयमेवमार्गः ।।१७।।**

अन्वयः—क्रमप्रवृत्तासु दलद्दशासु, रागवैरद्युतयः न विधेयाः । समत्वभावः च सुरक्षणीयः । दुःखाद् विमुक्तेः अयम् एव मार्गः ।

भावानुवादः—क्षण–क्षण में परिवर्तनशील जागतिक स्थितियों मे राग–द्वेष का परित्याग करना चाहिये । समत्वभाव की साधना करनी चाहिये । दुःखमुक्ति का यही एक मार्ग है ।

**तपस्विवचनमाधुर्यम्ः—**

**तपस्विनो वाक् नितरां पवित्रा, तपश्च तस्यैव सभाजनीयम् ।**
**स्वकीयवाचा विभयां करोति पीयूषपूर्त्या जनससदं सः ।।१६।।**

अन्वयः—तपस्विनः वाक् नितरां पवित्रा भवति । तस्य एव तपः च सभाजनीयम् सजनससदम् पोयूषपूर्त्या स्वकीयवाचाविभयां करोति !

भावानुवादः—वही तपस्वी प्रशसा का पात्र है । जिसकी वाणी में माधुर्य है

कितना भी बड़ा तपस्वी हो। उसे असत्य अथवा कटुवाणी बोलने का अधिकार नही है। वास्तविक तपस्वी वह है जो अपनी अमृतवाणी से भयाक्रान्त व्यक्ति को भी निर्भय बना देता है।

**अहिंसाः—**

**अहिंसया जीवनमत्र धार्यम्, न हिंसनं चैव कदापि कार्यम्।**
**धर्मोन जीवव्यपरोपणं स्यादहिंस्यभावो महतो महीयान् ॥१९॥**

अन्वयः—अत्र जीवनम् अहिसया धार्यम्! कदापि हिंसनम् न एव कार्यम्। जीव व्यपरोपणम् धर्मः न स्यात्। अहिंस्यभावः महतः महीयान् (अस्ति)।

भावानुवादः—सभी व्यक्तियों को अहिसा के द्वारा ही जीवन धारण करना चाहिये। किसो भी प्राणी की हिसा कदापि नहीं करनी चाहिये। जीवहिसा को धर्म कदापि नही कहा जा सकता है। अहिसा का भाव ही सर्वतो महान् होता है।

**सत्यम्:—**

**सत्यात्मकं जीवनमत्र भव्यम्, कायेन वाचा मनसा च सत्यम्।**
**आराधनीयं भविकैर्जनैश्च, प्रतिष्ठितं सर्वमिदं च सत्ये ॥२०॥**

अन्वयः—अत्र सत्यात्मकं भव्यम् जीवनम् (स्यात्)। कायेन वाचा मनसा च सत्यम् आश्रयणीयम्। भविकैः जनैः च सत्यम् आराधनीयम्। सर्वम् इदम् च सत्ये प्रतिष्ठितम् (आस्ते)।

भावानुवादः—समस्त मानवों का जीवन सत्यमय होना चाहिये। मनसा-वाचा-कर्मणा सत्य का ही आश्रय लेना चाहिये। भव्यप्राणियों को सत्य की ही आराधना करनी चाहिये। सब कुछ तो सत्य में ही प्रतिष्ठित है।

सर्वत्र सत्यस्य समग्रलोके, विचारसंभाषणसंप्रयोगैः।
उत्कृष्टसिद्धि श्रयते मनुष्यः, वतान्यथा जीवनमेव नष्टम् ॥२१॥

अन्वय:—मनुष्य: समग्रलोके सवत्र सत्यस्य विचारसम्भाषणसंप्रयोगैः उत्कृष्ट-सिद्धिम् श्रयते । वत अन्यथा जीवनम् एव नष्टम् !

भावानुवाद:—सत्य के विचार और सत्य सम्भाषण के द्वारा ही मनुष्य सर्वत्र समग्र लोक में सर्वोच्च सिद्धि को प्राप्त कर सकता है । अन्यथा उसका जीवन ही व्यर्थ है ।

**धर्मस्य मार्गः—**

**परस्य दुःखाद् विनिवृत्तये च, कष्टानि सोढु यतनीयमेव ।**
**सत्त्वस्य सौख्ये सुखमेव मान्यं, धर्मस्य सोपानमनर्घमाद्यम् ।।२२।।**

अन्वय:—परस्य दु:खाद् विनिवृत्तये कष्टानि सोढुम् यतनीयम् एव । सत्त्वस्य सौख्ये सुखम् एव मान्यम् । इदम् एव धर्मस्य अनर्घम् आद्य सोपानम् (अस्ति) ।

भावानुवाद:— धर्म का बहुमूल्य एवं प्रथम सोपान यह है कि दूसरों के दु:ख की निवृत्ति हेतु स्वयं कष्टों को सहन करे । अन्य प्राणियों को सुख प्रदान करने में स्वयं को सुखानुभव होता है ।

**विपरीत बोधः—**

**विकारबुद्ध्या विपरीतबोधः काठिन्यसारल्यमये प्रपञ्चे ।**
**विकारनाशे परमात्मतत्त्वम्, जायेत सर्वं सरलं समन्तात् ।।२३।।**

अन्वय:—काठिन्यसारल्यमये प्रपञ्चे विकार बुद्धया विपरीत: बोधः जायेत । विकारनाशे सति परमात्मतत्त्वम् सर्वम् समन्तात् सरलं जायते ।

भावानुवाद:—यह ससार सरल एव कुटिल उभय रूप है, किन्तु विकार बुद्धि के कारण विपरीत बोध होने लगता है । जब विकार समाप्त हो जाता है तो परमात्मतत्त्व का बोध सरल–सहज हो जाता है ।

**आत्मोन्नतिः स्यात्परमा पुनीता, विश्वस्य भिन्नाऽखिलमानवानाम् ।**
**मलीमसानां हृदि संस्थितानाम् भवेद्विनाशो यदि वासनानाम् ।।२४।।**

अन्वयः—यदि विश्वस्य भिन्नाऽखिलमानवाना हृदिसस्थितानां मलीमसानां वासनानां विनाशः भवेत् (तदा) परमा पुनीताआत्मोन्नतिः स्यात् !

भावानुवादः—संसार के समस्त व्यक्तियों के हृदय में स्थित मलीन वासनाएं यदि समाप्त हो जाएं तो परम पुनीत आत्मोन्नति सहज सम्पन्न हो सकती है।

पर्यूषणः—

वैरस्मृतिर्नो ननु नीतिधारः वहेज्जनेषूर्मिलमञ्जुहारः ।
कालुष्यभावस्य न कोपि भारः, पर्यूषणे पर्वणि सद्विचारः ॥२५॥

अन्वयः—पर्यूषणे पर्वणि वैरस्मृतिः नो, ननु जनेषुऊर्मिलमञ्जुहारः (प्रेमधारः) वहेत् । कालुष्यभावस्य न कः अपि भारः सद्विचार एव (भवेत्) !

भावानुवादः—पर्यूषण पर्व सद्विचारों आत्मशुद्धि का पर्व है । इस प्रसंग पर किसी भी प्रकार के वैरभाव का उदय नही होना चाहिये । समस्त कालुष्य भाव के निष्कासन एवं सद्विचारों के सृजन के द्वारा समस्त मानव हृदयों में लहरों के मनोरम हार के तुल्य स्नेह की धारा बहनी चाहिये ।

धर्मः—

आभ्यन्तरं वस्तु सुरक्षणीयम् प्राणप्रियं तर्पणमात्रमेकम् ।
वर्ज्यान्निवृत्तिः करणीयवृत्तिः धर्मोऽस्ति नैवं सतु वाह्यरूपः ॥२६॥

अन्वयः—प्राणप्रियम् एकम् तर्पणमात्रम् वर्ज्यात् निवृत्तिः करणीयवृत्तिः धर्मःसुरक्षणीयम्आभ्यन्तरम् वस्तु अस्ति । एवम् सतु (धर्मः) वाह्यरूपः न (अस्ति)।

भावानुवादः—समस्त आत्माओं को आत्मशान्ति से तृप्त करने वाला, निषेध्य का परित्याग एवं विधि का संग्रहण स्वरूप धर्म ही एकमेव प्राणाधिक प्रिय सुरक्षणीय अन्तस्तत्व है । यह केवल वाह्य आचार रूप ही नहीं है ।

चारित्रबलः-

सर्वेष्वसंख्यात बलेषुशक्तम्, बलं बलीयश्चरिताभिधानम् ।
सत्येव तस्मिन्नपराखिलानि, भूतानि रामे ननु रावणेऽपि ॥२७॥

अन्वयः—सर्वेष्वसंख्यातबलेषु शक्तम् बलीयः चरिताभिधानं बलम् (अस्ति) तस्मिन् रामे अपराखिलानि (बलानि) भूतानि सन्ति एव । रावणे अपि ननु (भूतानि) ।

भावानुवादः—ससार के समस्त बलों में चारित्र का बल ही सर्वोत्तम सर्वोच्च होता है । चरित्र बल के कारण ही राम में अन्य अनेक गुणों का समन्वय हुआ । इसके विपरीत चरित्रबल के अभाव से रावण पराजित हुआ ।

शीलप्रकाशः--

दीपप्रकाशे न तमोविलासः, तथैव शीलस्य न पापमग्रे ।
सन्तिष्ठते किन्तु तदर्थमेषाम्, धैर्योद्यमानां दृढता विधेया ॥२८॥

अन्वयः—यथा दीपप्रकाशे तमोविलासः न । तथा एव शीलस्य अग्रे पापम् न सन्तिष्ठते । किन्तु तदर्थम् एषाम् धैर्योद्यमानाम् दृढता विधेया !

भावानुवादः—जैसे दीप शिखा के समक्ष अन्धकार नही ठहरता है । वैसे ही शील के जाज्वल्यमान प्रकाश के सामने पाप भी नही टिकता है; किन्तु पाप के अन्धकार को समाप्त करने एवं शीलप्रकाश का विस्तार करने के लिए धैर्य एव सतत-प्रयत्न की अपेक्षा रहती है ।

मुक्ताहारवीरवाणी:--

नो राजते मौक्तिकदामभिर्ना, संजायते तैः किमपीह शर्म ।
कायात्मनोर्गौरवमेवमाप्तुम् धैर्येण कार्या जिनवीरवाणी ॥२९॥

अन्वयः—ना मौक्तिकदामभिः नो राजते । तैः इह किम्अपि शर्म संजायते । एवम् कायात्मनोः गौरवम् आप्तुम् धैर्येण जिनवीर वाणीधार्या (जनैरितिशेषः) ।

भावानुवादः—मानव मोतियों की माला से सुशोभित नही होता है। और न उनसे यहाँ कुछ भी कल्याण साधा जा सकता है। शरीर तथा आत्मा के गौरव की वृद्धि हेतु धैर्यपूर्वक प्रभु महावीर की वाणी रूप भूषण चाहिये।

**मानवीयतनुः—**

**शरीरमाप्तंवत मानवस्य सुदुर्लभं केवलपुण्यलभ्यम् ।**
**जगद् विभूतेर्विनिमापनेन, कुत्रापि केनापि कथंच लभ्यम् ॥३०॥**

अन्वयः—मानवस्य सुदुर्लभ शरीरम् ननु केवलपुण्यलभ्यम् आप्तम् । जगद् विभूतेः विनिमापनेन तत् कुत्रापि केनापि कथं च लभ्यम् (अस्ति) ??

भावानुवादः—यह सुदुर्लभ मानवीय तन केवल प्रबल पुण्योदय से उपलब्ध हुआ है। ससार की समस्त विभूतियो—सम्पदाओं के विनिमय से भी इसे कभी कोई किसी भी प्रकार से नहीं पा सकता है।

**परमात्मनः शरणम्:—**

**मानेन कल्प्यं बलमत्र हेयम्, नो तत्कदाचिद्धितमातनोति ।**
**परात्मतत्त्वम् शरणं विधेयम्, तेनैव संसिध्यति कार्यजातम् ॥३१॥**

अन्वयः—अत्र मानेन कल्प्यम् बलम् हेयम् तत् कदाचित् हितम् नो आतनोति । परात्मतत्त्वम् शरणं विधेयम् । तेन एव कार्यजातम् संसिध्यति !

भावानुवादः—अभिमान के आधार पर कल्पित बल सर्वथा हेय है। क्योंकि वह हित साधन में कदापि सक्षम नही होता है। वास्तव में परमात्मदेव की शरण के द्वारा ही समस्त सिद्धियों के द्वार उद्घाटित होते है।

**सन्त जीवनम्:—**

**वियोगभीता न भवन्ति सन्तः, संयोगहृष्टा न कदापि जाताः ।**
**विवेकशीला विनयप्रधानाः, माध्यस्थ्यभावं दधतेऽभियुक्ताः ॥३२॥**

अन्वयः - सन्तः अभियुक्ताः वियोगभीताः न भवन्ति ! कदापि सयोगहृत्टा न जाताः । ते विवेकशीलाः विनयप्रधानाः युक्ताः च माध्यस्थ्यभावम् दधते !

भावानुवादः—सन्त जीवन वह है, जो वियोग एवं संयोग में समत्व की उपासना करे । न वियोग से भयभीत हो और न सयोग से हर्षित । विवेकशील एवं विनयप्रधान होकर मध्यस्थवृत्ति में ही रमरण करे ।

### पापशुद्धिः—

**पापस्य संगोपनकारणेन न क्षोयते तेन विबर्धते च ।**
**ततो विवेकेन नरेण नित्यम् कार्या विशोधिर्विहितस्य तस्य ॥३३॥**

अन्वयः—पापस्य सगोपनकारणेन तत् (पापम्) न क्षीयते तेन विबर्धते च । ततः नरेण विवेकेन विहितस्य तस्य (पापस्य) विशोधिः कार्या ।

भावानुवादः—कृतपाप छिपाने से समाप्त नही होता, अपितु वृद्धि ही पाता है । अतः विवेकशील मानव का यह पुनीत कर्तव्य हो जाता है कि वह कृतपापों की विशेष प्रकार से विवेक द्वारा विशुद्धि करें ।

### पवित्रताभिकाँक्षाः—

**दूरं नयेत्पादविलग्नपंकम् नरो यदि स्यात्पवनाभिलाषी ।**
**नाल्पोऽपि लेपो मनुजस्य यस्य, कथं तदर्थं प्रयतेत धीरः ॥३४॥**

अन्वयः—यदि नरः पवनाभिलाषी स्यात् पादविलग्नपंकं दूरे नयेत् ! यस्य मनुजस्य अल्प. अपि लेपो न, धोरः तदर्थं कथं प्रयतेत !

भावानुवादः—जिस मानव को अल्पतम भी कल्मष नहीं लगा हो, वह धीर पुरुष तो उसको साफ करने का प्रयत्न भी कैसे करेगा । किन्तु जो पवित्रता के आकांक्षी है उन्हें अपने चरणों में लगे कल्मष को भी धो डालना चाहिये ।

## तत्त्वनिर्णयः—

न निर्णयो वादविवादरूपे, संजायते तत्त्वचयस्य लोके ।
तमाशु संत्यज्य विवेकबुद्धया, जिनेन्द्रनिर्दिष्टपथं प्रयायात् ॥३५॥

अन्वयः—लोके तत्त्वचयस्य निर्णयः वादविवाद रूपे न सजायते । तम् विवादं च आशु सत्यज्य विवेकबुद्धया जिनेन्द्रनिर्दिष्टपथं प्रयायात् ।

भावानुवादः—तत्त्व–निर्णय परस्पर वाद–विवाद से नही होता है । अतः विवादों को छोड़ कर जिनेन्द्रप्रभु द्वारा कथित मार्ग का विवेक बुद्धि से आश्रय लेना चाहिये ।

## अनन्तशक्तिः—

द्वेषश्च रागश्च निसर्गशत्रु, चात्मीयशक्तेः प्रतिरोधकौ स्तः ।
बुद्धवा नरेणात्मविशिष्ट शक्त्या, जयस्तयोराशुसदा विधेयः ॥३६॥

अन्वयः—रागः च द्वेषः च निसर्गशत्रू आत्मीयशक्तेः प्रतिरोधकौ स्तः । इति बुद्धवा नरेण आत्मविशिष्टशक्त्या तयोः जयः आशुसदा विधेयः ।

भावानुवादः—आत्मा की अनन्त शक्ति का विचार करके राग द्वेष का परित्याग कर देना चाहिये; क्योंकि ये दो शत्रु ही उस अनन्त शक्ति को आवृत करते हैं; किन्तु यह आत्मबल के द्वारा ही हो सकता है ।

## क्रोधजयी:—

महान् जनः क्रोधविषैर्विहीनः, गर्वस्य मानस्य सदा विजेता ।
सन्तोषवृत्या व्यवहारयुक्तो, गुणैर्नरोलोकहितो विशेषः ॥३७॥

अन्वयः—क्रोधविषैः विहीनः जनः गर्वस्य मानस्य च सदा विजेता महान् (भवति) । सन्तोषवृत्या गुणैः व्यवहारयुक्तः नर; विशेषः लोकहितः (भवति) ।

भावानुवादः—क्रोधरूपी जहर से विहीन तथा गर्व–अभिमान का विजेता दर्शित

ही महान् है। क्योंकि सन्तुष्ट चित्त एवं व्यवहार कुशल व्यक्ति क्रोधविजय-रूप गुणों से लोकप्रिय हो जाता है।

**परलाभएव स्वलाभः—**

**स्वलाभमिच्छन्परलाभमेव, सदा विदध्यात् मनुजोजगत्याम्।**
**परस्य हानेश्च निजस्य हानिः, ज्ञातव्यमेतत् विबुधेन सत्यम् ॥३८॥**

अन्वयः—मनुजः जगत्याम् स्वलाभम् इच्छन् परलाभम् एव विद्ध्यात्। परस्य हानेः च निजस्य हानिः एतत विबुधेन सत्यम् ज्ञातव्यम्!

भावानुवादः—पर की हानि से स्वयं की भी हानि होती है। यह एक ध्रुव सत्य है। अतः ससार में स्वयं के लाभ की कामना वाले मानव को सदा पर-के प्रति भी सजग रहना चाहिये।

**परमात्मनः स्थानम्ः—**

**परात्मदेवस्य पदं प्रशस्तम्, सन्मानसं स्नेहमयं विशिष्टम्।**
**तत्रैव प्राप्तिर्भवितेतितस्य, कस्तूरिकैणस्य यथासुनाभौ ॥३९॥**

अन्वयः—विशिष्टं स्नेहमयम् सद् मानसम् परात्मदेवस्य प्रशस्तम् पदम् (अस्ति)। तत्र एव तस्य प्राप्तिः भविता इति। यथा कस्तूरिका एणस्य सुनाभौ प्राप्यते।

भावानुवादः—प्रशस्त भाव वाला सद् विचारों का केन्द्र स्नेहमय विशिष्ट मानस ही परमात्मा का स्थान है। जैसे कस्तूरी मृग की नाभि में ही होती है। वैसे ही पवित्र हृदय में ही परमात्मा की प्राप्ति हो सकती है।

**आत्म विजयोः—**

**स्वमेव जित्वा मनुजो जितात्मा, जितेन्द्रियश्च प्रथते प्रदेशे।**
**विश्वासपात्रं जनसन्निधाने विशेषतोऽयं भववन्दनीयः ॥४०॥**

अन्वयः—मनुजः स्वम् एव जित्वा जितात्मा, जितेन्द्रियः च प्रदेशे प्रथते । जन-सन्निधाने विश्वासपात्रम् च विशेषतः अयम् भववन्दनीयः (भवति) ।

भावानुवादः—स्वयं की आत्मा पर विजय प्राप्त करने वाला मानव ही जितात्मा एवं जितेन्द्रिय बनकर अपने क्षेत्र में प्रसिद्धि को प्राप्त करता है । मानव समाज में विश्वास पात्र बनता है । तथा विश्व में विशेष रूप से वन्दनीय भी होता है ।

**धनस्योपयोगः—**

**यद्यस्ति वित्तं विपुलं समीपे, तद्देयमेवेति परोपकारे ।**
**नयाति संगे परलोकमार्गे, मोहश्च तस्यापि विसर्जनीयः ॥४१॥**

अन्वयः—यदि समीपे विपुलं वित्तम् अस्ति । तत् परोपकारे देयम् एव अस्ति । तत् परलोकमार्गे संगे न याति । तस्य अपि च मोहः परिवर्जनीयः !

भावानुवादः—यदि तुम्हारे पास बहुत अधिक धन है; तो उसका परोपकृति में उपयोग करना चाहिये । क्योकि धन वैभव परलोक में साथ निभाने वाला नहीं है । अतः उसके प्रति होने वाले ममत्व का परित्याग कर देना चाहिये ।

**धर्मः धर्माभासश्च:—**

**धर्मस्वरूपेऽवितथे सुरम्ये चाभासरूपे महदन्तरं तत् ।**
**चर्मावृतः कैतवभूरिभावो नो रासभः सैंहपदं प्रयाति ॥४२॥**

अन्वयः—अवितथे सुरम्ये धर्मस्वरूपे तदाभासरूपे च महत् अन्तरम् (अस्ति) । चर्मावृतः कैतवभूरिभावः रासभः सैंहपदं न प्रयाति !

भावानुवादः—सत्यमय समीचीन धर्म एवं सत्याभासी में दिवा–रात्रि–सा अन्तर होता है । धूर्तता के विचारों से युक्त किन्तु सिंह के चर्म से आवृत गदहा केवल आवरण मात्र मे सिंह पद का भोक्ता नहीं कहा जा सकता है ।

**स्वकर्मभोगः—**

**स्वकर्म भोगो मनुजस्य युक्तो, ज्ञात्वेदमव्यग्रमना मनस्वी ।**
**नेत्रे कराग्रे लगिते स्वकीये परस्य कस्याऽप्युपलम्भनं स्यात् ।।४३।।**

अन्वयः—मनुजस्य स्वकर्मभोगः युक्तः । इदम् ज्ञात्वा मनस्वी अव्यग्रमनाः (भवेत्) । नेत्रे स्वकीये कराग्रेलगिते कस्य अपि परस्य उपलम्भनम् स्यात् ??

भावानुवाद:—स्वयं द्वारा बांधे कर्मों का फलभोग उचित ही है, यह चिन्तन कर मनस्वी मानव चंचल चित्त न बने । अपने नेत्र में अपनी ही अंगुली के लग जाने पर क्या किसी अन्य को उपालम्भ दिया जा सकता है ।

**गुणदृष्टिः—**

**समुज्ज्वलानेव गुणान्परस्य, पश्येन्नरो नावगुणान्कदाचित् ।**
**मलानि वीथिष्ववलोकमानः, प्राप्नोति हित्वाऽन्यदहो बराहः ।।४४।।**

अन्वयः—नरः परस्य समुज्ज्वलानेव गुणान् पश्येत् । कदाचित् अवगुणान् न पश्येत् ! बराहः वीथिषु अवलोकमानः अन्यद्त्यक्त्वा अहो ? मलानि प्राप्नोति ।

भावानुवाद:—प्रत्येक मानव के लिए यह वाछनीय है कि वह दूसरे में रहे हुए समुज्ज्वल गुणो को ही देखे । अवगुणो की ओर कदापि दृष्टिपात न करे । महान् आश्चर्य है कि गलियों मे भ्रमण करता हुआ ग्राम सूकर (सूअर) सब कुछ देखता हुआ भी केवल अशुचि को ही ग्रहण करता है ।

**धर्मविघ्नम्:—**

**वैधुर्यमायाति रहस्यमेतत्, धर्मस्य कृत्ये नियतं प्रकृत्या ।**
**धर्मिस्वभावस्य न कापि हानिः, प्रमाणमन्तः करणप्रवृत्तिः ।।४५।।**

अन्वयः—धर्मस्य कृत्ये प्रकृत्या नियतं वैधुर्यम् आयातिएतत् रहस्यम (अस्ति) । धर्मिस्वभावस्य न का अपि हानिः (अत्र) अन्तःकरणप्रवृत्तिः प्रमाणम् ।

भावानुवादः—धर्म के प्रशस्त कार्यों मे निश्चय ही नैसर्गिक कष्ट आते हैं। यह एक रहस्यपूर्ण तथ्य है; किन्तु इससे धर्माचरण की स्वाभाविक प्रवृत्ति मे कोई हानि नहीं होती है। अन्तःकरण की प्रवृत्ति ही इसका प्रबल प्रमाण है।

**देशद्रोहीः—**

**निजस्य देशस्य वदन्ति निन्दामन्यस्य राष्ट्रस्यच ये प्रशंसाम् ।**
**ते सन्ति पापाः खलु भोगकीटा', कथापि तेषां परिवर्जनीया ॥४६॥**

अन्वयः—ये निजस्यदेशस्य निन्दाम् अन्यस्य राष्ट्रस्य च प्रशंसाम् वदन्ति। ते खलु भोगकीटाः पापाः सन्ति। तेषाम् कथा अपि परिवर्जनीया !

भावानुवादः—जो व्यक्ति निज देश की निन्दा एवं पर देश की प्रशंसा में लोन रहते हैं। वे देशद्रोही कहलाते है। उनकी चर्चा भी परिवर्जनीय है।

**तृष्णाः—**

**त्यक्तुं समीहा यदि वर्तते ते, दुःखं भवाम्भोधिसमं गभीरम् ।**
**तन्मूलमेकं परिवर्जनीयम्, तृष्णाभिध पातकमाशु शूलम् ॥४७॥**

अन्वयः—यदि ते भवाम्भोधिसमं गभीरम् दुःखम् त्युक्तुं समीहावर्तते। तत् मूलम् एकम् शूलम् तृष्णामिधं पातकम् आशु परिवर्जनीयम्।

भावानुवादः यदि तुम संसार सागर के समान गम्भीर दुःखों से मुक्त होना चाहते हो, तो उसकी एक मात्र जड़ तृष्णा—शूल रूप पाप को शीघ्र ही छोड़ दो।

**धनवान् अधिकोविनम्र.—**

**लब्ध्वा धनं सत्पुरुषा भवन्ति, विशेषनम्राः तरुसन्निभाश्च ।**
**समीपवासी यदि कोपि दीनः, तत्रापि कश्चिद्धनिकस्य दोषः ॥४८॥**

अन्वयः—सत्पुरुषाः धनं लब्ध्वा तरुसन्निमाः च विशेषनम्राः भवन्ति। यदि

समीपवासी कः अपि दीनः (भवति) । तत्र अपि धनिकस्य कश्चित् दोषः (अस्ति) ।

भावानुवादः—सत्पुरुष वह है जो धन–सम्पति की उपलब्धि पर फलवान वृक्ष के समान अत्यन्त विनम्र हो जाता है । यदि कोई पड़ौसो अभावों से पीड़ित है, तो उसमें किसी अपेक्षा से सम्पन्नवर्ग का ही कोई दोष है ।

मानवतनुसत्कार्यहेतुः--

मनुष्यदेहं सुरदुर्लभं च, सम्प्राप्य धर्मः परिपालनीयः ।
तदन्यथा कृत्यविधानभावे, व्यर्थो भवश्चेति विभावनीयम् ।।४९।।

अन्वयः—सुरदुर्लभम् मनुष्यदेहम् सम्प्राप्य च धर्मः परिपालनीयः । तदन्यथा कृत्यविधानभावे भवः च व्यर्थ एव इति विभावनीयम् ।

भावानुवादः—सुरदुर्लभ मानव तन को प्राप्त करके इसका उपयोग धर्मसाधनों हेतु करना चाहिये । इसके विपरीत किसी कार्य में इसका उपयोग करना मानव जीवन को व्यर्थ खोना है । यह चिन्तन अनिवार्य है ।

सत्यमपरिवर्त्यम्:--

निर्यातु चन्द्रादनलो नितान्तम्, धरासुमेरू नितरां चलेताम् ।
प्रोदेतु सूर्यो दिशि पश्चिमायाम्, सन्तो न स्वप्नेऽपि मृषा वदन्ति ।।५०।।

अन्वयः—चन्द्रात् अनलः नितान्तम् निर्यातु । धरासुमेरू च नितराँ चलेताम् । सूर्यः पश्चिमायाम् दिशि प्रोदेतु (किन्तु) सन्तः स्वप्नेपि अपि मृषा न वदन्ति !

भावानुवादः—चन्द्र अग्नि बरसाने लगे । सुमेरु पर्वत एवं पृथ्वी चलित हो जावें । तथा सूर्य भी पश्चिम दिशा में उदित होने लगे; किन्तु सन्त पुरुष स्वप्न मे भी असत्य का आश्रय नही लेते हैं ।

**आत्मौपम्यदृष्टिः--**

**पश्येज्जनानात्मसमान रूपान्आत्मोपमा सर्वभवे प्रशस्ता ।**
**जीवेत् स्वयं जीवनदायकः सन्, समाजलाभोऽवितथोस्ति भद्रः ।५१।**

अन्वयः—(नरः) आत्मसमान रूपान् जनान् पश्येत् । सर्वभवे आत्मोपमा प्रशस्ता । जीवनदायकः सन् स्वयं जीवेत् । समाजलाभः अवितथः भद्रः (च) अस्ति ।

भावानुवादः—संसार में आत्मौपम्य दृष्टि को ही महान् एवं प्रशस्त माना गया है । अतः प्रत्येक व्यक्ति सभी व्यक्तियों को ही अपने समान समझे । अन्य प्राणियों को जीने का अधिकार देते हुए स्वयं जीये । इसी में समाज का लाभ एव कल्याणप्रद दृष्टिकोण है ।

**आत्मा कर्म चः--**

**बद्धात्मनः शक्तिरपाररूपा तत्रावृतिर्भस्मचयो हिवह्नौ ।**
**तस्याः निरासो ननु मोक्षलाभः, श्रद्धानमस्मै पुरुषार्थयोगः ।।५२।।**

अन्वयः—आत्मनः अपाररूपा शक्तिः बद्धा । तत्र वह्नौ भस्म चयः हि आवृतिः (अस्ति) । तस्याः निरासः ननु मोक्षलाभः (अस्ति) । तस्मैच श्रद्धानं पुरुषार्थ योगः (अस्ति) ।

भावानुवादः—भस्म राशि से आच्छन्न अग्नि के समान आत्मा कर्मवृन्द से आवृत है । अतः आत्मज्योति को प्रगट करने के लिए कर्मरूप (भस्म) राख को दूर करना होगा, और वह होगा श्रद्धा पूर्ण चारित्र के आराधन से ।

**मृत्युवोधः—**

**सांसारिका नाम मृषा ब्रुवन्ति, मृत्योश्च वोधो ननु विद्यते नो ।**
**यद्येतदास्ते दुरित प्रवृतीरन्याय पापं च कथ चरन्ति ।।५३।।**

अन्वयः—सांसारिकाः मृषा ब्रुवन्ति नाम मृत्योः च वोधो ननु नो विद्यते । यदि

एतत् आस्ते (तदा) (ते) अन्यायपापं च कथं चरन्ति !

भावानुवादः—साँसारिक अज्ञ प्राणियों को मृत्यु का बोध नहीं है । अतः वे असत्य वोलते है । यदि उन्हें मृत्यु का ज्ञान होता है, तो वे अन्याय एवं पाप प्रवृत्तियों में क्यों संलग्न होते ?

**चारित्र बलम्ः—**

**चारित्र्यसत्त्वे परमौन्नतिः स्यात्, आत्मस्वरूपस्य भवान्तराले ।**
**सूर्योदये पद्मविकासयोनौ, लोकः प्रवर्तेत कृतेः कलापे ।।५४।।**

अन्वयः—भवान्तराले आत्मस्वरूपस्य चारित्र्यसत्त्वे परमोन्नतिः स्यात् । लोकः पदमविकासयोनौ सूर्योदये कृतेः कलापे प्रवर्तेत !

भावानुवादः—जैसे परमविकासी सूर्य के उदित होने पर ही समस्त विश्वजन अपने दैनिक क्रियाकलापों में संलग्न होते हैं । उसी प्रकार प्रवल चरित्र बल की उपस्थिति में ही आत्मबल परमोन्नति को प्राप्त होता है ।

**आत्म स्वातन्त्र्यम्ः—**

**स्वतन्त्रता स्वेष्टिमयी मनोज्ञा, तामाप्तुमीशा न नरोनृलोके ।**
**वाचालकल्पा बहुधारुवन्ति, तत्साधकाः कर्मकराः प्रशस्ताः ।।५५।।**

अन्वयः—स्वतन्त्रता मनोज्ञा स्वेष्टिमयी (भवति) । नृलोके वाचालकल्पाः नरः बहुधा रुवन्ति । ताम् आप्तुम् ईशाः न । कर्मकराः तत्साधकाः प्रशस्ताः (भवन्ति) ।

भावानुवादः—आत्मस्वातन्त्र्य सर्वथा मनोज्ञ एव अभिलषणीय है । वहुत से व्यक्ति अधिक वाचाल वन कर इधर-उधर भटकते रहते है, किन्तु उसे प्राप्त नहीं कर सकते है । जवकि स्वतन्त्र जीवन जीने वाले सामान्य कर्मकर मजदूर किसान उसे (आत्म स्वातन्त्र्य) सहज ही प्राप्त कर लेते हैं ।

**पतिव्रताः—**

**यस्मिन्दिने नैव पतिव्रताः स्युः, तले जगत्याः वसुधासुधाश्च ।**
**तस्मिन् दिने भास्करचन्द्रतारा: सीमानमुद्यन्ति धरा समुद्राः ॥५६॥**

अन्वय:—वसुधासुधा: पतिव्रताः यस्मिन् दिने जगत्याः तले न एव स्युः । तस्मिन् दिने भास्करचन्द्रतारा: धरा समुद्राः च सीमानम् उद्यन्ति !

भावानुवादः—जिस दिन इस धरा पर अमृततुल्य पतिव्रता नारिया नहीं होंगी। सूर्य, चन्द्र, सितारे, पृथ्वी एव समुद्र सभी अपनी मर्यादाओ का परित्याग कर देंगे ।

**दयाभाव:—**

**हृदन्तरालान्ननु जायमानो दयार्द्रभावो दयनीयजन्तोः ।**
**सन्तापतापोर्मिमपाकरोति, प्रमाणमस्त्यत्र जिनेन्द्रवाणी ॥५७॥**

अन्वय:—हृदन्तरालात् जायमान. दयार्द्रभाव: दयनीयजन्तोः सन्तापतापोर्मिम् ननु अपाकरोति । अत्र जिनेन्द्र वाणी प्रमाणम् अस्ति ।

भावानुवाद:—हृदय से उठने वाली दयाभाव की शीतल लहरें दया पात्र-गरीब के समस्त ज्वलन को समाप्त कर देती है । इसमे जिनेन्द्र वाणी ही प्रमाण-भूत है ।

**हिंसाया धर्मः—**

**धर्मो यदिस्यान्ननुपालकोऽसौ, प्राणातिपातोपि भवे कियान्स्यात् ।**
**घनान्धकारे गहने निमग्नो नरो विबुध्येत कथं निराशः ॥५८॥**

अन्वयः—भवे प्राणातिपातः अपि यदि धर्मः स्यात् (तदा) असौ कियान् पालक: स्यात् ? (हिंसक:) गहने घनान्धकारे निमग्नः नरः निराशः (सन्) कथं विबुध्येत !

भावानुवादः—संसार में हिसा को भी यदि धर्म मान लिया जाय, तो वह कितने का अनुपालन करता है। हिसा के गहन अन्धकार मे निमग्न निराश मानव समग्र ज्ञान को कैसे उपलब्ध कर सकता है ?

राज्यतन्त्रमन्यायश्चः—

**अन्यायरोध न करोति तन्त्रम्, कलंकपंकं भुवनस्यभाले ।**
**नश्यन्ति धर्माः जनतागृहीताः धरा समग्रा नरकायते च ॥५९॥**

अन्वयः—तन्त्रम् (यदि) अन्यायरोध न करोति। (तदा) भुवनस्य भाले कलंक-पंकम् (अस्ति) जनतागृहीताः धर्माः नश्यन्ति। समग्रा च धरा नरकायते !

भावानुवादः—यदि राज्यतन्त्र अन्याय का प्रतिरोध नही करता है, तो वह तन्त्र पृथ्वी के ललाट पर कलक स्वरूप ही है। क्योकि उस अराजकता पूर्ण स्थिति मे जनता द्वारा स्वीकृत धर्म नष्ट हो जाते है। परिणामतः वसुधा नारकीय यातनाओं से व्याप्त हो जाती है।

निष्कामतपः—

**कांक्षा समीहा च विकार एव संगेन तस्यैव कृता तपस्या ।**
**धर्मस्य सर्व विहितं विधानम्, पलेन सर्वं कुकलंकमेति ॥६०॥**

अन्वयः—कांक्षा समीहा च विकार एव। तस्य सगेन एव तपस्या कृता धर्मस्य सर्व विधानं विहितम् हि सर्वं पलेन कुकलंकम् एति।

भावानुवादः—किसी भी प्रकार की आकांक्षा के साथ तप का आराधन विकृत माना गया है। तप ही नहीं धर्म के समस्त विधि विधान यदि किसी भौतिक कामना पूर्वक किये जा रहे हैं, तो वे सभी क्षण में साधना के कलंक के स्वरूप बन जाते हैं। अतः धर्माराधन निष्काम भाव से होना चाहिये।

वीरप्रशस्तिः—

**धर्म। विहीनाः भुविभारभूताः, सन्त्येवते कापुरुषाः समन्तात् ।**
**विश्वस्य सर्वस्य यथांशुमाली, धर्मस्य रक्षां प्रकरोति वीरः ॥६१॥**

अन्वयः—भद्रैः विहीनाः भुविभारभूताः कापुरुषाः समन्तात् सन्ति एव। वीरः सर्वस्य विश्वस्य अंशुमाली यथा धर्मस्य रक्षाम् प्रकरोति।

भावानुवादः—वीर पुरुष वह है, जो प्राणपण से धर्म की रक्षा करता है। जैसे कि सहस्ररश्मि सम्पूर्ण जगत की। इसके विपरीत जो कल्याणप्रदप्रवृत्तियों से रहित हैं, वे निश्चित ही कायर हैं तथा पृथ्वी के भाररूप है।

### धीर-पुरुषः—

**परस्य वित्तस्य च हानयुक्तो, यत्नैः परस्त्रीपरिवर्जितोऽपि।**
**महीयते भूरि विभक्तलोके, स एव धीरो धुरिधार्यमाणः ॥६२॥**

अन्वयः—परस्य वित्तस्य हानयुक्तः यत्नैः परस्त्रीपरिवर्जितः अपि धुरिधार्यमाणः स एव धीरः विभक्तलोके भूरिमहीयते!

भावानुवादः—वही धीर पुरुष सर्वत्र धर्म में गणमान्य एवं पृथ्वी पर पूजित होता है, जो परायी सम्पदा का परित्याग करके यत्नपूर्वक अपने आपको, पर-स्त्री गमन के दोष से बचा लेता है।

### धर्म-स्वरूपः—

**धर्मस्वरूपं जनमंगलं च हिंसाविहीनं समताप्रधानम्।**
**तपोमयं संयमसाधनं तत् धृत्या धिया ध्येयमदभ्रधीभिः ॥६३॥**

अन्वयः—हिंसाविहीनं समताप्रधानम् जनमंगलं तपोमयं संयमसाधनम् चधर्मस्वरूपम् (अस्ति)। तत् अदभ्रधीभिः (नरैः) धृत्याधिया ध्येयम्।

भावानुवादः—धर्म का स्वरूप हिंसा रहित, समताप्रधान, तपोमय, मंगलमय एवं संयमसाधना रूप है। प्रज्ञासम्पन्न व्यक्तियों को ऐसे ही मंगलमय धर्म का धृतिपूर्वक ध्यान करना चाहिये।

**स्वराज्यरक्षा-दायित्वबोधः—**

**स्वराज्यरक्षाकृतिसद्विधाने, तथैव धर्मस्य च पालनेऽपि ।**
**न सर्वथा कोपि विरोधभावः दायित्वरूपं परिभावनीयम् ।।६४।।**

अन्वयः—स्वराज्यरक्षाकृतिसद्विधाने, तथैव धर्मस्य च अपि पालने सर्वथा कः अपि विरोधभावः न । इति स्वदायित्वरूपम् परिभावनीयम् !

भावानुवादः—धर्म के पालन एवं स्वराज्य की रक्षा के सद् विधान मे कोई विरोध नहीं है । दोनों का पालन एक साथ हो सकता है । इन्सान को चाहिये कि वह अपने दायित्व का सम्यग् निर्वारण करे ।

**सत्यनिष्ठजीवनम्:—**

**नीतिज्ञमाप्तं ध्रुवधार्मिकं च, सर्वोच्चमाधातुमलं स्वकीयम् ।**
**सुजीवनं जीवहितं जवेन, पूर्वं सदा सत्यमयं विधेयम् ।।६५।।**

अन्वयः—स्वकीय सुजीवनं नीतिज्ञम् आप्तम् (प्रामाणिकं) ध्रुव धार्मिकं जीवहितं च जवेन सर्वोच्चम् अलम् विधातु पूर्वं सत्यमयं विधेयम् !

भावानुवादः—अपने सुन्दरतम जीवन को नीतिज्ञ, आप्त, प्रामाणिक, धार्मिक तथा सर्वोच्च बनाने के लिए उसे प्रथम निश्चयरूप से सत्यनिष्ठ बनाना आवश्यक है ।

**विश्ववन्द्यः—**

**विजित्य चात्मानमनल्पयत्नैः, जितात्मरूपो विजितेन्द्रियः सन् ।**
**पूर्णोन्नतौ सिद्धसुधासमानः, संजायते ना भववन्दनीयः ।।६६।।**

अन्वयः—ना अनल्पयत्नैः आत्मानं विजित्य जितात्मरूपः विजितेन्द्रियः सन् पूर्णो-न्नतौ सिद्धसुधासमानः च भववन्दनीयः सजायते ।

भावानुवादः—मानव अपने ही अथक प्रयासों के द्वारा आत्मविजयी एवं जिते-

न्द्रिय बनता हुआ, पूर्ण उन्नति को प्राप्त कर देवताओं के समान संसार का वन्दनीय हो जाता है ।

**नारीमहत्त्वम्:-**

**करोति दासीं यदि कोपिजीवः, स्त्रियं स्वयं दास्यमुपैतितथ्यम् ।**
**देवीं विधत्ते भवमानभूमिम्, सम्पद्यते तां स्वयमेव देवः ॥६७॥**

अन्वयः—यदि कः अपि जीवः स्त्रियं दासीम् करोति । तथ्यम् स्वयम् दास्यम् उपैति । ताँ भवमानभूमि देवीम् विधत्ते (तदा) स्वयमेव देवः सम्पद्यते !

भावानुवादः—यदि कोई व्यक्ति अपनी स्त्री-पत्नी को नौकरानी अथवा दासी बनाता है, तो वह स्वयं भी दास बन जाता है । यदि उसे संसार में आदर पात्र देवी बनाता है, तो उसके साथ वह स्वयं देव बन जाता है ।

**मृत्योरवोधः-**

**ज्ञानं च मृत्योरिति साभिमानम्, जल्पन्ति मर्त्या वितथं भृशंनः ।**
**अन्यायमत्याचरणं दुरापम्, कुर्वन्ति पापं कथमन्यथाते ॥६८॥**

अन्वयः—मर्त्याः च मृत्योरिति ज्ञानम् साभिमानम् भृशं वितथं जल्पन्ति । अन्यथा ते दुरापम् अन्यायम् अत्याचरणम् पापं च कथम् कुर्वन्ति !

भावानुवादः—"हमें मृत्यु का ज्ञान है" ऐसा बोलने वाले मानव अहंकारवश असत्य भाषण करते है । अन्यथा वे अन्याय, अत्याचार आदि पाप क्यों करते ?

**माननीयगुणः-**

**महाजनः संपकृती महात्मा, लोकप्रियो बोधघनो मनस्वी ।**
**यशोवदातः प्रथितप्रभावः विक्रोधनोहंकृतिभावशून्यः ॥६९॥**

—यः विक्रोधनः अहंकृतिभाव शून्यः स एव महाजनः कृती महात्मा

लोकप्रियः मानधनः मनस्वी यशोवदातः प्रथितप्रभावः (भवति) ।

भावानुवादः—क्रोध एवं अहंकार से रहित मानव ही वास्तव में महाजन, महात्मा विद्वान्, लोकप्रिय, ज्ञाननिधि, मनस्वी एवं निर्मल यशस्वी के रूप में विश्व-प्रसिद्ध प्रभाव वाला होता है ।

**मतान्धताः—**

मतान्धतायां न समत्वमेति, यथान्धकारे विषमप्रचारः ।
विवेकपूर्णस्य विमर्शकर्तु र्मेधाबलं वर्धत एव नित्यम् ॥७०॥

अन्वयः—(कोपि) मदान्धतायाम् समत्वं न एति ! यथा अन्धकारे विषमप्रचारः (भवति) । विवेकपूर्णस्य विमर्शकर्तुः (नरस्य) नित्यम् मेधाबलम् बर्धते ऐव !

भावानुवादः—जैसे अन्धकार में सम्यग्-प्रकार से नहीं चला जा सकता है । वैसे ही मतान्ध व्यक्ति को समतामार्ग उपलब्ध नहीं होता है । अतः अनाग्रही वन विवेक-विचारपूर्ण कार्य करने वाले मानव की मानसिक शक्ति निरन्तर बढ़ती ही है ।

**शुभेच्छुः शुभं कुर्यात्ः—**

स्वकीयभद्रस्य यतोऽभिलाषः तद्वै परस्यापि सदैव कुर्यात् ।
परस्य हानिं चरता जनेन, स्वस्यैव सा प्रक्रियते प्रभूता ॥७१॥

अन्वयः—यतः स्वकीयभद्रस्य अभिलाषः । तत् वै परस्य अपि सदा एव कुर्यात् । अन्यस्य हानिम् चरताजनेन सा स्वस्थ एव प्रभूता प्रक्रियते !

भावानुवादः—तुम अपना भला चाहते हो तो दूसरों का भी भला ही करो । क्योंकि दूसरों की हानि करने वाला अपनी ही अधिक हानि करता है ।

## मृत्युर्वस्त्रपरिवर्तनम्ः–

**वासांसि जीर्णानि यथा विहाय, गृह्णन् नवीनानि विमोदते ना ।**
**तथैव बोधी मरणेन देहम्, जहत् प्रसीदन् द्युतिमेति दिव्याम् ।।७२।।**

अन्वयः—यथा ना जीर्णानि वासांसि विहाय नवीनानि गृह्णन् विमोदते । तथा एव बोधी मरणेन देहम् जहत् प्रसीदन् दिव्याम् द्युतिम् एति !

भावानुवादः—जैसे मनुष्य जीर्ण–शीर्ण वस्त्रों का परित्याग कर नूतनवस्त्र ग्रहण करता हुआ प्रसन्न होता है । वैसे ही ज्ञानी जन मृत्यु के द्वारा इस भौतिक देह का परित्याग कर सुन्दर दिव्य स्वरूप को उपलब्ध करता है ।

## जिनधर्मपरम्पराः–

**युगे युगे कार्यकरी कृपाला, हितावहा हेतुमती रसाला ।**
**निरन्तरं धारसमानमाना, प्रयाति जैनी च परम्परेयम् ।।७३।।**

अन्वयः– युगे युगे कार्यकरी कृपाला हितावहा, हेतुमती रसाला, निरन्तरं धारसमानमाना इयम् जैनी परम्परा प्रयाति च ।

भावानुवादः—दयामयी, सर्वहित साधिका, युग–युग में शाश्वत सन्देश प्रदायिका, अध्यात्म कारणिका निरन्तर निरवच्छिन्न रूप से प्रवहमान रसप्रदसुधाधारा के समान जिनधर्म की यह परम्परा अनादिकाल से प्रवाहित होती आ रही है । तथा अनन्त काल तक चलेगी ।

## बोधदातृ–तीर्थकर वाणीः–

**प्रमेयतत्त्वेषु च संदिहानाः ये सन्ति तेषां प्रतिबोधदक्षाः ।**
**यथार्थवस्तुव्यवसायकाश्च पदे पदे तीर्थकराः प्रमाणम् ।।७४।।**

अन्वयः—ये प्रमेयतत्त्वेषु संदिहानाः सन्ति, तेषां प्रतिबोधदक्षाः, यथार्थवस्तुव्यव-सायकाः, चपदे पदे तीर्थंकराः प्रमाणम् सन्ति !

भावानुवादः—जो व्यक्ति प्रमेय तत्त्वों के सम्बन्ध में संदिग्ध मानस हैं। उनके लिए पद-पद पर प्रतिबोध प्रदान करने वाले, यथार्थवस्तुतत्त्व के उद्बोधक निश्चय कराने वाले, तीर्थंकर महाप्रभु के (वचन ही) प्रमाणभूत हैं।

गुणग्रहणम्:-

**वक्तुर्न दोषास्तु कदापि दृश्याः, ग्राह्याः गुणा एव गुणार्थिमर्त्यैः।**
**यतः सुधा प्राप्यत अञ्जसैव, ततो न रक्तं ग्रहणीयमास्ते ॥७५॥**

अन्वयः—वक्तुः दोषाः तु कदापि न दृश्याः, गुणार्थिमर्त्यैः गुणाः एव ग्राह्याः। यतः अञ्जसा एव सुधा प्राप्यते ततः रक्तं ग्रहणीयम् न आस्ते !

भावानुवादः—गुणज्ञ व्यक्ति को चाहिये कि वह प्रवक्ता के गुणों की ओर ही दृष्टिपात करे। दोषों की ओर नही। जहां से सहजतया अमृत प्राप्त हो सकता है। वहां रक्त नही लेना चाहिये।

गुणपूजा:-

**न नाम पूज्यं न च वेशरूपम्, पूजा गुणानां च सदा विधेया।**
**संगृह्यते रत्नचयश्च पुष्पम् विचारशीलैर्न च कंटकानि ॥७५॥**

अन्वयः—नाम न पूज्यम्, वेशरूपं न च पूज्यम्, किन्तु गुणानां पूजा सदा विधेया। विचारशीलैः रत्नचयः पुष्पं च सगृह्यते न च कण्टकानि (संगृह्यन्ते)।

भावानुवादः—संसार में नाम एवं परिवेश की नहीं सदा गुणों की ही पूजा होती है। विचारशील व्यक्तियों द्वारा रत्नों एवं सुमनों का तो संग्रह किया जाता है, किन्तु कांटों का नही।

## अवसानेवसन्ततिलकावृत्तम्:-

सूक्तिमुक्ताहारः-

**श्रीमज्जवाहरविनीत विशालग्रन्थराशेः पयोधिसमकात् नितरां निमग्नः।**
**रत्नानिसूक्तिनिचयान् समुदाजहार तत्सत्स्त्रजं दधतु बोधघनैकसन्तः। ॥७७॥**

अन्वयः—अहम् (कविः) पयोधिप्रतिमात् श्रीमज्जवाहरविनीतविशालग्रन्थराशेः नितरां निमग्नः रत्नानि सूक्तिनिचयान् समुदाजहार। बोधधनैकसन्तः तत्स्रजं दधतु !

भावानुवादः—मैने (ग्रन्थकार कवि) श्रीमज्जवाहराचार्य द्वाराप्रणीत महासमुद्र तुल्य विशाल ग्रन्थ राशि में निमग्न होकर रत्नों के तुल्य सूक्ति संचय को उदाहरण रूप में प्रस्तुत किया है। ज्ञान को ही परम सम्पदा मानने वाले सज्जन पुरुष इस रमणीय मुक्ताहार को जीवन में धारण करें।

समाप्तः सुभाषित नवमः सर्गः—

"प्रशस्ति"

श्रीमज्जवाहरयशोविजयाभिधाने,
नानेशसच्चरणयोः शरणावधाने।
श्री चन्द्रमौलिकविनिर्मितसत्प्रबन्धे,
पूर्णःसुभाषितमयोनवमोऽपिसर्गः।

इति नवमः सर्गः समाप्तः।

## दशमः सद्धर्म सर्गः–

इस सर्ग में चरितनायक श्रीमज्जवाहर के अन्य सम्प्रदाय तेरापन्थ के साथ हुए वाद–विवाद की चर्चा है। चर्चा के सन्दर्भ दया दान से सम्बन्धित है और उनका सम्बन्ध प्रभु महावीर से भी है। अतः उसे यहा टिप्पण में स्पष्ट किया गया है।

**विशेष टिप्पणी:–**

प्रभुमहावीर जब गर्भस्थ थे। तभी उन्होंने अवधि ज्ञान के माध्यम से सम्यक् दृष्टि जीव के लक्षण के अन्तर्गत अनुकम्पाभावका आचरण अभिव्यक्त किया। दीक्षा लेते ही वे मन:पर्यव ज्ञान के स्वामी वने। विहारकाल मे भगवान् महावीर के व्यक्तित्व से प्रभावित होकर स्वतः अपने आपको साधुवेश में परिणत कर गौशालक भगवान् महावीर के साथ चल पड़ा। भगवान् अपनी गति से चल रहे थे। गोशालक पीछे–पीछे चल रहा था। मन की चचलता दृष्टि को स्थिर नही रख पा रही थी। परिणामस्वरूप गोशालक की दृष्टि आतापना लेते हुए तापस पर गिरी। उसने जमीन पर गिरनी हुई जूओं को उठाकर मस्तक में रखते हुए तापस को देखा। गम्भीरता के अभाव में गोशालक ने उसको उत्तेजित किया। उसने रोष में आकर गोशालक पर तेजोलेश्या फेंकी। भगवान् ने अनन्त करुणाकर शीतलभावों के साथ तेजोलेश्या को देखा। वह तेजोलेश्या गोशालक से हटकर पुनः तापस के पास पहुची। तव तापस ने भगवान् महावीर का अनुमान किया। और जोर–जोर से क्षमायाचना करने लगा।

गोशालक ने भगवान् से पूछा। यह आपको कैसे जान गया। भगवान् ने लेश्या सम्वन्धी वृत्तान्त कह सुनाया। तो उसने भी तेजोलेश्या सीखने की जिज्ञासा व्यक्त कर भगवान से तेजोलेश्या सीखी। यहां इस प्रसंग में प्रभु महावीर ने निर्जीव आती हुई तेजोलेश्या को निर्जीवशीतललेश्या से पुनः लौटाकर गोशालक की रक्षा की। अतः वहाँ हिंसा का कोई प्रसंग ही नही था। तो क्रियालगने का प्रसंग ही कैसे उत्पन्न होता ? यदि ऐसा भगवान् नहीं करते तो तेजोलेश्या से गोशालक के प्राण चले जाते। पर अनन्त करुणा के आत्मवत् सर्वभूतों को देखने वाले प्रभुमहावीर ने गोशालक की रक्षा की

रक्षा कर विश्व के समक्ष रक्षाधर्म का अनुपम उदाहरण उपस्थित किया। वे अतिशय ज्ञानी थे। अपने ज्ञान में जैसा देखते वैसा करते। स्वयं की रक्षा तो सभी करते हैं; पर पर की रक्षा करना समभाव की अभिव्यक्ति है। यही कारण है कि भगवान् ने प्रवचन देने का उद्देश्य बताते हुए कहा:—सव्व जग्ग जीव रक्खण दययाए पावयणं भगवया सुकहियं।" प्रश्न व्याकरण में उल्लेख हुआ है कि:—"सभी जगत्जीवों की रक्षारूप दया के लिए भगवान ने प्रवचन फरमाया। इससे यह स्पष्ट होता है; कि किसी जीव को हिसा नहीं करना। यही अहिसा नही है, यह अहिंसा का निषेध पक्ष है। उसके विपरीत मरते हुए प्राणियों की प्राणरक्षा करना यह विधिपक्ष है। तीर्थंकर देवों की वाणी एकांग नहीं होती। निषेध और विधि दोनो पहलुओं से सयुक्त होती है। यदि तीर्थंकर निषेधपक्ष में अहिसा का प्रतिपादन करें और विधि का उपदेश न दे तो यह अहिसा का कथन परिपूर्ण नहीं कहा जा सकता। और इस प्रकार के कथन मे रागद्वेष की वृत्ति झलकती है। हिसा नही करना यह कहना गौण है, बल्कि मरते प्राणियों की प्राणरक्षा करना यह विधिपक्ष प्रबल है। इसी मे अहिसा की पूर्णता है। तीर्थंकरों की वाणी परिपूर्ण ही हुआ करती है। अत: परिपूर्ण वाणी को लेकर कोई यह कहे कि हिसा नहीं करना ही अहिसा है। मरते प्राणी की रक्षा करना हिसा है, तो यह कथन तीर्थकरो की वाणी का अपलाप करने वाला होता है। ऐसी व्याख्या वही व्यक्ति कर सकता है। जिसके मन में तीर्थकरों के विषय में वास्तविक श्रद्धा न हो और अपनी पकड़ी हुई बात को येन केन प्रकारेण सिद्ध करता हुआ जनता को गुमराह करना चाहता हो। उसके मन मे समभाव की मात्रा नही होती है। वह राग द्वेष को प्रश्रय देकर चलता है। अपने प्राणों की रक्षा करने के लिए जनता को वहुत लाभ बताता है और दूसरे प्राणियों की रक्षा के लिए पाप बताता है। इससे स्पष्ट हो जाता है; कि अपने पर राग है और पर पर द्वेष है। समभाव मन में नहीं है। ऐसे व्यक्ति वीतराग मार्ग के आराधक न होकर विषममार्ग के उपासक होते है। जिसमें किंचित् भी समभाव की मात्रा का प्रसग होगा। वह व्यक्ति जैसे अपनी रक्षा मे धर्म समझता है। वैसे ही अन्य व्यक्ति की रक्षा में भी धर्म एवं पुण्य समझता है।

## उपजाति छन्दः—

**छद्मस्थकाले भगवान् जिनेन्द्रः, स्वयंबुधोऽसौ विजहारवीरः ।
सहैव गोशालकसाधुरासीत्, स्वयं प्रपन्नो ननु कामचारी ॥१॥**

अन्वयः अथ एकदा स्वयंबुधः, वीरः असौ भगवान् जिनेन्द्रः छद्मस्थकाले विजहार। स्वयं प्रपन्नः ननु कामचारी गोशालकसाधु· सह एव आसीत् ।

भावानुवादः—प्रसंग उस समय का है जब स्वयं बुद्ध भगवान् महावीर अपने छद्मस्थ अवस्था काल में विचरण कर रहे थे और अपनी मन.कल्पना से मुनि बना हुआ गोशालक भी साथ–साथ चल रहा था ।

**मार्गे क्वचित्तापस एकधीरः, तपस्ततापातपनां गृहीत्वा ।
जूकाः पतन्तीः शिरसोऽपि तासाम् संस्थापनां सो विदधे तपस्वी ॥२॥**

अन्वयः—मार्गे क्वचित् एक धीरः तापसः आतपनाँ गृहीत्वा तपः तताप । शिरसः अपि पतन्तीः जूकाः (गृहीत्वा) स तपस्वी तासां संस्थापनां विदधे !

भावानुवादः—उसी विहार मार्ग में एक तापस आतपना ग्रहण की तपस्या कर रहा था । उसकी जटाओं से जूएं बार–बार नीचे गिर रही थी; किन्तु वह उन्हे उठा–उठा कर पुनः अपने सिर मे स्थापित कर रहा था ।

**विलोक्य दृश्यं सहसा जहास, गोशालकस्तेन रुरोष तापी ।
ततश्च लेश्यां ननु तेजसः सः चिक्षेप लिप्तोपि तथा प्रहासी ॥३॥**

अन्वयः—गोशालकः दृश्यं विलोक्य सहसा जहास तेन तापी रुरोष । ततः सः तेजसः लेश्याम् ननु चिक्षेप । तया (लेश्या) प्रहासी अपिलिप्तः !

भावानुवादः—उस दृश्य को देखकर चंचलवृति गोशालक उस तापस की हसी उड़ाने लगा । कहने लगा—"तू तपस्वी है कि जूओं का घर ।" परिणामस्वरूप वह तपस्वी क्रोधित हो उठा और उसने गोशालक पर तेजोलेश्या (शक्ति विशेष) का प्रक्षेप किया; जिससे हंसी करने वाला स्पष्ट हुआ ।

**तदानुकम्पां महतीं विधाय, ररक्षतं शीतललेश्यया सः ।**
**शशाम लेश्या ननु जीवितः स, जातानुकम्पा च ततः प्रसिद्धा ॥४॥**

अन्वयः—स (वीरः) तदा महतीम् अनुकम्पाम् विधाय शीतललेश्यया तंररक्ष । ननु लेश्या शशाम । सच जीवितः । ततः च (लोके) अनुकम्पा प्रसिद्धाजाता अभवत् ।

भावानुवादः—तब अनन्त कारुणिक प्रभु महावीर ने महान् अनुकम्पा करके शीतल तेजोलेश्या द्वारा उस गोशालक की रक्षा की । क्योंकि उस शीतल तेजो लेश्या से तापस की उष्ण तेजोलेश्या शान्त हो गई और गोशालक के प्राण बच गये । उससे अनुकम्पा की प्रसिद्धि हुई ।

**ततो दयादानविवृत्तिरेषा, संसारमध्ये विततैव जाता ।**
**समर्थिता धार्मिकसम्प्रदायैः सर्वैश्च सर्वामितभावनाभिः ॥५॥**

अन्वयः—ततः संसारमध्ये एषा दयादानविवृत्तिः वितताएव जाता । सा (विवृत्तिः) सर्वैः च धार्मिकसम्प्रदायैः सर्वामितभावनाभि; समर्थिता (जाता) ।

भावानुवादः—दया–दान की वृत्ति संसार में अनादिकाल में चली आ रही है; किन्तु इस घटना के माध्यम से संसार में अनुकम्पा का विस्तार हुआ । अन्य सभी धार्मिक सम्प्रदाओं ने भी इसे अपनी अमित भावनाओं में समर्थन प्रदान किया ।

**अनेन जीवस्य सदैव रक्षा, सर्वैर्विधेयेति श्रुतेन सिद्धम् ।**
**संव्याप विश्वे भगवद् विधानम्, यथा सुगन्धिः कुसुमेषु रम्यः ॥६॥**

अन्वयः—अनेन जीवस्य रक्षा सदा एव सर्वैः विधेया इनि श्रुतेन सिद्धम् (जातम्) । कुसुमेषु रम्यः सुगन्धिः यथा इदम् भगवद् विधानम् विश्वेसंव्याप ।

भावानुवादः—इस श्रुत प्रमाण से यह सिद्ध हो गया कि सभी प्राणियों को सदैव जीवरक्षा करनी चाहिये । पुष्प में सन्निहित रम्य सुगन्ध के समान प्रभु द्वारा आचरित यह विधान विश्वव्यापी बन गया ।

**परंपरे नोदधतेऽनुकम्पाम्, तद्द्वेषिणोऽनर्थविधानदक्षाः ।**
**वीरस्य ते संस्खलनं वदन्ति, यदत्र तेषां किमियं कुबुद्धिः ? ।।७।।**

अन्वयः—परं तद् द्वेषिणः अनर्थविधानदक्षाः परे अनुकम्पां नोदधते । यत् ते वीरस्य संस्खलनं च वदन्ति । अत्र तेषाम् इयम् कुबुद्धिः ?

भावानुवादः—किन्तु अनुकम्पा के प्रति द्वेष भाव रखने वाले, अर्थ का अनर्थ करने में परम प्रवीण (तेरापन्थी) अनुकम्पा को धर्म नही मानते । उनकी बुद्धि के वैपरीत्य के लिए क्या कहा जाय ? वे कहते है कि भगवान् महावीर भी चूक गए (स्खलित) हो गये ।

**कर्मोदयान्नैव मतं च सत्य, मज्ञानसंगोपनसाधनाय ।**
**मिथ्या जजल्पुर्धवलां धरायाम्, वीरस्य दोषं परिचीयमानाः ।।८।।**

अन्वयः—कर्मोदयात् (उत्पन्नम् तेरापन्थ) मतम् सत्यम् न एव । वीरस्य दोषं परिचीयमानाः ते अज्ञानसंगोपनसाधनाय धरायाम् धवलाम् मिथ्या जजल्पुः ।

भावानुवादः—भिक्खुजी स्वामी के अशुभ कर्मोदय से यह असत्य मत प्रचलित हुआ । वे भगवान् में भी दोष का दर्शन करते हुए इस पृथ्वी पर अपने अज्ञान को आवृत करने हेतु सफेद झूठ बोलते है ।

**दत्तं प्रमाणं परिवञ्चकैस्तैः, स्वप्नाः दशैते भगवद् समीष्टाः ।**
**शास्त्रस्य चार्थं विपरीतमुक्तवा, दिशन्ति मोहोदयमेवे तस्य ।।९।।**

अन्वयः—तैः परिवञ्चकैः भगवद् समीष्टाः दशएते स्वप्नाः सन्ति । अत्र प्रमाणंदत्तम् । शास्त्रस्य विपरीतम् च अर्थम् उक्त्वा तस्य (वीरस्य) मोहोदयम् एव दिशन्ति !

भावानुवादः—अपने सफेद झूठ को सिद्ध करने हेतु उन्होंने वञ्चक वृत्ति के आधार पर भगवान् महावीर के दश स्वप्नों को प्रमाण रूप में प्रस्तुत किया । इस प्रकार आगम विपरीत प्रतिपादन कर वे भगवान् महावीर को मोहनीय कर्म का उदय वताते हैं ।

**लोभं च दत्वा निजपण्डितेभ्यः, संसाधितस्तैः स्वमतानुकूलः ।**
**वीरस्य चित्ते न समाधिरासीत्, किंकर्तुमीशा न विवृद्धकामाः ।।१०।।**

अन्वयः—तैः (परैः) निजपण्डितेभ्यः लोभं च दत्वा सवीरः स्वमतानुकूलः संसाधितः । ते वदन्ति वीरस्य चित्ते समाधिः न आसीत् । विवृद्धकामाः कि कर्तुम् न ईशाः । भवन्ति !

भावानुवादः—उन्होंने कुछ विद्वानों को प्रलोभन देकर भगवान महावीर को कपटी एवं शठ (धूर्त) सिद्ध करवाने का असफल प्रयास किया । वे कहते है, कि भगवान् महावीर के चित्त में एकाग्रता नहीं थी और जिनके चित्त में अनेक प्रकार की कामनाएं हों वे क्या नही कर सकते है ?

**आचार्य वर्यस्य च पृष्टिरासीत्, वीरस्य जातं स्खलनं कथं तत् ।**
**तदुत्तरं तैर्दशभिश्च दत्तम्, स्वप्नैर्विमोहोदयमेत्य मिथ्या ॥११॥**

अन्वयः—आचार्यवर्यस्य च पृष्टिः आसीत् । वीरस्य स्खलन कथम् जातम् ? तैः दशभिः च स्वप्नैः (तस्य) मोहोदयम् एत्य तदुत्तरं मिथ्या दत्तम् ।

भावानुवादः- आचार्यप्रवर (चरितनायक) ने उनसे पूछा कि आप भगवान् महावीर का चूकना किस आधार पर कहते है ? तो उन्होंने यह मिथ्या उत्तर दिया कि "भगवान् महावीर ने दस स्वप्न देखे । अतः उनमें मोह का उदय था ।

**जगाद वादी भगवद्विदृष्टाः, स्वप्नाश्च सत्या ननु धर्ममध्ये ।**
**न मोहकर्मोदयमत्र धत्ते दशाश्रुतस्कन्धगतिः प्रमाणम् ॥१२॥**

अन्वयः—वादी ज[illegible] भगवत्विदृष्टा: [illegible] सत्याः ननु धर्ममध्ये न (सन्ति) । अ[illegible] यम् न धत्ते [illegible] शाश्रुतस्कन्धगतिः प्रमाणम् (मन्तव्यम्) ।

भावान[illegible] च। [illegible] दिया—' [illegible] आगम का [illegible]
है कि [illegible] थे, नि[illegible] [illegible]न्दर थे । [illegible]
मोह[illegible] [illegible] है

ततः पर[illegible]
वीरस्य [illegible]

अन्वयः—ततः परे (तेरहपन्था:) अपिइत्थम् प्रतितेरुः। स्वप्ना प्रमादात् च भवन्ति। वीरस्य स्वप्नाः च तथा एव। स (प्रमादः) कर्मोदयेन एव विजायते (अतः स्वप्नाः पापा इति)।

भावानुवाद:—अनन्तर प्रतिवादी ने कहा—"स्वप्न प्रमाद के कारण आते हैं। अतः भगवान् महावीर को भी वे स्वप्न प्रमाद अवस्था में ही आये। चूंकि प्रमाद कर्मोदय जनित होता है:, अतः वे स्वप्न पापमय ही थे।

**भार्यादिभावादि जगत्प्रपञ्चैः, चित्तेन विक्षेपसमन्वितेन।**
**दृष्टाश्च स्वप्नाः कथितास्तु मिथ्या, तेषां कृते दुष्कृतिरेवमीष्टा ॥१४॥**

अन्वयः—(वादी वदति) भार्यादि भावादि जगत्प्रपञ्चैः विक्षेप समन्वितेनचित्तेन दृष्टाः च स्वप्नाः तु मिथ्या कथिताः। एवम् तेषां कृते (मममते) दुष्कृतिः एव ईष्टा।

भावानुवाद:—आचार्यप्रवर ने उत्तर देते हुए कहा—"स्त्री आदि भावों के जगत्-प्रपञ्च से विशेष युक्त चित्त से देखे जाने वाले स्वप्न ही मिथ्या होते है। अन्य नही। अतएव प्रभु महावीर के विषय में ऐसी मिथ्या प्ररुपणा करना महादोष का कारण है।

**सत्यस्य स्वप्नस्य कृते तथा न, आज्ञा यदस्मिन्नहि पापमास्ते।**
**स्वप्नास्तथा नैव विमादरूपाः यथार्थतश्चित्तसमाधिमाप्ताः ॥१५॥**

भावानुवाद:—(वादी वदति) सत्यस्य स्वप्नस्य कृते तथान। (प्रत्याख्यानं न) यत्अस्मिन् आज्ञा अस्ति। तत् पापम् नहि आस्ते। तस्य स्वप्नाः तथा विमाद-रूपाः न। यथार्थतः ते (स्वप्नाः) चित्तसमाधिम् आप्ताः (सन्ति)।

भावानुवाद:—आचार्यप्रवर ने कहा—"सत्य स्वप्न के लिए प्रत्याख्यान की आवश्यकता नही है। इस विषय में जो वीतराग की आज्ञा है। वह पाप नहीं है। भगवान् के स्वप्न पाप रूप नहीं थे। यथार्थतः वे स्वप्न चित्त की एकाग्रता के ही सूचक थे।

**परेऽवदन् स्वप्नविलोककाले, चित्तं सदा विक्षिपतीति सत्यम्।**
**क्रिया च तज्जन्यसमा सनग्ना, पापानि स्वप्ना इति जातु सिद्धम् ॥१६॥**

अन्वयः—तैः (परैः) निजपण्डितेभ्यः लोभं च दत्वा सवीरः स्वमतानुकूलः ससाधितः । ते वदन्ति वीरस्य चित्ते समाधिः न आसीत् । विवृद्धकामाः किं कर्तुम् न ईशाः । भवन्ति !

भावानुवादः—उन्होंने कुछ ,विद्वानों को प्रलोभन देकर भगवान महावीर को कपटी एवं शठ (धूर्त) सिद्ध करवाने का असफल प्रयास किया । वे कहते है, कि भगवान् महावीर के चित्त में एकाग्रता नही थी और जिनके चित्त में अनेक प्रकार की कामनाएं हों वे क्या नही कर सकते है ?

**आचार्य वर्यस्य च पृष्टिरासीत्, वीरस्य जातं स्खलनं कथं तत् ।**
**तदुत्तर तैर्दशमिश्च दत्तम्, स्वप्नैर्विमोहोदयमेत्य मिथ्या ॥११॥**

अन्वयः—आचार्यवर्यस्य च पृष्टिः आसीत् । वीरस्य स्खलन कथम् जातम् ? तैः दशमिः च स्वप्नैः (तस्य) मोहोदयम् एत्य तदुत्तरं मिथ्या दत्तम् ।

भावानुवादः - आचार्यप्रवर (चरितनायक) ने उनसे पूछा कि आप भगवान् महावीर का चूकना किस आधार पर कहते है ? तो उन्होंने यह मिथ्या उत्तर दिया कि "भगवान् महावीर ने दस स्वप्न देखे । अतः उनमें मोह का उदय था ।

**जगाद वादी भगवद्विदृष्टाः, स्वप्नाश्च सत्या ननु धर्ममध्ये ।**
**न मोहकर्मोदयमत्र धत्ते दशाश्रुतस्कन्धगतिः प्रमाणम् ॥१२॥**

अन्वयः—वादी जगाद । भगवत्विदृष्टाः स्वप्नाः सत्याः ननु धर्ममध्ये न (सन्ति) । अत्र मोहकर्मोदयम् न धत्ते । अत्र दशाश्रुतस्कन्धगतिः प्रमाणम् (मन्तव्यम्) ।

भावानुवादः—आचार्यप्रवर ने उत्तर दिया—"दशाश्रुतस्कन्ध आगम का यह प्रमाण है कि सभी स्वप्न प्रशस्त एवं सत्य थे, निश्चय धर्म के अन्दर थे । अतः वहां मोहकर्म का उदय नही माना जा सकता है ।"

**ततः परेऽपि प्रतितेरुरित्थम्, स्वप्नाः प्रमादाच्च भवन्ति तथ्यम् ।**
**वीरस्य स्वप्नाश्च तथैव मान्याः, कर्मोदयेनैव विजायते सः ॥१३॥**

अन्वयः—ततः परे (तेरहपन्था:) अपिइत्थम् प्रतितेरुः। स्वप्ना प्रमादात् च भवन्ति। वीरस्य स्वप्नाः च तथा एव। स (प्रमादः) कर्मोदयेन एव विजायते (अतः स्वप्नाः पापा इति)।

भावानुवाद:—अनन्तर प्रतिवादी ने कहा—"स्वप्न प्रमाद के कारण आते है। अतः भगवान् महावीर को भी वे स्वप्न प्रमाद अवस्था में ही आये। चूंकि प्रमाद कर्मोदय जनित होता है:, अतः वे स्वप्न पापमय ही थे।

भार्यादिभावादि जगत्प्रपञ्चैः, चित्तेन विक्षेपसमन्वितेन।
दृष्टाश्च स्वप्नाः कथितास्तु मिथ्या, तेषां कृते दुष्कृतिरेवमीष्टा ॥१४॥

अन्वयः—(वादी वदति) भार्यादि भावादि जगत्प्रपञ्चैः विक्षेप समन्वितेनचित्तेन दृष्टाः च स्वप्नाः तु मिथ्या कथिताः। एवम् तेषां कृते (ममतमे) दुष्कृतिः एव ईष्टा।

भावानुवाद:—आचार्यप्रवर ने उत्तर देते हुए कहा—"स्त्री आदि भावों के जगत्प्रपञ्च से विशेष युक्त चित्त से देखे जाने वाले स्वप्न ही मिथ्या होते है। अन्य नही। अतएव प्रभु महावीर के विषय मे ऐसी मिथ्या प्ररुपणा करना महादोष का कारण है।

सत्यस्य स्वप्नस्य कृते तथा न, आज्ञा यदस्मिन्नहि पापमास्ते।
स्वप्नास्तथा नैव विमादरूपाः यथार्थतश्चित्तसमाधिमाप्ताः ॥१५॥

भावानुवाद:—(वादी वदति) सत्यस्य स्वप्नस्य कृते तथान। (प्रत्याख्यानं न) यत्अस्मिन् आज्ञा अस्ति। तत् पापम् नहि आस्ते। तस्य स्वप्नाः तथा विमादरूपा. न। यथार्थतः ते (स्वप्नाः) चित्तसमाधिम् आप्ताः (सन्ति)।

भावानुवाद:—आचार्यप्रवर ने कहा—"सत्य स्वप्न के लिए प्रत्याख्यान की आवश्यकता नही है। इस विषय में जो वीतराग की आज्ञा है। वह पाप नहीं है। भगवान् के स्वप्न पाप रूप नही थे। यथार्थतः वे स्वप्न चित्त की एकाग्रता के ही सूचक थे।

परेऽवदन् स्वप्नविलोककाले, चित्तं सदा विक्षिपतीति सत्यम्।
क्रिया च तञ्जन्यसमा सन्ततना, पापानि स्वप्ना इति जातु सिद्धम् ॥१६॥

अन्वयः—(प्रतिवादिनः) परे अवदन् (तेरहपन्थाः) स्वप्नविलोककाले चित्त सदा विक्षिपति इति सत्यम् (अस्ति)। क्रिया च तज्जन्यसभा सलग्ना (जाता)। इति स्वप्नाः जातु पापानि इति सिद्धाम् !

भावानुवादः—प्रतिवादी का कथन था कि स्वप्न देखते समय चित्त सदा विक्षिप्त रहता है। यह सत्य है। तथा तज्जन्य क्रिया भी समान रूप से लगती है, जो कि विक्षिप्त रूप है। अतः सभी स्वप्न पाप रूप सिद्ध होते है।

**स्वप्ना न पापं च कदापि तस्य, प्रमादजन्यं न कषायजन्यम्।**
**वीरस्यसिद्धं बहुधा प्रमाणैः, तत्रास्ति पापं कथनं विरुद्धम् ॥१७॥**

अन्वयः—(वादी वदति) तस्य (वीरस्य) स्वप्नाः कदापि पापम् न। तस्य (पापम्) न प्रमादजन्यम् न कषायजन्यम् अस्ति। बहुधा प्रमाणैः इति वीरस्य सिद्धम्। तत्र पापम् अस्ति इति कथनम् विरुद्धम् (अस्ति)।

भावानुवादः—वादी (आचार्यप्रवर) का कथन था—"वीर प्रभु के स्वप्न कभी भी पाप रूप नही हो सकते है। वे न तो प्रमादजन्य थे और न कषायजन्य। इसकी सिद्धि अत्यन्त सबल प्रमाणों से की जा चुकी है।" वे स्वप्न पाप हैं। यह कथन सर्वथा आगम विरुद्ध है।

**स्वप्नेन तल्लोकभवेन तस्य, स्वप्नस्य व्यर्थं समता न कार्या।**
**निदानमेकं न च तस्य मान्यम् निर्णयमत्रापि जिनागमेन ॥१८॥**

अन्वयः—(वादी वदति) तत् लोकभवेन स्वप्नेन तस्य (वीरस्य) स्वप्नस्य समता व्यर्थ न कार्या। तस्य स्वप्नस्य एक निदान न मान्यम्। अत्रापि जिनागमेन निर्णयम्।

भावानुवादः—वादी (आचार्यश्री) ने अपने विषय को स्पष्ट एवं पुष्ट करने के लिए पुनः कहा—"लोक मे सामान्य जन को आने वाले स्वप्नों के साथ भगवान् महावीर के स्वप्नों की तुलना करना निरर्थक है। उस स्वप्न का कोई एक ही कारण नही माना जा सकता है। इस विषय का समीचीन निर्णय जिनागमों से होना चाहिये।

**आचारसूत्रैरनुसिद्धमेतत्, निद्राप्रमादाश्च दशापि तेच।**
**सन्त्येव मोहोदयतो नितान्तम्, स्वप्नास्तु पापानि च सिद्धमेतत् ॥१९॥**

अन्वयः—(प्रतिवादी वदति) (तेरह) आचारसूत्रैः ननु एतत् सिद्धम् । दश अपि स्वप्नाः निद्राप्रमादाः च (सन्ति) ते मोहोदयतः नितान्तम् सन्ति । स्वप्नाः तु पापानि च एतत् सिद्धम् !

भावानुवादः—प्रतिवादी ने कहा हमारी मान्यतानुसार आचारसूत्र से यह सिद्ध है कि दसों स्वप्न निद्रा प्रमाद के वश मोहोदय के कारण है । अतः वे पाप रूप हैं ।

मत्सम्प्रदाये न विरुद्धवाक्यम् स्वप्नस्यवीरे विपरीतवृत्तेः ।
दर्शस्य दोषोपि च कोपि नास्ति, तदन्यथारूपणतोऽस्ति दोषः ॥२०॥

अन्वयः—(प्रतिवादी वदति) (तेरह पन्थः) मत्सम्प्रदाये (किमपि) विरुद्धवाक्यम् न । तत्र एव वीरे विपरीतवृत्तेः स्वप्नस्य दर्शस्य कोपि दोषोऽपि नास्ति । तदन्यथा प्ररूपणतः दोषः अस्ति !

भावानुवादः—प्रतिवादी अपनी मान्यता को स्पष्ट करते हुए कहता है—"वादी ने "भ्रम विध्वंसन ग्रन्थ पर जो शास्त्रविरुद्धता का आरोप लगाया, वह अनुचित है । हमारे आचार्य श्री जीतमल जी ने उसमे कोई शास्त्रविरुद्ध नहीं लिखा है । महावीर का विपरीत स्वप्न देखना कोई दोष नहीं है ।

स्वप्नाः यथार्थाः ननु मोहनीयकर्मोदयात्सन्ति च साधनीयम् ।
तदन्यथा चैवनिरूपणेन, न साधुप्रश्नस्य तदुत्तरंस्यात् ॥२१॥

न आस्ते । इह भावात्मनिद्रा पापा भवति । द्रव्यनिद्रा न इति विमर्शनीयम् ।

भावानुवाद: –(वादी) प्रतिवादी का यह कथन भी असंगत है कि भगवान के दश स्वप्न निद्रा प्रमाद में हैं । और निद्राप्रमाद मोहनीय कर्म का उदय है । इसके लिए आचारांग स्थानांग (दीपिका) के जो प्रमाण प्रस्तुत किये है वे असत्य हैं । नीद आना, स्वप्न देखना यह द्रव्यनिद्रा है । मिथ्यात्व, अव्रत, कषाय आदि भावनिद्रा है । द्रव्यनिद्रा नहीं ।

**निद्रा तथा स्वप्नविलोकनं च, द्रव्यात्मिका शास्त्रचये च निद्रा ।**
**मिथ्यात्वरागादिकषायरूपा, प्रोक्ताजिनेन्द्रैः ननु भावनिद्रा ॥२३॥**

अन्वय:—शास्त्रचये निद्रा तथा स्वप्नविलोकनं च खलु द्रव्यात्मिका निद्रा मता। जिनेन्द्रैः मिथ्यात्वरागकषायरूपाः च ननु भावनिद्रा प्रोक्ता ।

भावानुवाद:—(वादी) आगम में निद्रा तथा स्वप्न देखना द्रव्यनिद्रा मानी गई है । मिथ्यात्व, राग, कषायादि को भावनिद्रा कहा गया है ।

**द्रव्यात्मिका सा ननु वीरनिद्रा, न भावनिद्रेत्यवसेयमेतत् ।**
**मतं च शास्त्रस्य मया निदिष्टम्, गुरोस्तवाप्यत्र विसंगतिर्न ॥२४॥**

अन्वयः—(वादी वदति) सा वीरनिद्रा द्रव्यात्मिका आसीत् । न भावनिद्रा इति एतत् अवसेयम् । मया शास्त्रस्य मतम् निदिष्टम् अत्र तव गुरोः अपि विसंगतिः न ।

भावानुवादः—(वादी) भगवान् महावीर की वह तन्द्रित अवस्था द्रव्यनिद्रा के अन्तर्गत आती है । भावनिद्रा के अन्तर्गत नहीं । यह समझना चाहिये कि मैंने आगमिक मतों का ही निर्देश किया है । इस विषय में प्रतिवादी के गुरुओं का भी यही अभिमत है । अर्थात् वे भी भगवान् में द्रव्यनिद्रा ही मानते हैं ।

**त्वत्सम्प्रदायेऽस्ति विरुद्धवाक्यम्, सत्यस्य स्वप्नस्य विरुद्धलेशः ।**
**अनेन शास्त्रस्य न गौरवं तत्, वीरस्य सम्मानविभूतिभंगः ॥२५॥**

अन्वयः—(वादी वदति) त्वत्सम्प्रदाये विरुद्ध वाक्यम् अस्ति । सत्यस्य स्वप्नस्य

विरुद्धलेखः अस्ति । अनेन शास्त्रस्य तत् गौरवम् न, । वीरस्य सम्मानविभूति-भंगश्च ।

भावानुवादः—(वादी) आपके सम्प्रदाय में परस्पर विरुद्ध कथन है । सत्यस्वप्न के विपरीत लेख है । और इस प्रकार के वैपरीत्य से आगम का गौरव नष्ट होता है । तथा प्रभु महावीर के सम्मान का भी भंग होता है ।

**अपूर्णमुक्त्वा कथनं न युक्तम्, न चात्र प्रश्नोत्तरताऽवशिष्टा ।**
**ऋणापनोदाय विसृज्य मृत्स्नाम्, तन्नास्ति शिष्टं कथनेन तुल्यम् ॥२६॥**

अन्वयः—(वादी वदति) न चात्र प्रश्नोत्तरता अवशिष्टा इति अपूर्णम् उक्त्वा कथन न युक्तम् (अस्ति) इदम् ऋणापनोदाय मृत्स्नाम् विसृज्य तत् ऋणं न शिष्टम् इति कथनेन तुल्यम् (अस्ति) ।

भावानुवादः—(वादी) प्रतिवादी का यह कथन कि—"हम ने यह सिद्ध कर दिया कि स्वप्न का आना मोहनीय कर्म के उदय से ही होता है । अतः अब प्रश्नोत्तर को अवकाश नही है ।" ठीक वैसा ही है जैसे कि कोई ऋणी व्यक्ति दो चार मिट्टी के ढेले देकर कह दे कि अब उसे कुछ नही देना है ।

**स्वप्नाश्च वीरस्य दशापि चित्त, समाधिमग्नाः अतएव धर्म ।**
**ध्याने च सन्तीति सुशास्त्रसिद्धम् सिद्धान्तपक्षो विबुधैरभीष्टः ॥२७॥**

अन्वयः—(वादी वदति) वीरस्य दश अपि स्वप्नाः चित्तसमाधिमग्नाः अतएव धर्मध्याने च सन्ति । इति सुशास्त्रसिद्धम् । इत्थं सिद्धान्त-पक्षः विबुधैः अभीष्टः ।

भावानुवादः—(वादी) भगवान् महावीर के दशों स्वप्न समाधिस्थ चित्त से देखे गये थे । अतः वे धर्मध्यान मे हैं । यह आचारांग आगमों के द्वारा सुस्पष्ट सिद्ध हो चुका है । अतः विद्वानों को सिद्धान्तपक्ष ही अभीष्ट होता है ।

**एतत् पिशाचादिपदार्थजातम्, विद्वद्वरेण्यैर्गमितम् सुमान्यम् ।**
**अयं कपोलादिविकल्पितं तत्, मान्यं न स्वप्नेऽपि सदावधेयम् ॥२८॥**

अन्वयः—(वादी) विद्वद्वरेण्यैः गमितम् एतत् पिशाचादिपदार्थजातम् सुमा-

न्यम् । तत कपोलादिविकल्पितं व्यर्थम् । तत् स्वप्ने अपि न मान्यम् इति सदा अवधेयम् !

भावानुवाद:—(वादी) विशिष्ट विद्वानों ने पिशाचादि पदों का जो अर्थ किया है। वही मानने योग्य है । इस विषय में स्वच्छन्दवृत्ति से कपोलकल्पना करना कभी स्वीकृत नहीं होना चाहिये ।

**निर्णायिका न्यायपराश्च वादे मध्यस्थरूपाः विनिवृत्तपक्षाः ।**
**परस्परं तेऽपि विचार्य पत्रम्, जयस्य दत्तं ननु वादिने तत् ॥२९॥**

अन्वयः—वादे न्यायपराः मध्यस्थरूपाः विनिवृत्तपक्षाः च ते निर्णायकाः अपि परस्परं विचार्य जयस्य तद्पत्रम् वादिने एव दत्तम् !

भावानुवाद:—इस समस्त वाद के निर्णय में पक्षपातरहित, न्याय परायण, मध्यस्थरूप निर्णायकों ने भी विजय श्री का परिपत्र वादी आचार्यप्रवर श्री मज्जवाहर को ही प्रदान किया ।

**यदा विहारं विदधान आर्यः, सुजानदुर्गं प्रथितो जगाम ।**
**पातु तदा धर्मसुधां च तस्मात्, समागतास्तत्र नराः प्रभूताः ॥३०॥**

अन्वयः—प्रथितः आर्यः यदा विहारं विदधानः सुजानदुर्गम् जगाम । तदा तस्मात् धर्मसुधा पातुम् तत्र प्रभूताः नराः समागताः (जाताः) ।

भावानुवाद:—आचार्यप्रवर जब भ्रमण करते हुए सुजानगढ़ पधारे तो उनकी पतित-पावनी वाग्सुधा को पान करने हेतु बहुत अधिक जनता उनके समीप पहुंची ।

**तत्रैव कैश्चित् परपक्षपातैः, प्रश्नं विधातुं विनयः कृतोऽभूत् ।**
**दाचार्यवर्येण तदर्थमेभ्यो मध्याह्नपश्चात्समयः प्रदत्तः ॥३१॥**

अन्वयः—तत्र एव कैश्चित् परपक्षपातैः प्रश्नं विधातुम् विनयः कृतः अभूत् । आचार्यवर्येण तदर्थम् एभ्यः मध्याह्नपश्चात्समयः प्रदत्तः !

भावानुवाद:—सुजानगढ़ में कुछ विपक्षियों के अनुयायियों ने आचार्यप्रवर से प्रश्न

पूछने को विनयपूर्वक समय मांगा। आचार्यप्रवर ने उन्हें मध्याह्न के बाद का समय दिया।

**ज्ञाता च चर्चा नियताऽपराह्णे, एता: नरा: द्रष्टुमदृश्यपूर्वम्।**
**पूज्यश्रियोऽपि सहिताः दलेन प्राप्ताश्च काले नियते प्रबुद्धाः ॥३२॥**

अन्वय:—वादचर्चा अपराह्णे नियता ज्ञाता। नर: अदृश्यपूर्व द्रष्टुम् तत्र एताः (आगता:)। दलेन सहिताः पूज्यश्रिय: अपि प्रबुद्धाः (सन्त:) नियते समये च प्राप्ता:।

भावानुवाद:—मध्याह्न के समय शास्त्रार्थ होने की सभी को जानकारी मिली। इस अपूर्व दृश्य को देखने हेतु वहाँ बहुत जन एकत्र हुए। आचार्यप्रवर के प्रबुद्ध मुनिगण भी यथासमय यथास्थान पहुंच गये।

**परे समूचुर्नचवादचर्चा शंकापनोदार्थमयं प्रयत्न:।**
**वाद्युक्तलेखस्य कृता व्यवस्था, तथान्यपक्षेऽपि च निर्णयोऽभूत् ॥३३॥**

अन्वय:—परे समूचु: इयम् कापि वादचर्चा न, किन्तु अयं प्रयत्न: शंकापनोदार्थम् एव। तत्र वाद्युक्तलेखस्य व्यवस्था कृता। तथा एव अन्यपक्षे अपि च निर्णय: अभूत्।

भावानुवाद:—प्रश्नकर्त्ताओं ने कहा—"यहाँ हमें कोई वाद-विवाद नहीं करना है। हम तो शंका दूर करने का प्रयास कर रहे है। वहाँ वादी के कथन को लिपिबद्ध करने की व्यवस्था की गई। तथा अन्य विषयों (पक्षों) में भी समीचीन निर्धारण किये गये।

**प्रश्नोऽस्ति य: कोपि च जैनधर्मम्, मत्वा मृषा स्व मनुते च सत्यम्।**
**स्वधर्मरत्या कुरुते जपादि, बन्धश्च तस्मादथवा विमुक्ति: ? ॥३४॥**

अन्वय:—(वादी) य: कोपि मानव: जैनधर्म मृषामत्वा तथा स्वं च सत्यं मनुते। स्वधर्मरत्या जपादि कुरुते। तस्मात्तस्य बन्ध: ? अथवा विमुक्ति: (भवति)। इति (मम प्रश्नोऽस्ति)!

भावानुवादः—(वादी) तेरापन्थ सघ प्रमुखों ने उस सभा में प्रश्न किया—"कोई भी धर्मावलम्बी जैनधम को असत्य मानता हुआ, अपने धर्म में पूर्ण अनुरक्त वैष्णव धर्मानुयायी अपने मतानुसार जप–तपादि करता है। उसका वह कार्य-क्रम बन्धन का कारण है अथवा मुक्ति का ?

**यो जैनधर्मं मनुते मृषा सः, शास्त्रोक्तसत्यादि न कर्त्तुमीशः ।**
**तदा च बन्धश्च विमोक्षएवम् व्रताद्यभावे कथमस्ति पृष्टिः ? ।।३५।**

अन्वयः—यः जैनधर्म मृषा मनुते। स शास्त्रोक्तसत्यादि कर्तुम् न ईशः (भवति)। तदा व्रताद्यमावे "बन्धः च विमोक्ष एवम्" इति पृष्टिः कथम् अस्ति !

भावानुवादः—(प्रतिवादी) आचार्यप्रवर की ओर से प्रत्युत्तर में कहा गया—"जो कोई जैनधर्म को या किसी सत्य धर्म को असत्य मानता है। वह आगमोक्त अहिसा सत्य आदि का पालन नही करता है। तो उसके अहिसा, सत्यादि व्रत है ही नही। तब "बन्ध होता है या मोक्ष" यह प्रश्न ही उपस्थित नही होता है। अतः यह प्रश्नवन्ध्यापुत्र के समान अयुक्त है।

**समूलप्रश्नो न समाहितोऽस्ति, तीर्थान्तरीयोपि समेति सत्यम् ।**
**प्रमाणमस्यास्ति जिनागमेषु, बान्धेयपुत्रोऽस्ति कथं च पृष्टिः ? ।।३६।।**

अन्वयः—(वादी) समूल प्रश्नः समाहितः न अस्ति। तीर्थान्तरीयोपि सत्य समेति। अस्य प्रमाणं जिनागमेपु अस्ति। इयम् पृष्टिः कथम् वान्धेयपुत्रः अस्ति !

भावानुवादः—वादी ने कहा—"यह हमारे मूल प्रश्न का उत्तर नही है। क्योंकि जिनागमों के प्रमाण के अनुसार तीर्थान्तिरीय भी सत्य को प्राप्त होते हैं। अतः हमारा प्रश्न वन्ध्यापुत्र की तरह अयुक्त कैसे हो सकता है ?

**न पूर्वपक्षस्य सरूपमेतत् नवीनरूपं परिवृश्यतेऽत्र ।**
**कथं च सत्यस्य समर्थनं त–दसत्वमूले न च पत्रशाखे ।।३८।।**

अन्वयः—(प्रतिवादी) पूर्वपक्षस्य एतत् सरूपम् न। अत्र नवीन–रूपम् परिदृश्यते। सत्यस्य तत् कथं समर्थनम्। असत्वमूले च पत्रशाखे न (भवत:) ?

भावानुवादः—प्रतिवादी ने कहा—"प्रश्न का यह स्वरूप ही नहीं है। यहां तो अलग ही ढंग से दिखाई दे रहा है। सत्य का यह कैसा समर्थन ? मूल के अभाव में शाखा एवं पत्र-पुष्प कैसे हो सकते हैं ?

**यो जैनधर्मं मनुते मृषा सः, शास्त्रोक्तसत्यादि न कर्त्तुमीशः।**
**इत्युक्तिरेषा शशश्रृंगतुल्या, प्रमाणरूपे चशिवर्षिरास्ते ॥३८॥**

अन्वयः—(वादी) यः जैनधर्म मृषा मनुते सः शास्त्रोक्त सत्यादि कर्तुम् ईशोन। "इति एषा भवतः उक्तिः शशश्रृंगतुल्या अस्ति। अत्र प्रमाणरूपे च शिव ऋषिः आस्ते।

भावानुवादः—(वादी) जो जैन धर्म को असत्य मानता है। वह आगमोक्त-सत्यादि का आचरण नहीं करता "यह प्रतिवादी का कथन शशश्रृंग के समान है। क्योंकि इसके प्रमाण रूप में शिवराजर्षि का उदाहरण विद्यमान है।

**प्रश्नोऽस्ति सम्यक् भवताऽयथार्थः, प्ररूप्यते न्याय्यमिदं न जातु।**
**विनीतभावैः पुनरेव वच्मि तदुत्तरं देयमवश्यमस्ति ॥३९॥**

अन्वयः—(वादी) प्रश्नः सम्यक् अस्ति। भवता अयथार्थः प्ररुप्यते। इति जातु न्याय्यम् न। विनीतभावैः एव वच्मि। तदुत्तरम् अवश्यम् देयम् अस्ति।

भावानुवादः—(वादी) पुनः प्रश्न करता है—"मेरा प्रश्न सत्य है, किन्तु आप इसे अयथार्थ प्ररूपित कर रहे हैं। यह न्याय नहीं है। मैं विनम्रभाव से ही कह रहा हूं। आपको इसका उत्तर अवश्य देना चाहिये।"

**यो जैनधर्मं मनुते मृषास जैनेतरो वा जिनपक्षपाती।**
**स्यादत्र, तर्को भवता न कार्यः, यथोत्तरं दत्तमवेहि धीमन् ॥४०॥**

अन्वयः—(प्रतिवादी) यः जैनधर्मम् मृषा मनुते स जैनेतरोवाजिनमक्षपातीवा कोऽपि स्यात्। अत्र भवता तर्को न कार्यः। धीमन्! यथोत्तरम् दत्तम् अवेहि!

भावानुवादः—(प्रतिवादी) कहते हैं—"जो जैनधर्म को मिथ्या मानता है, वह जैनेतर हो या जिन पक्षपाती ? इस विषय में तर्क को अवकाश ही नहीं है।

आप समझिये कि आपको सम्यगुत्तर दिया जा चुका है।

**यः सत्यधर्मं मनुते तथा न न तस्य हिंसाविरतादिलाभः।**
**तत्सत्यधर्मस्य निरूपणं च, विधीयमानं मयकैव विद्धि ॥४१।**

अन्वयः—(प्रतिवादी) यः सत्यधर्म तथा न मनुते। तस्यहिंसाविरतादि लाभः (अहिंसा लाभः) न। तत्सत्यधर्मस्य निरूपणं च मयका एव विधीयमानम् अवेहि।

भावानुवादः—(प्रतिवादी) "आप समझने का प्रयास करिये कि जो सत्यधर्म को तदनुरूप नही मानता है। उसे हिंसाविरति आदि का लाभ नहीं मिलता है। इस सत्य धर्म का विवेचन मैं कर चुका हूं।

**यत्रास्ति रत्नत्रयसन्निवेशः, साधोश्च कण्ठस्थितपाशभेदः।**
**शास्त्रादिघाताच्छिशुरक्षणं च, सरोषकूपापतनावरोधः ॥४२॥**

अन्वयः—(प्रतिवादी) यत्र रत्नत्रयसन्निवेशः अस्ति। साधोः च कण्ठस्थितपाश-भेदः, शास्त्रादिघातात् शिशुरक्षणम्, सरोष कूपाऽऽपतनावरोधः इत्यादि आगमे धर्मरूपे विहितम्। नैतेत् एकान्त पापम्।

भावानुवादः—(प्रतिवादी) "रत्नत्रय के आराधकमुनि के गले में लगाये गये पाशका छेदनकरना शास्त्रादि घात से बालकों की रक्षा करना, क्रोध से कूप में गिराये जाते हुए को बचाना इत्यादि कार्यो में आगमों में धर्म होना बताया है, एकान्त पाप नही है।

**गवादिनिस्सारणमेव दाहावलीढगेहादवरुद्धमार्गात्।**
**निशा च साधूपसमीपमेवं स्त्रीणाम् स्थितिर्नैव मताऽवदाता ॥४३॥**

अन्वयः—(प्रतिवादी) अवरुद्धमार्गात् दाहावलीढगेहात् गवादिनिस्सारणम् (धर्मः) एव। एवम् निशा च साधूपसमीपम् स्त्रीणाम् स्थितिः अवदातान मता एव। शास्त्रे अस्य निषेधः कृतः।

भावानुवादः—(प्रतिवादी) "बन्द द्वार वाले मकान में आग लग जाने पर द्वार

खोल कर गो आदि पशुओं की प्राणरक्षा करना धर्म है। इसी प्रकार रात्रि में साधुओं के समीप स्त्री वर्ग की उपस्थिति उचित नहीं है। शास्त्रों में इसका निषेध किया गया है।

**गृहस्थगेहान्न च खाद्यपानम् बारेण ग्राह्यं च दयाप्रचारः।**
**दानोपदेशो भवजीवरक्षास सत्यधर्मो जिनसंप्रदिष्टः ॥४४॥**

अन्वयः—(निषेधरूप धर्मः) वारेणं गृहस्थगेहात् खाद्यपान ग्राह्यम् न च। दया प्रचारः दानस्य घोषः भवजीवरक्षा, स सत्यधर्मः जिनसप्रदिष्टः अस्ति (सत्वया न मन्यते)

भावानुवादः—नित्यक्रम पारी–पारी से गृहस्थों के यहाँ से भोजन–पान ग्रहण करना आगम विरुद्ध है। जिन धर्म का विधान दया–प्रचार एव दान के उपदेश द्वारा जगज्जन्तुओं की रक्षा के लिए ही हुआ है। जिसे आप लोग मानते ही नही हैं।

**जैनस्य धर्मस्य मृषा चमन्ता, स एव योरक्षति नैव जीवम्।**
**दीनेऽनुकम्पां कुरुतेन मानी, एकान्तपापं वदतीति दानम् ॥४५॥**

अन्वयः—यः जीव न रक्षति। एव मानी (सन्) दीने अनुकम्पाँ न कुरुते। दानम् एकान्तपापं वदति। इति स एव जैनस्य धर्मस्य मृषा (असत्य) मन्ताच (अस्ति)।

भावानुवादः—(पुनः प्रतिवादी) "जो जीवरक्षा नही करते–अहंकार में मत्त होकर दीन–प्राणियों पर अनुकम्पा नही करते है। दान देने में एकान्तपाप का कथन करते हैं। वे ही जैनधर्म को असत्य मानने वाले हैं।

**सत्याग्रही सोभवता मतोऽपि दुराग्रही जातु परेण मान्यः।**
**प्ररूपणा या क्रियते त्वया तु, सोत्सूत्रमेषा ननु कामचारः ॥४६॥**

अन्वयः—यः भवतासत्याग्रही मतः अपि परेण दुराग्रही जातु मान्यः। इति विषये त्वया नु प्ररूपणा क्रियते सा एषा उत्सूत्रम् एव। ननु कामचारः एव।

भावानुवादः—(प्रतिवादी) "आप जिसे सत्याग्रही मान रहे हैं, वह वस्तुतः दुराग्रही ही है। दया–दान के विरुद्ध प्ररूपणा आगमविरुद्ध एवं स्वच्छन्द–मति द्वारा कल्पित है।

**पूर्वस्य पृष्टस्य यदास्ति भावः, सत्यव्रतादेर्यदिधारकोऽस्ति।**
**जैनेतरो वा यदि जैनरूपः कर्मक्षयस्तस्य न बर्धतेतत् ॥४७॥**

अन्वयः—यदा पूर्वस्य पृष्टस्य (तव) अयम् भावः अस्ति। यदि सत्यव्रतादेः धारकः जैनेतरः जैनरूपः वा अस्ति। तस्य कर्मक्षयः भवति एव तत् कर्म न वर्धते!

भावानुवादः—(प्रतिवादी) और अधिक स्पष्ट करते हैं—"आपके प्रश्न के उत्तर का भाव यह है कि अहिंसादि सत्यव्रतों का धारक यदि जैन उपाधि का धारक हो या अन्य, उसका जन्म मरण घटता ही है, बढ़ता नहीं।

**अन्यत्प्रमाणं परमत्र मान्यो, जैनागमोऽयं सुधिया विचार्यः।**
**प्रश्नोत्तरं पूर्णमभूत्समग्रमग्रेविचारो मतभेद एव ॥४८॥**

अन्वयः—अत्र परम् अन्यत् प्रमाणम् अपि अस्ति। अयम् जैनागमः मान्यः सुधिया विचार्यः। प्रश्नोत्तरं समग्रम् च पूर्णम् अभूत्। अग्रे मतभेदे एव विचारः कार्यः।

भावानुवादः—(प्रतिवादी) "मेरे इस कथन में उत्तराध्ययन सूत्र अध्याय २८ का आगमिक प्रमाण भी है। अतः अब इस विषय को समाप्त कर मौलिक मतभेदों की चर्चा करना अधिक श्रेष्ठ रहेगा।

**श्रुत्वा च भीताः स्वपराजयेन, कोलाहलं चक्रुरनर्थकारम्।**
**सत्यै र्वचोभि र्ज्वलिताः नितान्तम् परं न जाताः सफलाः प्रबन्धैः ॥४९॥**

अन्वयः—(सम्यगुत्तरं श्रुत्वा) स्वपराजयेन भीताः सत्यैः वचोभिः नितान्तं च अनर्थकारम् कोलाहलं चक्रुः। परम् ते स्वप्रबन्धैः सफला न जाताः!

भावानुवादः—(प्रतिवादी) ("आचार्यश्री जवाहर) के द्वारा सम्यगुत्तर श्रवण कर, सत्य वचनों से जलते हुए तथा पराजय से भयभीत उन वादियों ने कोला-

हल करना प्रारम्भ कर दिया। तथापि सभाविघ्न के इस कार्य में वे सफल नहीं हुए।

आचार्यवर्येण च सिंहगर्जा कृता जनानां विपुले समाजे।
मयोत्तरं दत्तमनेकयुक्त्याघस्त्रत्रये नास्य बभूव तोषः ॥५०॥

अन्वयः—जनानांविपुले समाजे आचार्यवर्येण सिंहगर्जा कृता। घस्त्रत्रये मया अनेक युक्त्या उत्तरं दत्तम् परम् अस्य तोषः न बभूव !

भावानुवादः—इस विशाल जनमेदिनी में आचार्यश्री ने सिंह गर्जना करते हुए कहा—"मैंने तीन दिनों तक अनेक युक्तियों के साथ उत्तर दिया, किन्तु विपक्ष को सन्तुष्टि नहीं हुई।

प्रश्नोत्तराणां खलुनिर्णयार्थम् मध्यस्थविद्वांश्चनियोजनीयः।
येनावयोनिर्णयमेव कुर्यात् शिष्टश्च पन्था अयमेव नीतेः ॥५१॥

अन्वयः—प्रश्नोत्तराणाम् खलु निर्णयार्थम् कोपि मध्यस्थविद्वान् च नियोजनीयः। येन स आवयोः निर्णयम् एव कुर्यात्। अत्र अयमेव नीतेः शिष्टः पन्थाः (अस्ति)।

भावानुवादः—"अतः नैतिकता का यह तकाजा है कि बाद के सम्यग्निर्णय हेतु किसी मध्यस्थ विद्वान् का चयन होना चाहिये। जिससे वह हम दोनों के विषय में सही निर्णय कर सके।

वादस्य चर्चाऽप्यथवाविधेया, यथानयं तर्हि जयाऽजयार्थम्।
आचार्यवर्यश्च तथापि साकम् मया, विधत्तां विषये विवादम् ॥५२॥

अन्वयः—अथवा तर्हि जयाऽजयार्थंयथानयं वादस्य चर्चा अपि विधेया। तथापि आचार्यः स मया साकं अत्र विषये विवादम् विधत्ताम्।

भावानुवादः—"अथवा जय पराजय के लिए वाद की न्यायानुकूल चर्चा भी करनी चाहिये। अच्छा तो यही होगा कि आपके आचार्य मेरे साथ इस विषय में चर्चा करें।

**अन्यः प्रकारोन समीहितार्थो हानिर्न कालस्य कदापि सह्या ।**
**स्यान्निर्णयस्तत्त्वत एवसर्वः । तोयस्य तोयं पयसः पयश्च ।।५३।।**

अन्वयः—अन्यः प्रकारः कोपि समीहितार्थः न । कालस्य हानिः कदापि न सह्या । वादेन तत्त्वतः एव सर्वः निर्णयः स्यात् । तोयस्य तोयम् पयसः पयः च (भवेत्) ।

भावानुवादः—"अब अन्य कोई सुगम मार्ग नहीं है, जिससे कि हितार्थ सिद्ध हो सके । व्यर्थ समय बिताने की अपेक्षा तत्त्वनिर्णय के द्वारा दूध का दूध एवं पानी का पानी" ऐसा निर्णय होना चाहिये ।"

**पृष्टाः परे साग्रहमेतदर्थम् मतो न तैः कोपि निर्दिष्टमार्गः ।**
**सत्यं च भद्रं जयतीति सत्यम्, मिथ्याक्रमं क्वाचलमेवधत्ते ।।५४।।**

अन्वयः—एतदर्थं परे साग्रहं पृष्टाः । परम् तैः कोपिनिर्दिष्ट–मार्गः न मतः । सत्यं च भद्रम् (भवति) । सत्यम् एव जयति । इति मिथ्या क्व अचलं क्रमम् धत्ते एव !

भावानुवादः—इस प्रकार विपक्षियों को आग्रहपूर्वक कहा गया, किन्तु उन्होंने कोई मार्ग स्वीकार नही किया । इससे यह स्पष्ट हो जाता है, कि कल्याणप्रद सत्य की ही विजय होती है । मिथ्या के पांव अविचल नहीं हो सकते हैं ।

**चूरु चर्चाः—**

**आचार्यवर्यो विदधद् विहारम्, ग्रामेषु, चूरु–नगरं जगाम ।**
**दैवाच्च तत्रैव महोत्सवोऽपि, तेरापथस्याभिमतो बभूव ।।५५।।**

अन्वयः—आचार्यवर्यः ग्रामेषु विहारम् विदधत् चूरू नगरम् जगाम । दैवात् च तत्र एव तेरापथस्य अभिमतः (नियतः) महोत्सवः अपि बभूव ।

भावानुवादः–आचार्यप्रवर परिभ्रमण करते हुए जब चूरू पधारे तो संयोगतः वहीं तेरापन्थ का महोत्सव भी था ।

**व्याख्यानकाले जनताः प्रभूताः एकत्र जाताः गुणवद्गृहीताः ।**
**चर्चोपदेशस्य ससार तूर्णम्, संमर्द्दनं तत्क्रमशोविवृद्धम् ॥५६॥**

अन्वयः—व्याख्यानकाले गुणवद्गृहीताः प्रभूताः जनताः एकत्र जाताः । उपदेशस्य चर्चा तूर्णम् ससार । क्रमशः तत् समर्द्दनं विवृद्धम् (अभवत्) ।

भावानुवादः—आचार्यप्रवर के गुणों से अभिभूत हो प्रवचनकाल में बहुत अधिक धर्मानुरागी एकत्रित हुए । तथा ज्यों-ज्यों प्रवचन की चर्चा प्रसृत हुई । जनता की भीड़ बढने लगी ।

**प्रसंगतः पूज्यधिया प्रदिष्टम् साधुर्विना कारणमेव साध्व्या ।**
**नीतं च गृह्णात्यशन सुपानम् भवेत्तदादुष्कृतिदोषभागी ॥५७॥**

अन्वयः—प्रसगत पूज्यधिया प्रदिष्टम् । साधुः विना कारणम् एव साध्व्या आनीतम् अशनं सुपानम् च गृह्णाति तदा दुष्कृतिदोषभागी च भवेत् !

भावानुवादः—एक बार आचार्यप्रवर ने अपने प्रवचन में मुनि मर्यादाओं के उल्लेख के प्रसग पर कहा—"साधु बिना किसी ठोस कारण के साध्वी द्वारा लाया हुआ आहार-पानी ग्रहण करता है, तो वह दोष का भागी होता है ।

**वारत्रयं दुष्कृतिमेव कृत्वा गच्छे च तिष्ठेत् शुचि साधुवृत्तिः**
**ततो न शुद्धिः क्रियमाण पापे गच्छात्ततो निर्गमनं विधेयम् ॥५८॥**

अन्वयः—एवम् वारत्रयं दुष्कृतिम् एव कृत्वा शुचिः साधुवृत्तिः सन् गच्छे च तिष्ठेत् । ततः क्रियमाणपापे शुद्धिः न । ततोगच्छात् तस्य निर्गमनम् एव विधेयम् !

भावानुवादः—"बिना कारण आहार लेने पर तीन वार तो प्रायश्चित लेकर शुद्ध हो सकता है, किन्तु इसके बाद शुद्धि नहीं होती है । और उसे गच्छ से बाहर ही करना पडता है ।

**[illegible]वार्यपोषं ननु कोपि सेवा, भावी च भक्तो गुरुसन्निधाने ।**
**[illegible]निदिष्ट वार्तामुवाच सत्यार्थकृते गुरु स्वम् ॥५९॥**

अन्वयः—कोपि सेवाभावी भवतः आर्यघोषं च श्रुत्वा ननु गुरुसन्निधाने गत्वा सर्वनिदिष्ट वार्ताम् अवदत् । सत्यार्थंकृते च स्वम् गुरुम् उवाच ।

भावानुवादः—किसी सेवानिष्ठ तेरापन्थी श्रावक ने आचार्यश्री की इस सैद्धान्तिक विवेचना को सुना, तो उसने अपने गुरु को जाकर सब कुछ निवेदन किया, कि इस विषय में सत्य निर्णय होना चाहिये ।

**गर्वोक्तिमासाद्य गुरुर्जगाद, विधीयते साधुजिनागमेन ।**
**प्रमाणमस्मिन् बहुदेयमास्ते, समीहते कोपि विबुद्धचेताः ॥६०॥**

अन्वयः—गर्वोक्तिम् आसाद्य तेरापन्थगुरुः जगाद, अस्मिन् साधु जिनागमेन प्रमाणं विधीयते । तत् प्रमाणं बहुदेयम् आस्ते । यदि कोपि विबुद्धचेताः समीहते ।

भावानुवादः—उस श्रावक की बात सुनकर तेरापन्थी गुरु ने सगर्व कहा—'इस विषय में जिनागमों के साधुचर्या–प्रसगों में बहुत कुछ प्रमाण है । यदि कोई बुद्धिमान् उन्हें सुनना चाहे, तो हम वैसा करने को तत्पर हैं ।

**स श्रावकः पूज्यवरस्य पार्श्वे, निवेदयामास विनीतभावः ।**
**गत्वा समीहेत यदि प्रमाणम्, दास्यत्यहो मद्गुरुरेकवीरः ॥६१॥**

अन्वयः—स श्रावकः (तेरापन्थः) विनीतभावः (सन्) पूज्यवरस्य पार्श्वे निवेदयामास । यदि कोपि तदन्तिके गत्वा प्रमाणम् समीहेत तदा एकवीरः मद्गुरुः तत् अवश्यमेव दास्यति !

भावानुवादः—उस श्रावक बन्धु ने पुनः आचार्यप्रवर को विनम्र निवेदन किया—:'यदि कोई व्यक्ति मेरे गुरु के समीप जाकर प्रमाण मागे तो वे वीरगुरु "साध्वी से आहार लिया जा सकता है ।" इस विषय में प्रमाण दे सकते हैं।

**गुरोरनुज्ञामधिगम्य तत्र, गताः सभायां ननु साधवोऽपि ।**
**स्थिताः प्रमाणाय च ते विशाले, वने यथा केशरिणो दुरापे ॥६२॥**

अन्वयः—तत्र सभायां गुरोः अनुज्ञाम् अधिगम्य ननु साधवः अपि गताः । तत्र

विशाले दुरापे वने केशरिण इव प्रमाणाय च स्थिताः ।

भावानुवादः—तब आचार्यप्रवर के आदेश को प्राप्त कर कुछ मुनि तेरापन्थियों की सभा में गये । मानो विशाल वन में सिंहवत्—निर्भीक होकर प्रमाण के लिए उपस्थिव हुए ।

आचार्यवर्येण च देशिताः स्मः, साध्वी समानीतपदार्थलाने ।
प्रमाणमाप्तुं भवतः स्थिताश्च वैदुष्यपूर्णैकमुनिर्बभाषे ।।६३।।

अन्वयः—साध्मीसमानीत पदार्थलाने भवतः प्रमाणम् आप्तुम् आचार्यवर्येण च देशिताः सन्तः वयम् स्थिताः स्मः । वैदुष्यपूर्णैकमुनिः गणेशी इत्थम् बभाषे !

भावानुवादः—वहां पहुच कर विद्वत्ता पूर्ण भाषा में मुनि श्री गणेशीलाल जी म. सा. ने कहा—"हम लोग आचार्यश्री के आदेश से यहाँ साध्वी के द्वारा लाये हुए आहार ग्रहण करने के विषय में आगमिक प्रमाण लेने आये हैं ।

यथा गृहे सद्गृहिणी करोति, पत्युः कृते भोजनपानशय्या ।
व्यवस्थितिं मानपुरस्सरं सा, तथैव साध्वीति च कल्पते किम् ।।६४।।

अन्वयः—यथा गृहे सद्गृहिणी पत्युः कृते मानपुरस्सरं भोजनपानशय्याव्यवस्थितिम् करोति । तथा एव सा साध्वी करोति इति कल्पतेकिम् ?

भावानुवादः—"मुनि श्री गणेशीलाल जी ने कहा—"गृहस्थ के घर में जैसे गृहिणी अपने पति के लिए आदरपूर्वक भोजन पान शय्या आदि की व्यवस्था करती है, क्या साधु के लिए साध्वी द्वारा वैसी ही व्यवस्था करना कल्पता है ?

श्रुत्वैव प्रश्नं सहसा विनीतम्, ददाह भोगीव हृदन्तराले ।
शीघ्रं समाधातुमलं न जातः, कियत्क्षणं मौनमवाललम्बे ।।६५।।

अन्वयः—(तेरापन्थ गुरुः) विनीतम् प्रश्नं श्रुत्वा एव हृदन्तराले भोगी (सर्पः) इव सहसा ददाह । शीघ्रम् समाधातुम् अलं न जातः । कियत् क्षणं मौनम् एव अवाललम्बे !

भावानुवादः—इस विनम्र किन्तु सटीक प्रश्न को सुनते ही उनका हृदय सर्प की तरह फुंफकार उठा । बुद्धि के हतप्रभ हो जाने से शीघ्र उत्तर नही दे पाए और कुछ क्षणों तक मौन हो गये ।

**भालेस्फुलिंगाः सुषमा मलीना, नेत्रे नते व्याकुलितं च चेतः ।**
**वक्तुं न वाचो हृदयं चकम्पे, दुर्दर्शनीया च दशा तदानीम् ।।६६।।**

अन्वयः—तस्य गुरोः तदानीम् दुर्दर्शनीया च दशा (बभूव) भाले स्फुलिंगाः (स्वस्वेदाः) जाताः । सुषमा मलीना (अभवत्) । नेत्रे नते (जाते) । चेतः च व्याकुलितम् (अभवत्) वक्तुम् वाचः न उत्पन्नाः । हृदयं च चकम्पे ।

भावानुवादः—तेरापन्थ संघ के आचार्य कालूगणी की तत्कालीन स्थिति दुर्दर्शनीय हो गई । ललाट पर स्वेदबिन्दु चमकने लगे, नेत्र नीचे झुक गये । समस्त शोभा मलीन हो गई । चित्त व्याकुलित हो गया । वाणी अशक्त हो गई । और हृदय प्रकम्पित हो उठा ।

**कयापि युक्त्या च यथा कथंचि दूचेतदाचार्यवरो परश्च ।**
**शास्त्रे निषेधो नहि विद्यते ऽतः, पूर्वोक्त सेवाऽभ्यधिकल्पते सा ।।६७।।**

अन्वयः– तदा परः आचार्यवर्यः (तेरापन्थस्य) कयापि युक्त्या च कथचित् ऊचे । "शास्त्रे निषेधः नहि विद्यते" । अतः सा पूर्वोक्त सेवा अभ्यधिकल्पते ।

भावानुवादः—कुछ स्वस्थ होने पर आचार्य कालूराम जी ने युक्ति दी कि शास्त्र में कही निषेध नही है । अतः साध्वी द्वारा साधुओं की की जाने वाली सेवा कल्पनीय है ।

**शास्त्रेनिषेधो वहुशश्चकास्ति, स्त्रीसन्निधानं न हिताय मान्यम् ।**
**चित्रं न तासां सुविलोकनीयम् पूर्वोक्तसेवाव्रतभंगहेतुः ।।६८।।**

अन्वयः—आ० (गणेशी ला० जी०) शास्त्रे वहुशः निषेधः चकास्ति । स्त्री सन्निधानं हिताय नहि मान्यम् । तासाम् चित्रम् (अपि) न सुविलोकनीयम् । (तासाम्) पूर्वोक्त सेवा व्रत भंग हेतुः (मता) !

भावानुवादः—तब श्री गणेशीलाल जी म. सा. ने कहा—"शास्त्रों में तो अनेक स्थानों पर निषेध किया गया है। स्त्रियों की सन्निकटता हितप्रद नही है। स्त्रियों का चित्र भी नहीं देखना चाहिये। साध्वियों द्वारा की जाने वाली सेवा को व्रत भंग का कारण मानना चाहिये।

**वस्त्रादिधौताद्यशनादिलाभः, सेवाकृते शिष्यनियोजनं च।**
**सेवानिषद्ये च निमन्त्रणं च न कल्पते साधुजनस्य साध्व्या ॥६९॥**

अन्वयः—साधुजनस्य साध्व्या वस्त्रादिधौताद्यशनादिलाभः सेवाकृते शिष्यनियोजनम् च सेवा निषेद्याच निमन्त्रणं च न कल्पते।

भावानुवादः—"साध्वी के द्वारा साधुओं के लिए वस्त्र प्रक्षालन, भोज्यसामग्री लाभ, सेवा के लिए साध्वी शिष्याओं का नियोजन, अन्तरंग सेवा एवं निषद्या-निमन्त्रण आदि करना नही कल्पता है।

**संभोगजातं नियमान्निषिद्धम्, पूर्वोक्तमेवं विततागमेषु।**
**संकीर्णमर्थं न कदापि गृह्यात्, व्यावच्चशब्दस्य ध्रुव सुधीश्च ॥७०॥**

अन्वयः—विततागमेषु एवम् पूर्वोक्तम् संभोगजातम् नियमात् निषिद्धम् अस्ति। सुधी चः व्यावच्चशब्दस्य संकीर्णम् अर्थम् कदापि ध्रुवम् न गृह्यात्!

भावानुवादः—"जैनागमों से इस प्रकार के सभोग का नियमपूर्वक विस्तृत निषेध किया गया है। विद्वान् व्यक्ति को वैयावच्च शब्द का संकीर्ण अर्थ नही करना चाहिये।

**तथैव लेखोभ्रमखण्डनेपि, आहारपाने न लभेत तस्याः।**
**यतोऽपि मानं भवता गृहीतम्, ततोऽपवादेन निधेहि नूनम् ॥७१॥**

अन्वयः—(भवद्ग्रन्थे) भ्रमखण्डने अपि तथाएव लेखः अस्ति। साध्व्याः आहार पाने च न लभेत। यतः ग्रहणविषयमानम् भवता गृहीतम्। ततः अपवादेन तत् नूनम् हि निधेहि।

भावानुवादः—"आपके द्वारा परममान्य ग्रन्थ भ्रमविध्वंसन में भी स्पष्ट उल्लेख

है कि—"साध्वी से आहार पानी न लेवे। अतः आहार ग्रहण के विषय पर आप जो प्रमाण प्रस्तुत कर रहे हैं, वह उत्सर्ग रूप में नही अपवाद रूप में समझना चाहिये।

**स्थानांगसूत्रादिप्रमाणतोय, द्याहारपानग्रहणं विधेयम्।**
**सदैव संवासमपीह कुर्यात् सिद्धं कथन्नो भवता विचार्यम् ॥७२॥**

अन्वयः—(भवतांमते) यदि स्थानांगसूत्रादिप्रमाणतः आहारपानग्रहणं विधेयम् (अस्ति)। तर्हि ताभिः सह एव इह सवासम् अपि कुर्यात्। इति कथं न सिद्धम्। इति भवता एव विचार्यम्!

भावानुवादः—"स्थानांग सूत्र के प्रमाण से यदि साध्वी से आहारादि ग्रहण को विधेय मानते हो तो उनके साथ संवास को विधेय क्यों नहीं मानते हो? इसका स्वयं विचार करिये।

**दुराग्रहेणैव न मन्यते यद्, सत्यार्थमेतत् वचनं क्षतिर्नो।**
**तथ्यप्रचारोजगतीतलेस्मिन्, जायेत सत्याम्बुपयोविवेकः ॥७३॥**

अन्वयः—सत्यार्थम् एतत् वचनम् दुराग्रहेण एव यद् न मन्यते। तत् क्षतिः नो। अस्मिन् जगतीतले तथ्यप्रचारो जायेत। सत्याम्बुपयः विवेकः (भवेत्)।

भावानुवादः—"साध्वियों से आहार—पानो नहीं लेना चाहिये" यह सिद्धान्त आगम सम्मत है। इसे आप दुराग्रह से नहीं मानते है, तो इसमें हमारी कोई हानि नहीं है; किन्तु ससार में सत्य का प्रचार तो होना ही चाहिये। जिससे कि दूध का दूध एवं पानी का पानी हो सके।

**श्रुत्वा मुनीशस्य वचः प्रमाणम्, शिश्राय मौनं परपक्षधारी।**
**जाते मलीने वदने तदीयाः कोलाहलं चक्रुरतीव सान्द्रम् ॥७४॥**

अन्वयः—मुनीशस्य (गणेशस्य) वचः प्रमाणम् श्रुत्वा परपक्षधारी मौनं शिश्राय। तस्य वदने मलीने जाते तदीयाः जनाः अतीवसान्द्रम् कोलाहलचक्रुः।

भावानुवादः—मुनिप्रवर श्री गणेशीलाल जी के आगमोक्त वचन प्रमाण को सुन-

कर प्रतिवादी पक्ष मौन हो गये । उनके चेहरे पर मलीनता छा जाने से उनके भक्तों ने कोलाहल मचा दिया ।

सदैव मन्दाः परिवञ्चितास्तै, रुत्सूत्रमात्मार्थविवेचनैश्च ।
मोहाभिभूतेषु गुरुत्वमेषाम्, यथान्धमध्ये प्रथते च काणः ।।७५।।

अन्वयः—तैः उत्सूत्रम् आत्मार्थविवेचनैः च सदा मन्दाः एव परिवञ्चिताः । एषाम् मोहाभिभूतेषु गुरुत्वम् (अस्ति) काणः यथा अन्धमध्ये प्रथते च ।

भावानुवादः—उन्होने उत्सूत्र प्ररूपण एवं कपोल–कल्पित वचनों से मन्द वुद्धियों को ही प्रतारित किया है । मोहाभिभूतप्राणियों के ही ऐसे गुरु हो सकते है । जैसे कि अन्धों में काणा राव ।

यदायदाजायत वादचर्चा, तदातदा तेच परे परास्ताः ।
दिवापतौ प्रागचलाधिरूढे, स्थिति र्भवेत्कुत्र तमोधिराशेः ।।७६।।

अन्वयः—यदा यदा वादचर्चा अजायत । तदा तदा ते परे परास्ताः च । दिवापतौ प्रागचलाधिरूढे तमोऽधिराशेः स्थितिः कुत्र भवेत् नभवेदित्यर्थः ।

भावानुवादः—जब–जब भी शास्त्रार्थ हुए तेरापन्थी पराजित हुए । और यह स्वाभाविक ही है कि सहस्त्ररश्मि के उदित होने पर क्या कभी अन्धकार टिक सकता है ।

## सर्गावसाने बसन्ततिलकावृत्तम्ः–

भीतिर्न कापि परतोऽमितशक्तिपूर्तेराचार्यवर्यपदतः प्रथितस्य सूरेः ।
जातो निरन्तरमनन्तगुणैर्युतस्य सद्धर्ममण्डनमयो विपुलः प्रयासः ।।७७।।

अन्वयः—अमितशक्तिपूर्तेः आचार्यवर्यपदतः प्रथितस्य सूरेः निरन्तरम् अनन्तगुणैः युतस्य, परतः कापि भीतिः न । तस्य सद्धर्ममण्डनमयः विपुलः प्रयासः निरन्तरम् जातः एव ।

भावानुवादः–अमित शक्ति सम्भृत, श्रेष्ठ आचार्यपद से विभूषित अनवरत, अन-

न्तगुणों से सुशोभित आचार्यप्रवर श्रीमज्जवाहर को किसी से कोई भय नहीं था। उनके द्वारा सद्धर्ममण्डन का विपुल प्रयास निराबाध गतिशील रहा।

श्रीमज्जवाहरयशोविजयाभिधाने,
नानेशसच्चरणयोः शरणावधाने।
श्री चन्द्रमौलिकविनिर्मितसत्प्रबन्धे,
सद्धर्मसर्गदशमोपिजगामपूर्तिम्।

दशमः सर्गः समाप्तः।

## अथैकादशः सर्गः—

**विजयसर्गः**

यदागमानां विपुलैर्विरुद्धैः प्ररूपणैर्भ्रान्तिरभूज्जनेषु ।
तदा च सद्धर्मनिरूपणेन न्यरासि सा सूर्यसमेन तेन ॥१॥

अन्वयः—यदा जनेषु आगमानां विपुलैः विरुद्धैः प्ररूपणैः भ्रान्तिः अभूत् । तदा च सूर्यसमेन तेन (श्री जवाहराचार्येण) सद्धर्मनिरूपणेन सा (भ्रान्तिः) न्यरासि ।

भावानुवादः—बहुत अधिक विपरीत प्ररूपणा के कारण जब जन-जन में आगमों के सम्बन्ध में भ्रान्तियाँ उत्पन्न हो गयी, तो सूर्यवत् तेजस्वी आचार्यश्री जवाहर ने सद्धर्म के प्रकाश द्वारा उस भ्रान्ति रूप अन्धकार को समाप्त किया ।

आच्छन्नमासीत्तमसा नभोऽपि, प्रतारिताः केऽपि विवञ्चकैस्तैः ।
सद्धर्मसूर्यस्यविकासनेन, ध्वस्तं च तत्ते सततं प्रबुद्धाः ॥२॥

अन्वयः—तैः वञ्चकैः (तेरह पन्थैः) केपि नराः प्रतारिताः । तमसा नभः अपि आच्छन्नम् आसीत् । सद्धर्मसूर्यस्यविकासनेन तत् तमः ध्वस्तम् च । ते वंचिताः मानवाः सततं प्रबुद्धाः ।

भावानुवादः—उन छलनामयी वृत्तियों में कुछ मानव प्रतारित अवश्य हुए; क्योंकि समस्त आकाश पर अन्धकार छा रहा था; किन्तु सद्धर्मरूपसूर्य के उदित होने से अन्धकार ध्वस्त हो गया और वे प्रतारित जन भी प्रबुद्ध हो गये ।

मिथ्यात्वदृष्टेश्च कृतिः परैस्तैः, संसाधिता स्वेन विवेचनेन ।
[illegible] क्षपते जिनस्य, तदर्थमेभिर्विहितः प्रयत्नः ॥३॥

अन्वयः—तैः परैः (तेरह पन्थैः) स्वेन विवेचनेन मिथ्या दृष्टेः च कृतिः [illegible]

संसाधिता) । साइयम् (कृतिः) जिनस्य आज्ञाम् अपि श्रयते । तदर्थम् एभिः प्रयत्नः विहितः !

भावानुवादः—उन तेरापन्थियों ने अपने विवेचन में मिथ्यात्वयुक्तक्रियाओं को सत्य एवं जिनाज्ञा में सिद्ध करने का दुष्प्रयत्न किया; किन्तु उनका वह प्रयास निष्फल होकर रह गया ।

**दीनाय हीनाय न दानमस्ति, चैकान्तपापेन समन्वितं तत् ।**
**दयां विधायापि च जीवरक्षा, तथैव मान्या मतिमद्भिरेषा ॥४॥**

अन्वयः - दीनाय हीनाय न दानम् अस्ति । तत् च एकान्त पापेन समन्वितम् (अस्ति) । मतिमद्भिः दयां विधाय अपि जीवरक्षा तथा एव एकान्त पापम्) मान्या ।

भावानुवादः—तेरापन्थ की मान्यता है, कि बुद्धिमान्–मनुष्य को चाहिये कि वह दीन–हीन व्यक्ति को दया से प्रेरित होकर दान न दे और न प्राणी की रक्षा ही करे, क्योंकि उन दोनों कार्यो में एकान्त पाप होता है ।

**गोशालके तेन दयां विधाय, वीरेण चोक्ता करणीयतास्याः ।**
**च्युतिं च तस्याप्यवदन् बराकाः, किं कर्तुमीशा नहि मन्दभाग्याः ॥५॥**

अन्वयः—तेन (भगवता वीरेण) गोशालके दयां विधाय अस्याः (दयायाः) करणीयता उक्ता । (इमे पूर्वपक्षाः) वराकाः तस्य (वीरस्यापि) च्युतिं अवदन् । मन्दभाग्याः किम् कर्तुम् ईशाः न (भवन्ति) ।

भावानुवादः—प्रभु महावीर ने गोशालके पर दया करके यह सिद्ध किया था, कि सब प्राणियों पर दया करनी चाहिये; किन्तु ये तेरापन्थी भगवान् के इस कार्य से उनको चूकना बताते है । मन्दबुद्धि एवं मन्दभागी स्वच्छन्दतापूर्वक जिस विषय में जो चाहें वोल सकते है ?

**संसारपूज्यस्य जिनेश्वरस्य, कारुण्यचेतोहितसाधकस्य ।**
**वीरस्य देवस्य कृतापमानाः ये सन्ति, तेषां च कथापि पापम् ॥६॥**

अन्वयः—संसारपूज्यस्य जिनेश्वरस्य कारुण्यचेतोहितसाधकस्य, वीरस्य देवस्य च ये कृतापमानाः सन्ति । तेषाम् च कथा अपि पापम् (अस्ति) ।

भावानुवाद:—विश्वपूज्य करुणाविगलित हृदय से सर्वहित साधक प्रभु महावीर को अपमानित करने में भी ये नामधारी जैनी नहीं चूकते है । इनकी तो वार्ता करना ही पाप रूप है ।

**तेषांमतस्यैव कियान् विमर्शः प्रस्तूयतेतत्त्वविचारदृष्ट्या ।**
**लभेत तेनैव जगत्प्रबोधम्, तमोनिरासेन विकासमाप्य ॥७॥**

अन्वयः—तेषाम् मतस्य एव तत्त्वविचारदृष्ट्या कियान् विमर्शः प्रस्तूयते । जगत् तेन तमोनिरासेन विकासम् आप्य प्रबोधम् लभेत ।

भावानुवाद:—तत्त्वविचारणा की दृष्टि से उनके मत की समीक्षा की जा रही है । जिससे जगत को सम्यग्बोध प्राप्त हो और अज्ञान अन्धकार की समाप्ति के साथ ज्ञान का विकास हो ।

**येनापि मिथ्यात्वसमन्वितेन कृतं व्रतं संश्रयते जिनाज्ञाम् ।**
**आराधको मोक्षपदस्य सोऽपि, मतं यदीयं स च पूर्वपक्षः ॥८॥**

अन्वयः—मिथ्यात्वसमन्वितेन येनापि व्रतं कृतम् । तत् जिनाज्ञां संश्रयते । सः अपि मोक्षपदस्य आराधक. इति । यदीयम् मतम् (अस्ति) सच पूर्वपक्षः मान्यः (खण्डनीयः) ।

भावानुवाद:—जिसने मिथ्यात्वावस्था में व्रत स्वीकार किया है, उसे भी वे जिनाज्ञाराधक मानते है । उनकी मान्यता है कि वह भी मोक्षमार्ग का आराधक है । यह तेरापन्थ की धारणा है (यह पूर्वपक्ष हुआ) ।

**सम्यक्त्वदर्शी श्रयते च विद्याचारित्ररूपं जिनभाषितं तम् ।**
**धर्मं तदाज्ञापरिधौ च मोक्ष-मार्गस्य चाराधक एव मान्यः ॥९॥**

अन्वयः—(उत्तर पक्षः) सम्यक्त्वदर्शी विद्या (ज्ञान) चारित्र रूपम् जिन भाषित तं धर्मम् श्रयते । तदाज्ञापरिधौ सच मोक्षमार्गस्य आराधक एव

मान्यः !

भावानुवादः—(उत्तर पक्ष) सम्यक्त्वी व्यक्ति ही विद्या-ज्ञान और चारित्र रूप जिनभाषित धर्म को मोक्षमार्ग रूप में स्वीकार करता है। अतः वीतरागआज्ञा की परिधि में वही मोक्षमार्ग का आराधक माना जा सकता है।

**अज्ञानिमिथ्यात्विषु नैव विद्या, चारित्रधर्मस्य च सम्भवोऽस्ति।**
**सम्यक्त्वदर्शी पुरुषो हि वीतरागेणदिष्टस्य पदस्य गामी ॥१०॥**

अन्वयः—अज्ञानिमिथ्यात्विषु विद्या (ज्ञान) चारित्रधर्मस्य च सम्भवः न एव अस्ति। सम्यक्त्वदर्शी पुरुषोहि वीतरागेण दिष्टस्य पदस्य गामी (भवति)।

भावानुवादः—अज्ञानिमिथ्यादृष्टि में ज्ञान एव चारित्र धर्म की स्थिति सम्भव ही नहीं है, अतः सम्यक्दृष्टि पुरुष ही वीतराग मार्ग का आराधक हो सकता है।

**अज्ञानमेवं च जहामि, बोधं समाश्रयेहं च तथैव मिथ्या।**
**विहाय, सम्यक्त्वमभिश्रयाम्मि, ह्यावश्यके सूत्रविधिः कृतोऽस्ति ॥११॥**

अन्वयः—अहम् अज्ञानम् एवम् जहामि। बोधम् च समाश्रये। तथा एव मिथ्या विहाय सम्यक्त्वम् अभिश्रयाभि। इतिहि आवश्यके सूत्रविधिः कृतः अस्ति।

भावानुवादः—आवश्यक सूत्र के विधानानुसार श्रमण यह प्रतिज्ञा करता है कि मैं अज्ञान का परित्याग करता हूं, ज्ञान को ग्रहण करता हूं। मिथ्यात्व का परित्याग करता हू, सम्यक्त्व को ग्रहण करता हूं।

**तपोऽप्यहिंसा नहि विद्यते च, मिथ्यात्वदृष्टौ पुरुषे कदापि।**
**मोक्षस्य मार्गस्य तु देशसेविप्ररूपणं तस्य सहागमं नो ॥१२॥**

अन्वयः—मिथ्यात्वदृष्टौ पुरुषे कदापि तपः अहिंसा च अपि नहि विद्यते। तस्य मोक्षस्य मार्गस्य तु देशसेविप्ररूपणम् सहागमं नो (आगमेन सह)।

भावानुवादः—मिथ्यादृष्टि व्यक्ति वीतराग आज्ञानिदेशित तप एव अहिंसा नहीं

करते हैं। अतः उसके मोक्ष मार्ग के देशाराधक होने की प्ररूपणा आगम से विरुद्ध है।

**नो निर्जराकृत्यमियर्ति वीतरागस्य वाच व्यवसायदक्षाम्।**
**कदाप्यहो संवरहीनमेतत् प्रमाणमत्रागमसूत्रमास्ते ॥१३॥**

अन्वयः—(सिद्धान्तवादी) सवरहीनम् एतत् निर्जराकृत्यम्वीतरागस्य व्यवसाय-दक्षाम् वाचम् अहो कदापि नो इर्यात। अत्र विषये आगमसूत्रम् प्रमाणम् आस्ते।

भावानुवादः– संवररहित निर्जरा करने वाला पुरुष मोक्षमार्ग का आराधक नही होता है। अतः उसके कर्ता मिथ्यादृष्टि को वीतराग की आज्ञा . में मान कर मोक्षमार्ग का देशाराधक बताना आगम प्रमाण के विरुद्ध है।

**आहारसीमां समुपागतोऽपि, बालस्तपस्वी ननु तापसोऽपि।**
**पित्रोः सुसेवी परितो विधानैरज्ञानयुक्तो लभते न मोक्षम् ॥१४॥**

अन्वयः—(सिद्धान्त वादी) आहारसीमाम् समुपागतः अपि बालः तपस्वी ननु तापसः अपि परितो विधानैः पित्रोः सुसेवी च (यदि) अज्ञानयुक्तः अस्ति स मोक्षम् न लभते।

भावानुवादः—अत्यल्प आहार वाला बाल तपस्वी, तापस, विधिपूर्वक माता–पिता की सेवा करने वाला, अथवा और कोई साधक यदि अज्ञानयुक्त है, तो वे मुक्त नही हो सकते है।

**मिथ्यात्वदर्शीच निजक्रियाभिः, भवं स्वकीयं सुमितं करोति।**
**क्षयन्ति कर्माणि च तस्य तथ्यम्, निदर्शनं पूर्वभवस्थमेघः ॥१५॥**

अन्वयः—(पूर्वपक्षः तेरह पन्थः) मिथ्यात्वदर्शी च निजक्रियाभिः स्वकीयम् भवम् सुमितं करोति। तस्य च कर्माणि क्षयन्ति इति तथ्यम् अस्ति। अत्र विषये पूर्वभवस्थमेघः निदर्शनम् (अस्ति)!

भावानुवादः—(पूर्वपक्ष तेरापन्थी) मिथ्यादर्शी अपनी क्रियाओं से अपने भव

को परिमत करता है। उसके कर्म नष्ट होते है। यह सत्य है, इस विषय मे मेघकुमार के पूव भव का दृष्टान्त है।

**हस्तिस्वरूपो ननु मेघजीवः, प्रसंगतः पूर्वभवे बभूव।**
**शशादिजीवप्रतिपालकाले सम्यक्त्वदृष्टिः स विशेषतस्तु ॥१६॥**

अन्वयः—(सिद्धान्त पक्षः) मेघजीवः प्रसंगतः पूर्वभवे ननु हस्तिस्वरूपो बभूव। स शशादिजीवप्रतिपालकाले विशेषतः सम्यक्त्वदृष्टिः तु (आसीत्)।

भावानुवादः—(सिद्धान्त पक्ष) मेघ का जीव प्रसंग से पूर्वभव में हाथी के रूप में था। वह शशादि जीवों की रक्षा के समय में विशेष रूप से सम्यक् दृष्टि था, मिथ्या दृष्टि नही।

**मिथ्यात्वकालस्य समस्तकार्यम्, संवन्दनाद्यं न जिनोक्तिमार्गे।**
**सम्यक्त्वचारित्र्यकृतेः कलापात् विमुक्तिमार्गस्य च सिद्धिरिष्टा ॥१७॥**

अन्वयः—(सिद्धान्त वादी) मिथ्यात्व कालस्य संवन्दनाद्यं समस्तकार्यम् जिनोक्ति-मार्गे न। सम्यक्त्व चारित्रकृतेः कलापात् विमुक्तिमार्गस्य च सिद्धिः इष्टा।

भावानुवादः—(सिद्धान्त वादी) मिथ्यात्वकाल का वन्दनादि समस्तकार्य जिनोक्त मार्ग में नहीं है। क्योंकि सम्यक् चारित्रादि कार्यकलापों से ही मोक्षमार्ग की सिद्धि होती है।

**मिथ्यात्वदर्शी च करोति कार्यम् क्षमादिकं भद्रमयं निदिष्टम्।**
**स सुव्रतो कथ्यत एव मृत्वा, मनुष्ययोनौ जनिरेव तस्य ॥१८॥**

अन्वयः—(पूर्वपक्षः) मिथ्यात्व दर्शी च (यत्) क्षमादिकं कार्यं करोति। तत् सर्वम् भद्रमयं निदिष्टम्। स सुव्रती कथ्यत एव। मृत्वा तस्य मनुष्ययोनौ जनिः एव।

भावानुवादः—(पूर्वपक्ष तेरापन्थी) मिथ्यात्वी व्यक्ति जो कुछ क्षमादिकाय आचरण करता है, वह सब कल्याणप्रद कहे गये है। अतः वे सुव्रती कहलाते हैं। और मरने के बाद उनका जन्म मनुष्ययोनि में होता है।

**गाथानुसारेण कृतोपि नार्थः, टीकाविरुद्धोपि विशेषतश्च ।**
**सम्यक्त्वदृष्टि र्ननु सुव्रतो ना व्रतैस्तथा द्वादशभिश्चयुक्तः ॥१९॥**

अन्वयः—(सिद्धान्तवादी) भवता गाथानुसोरण अर्थः अपि न कृतः । विशेषतः च स अर्थः टीका विरुद्धः अपि अस्ति । सुव्रत. ना (मनुष्यः) ननु सम्यक्त्व दृष्टिः (अस्ति) । तथा च द्वादशभिः व्रतैः च युक्तः (भवति) ।

भावानुवादः—(सिद्धान्तपक्ष) यह उपर्युक्त विवेचन आगम के गलत अर्थ का परिणाम है । साथ ही यह अर्थ टीका से भी विरुद्ध जाता है । सुव्रती मनुष्य निश्चित सम्यक्त्वी होता है । और वही बारह व्रतों का उपासक होता है ।

**अज्ञानयुक्त च तपोऽस्ति धर्मे, तच्छुद्धरूपं जिनदेशनायाम् ।**
**गाथाविरुद्धं वचनं तदीयम्, तादृक् तपोनैव कदापि धर्मे ॥२०॥**

अन्वयः—(पूर्वपक्षः) अज्ञानयुक्तं च तपः धर्मे अस्ति । तत् शुद्धरूपम् जिनदेशनायाम् (अस्ति) ।

अन्वयः—(सिद्धान्त वादी) तदीयम् (त्वदीयम्) वचनम् गाथाविरुद्धम् (अस्ति) । तादृश (अज्ञान) तपः कदापि धर्मे न एव ।

भावानुवादः—(पूर्व पक्ष) अज्ञानयुक्त तप भी धर्म में है । वह शुद्ध रूप से जिन-देशना में है । (सिद्धान्त वादीः) आपका यह कथन गाथा के सर्वथा विरुद्ध है । क्योंकि वैसे अज्ञान तप कभी धर्म में नहीं हो सकता है ।

**मिथ्यात्वदर्शी च करोति कार्यम्, पारेभवं वन्धनकारणाय ।**
**अज्ञानपूर्वं विहितं यतस्तत्, तदन्यथा मोक्षविधानदक्षम् ॥२१॥**

अन्वयः—(सिद्धान्त वादी) मिथ्यात्विदानादि समस्त कार्यम् पारेभवं वन्धनकारणाय (अस्ति) । यतः तत् अज्ञानपूर्वम् विहितम् तदन्यथा ज्ञानपूर्वम् कार्यम् यत् मोक्षविधानदक्षम् (भवति) ।

भावानुवादः—(सिद्धान्तवादी) मिथ्यात्वी का समस्त दानादिकार्य परभव में बन्धन का कारण होता है, क्योंकि वह अज्ञानपूर्वक क्रिया गया है । उससे

भिन्न ज्ञानपूर्वक किया गया कार्य मोक्षसम्पादन में सहयोगी होता है ।

**मिथ्यात्विनां चापि विशुद्धभावो यदुक्तमेतत् वचनं न सत्यम् ।**
**श्रद्धा च सम्यक्न कदापि तेषाम् पदार्थबोधो विपरीत एव ।।२२।।**

अन्वयः—(सिद्धान्त वादी) मिथ्यात्विनाम् "विशुद्ध भाव": च अपि एतत् वचनं यदुक्तम् तत् सत्यम् न । तेषाम् च श्रद्धा कदापि सम्यक् न । तस्य पदार्थबोधः अपि विपरीत एव ।

भावानुवादः—(सिद्धान्त वादी) 'मिथ्यात्वियों का विशुद्ध भाव होता है," यह आपका कथन सत्य नहीं है ; उनकी श्रद्धा कभी भी सम्यक् नही होती है । उनका पदार्थ विषयक ज्ञान भी विपरीत ही होता है ।

**ज्ञानं विभंगं बत वीतरागा, ज्ञांनेति किं बालतपश्च तत्र ।**
**प्रधान हेतुर्यदि वर्तते नो, तदप्रधानस्य कथैव केयम् ।।२३।।**

अन्वयः—(सिद्धान्तवादी) विभंगं ज्ञानम् बत वीतराज्ञाम् न एति । तत्र बाल तपः चकिम् ? यदि प्रधान हेतुः न वर्तते । तत् अप्रधानस्य इयम् कथा एव का ?

भावानुवादः—(सिद्धान्तवादी) जब विभग ज्ञान को वीतराग की आज्ञा में नहीं मानते । बाल तपस्या और उसके पूर्वोक्त गुणों को भी वीतराग की आज्ञा में नही मान सकते । क्योंकि जब सम्यक्त्व प्राप्ति का साक्षात् कारण विभंगज्ञान वीतराग की-आज्ञा में नही है । तब प्रकृतिभद्रता आदि गुण जो परम्परा में सम्यक्त्व के कारण है । आज्ञा में कैसे हो सकते हैं ?

**मिथ्यात्वदृष्टौ पुरुषे च लेश्या, शुक्ला, पर नैव जिनोक्तधर्मः ।**
**श्रुते चरित्रे ननु विद्यमाने, ध्यानं च धर्मस्य विबोधनीयम् ।।२४।।**

अन्वयः—(सिद्धान्तवादी) मिथ्यात्वदृष्टौ पुरुषे च शुक्ललेश्या परम् जिनोक्तधर्मः न एव (अस्ति) । श्रुते चरित्रे एव ननु विद्यमाने धर्मस्य ध्यानम् च विबोधनीयम् ।

भावानुवादः—(सिद्धान्तवादी) "प्रथमगुणस्थान मिथ्यादृष्टि पुरुष में शुक्ल लेश्या

तो पाई जाती है, परन्तु वीतराग भाषित धर्मध्यान नहीं पाया जाता है। वीतराग भाषित धर्मध्यान श्रुत और चरित्र धर्म के होने पर ही होता है। मिथ्यादृष्टि में श्रुत चारित्र धर्म नहीं होता है। अतः उसमें धर्मध्यान नहीं होता है।

भावेन युक्तं ननु वन्दनं तत्, आज्ञागतं विद्धि न दावरूपम्।
पूर्वं सुभव्येऽन्यदभव्यजीवे,सम्यक्त्वयुक्तो ननु मोक्षगामी ॥२५॥

अन्वयः—(सिद्धान्त वादी) भावेन युक्तम् ननुतत् वन्दनम् आज्ञागतम् विद्धि। न च द्रव्यरूपम् तत्। पूर्वम् (भावयुक्तं वन्दनम्) सुभव्ये जीवे (भवति)। अन्यत् (द्रव्यरूपवन्दनं) अभव्यजीवे (भवति)। यः सम्यक्त्वयुक्तो भवति स एव ननु मोक्षगामी (जायते)।

भावानुवादः—(सिद्धान्तवादी) आन्तरिक भाव भक्ति से किया जाने वाला भावयुक्त वन्दन नमस्कार भगवान की आज्ञा में है। भावशून्य द्रव्यवन्दन नही। भावयुक्त वन्दन भव्य जीवों में होता है। तथा द्रव्य वन्दन अभव्य में होता है। सम्यक्त्वयुक्त जीव ही मोक्षगामी हो सकता है।

कार्यं च प्राग्भावि भवस्य वीरः, प्रोचे शुभंव्यन्तरदेवतानाम्।
आज्ञागतं सिद्धमिदं च तस्य भद्रं तु मिथ्यात्विपराक्रमादि ॥२६॥

अन्वयः—(पूर्वपक्षः) वीरः व्यन्तरदेवतानाम् प्राग्भाविभवस्य च कार्यम् शुभम् प्रोचे। तस्य इदम् आज्ञागतम् सिद्धम्। तदा मिथ्यात्विपराक्रमादि तु भद्रम् एव (मान्यम्)।

भावानुवादः—(पूर्वपक्ष) जम्बूद्वीप प्रज्ञप्ति में भगवान महावीर ने व्यन्तर संज्ञक देवताओ के पूर्वभव कार्य को अच्छा कहा है। तव वह उनकी आज्ञा मे ही [illegible] होता है। तव तो मिथ्यात्वियों के पराक्रमादि भी अच्छे ही होंगे। तथा [illegible] भी आज्ञा में मानना ही चाहिये।

[illegible] च सिद्धमेतत्, प्राग्भावि कार्यस्य च व्यन्तराणाम्।
अर्हदाज्ञागतमस्ति सर्वम्, भद्रं न मिथ्यात्विपराक्रमादि ॥२७॥

अन्वयः—(सिद्धान्तवादी) व्यन्तराणाम् च प्राग् भाविकार्यस्य शुभाभिधानात् न च एतत् अर्हदाज्ञागतम् अस्ति इति सिद्धिम् (जायते)। तस्मात् (भवतोक्तम्) मिथ्यात्विपराक्रमादि भद्रम् न।

भावानुवादः—(सिद्धान्तवादी) "व्यन्तरों के प्राग् भावि कार्य आपके द्वारा शुभ माने गये है। किन्तु इससे वे भगवदाज्ञा में है, ऐसा सिद्ध नही होता है। इसलिए स्कन्दक सन्यासी का उदाहरण देकर मिथ्यादृष्टि के मिथ्यात्व युक्त द्रव्य-वन्दन नमस्कार को जिनाज्ञा में सिद्ध करना आगम सम्मत नहीं है। क्योंकि मिथ्यात्वी का कोई भी पदाक्रम कल्याणप्रद नही है।

**तेरापथस्यात्र तथा मतस्य, साधोर्विभिन्नं सकलं कुपात्रम्।**
**पित्रोश्च सेवापि तथा गुरूणा, मेकान्तपापं मतमेवमास्ते ॥२८॥**

अन्वयः (पूर्वपक्षः) अत्र विषये तेरापथस्य तथा मतस्य (तथाकथितसम्प्रदायस्य) साधोः विभिन्नम् सकल कुपात्रम् (अस्ति)। तथा च पित्रोः गुरूणा च सेवा अपि एवम् एकान्तपापम् मतम् आस्ते।

भावानुवादः—(पूर्वपक्ष) का कथन है—"तेरापन्थ के साधुओं से भिन्न सभी साधु कुपात्र हैं। उन्हें गोचरी देने में पाप है। और माता-पिता तथा अन्य गुरुओं की सेवा भी एकान्त पाप है।

**न मान्यतेयं मतिमद्भिरिष्टा, सर्व कुपात्रं न भवेत् कदाचिद्।**
**पित्रोश्च सेवा करणेन भक्त्या, स्वर्गाप्तिराज्ञापरिपालनेन ॥२९॥**

अन्वयः—(सिद्धान्तवादी) मतिमद्भिः इयम् मान्यता इष्टा न। सर्वम् कुपात्रम् कदाचित् न भवेत्। भक्तया पित्रोः च सेवाकरणेन आज्ञापालनेन च स्वर्गाप्तिः (भवति)।

भावानुवादः—(सिद्धान्तवादी) विपक्षियो की पूर्वोक्त मान्यता बुद्धिमानों के लिए युक्तिसंगत नहीं है। क्योंकि तेरहपन्थी मान्यता से सभी भिन्न साधु कुपात्र नहीं हो सकते हैं। भक्तिपूर्वक माता-पिता की सेवा करने से उनकी आज्ञा का पालन करने से स्वर्ग की प्राप्ति होती है।

**साधोः पृथक् श्रावक एवमेव, न्यदेशि शास्त्रे गुणरत्नपात्रम् ।**
**अन्ये विशिष्टाः यदि साधवस्ते, कथं कुपात्रत्वमवश्यमेषाम् ॥३०॥**

अन्वयः—(सिद्धान्तवादी) साधोः पृथक् शास्त्रे श्रावकः अपि एवम् एव गुणरत्न-पात्रम् न्यदेशि । यदि अन्ये विशिष्टाः ते साधवः सन्ति । तदा एषां कुपात्रत्वम् अवश्यम् कथम् ?

भावानुवादः—(सिद्धान्तवादी) शास्त्रों में साधुओं से पृथक् श्रावकों को भी गुण-रत्नपात्र माना गया है । यदि अन्य सम्प्रदाय के साधु साधुता से युक्त हैं, विशिष्ट है तो उन्हे कुपात्र कैसे कहा जा सकता है ?

**जीवेऽनुकम्पा सतत विधेया, दानस्वरूपं परिरक्षकं तत् ।**
**'एकान्तपापं" कथन न युक्तम्, त्रियोगभावैः सकलैरभीष्टा ॥३१॥**

अन्वयः—(सिद्धान्तवादी) जीवे अनुकम्पा सततं विधेया । तत् दानस्वरूपं परि-रक्षक भवति । तस्य एकान्तपापं कथनम् युक्तम् न । सा अनुकम्पा त्रियोगभावैः सकलैः अभीष्टा (मता) ।

भावानुवादः—(सिद्धान्तवादी) जीवो पर सदा अनुकम्पा करनी चाहिये । दान करना प्रकारान्तर से जीवों की रक्षा है । दया दान को एकान्तपाप नही कहा जा सकता । उसे तो तीन योग तोन करण से पालन करना चाहिये ।

**शास्त्रेऽनुकम्पा ननु दानरूपा, पुण्यस्य वन्धस्य निदानमुक्ता ।**
**प्रोच्चासनासीनसमग्रसाधु, स्तत्त्यागदिष्टिं न कदापि कुर्यात् ॥३२॥**

अन्वयः—(सिद्धान्तवादी) शास्त्रे दान रूपा अनुकम्पा ननु पुण्यस्य वन्धस्य निदा-नम् उक्ता । प्रोच्चासनासीनसमग्रसाधुः (भवति) । तत्त्यागदिष्टिं न कदापि कुर्यात् ।

भावानुवादः—(सिद्धान्तवादी) शास्त्रों में दानरूप अनुकम्पा निश्चय पुण्यवन्ध का कारण कही गई है । साधु तो समग्र उच्च गुणासन पर आसीन होते हैं । वे दयादान के त्याग का आदेश कैसे कर सकते हैं ।

**अधर्मदानस्य निषेधनेन धर्मस्य लाभो भवतीति धेयम् ।**
**बन्धोऽन्तरायस्य न वर्तते सः, विधेयमेतत्सकलैर्विधेयम् ।।३३।।**

अन्वयः—अधर्मदानस्य निषेधनेन धर्मस्य लाभो भवति इति धेयम् । अन्तरायस्य स बन्धः न वर्तते । अतः एतत् विधेयम् (विधातुं योग्य कर्म) सकलैः विधेयम् ।

भावानुवाद:—(सिद्धान्तवादी) अधर्म दान के निषेध से धर्म का लाभ होता है। ऐसा मानना चाहिये । किन्तु जिससे अन्तराय कर्म का बन्धन न हो । सर्वथा विधेय दानादि कर्म अवश्य ही करना चाहिये ।

**अधर्मकोटौ न दया न दानम्, परस्य हिंसादिनिषेधनं च ।**
**पुण्यस्य कार्यस्य च बाधनेन, स्यादन्तरायो नतु पापकृत्ये ।।३४।।**

अन्वय:—(सिद्धान्तवादी) अधर्मकोटौ दया न दानम् न परस्य हिंसादि निषेधन च (अस्ति) । पुण्यस्य कार्यस्य च बाधनेन अन्तराय: स्यात् । पापकृत्ये बाधनेन (अन्तराय:) न तु (भवति) ।

भावानुवाद:—(सिद्धान्तवादी) दया, दान पर की हिंसा निषेध, अधर्म कोटि में नही है । पुण्य कार्यो मे बाधा उपस्थापित करने से अन्तराय होता है । पापकृत्य के निषेध में अन्तराय नहीं होता है ।

**दीनेषु हीनेषु दयां विधाय, दानप्रदान ननु धर्म एष ।**
**आनन्दनाम्ना वत साधकेन, कृतो निषेधो न दयां विधातुम् ।।३५।।**

अन्वय:—(सिद्धान्तवादी) दीनेषु हीनेषु दया विधाय दानप्रदानम् ननु एषः धर्मः (अस्ति) । वत आनन्दनाम्ना साधकेन दया विधातुम् निषेध: न कृतः ।

भावानुवाद:—(सिद्धान्तवादी) दीन हीनों पर दया कर दान देना धर्म है । प्रसन्नता है कि आनन्द नामक श्रावक ने दया करने का कभी निषेध नहीं किया था । किन्तु उसने अन्य यूथिकों को धर्मगुरुबुद्धि से दान न देने का अभिग्रह किया था । अनुकम्पा बुद्धि से देने का नहीं । अतः आनन्द श्रावक का नाम लेकर अनुकम्पा दान का निषेध करना आगम विरुद्ध है ।

**गुरुत्वमत्या च निषेधरूपम्, तीर्थान्तरीयस्य कृते तु दानम् ।**
**नैवानुकम्पाकरणस्य वुद्धया, शास्त्रस्य बोध्यं सुविधानतत्त्वम् ।।३६।।**

अन्वयः—(सिद्धान्तवादी) गुरुत्वबुद्धया तीर्थान्तिरीयस्य कृते तु दानम् निषेधरूपम् (अस्ति) । अनुकम्पाकरणस्य बुद्धया न एव । इदम् शास्त्रस्य सुविधानतत्त्वम् बोध्यम् ।

भावानुवादः—(सिद्धान्तवादी) गुरुत्वबुद्धि से जैनेतर तीर्थान्तिरीयों के लिए दान का निषेध किया गया है । अनुकम्पा करने की बुद्धि से नहीं । यह शास्त्र का सुन्दरसुवोध विधानतत्त्व है ।

**सम्यक्त्वयुक्तस्य व्रते स्थितस्य, प्रदेशिराजस्य सुदानशालाम् ।**
**कृत्वानुकम्पायुतदानकस्य, लेखोऽस्ति शास्त्रेषु विवेचनीयम ।।३७।।**

अन्वयः—(सिद्धान्तवादी) शास्त्रेषु सम्यक्त्वयुक्तस्य व्रतेस्थितस्य प्रदेशिराजस्य सुदानशालाम् कृत्वा अनुकम्पायुतदानस्य लेखः अस्ति । इति विवेचनीयम् ।

भावानुवादः—(सिद्धान्तवादी) राजप्रश्नीय सूत्र में सम्यक्त्वयुक्त द्वादश व्रतधारी-प्रदेशी राजा के द्वारा द्वादश व्रत स्वीकार करने के पश्चात् दीन-हीन दुःखी जीवों के लिए दान शाला खोलकर उन्हें अनुकम्पा दान देने का लेख है । यह अभिग्रहधारी द्वादशव्रती श्रावक के अनुकम्पा दान का ज्वलन्त उदाहरण है । ऐसा विवेचन स्पष्ट है ।

**हिंसाप्रधानामितमांसभुग्भ्यो, दानं विडालव्रतिब्राह्मणेभ्यः ।**
**कृतं निषिद्धं च गुरुत्वबुद्धया, चार्द्रेण दीनाय जनाय नैव ।।३८।।**

अन्वयः—(सिद्धान्तवादी) आर्द्रेण मुनिना हिंसाप्रधानामितमांसभुग्भ्यः विडालव्रति ब्राह्मणेभ्यः गुरुत्व बुद्धया दान निषिद्धं कृतम् । दीनाय जनाय न एव (तस्मात्दानखण्डनं न युक्तम्) ।

भावानुवादः—(सिद्धान्तवादी) आर्द्रमुनि ने हिंसाप्रधान अमितमांसाहारी, विडाल व्रती ब्राह्मणों के लिए गुरुत्वबुद्धि से दान का निषेध किया था । दीन-हीन व्यक्तियों के लिए दिये जाने वाले दान के लिए नहीं । इसलिए पूर्वोक्त मुनि के नाम से दान का खण्डन करना युक्त नहीं है ।

**दानेषु सर्वेषु दशात्मकेषु, दानं च धर्मस्य विहाय सर्वम् ।**
**अधर्मदानं कथनीयमास्तयेकान्तपाप च तदावबोध्यम् ।।३९।।**

अन्वयः (पूर्व पक्ष) दशात्मकेषु सर्वेषुदानेषु धर्मस्य दानं विहाय सर्वम् अधर्म-दानम् कथनीयम् आस्ते । तत् एकान्तपापं च अवबोध्यम् ।

भावानुवादः—(पूर्वपक्ष) १० प्रकार से सभी दानों मे धर्म दान को छोड़कर सभी अधर्म दान कहने चाहिये । और उन्हें एकान्त पाप भी मानना चाहिये । दश दान ये है । १. अनुकम्पादान २. संग्रहदान ३. अभय दान ४. कारुण्य दान ५. लज्जादान ६. गौरव दान ७. अधर्म दान ८. धर्मदान ९. करिष्यति दान तथा १०. कृतदान ।

**दशापि दानानि विलक्षणानि, परस्परं भिन्नसरूपकाणि ।**
**एक विहायान्यनिदर्शनं नो, अधर्मपापे वरणीयमास्ताम् ।।४०।।**

अन्वयः—(सिद्धान्तवादी) दश अपि विलक्षणानि परस्परं भिन्नसरूपकाणि दानानि (सन्ति) । एकम् विहाय अधर्म पापे अन्य निदर्शनम् करणीयम् नो आस्ताम् ।

भावानुवादः—(सिद्धान्तवादी) दशों दान परस्पर विलक्षण स्वरूप वाले कहे गये हैं । उनमें से एक धर्मदान को छोड़कर औरो को अधर्म पाप बताना उचित नहीं है । वस्तुतः दस दानों के गुण निष्पन्न नाम रखे गये हैं । अतः धर्म दान के अतिरिक्त शेष नव दोनों को अधर्म दान कहना आगम से सर्वथा विरुद्ध है ।

**ग्रामस्य राष्ट्रस्य च राजधान्याः निर्माय धर्मं सकलां व्यवस्थाम् ।**
**प्रकुर्वते येस्थविराः महान्त एकान्तपापाः नहि ते विवेच्याः ।।४१।।**

अन्वयः—(सिद्धान्तवादी) ये महान्तः (अन्ये) स्थविराः ग्रामस्य राष्ट्रस्य च राजधान्याः धर्म निर्माय सकलां व्यवस्थां प्रकुर्वते । ते एकान्तपापाः नहि विवेच्याः ।

भावानुवादः—(सिद्धान्तवादी) जो महान् स्थविर ग्राम नगर राष्ट्र के धर्म का निर्माण कर सम्पूर्ण व्यवस्था को नियन्त्रित करते है । उन्हे एकान्त पाप नहीं समझना चाहिये । ये लौकिक धर्म होने पर भी परम्परा से मोक्षमार्ग में सहा-

यक होते हैं । इन्हे एकान्तपाप कहना अनुचित है । जैसा कि विपक्षी मानते हैं ।

**कुक्षेत्रयोप्तं ननु बीजमेकम् प्ररोहते नैव कदापि तथ्यम् ।**
**तथैव साधोरतिरिक्तपात्रे दत्तं न पुण्यं प्रकरोति दानम् ॥४२॥**

अन्वयः—(पूर्वपक्षः) ननु एकम् बीजम् कुक्षेत्रे ओप्तम् कदापि न एव प्ररोहते इति तथ्यम् (अस्ति) । तथा एव साधोः अतिरिक्तपात्रे दत्तम् दानम् पुण्यम् न करोति ।

भावानुवादः—(पूर्वपक्ष) जैसे बीज कुक्षेत्र में बोने पर कभी अंकुरित नही होता है । यह सत्य है । वैसे तेरापन्थी साधुओं से अतिरिक्त साधुओं को दिया गया दान पुण्य नही होता है ।

**वेश्याविटस्सभ्यजनान्विधातुम्, सन्मार्गनिष्ठान् प्रकरोतु दानम् ।**
**इत्थं च साधोरतिरिक्तपात्रे दत्तं च दान प्रकरोति पुण्यम् ॥४३॥**

अन्वयः - (सिद्धान्तवादीः) वेश्या विटस्सभ्य जनान् सन्मार्गनिष्ठान् विधातुम् दानं प्रकरोतु । इयमपि प्रवचन प्रभावना अस्ति । इत्थं च सावोः अतिरिक्तपात्रे दत्त च दानम् पुण्यम् प्रकरोति

भावानुवादः - (सिद्धान्तवादी) वेश्या विट चोरों को सम्मार्ग पर लाने के लिए किया गया दान पाप नही होता है । वह प्रवचन प्रभावना है । इसी प्रकार तेरापन्थी साधुओं के अतिरिक्त पात्र मे दिया गया दान पुण्य बन्ध करता है, इससे एकान्त पाप नही होता है ।

**क्षेत्राणि पापस्य भवन्ति विप्रास्तेभ्योऽपि दानं न विधेयमास्ते ।**
**तथा च साधोरतिरिक्तपात्रे नैवास्ति दानस्य च कापि वार्ता ॥४४॥**

अन्वयः—(पूर्वपक्ष) विप्राः पापन्य क्षेत्राणि भवन्ति । तेभ्यः अपि दानम् न विधेयम् आस्ते । तथा साधोः अतिरिरत पात्रेदानस्य च कापि वार्ता न एव अस्ति ।

भावानुवाद:—(पूर्वपक्ष) ब्राह्मण भी पाप के क्षेत्र होते हैं। उनको भी दान देना विधेय नही है। तब तो साधुओं से अतिरिक्त पात्र में दान देने की कोई बात ही नही हो सकती है।

**सर्वेऽपिविप्राः नहि पापमाप्ताः, क्रोधादिमायासहितास्तथैव ।**
**सदैव साधोरतिरिक्तशुद्धे, दानं प्रदेयं महिते च पात्रे ॥४५॥**

अन्वय:—(सिद्धान्तपक्ष) सर्वेपि विप्रा. पापम् आप्ता नहि। क्रोधादिमायासहिता। ते तथा एव (पापा:) सदा एव साधो: अतिरिक्तशुद्धेमहिते च पात्रे दानं प्रदेयम् एव।

भावानुवाद:—सभी ब्राह्मण पापी नहीं होते हैं। क्रोध मायादि युक्त विप्र पापी होते हैं। इसलिए सदा ही साधु से अतिरिक्त शुद्ध प्रशंसित पूजित पात्र में दान अवश्य ही देना चाहिये।

**साधोर्यथा सातकरः सुरेन्द्रः, मतस्तथा श्रावकयूथकस्य ।**
**सजायते तेन च तस्य पूर्णः धर्मस्तु पुण्यं विपुलं यथेष्टम् ॥४६॥**

अन्वय:—(सिद्धान्तपक्ष) यथा सुरेन्द्रः साधोः सातकर: मतः। तथा श्रावकयूथकस्य अपि मत:। तेन चतस्य पूर्ण: धर्म: यथेष्टं विपुलं पुण्यं च संजायते।

भावानुवाद:—(सिद्धान्तवादी) जैसे सनतकुमार देवेन्द्र को साधु साध्वी के लिए सुख साता पहुंचाने वाला माना गया है। वैसे ही श्रावक-श्राविकाओं के लिए समझना चाहिये। हित सुख तथा पथ्य देने से पूर्ण धर्म और पुण्य होता है। उनका वैसा करना धर्म का कार्य है। पाप का नही, इससे सिद्ध होता है कि साता पहुंचाना शुभ कार्य है।

**द्वेषेण रागेण च बन्धसिद्धिः, नैतन्निदानं विरतिः कदाचित् ।**
**संजायते मोक्षपदं तयैव कषाययोगोदयतश्च बन्धः ॥४७॥**

अन्वय:—(सिद्धान्तवादी) द्वेषेण रागेण च बन्धसिद्धि: (भवति)। विरतिः एतन्न कदाचित् न तया (विरत्या) एव मोक्षपदं संजायते। कषाययोगोदयतः च बन्धः (भवति)।

भावानुवादः—(सिद्धान्तवादी) राग और द्वेष से बन्ध होता है। विरति बन्ध का कारण नही है। विरति से मोक्षपद प्राप्त होता है। कषाय तथा योगों के उदय से वन्ध होता है।

गृहस्थदानं भवबन्धहेतुः, तदानुमोदोऽपि विवर्जनीयः।
गृही च दद्याद् गृहिणेऽनुकम्पा, दानं तथैकान्तत एव पापम्॥४८॥

अन्वयः - (पूर्वपक्षः) गृहस्थदानं भवबंध हेतुः (भवति)। तदानुमोदः अपि विवर्जनीयः। गृही च गृहिणे अनुकम्पादानं दद्यात्तथा तत् एकान्त पापम् एव अस्ति।

भावानुवादः—(पूर्वपक्ष) गृहस्थ को दिया गया दान भववन्धन का कारण है। इसलिए उसकी अनुमोदना भी नहीं करनी चाहिए। गृहस्थ गृहस्थ के लिए यदि अनुकम्पा दान दे, तो वह सब एकान्तपाप ही है।

गाथानुसारं सुगृहस्थदानम् संसारचक्रस्य च नैव हेतुः।
गृहीविदध्यात् गृहिणोऽनुकम्पा, दानं न पापं गणिनोऽनुमोदः॥४९॥

अन्वयः—(सिद्धान्तपक्ष) गाथानुसारं सुगृहस्थदानम् संसारचक्रस्य च हेतुः न एव। गृही गृहिणे अनुकम्पादानं विदध्यात्। तत् पापम् न। तथा गणिनः अनुमोदः नपापम् (अस्ति)।

भावानुवादः—(सिद्धान्तपक्ष) शास्त्रोक्त गाथा के अनुसार गृहस्थ दान संसार परिभ्रमण का कारण नहीं होता है। गृही गृही के लिए अनुकम्पा दान करे तो, वह पाप नहीं है। तथा उसका साधु यदि अनुमोदन करे तो भी इसमें प्रायश्चित्त नहीं कहा है।

असाधवे दान परम्परा च, नैकान्तपापं भवतीह पुण्यम्।
यत्रानुमोदं कुरुते न साधुः, तत्रापि नैकान्तत एव पापम्॥५०॥

अन्वयः—(सिद्धान्तपक्ष) इह असाधवे दानपरम्परा न एकान्तपापम् न किन्तु पुण्यम् भवति। साधुः यत्र अनुमोदं न कुरुते तत्रापि एकान्ततः पापम् एव न।

भावानुवादः—साधु से अतिरिक्त मनुष्यों को दान देना एकान्त पाप नहीं है, किन्तु पुण्य है। साधु जिसका अनुमोदन नहीं करते उसको एकान्त पाप बताना मिथ्या है। कई कार्य ऐसे होते हैं जो साधु नही करते गृहस्थ करता है, तब भी उसके करने मे एकान्त पाप नहीं होता है।

**दानस्य सम्मानविधानतश्च भक्त्यापि सेवाकरणेन सम्यक्।**
**शुभंफलं जायत एव नित्यम्, प्रज्ञप्तिसूत्रस्य निदानमत्र ।५१।**

अन्वयः—(सिद्धान्त पक्षः) दानस्य सम्मान विधानतः भक्तयापि सेवाकरणेन च सम्यक् शुभं फलं नित्यम् जायते एव। अत्र भगवती प्रज्ञप्ति सूत्रस्य निदानम् अस्ति।

भावानुवादः—(सिद्धान्तवादी) श्रावकों को दान देने से, उनके सम्मान विधान से, उनकी भक्ति से, तथा सम्यक् सेवा करने से सदा शुभफल प्राप्त होता है। इस विषय में भगवती सूत्र का प्रमाण है।

**दानं न पापं प्रतिमाधराय, सर्वस्य पापस्य विवर्जकाय।**
**साधोः समानाय च पावकाय, सुपात्ररूपाय जगद्धिताय ।।५२।।**

अन्वयः—(सिद्धान्त पक्षः) प्रतिमाधराय सर्वस्य पापस्य विवर्जनाय, साधोः समानाय पावकाय, सुपात्ररूपाय, जगत्हिताय दानम् पापम् न।

भावानुवादः—(सिद्धान्तपक्ष) ग्यारहवी प्रतिमा को धारण करने वाला श्रावक अठारह पापो के सम्पूर्ण रूप से त्यागी, दस विधयति धर्म का अनुष्ठान करने वाले साधु के सदृश होता है। वह पवित्रात्मा एव सुपात्र है, संसार का कल्याणकारक है। उसे दान देना पाप नहीं है।

**देशेन वै संयमपालनार्थम्, श्राद्धो विधत्ते मनसा च धर्मम्।**
**वाचार्हत. साधुजनस्य कीर्तिम्, कार्यं कृतं सुप्रणिधानमेव ।।५३।।**

अन्वयः—(सिद्धान्त पक्षः) श्राद्धः संयमपालनार्थम् देशेन वै मनसा च धर्मम् वाचा च अर्हतः साधुजनस्य च कीर्तिम् विधत्ते (श्रावकेणापि) कृतं कार्यम् सुप्रणिधानम् एव।

भावानुवादः—(सिद्धान्तवादी) श्रावक अपने देश संयम का पालन करने हेतु मन से धर्म ध्यान ध्याता है । वचन से अर्हन्त एवं साधुओं का गुणानुवाद करता है। शरीर से साधु का मान सम्मान करता है, उसे दान देता है और उपकरण से जीवरक्षादि शुभकार्य करता है । उसके ये सब व्यापार सुप्रणिधान ही है, दुष्प्रणिधान नही है ।

साधोर्यथा धर्मसमस्तवस्तु, नैकान्तपापं समजीवरक्षम् ।
श्राद्धोपि तत्सदृशमेव धत्ते, प्रमार्जनीं रक्षितुमेव जीवान् ।।५४।।

अन्वयः—(सिद्धान्त पक्षः) साधोः यथा समजीवरक्षम् धर्मसमस्तवस्तु एकान्त पापम् न । तथा एव श्राद्धः अपि तत्सदृशम् एव जीवान् रक्षितुम् एव प्रमार्जनीं धत्ते ।

भावानुवादः—(सिद्धान्तपक्षः) जैसे साधु को जीवों की रक्षा करने वाली धर्म सम्बन्धी सम्पूर्ण वस्तुएं एकान्त पाप मे नहीं होती है । ऐसे ही साधु के समान श्रावक भी यदि जीवों के रक्षार्थ प्रमार्जनी रखता है तो उसे शरीर रक्षा का साधन मानकर एकान्त पाप में मानना भयकर भूल है ।

षट्काय जीवस्य च रक्षणार्थम्, नो देशनास्ते ध्रुवधर्ममध्ये ।
कुर्वन्त इत्थ भ्रममेवमाप्ताः, पापस्य कार्यं सकलंहि तेषाम् ।।५५।।

अन्वयः—(पूर्व पक्षः) षट्कायजीवस्य च रक्षणार्थम् देशनाध्रुवमध्ये नो आस्ते । इत्थं कुर्वन्तः ते भ्रमम् एवम् आप्ताः । तेषाम्हि सकलं कार्यम् पापस्य एव (बोध्यम्) ।

भावानुवादः—(पूर्वपक्षः) षट्काय जीवों की रक्षा के लिए देशना देना निश्चय ही धर्म नहीं है । छः काय के जीवों के घर में शान्ति करने के लिए जो उपदेश देते है । वे जैनधर्म के रहस्य को नहीं समझते हैं । वे भूले हुए हैं । और उनके अशुभकर्म का उदय है ।

रक्षा तु दूरं ननु तावदास्ताम्, नो मारयेत्युक्तिरपीह पापम् ।
[illegible]दिनिवृत्तये सा, सदेशना शास्त्रनिदर्शनेऽस्ति ।।५६।।

अन्वयः—(पूर्वपक्षः) ननु तावत् जीवरक्षा तु दूरम् आस्ताम् । इह नो मारय

इति उक्तिः अपि पापम् (अस्ति)। मांसादिर्हिंसाविनिवृत्तये सा संदेशना शास्त्रनिदर्शने अस्ति।

भावानुवादः—(पूर्वपक्षः) जीवों की रक्षा करना तो दूर की बात है। यहा तो तेरहपन्थ मे मत मार यह कहना भी एकान्त पाप है। उनके मतानुसार साधु कसाई के हाथ से मारे जाते हुए बकरे की प्राणरक्षा के लिए उसे नहीं मारने का उपदेश नहीं देते, किन्तु कसाई को हिंसा के पाप से बचाने के लिए उपदेश देते है।

**पूर्वं मतं शास्त्रसमन्वितं नो, रक्षाविधानं ननु धर्ममध्ये।**
**तदर्थमेतस्य जिनागमस्य, जातं सुनिर्माणमिदं निबोध्यम् ॥५७॥**

अन्वयः—(सिद्धान्त पक्षः) पूर्वम् रक्षाविधानं ननु धर्ममध्ये शास्त्रसमन्वित नो मतम्। तदर्थम् एतस्य जिनागमस्य इदम् सुनिर्माणंजातम् इति निबोध्यम्।

भावानुवादः- (सिद्धान्तवादी) जैनेतर शास्त्रों में जीवरक्षा विधान नियत रूप से धर्मकार्य में नही था। तथापि रक्षा को धर्म माना गया है; किन्तु जैनशास्त्रों में निर्दिष्ट होने के कारण जीवरक्षा विधि सर्वथा धर्म के अन्तर्गत है-ऐसा जानना चाहिये।

**नोमारयेत्युक्तिरपीह धर्मो, जीवांश्च रक्षेत् त्यजतोऽप्यसूंस्तान्।**
**संवर्तते सर्वमिदं निदेशे, जिनागमे रक्षणदानमास्ते ॥५८॥**

अन्वयः—(सिद्धान्त वादीः) इहनो मारय इति उक्तिः अपि धर्मः अस्ति। असून् त्यजतः तान् च जीवान् रक्षेत्। सर्वम् इदम् निदेशे संवर्तते। जिनागमे रक्षणदानम् आस्ते।

भावानुवादः—(सिद्धान्त पक्षः) "मत मारो" यह कथन भी धर्म ही है। "मरते हुए जीवों को बचाना चाहिए," । यह सब भगवान की आज्ञा मे है। स्थान स्थान पर जिनागमों में जीवरक्षा का सर्वथा विधान है।

**रक्षा विधेया ननु मृत्युपाशात्, धर्मो विशेषोऽस्ति परः परस्मात्।**
**भीतस्य दूरं च भयं विदध्यात्, सर्वेषु दानेष्वभयप्रदानम् ॥५९॥**

अन्वयः—(सिद्धान्तपक्षः) मृत्युपाशात् ननु रक्षा विधेया । अयं परः विशेषः धर्मः अस्ति । परस्मात् भीतस्य भयं दूरं च विदध्यात् । सर्वेषु दानेषु अभयप्रदानम् श्रेष्ठ (भवति) ।

भावानुवाद:—(सिद्धान्तवादी) मृत्युपाशआबद्ध जीवों की निश्चय ही रक्षा करनी चाहिये । यह उत्कृष्ट धर्म है । अन्य से भयभीत जीव का भय दूर करना चाहिये । सभी दानों में अभयदान श्रेष्ठदान है ।

धर्मोपदेशं स चकार जीवान्, संरक्षितुं तानपि मार्यमाणान् ।
त्रसैः समान् स्थावररूपपन्नात्, क्षेमंकरो देव जिनेन्द्र—वीरः ।।६०।।

अन्वयः—(सिद्धान्तपक्षः) सः क्षेमंकरः देवजिनेन्द्र वीरः मार्यमाणान् तान् अपि त्रसैः समान् स्थावररूपपन्नान् जीवान् संरक्षितुम् धर्मोपदेश चकार ।

भावानुवाद:—(सिद्धान्तवादी) क्षेमकर्त्ता, जिनेन्द्र भगवान् महावीर ने मारे जाते हुए त्रस के समान स्थावर जीवों की रक्षा के लिए भी धर्मोपदेशना दी थी ।

जीवस्य रक्षाकरणे न दोषः, तदन्यथा पापनिरूपणं स्यात् ।
विवाहकाले जिननेमिनाथः, चकार रक्षां मरणात् पशूनाम् ।।६१।।

अन्वयः—(सिद्धान्तपक्षः) जीवस्य रक्षाकरेण दोषः न । तदन्यथा पापनिरूपणं स्यात् । विवाहकाले जिननेमिनाथः मरणात् पशूनाम् रक्षाम् चकार ।

भावानुवाद:—(सिद्धान्तवादी) जीवों की रक्षा करने में दोष नही है । अपितु (जीव रक्षा न करने मे) पाप अवश्य है । भगवान् नेमिनाथ जी ने अपने विवाह के समय मरते हुए पशुओ की रक्षा की थी ।

ज्ञात्वा मनोभावनमेव भद्रम् रक्षामयं नेमिविभोर्नियन्ता ।
सर्वांश्च जीवानकरोद् विमुक्तान् लेभे ततो रत्नविभूषणादि ।।६२।।

अन्वयः—(सिद्धान्त पक्षः) नेमिविभोर्नियन्ता (तस्य) रक्षामयम् भद्रम् मनोभावनम् एव ज्ञात्वा सर्वान् च जीवान् विमुक्तान् अकरोत् । ततः रत्नविभूषणादि लेभे ।

भावानुवादः—(सिद्धान्तवादी) श्री नेमिनाथ जी के सारथी ने उनके जीवरक्षा के हार्दिक विचारों को भली-भांति जानकर सभी जीवों को बाड़े से मुक्त कर दिया। उसके बाद पारितोषिक रूप में भगवान् नेमिनाथ जी से रत्नों के आभूषण प्राप्त किये।

**यथैकजीवस्य च रक्षयापि, भवः परीतो भवतीति पक्षः।**
**तदानुकम्पाकरणे कथन्नो प्रभूतजीवेषु विवेचनीयम् ॥६३॥**

अन्वयः—(सिद्धान्तपक्षः) यथा एकजीवस्य रक्षया अपि भवः परीतः भवति इति पक्षः अस्ति। तथा प्रभूतजीवेषु तदानुकम्पाकरणे सकथं नेति विवेचनीयम्।

भावानुवादः—(सिद्धान्तवादी) एक जीव की रक्षा से भी भव परिमित होता है। ऐसा सिद्धान्त पक्ष में माना गया है। तो बहुत से जीवों पर अनुकम्पा करने से भव परीत क्यों नहीं होगा? इस पर अवश्य विवेचन करना चाहिये।

**यस्त्रायते तान्मरणाच्च जीवान्, तज्जीवनं संयमनिष्ठमेव।**
**गतो न कालः पुनरेति पश्चात्, सम्यक्त्वबोधस्तदिहैव लभ्यः ॥६४॥**

अन्वयः—(सिद्धान्तपक्षः) यः मरणात् तान् जीवान् त्रायते। तत् जीवनम् संयमनिष्ठम् एव। गतः कालः पश्चात् पुनः न एति। तत् इह एव सम्यक्त्वबोधः लभ्यः।

भावानुवादः—(सिद्धान्तवादी) जो मरने वाले जीवों की यथाशक्ति रक्षा करते हैं। उसका जीवन संयमी अवश्य है। व्यतीत समय पुनः लौटकर नहीं आता है। तो इसी जीवन में सम्यक्त्व का ज्ञान प्राप्त कर लेना चाहिये।

**सावद्यरूपा न कृतानुकम्पा, निशीथचूर्णाविदमेव सिद्धम्।**
**ये वैपरीत्येन निरूपयन्ते, शास्त्राद् विरुद्धं सकलं तदेतत् ॥६५॥**

अन्वयः—(सिद्धान्तपक्षः) कृता अनुकम्पा सावद्यरूपा न। निशीथचूर्णौ इदमेव सिद्धम्। ये वैपरीत्येन निरूपयन्ते। तत् एतत् सकलम् शास्त्रात् विरुद्धम् (बोध्यम्)।

भावानुवादः—(सिद्धान्तपक्ष) जीवों पर की गई अनुकम्पा सावद्य (पापकारी) नही है। यह निशीथ चूर्णि से सिद्ध है। जो इसके विपरीत प्ररूपणा करते हैं, उनका वह कथन शास्त्र के विरुद्ध ही समझना चाहिये।

**नौकास्थितः साधुरतीव नीरे, स्वयं निमज्जेदपरे तथैव।**
**परं न कुत्रापि वतानुकम्पाम्, ध्रुवं विदध्यादिति शास्त्रसिद्धम् ॥६६॥**

अन्वयः—(पूर्वपक्षः) नौकास्थितः साधुः अतीव नीरे स्वयं निमज्जेत् तथा एवं अपरे अपि। पर कुत्रापि वत ध्रुवं अनुकम्पां न विदध्यात्। इति शास्त्रसिद्धम् (अस्ति)।

भावानुवादः—(पूर्वपक्ष) नाव पर चढ़ा हुआ साधु अगाध जल में स्वयं डूब जाय। तथा उसके साथ अन्य भी निमग्न हो जायें, परन्तु साधु कभी भूलकर भी अनुकम्पा नही करे, ऐसा जैनशास्त्रों में सिद्ध होता है।

**पयःप्रवाहे पतितां स्वसाध्वीम्, रक्षेच्च तां स्व प्रयतोपि साधुः।**
**शास्त्रेण सिद्धं न वचस्त्वदीयम्, जीवानुकम्पा विहितागमेषु ॥६७॥**

अन्वयः—प्रयतः अपि साधुः पयः प्रवाहे पतितां स्वसाध्वीं तां स्वं च रक्षेत्। त्वदीयं वचः शास्त्रेण सिद्धं न। आगमेषु जीवानुकम्पा विहिता अस्ति।

भावानुवादः—सदा सावधान साधु जल प्रवाह में पतित स्वसाध्वी को हाथ पकड़ कर पानी से बाहर कर दे। तथा अपनी भी रक्षा करे। पूर्वपक्ष का कथन शास्त्रसगत नही है। आगमों में जीवों पर अनुकम्पा विहित है।

**बन्धस्य हानस्य निषेधलेशः त्रसस्य जीवस्य कृते च साधोः।**
**तथाकृते दोषमय लभेत, पाप न कुत्राप्यनुकम्पनेषु ॥६८॥**

अन्वयः—(सिद्धान्तपक्षः) साधोः त्रसस्य जीवस्य कृते च बन्धस्य हानस्य च निषेधलेशः अस्ति। अयम्। (साधुः) तथाकृते दोषम् लभेत। किन्तु अनुकम्पने कुत्रापि पापम् न।

भावानुवादः—(सिद्धान्तवादी) निशीथ सूत्र के अनुसार जो साधु किसी त्रसप्राणी को पाश से बांधता है या बांधने वाले का अनुमोदन करता है। तथा बन्धे हुए त्रस को छोड़ता है या छोड़ते हुए को अच्छा समझता है, उसे चौमासी प्रायश्चित्त का दोष आता है, किन्तु उस पर अनुकम्पा करने पर पाप नहीं है। (१)

**गोशालकं रक्षितुमेव वीरे लेश्यां विशीतां च नियुज्यमाने ।**
**कस्यापि जीवस्य विराधना नो, लग्नाः क्रियाः पञ्च कथं च तत्र ॥६९॥**

अन्वयः—(सिद्धान्तपक्ष) गोशालकं रक्षितुम् एव वीरे विशीतां लेश्यां च नियुज्यमाने कस्य अपि जीवस्य विराधनानो जाता। तदा तत्र पंचक्रियाः कथं लग्नाः।

भावानुवादः—(सिद्धान्तपक्ष) विपक्षियों से सिद्धान्तवादी पूछते हैं—गोशालक की रक्षा के लिए भगवान् महावीर ने शीतल लेश्या का प्रयोग किया। उसमें किसी जीव की विराधना नहीं हुई। तब वहा १. कायिकी २. अधिकारिणिकी ३. प्राद्वेषिकी ४. पारितापनिकी तथा ५. प्राणातिपातिनी की पांच क्रियाएं कहां सलग्न हुयीं। ये तो हिंसा के साथ लगती हैं। रक्षा के साथ नहीं।

**छद्मस्थकाले भगवज्जिनेन, वीरेण पापं न कृतं कदापि ।**
**स्वप्नेऽपि नैवाचरितः प्रमादः, गोशालकत्राणमतो न पापम् ॥७०॥**

अन्वयः—(सिद्धान्त पक्षः) छद्मस्थकाले भगवत्जिनेन वीरेण कदापि पापम् न कृतम् स्वप्ने अपि प्रमादः न एव आचरितः। अतः गोशालकत्राणम् पापम् न।

भावानुवादः—(सिद्धान्तवादी) छद्मस्थ काल में भगवान् जिनेश्वर महावीर ने कभी पाप नहीं किया। स्वप्न में भी प्रमाद का आचरण नहीं किया। ऐसा आगम से सूर्यालोक के समान सुस्पष्ट है। अतः गोशालक की रक्षा भी पाप नही है।

---

(१) टिप्पणीः—गृहस्थ के किये जाने वाले कार्यों को करना साधु जीवन की मर्यादा में नहीं है। लिए प्रायश्चित्त है; किन्तु साधु जीवन की अनुकम्पा करने की प्रतिज्ञा होने से उस प्रतिज्ञा के निर्वहन हेतु साधु त्रस जीव को बांध और खोल भी सकता है।

**दयानुकम्पे सहधर्मिजीवे, स्नेहानुरागौ नहि दोषरूपौ ।**
**सदाऽवतो वीरजिनस्य भावो गोशालके नैव तथास्ति पापम् ॥७१॥**

अन्वयः—(सिद्धान्तपक्ष) सहधर्मिजीवे दयानुकम्पे स्नेहानुरागौ च दोषरूपौ नहि । तथा गोशालके सदाऽवतः (रक्षकस्य) वीरजिनस्य भावः पापम् न एव ।

भावानुवादः—(सिद्धान्तपक्ष) समानधर्मी जीव में दया, अनुकम्पा प्रशान्त स्नेह तथा अनुराग दोष रूप नही है । सब गुणों के रक्षक वीरजिनेश्वर का शीतल लेश्या का प्रयोग गोशालक के विषय में पाप कैसे कहा जा सकता है ?

**कस्यापि जीवस्य च शान्तिदानम्, कार्यं शुभं नैव च पापरूप ।**
**अतोहि सर्वस्य कृते च साताप्रदानकृत्यं नहि पापमास्ते ॥७२॥**

अन्वयः—(सिद्धान्तपक्षः) कस्यापि जीवस्य च शान्तिदानम् शुभम् कार्यम् (अस्ति) । पापरूपं च न एव । अतोहि सर्वस्य कृते साताप्रदानकृत्यम् पापम् नहि आस्ते ।

भावानुवादः—(सिद्धान्तपक्ष) किसी भी जीव को शान्ति देना, शुभ कार्य है । यह पाप रूप कभी नही है । इसलिए सबको सुख पहुंचाने में पाप नहीं माना जा सकता है ।

**यथा सुसेवां विदधाति साधुः । सांभोगिकस्यैव यतेर्यतस्तु ।**
**तथैव तां चापि करोति गेही, सधर्मिकस्यापि निजस्य रम्याम् ॥७३॥**

अन्वयः—(सिद्धान्तवादी) यथा यतः साधुः सांभोगिकस्य एव च यतेस्तु सुसेवां विदधाति । तथा एव गेही निजस्य सधर्मिकस्य रम्यां तां च सेवां करोति (तत् पापम् न) ।

भावानुवादः—(सिद्धान्तवादी) जैसे सांभोगिक साधु सांभोगिक साधु की सेवा करता है । वैसे ही गृहस्थ अपने सहधर्मी की सेवा करता है, तो इसमें पाप नहीं कहा जा सकता है ।

**[illegible] तृणापसारम्, चक्रे सुभद्रा सुसती नितान्तम् ।**
**[illegible] सद्‌वृतसाधोरवनं तथैव ॥७४॥**

अन्वयः—(पूर्वपक्षः) सुसती सुभद्रा मुनेः नेतात् तु तृणापसारम् नितान्तम् चक्रे। तत्सर्वम् एकान्तपापम् अवेहि । तथैव सद्वृतसाधोः अवनम् (एकान्तपापम्) अस्ति ।

भावानुवादः—(पूर्वपक्षी) सुसती सुभद्रा ने मुनि के नेत्र से तृण को दूर किया। वह सब एकान्तपाप में था । उसी प्रकार किसी की रक्षा भी एकान्त पाप में है ।

**प्रोक्तं त्वदीयं नहिसत्यमेतत्, सतीसुभद्राचरण न पापम् ।**
**गुणेषु दोषाकरणं न युक्तम् सद्वृत्तसाधोरवनं च धर्मः ॥७५॥**

अन्वयः—एतत् त्वदीय प्रोक्तं सत्यम् नहि । सतीसुभद्राचरण न पापम् (अस्ति)। गुणेषु दोषाकरण न युक्तम् । सद्वृत्तसाधोः अवनं च धर्मः अस्ति ।

भावानुवादः—यह आपका कथन सत्य नही है । सती सुभद्रा का आचरण पापमय नही था । गुणों में दोष निकालना ठीक नही है । सद्वृतसाधु की रक्षा धर्म है ।

**स्वकीयबोधाधिकमानवस्य, समानधर्मस्य च दर्शनेन ।**
**वैनत्यभावेन हिनिर्जरास्ते, प्रज्ञप्तिसूत्राणि निदर्शनानि ॥७६॥**

अन्वयः—(सिद्धान्तपक्षः)स्वकीयबोधाधिकमानवस्यसमानधर्मस्य च दर्शनेन वैनत्यभावेन हि निर्जरा आस्ते । अत्रप्रज्ञप्तिसूत्राणि निदर्शनानि (सन्ति) ।

भावानुवादः—(सिद्धान्तपक्षः) सम्यक्दृष्टि श्रावक एवं मुनिराज ये सब दर्शन विनय के अधिकारी है। अपने से अधिक गुणसम्पन्न श्रावक का दर्शन विनय करना श्रावक के लिए निर्जरा का हेतु होता है । इस विषय में भगवती सूत्र का प्रमाण है । उत्पला श्राविका के द्वारा पोखली श्रावक का पोखली के द्वारा शंख श्रावक के वन्दन समस्कार का भगवती सूत्र में स्पष्ट उल्लेख है ।

**समुच्चयस्यापि च नामपूर्वम्, संश्रावकस्यागमपाठवाचो ।**
**नियंयन्ये कथनं न युक्तम्, तदागमे वाचनदोषलेशात् ॥७७॥**

अन्वयः—(सिद्धान्तपक्षः) समुच्चयस्यापि च नामपूर्वम् संश्रावकस्य आगमपाठवाचो तदागमे वाचन दोपलेखात् निषेध रूपे ते इति कथनम् युक्तम् न ।

भावानुवादः—(सिद्धान्तपक्ष) समूचे गृहस्थ का नाम लेकर श्रावकों को आगम का अध्ययन एवं वाचन करने का निषेध करना युक्तिसंगत नहीं है । क्योंकि आगम में साधु एवं श्रावक दोनों के लिए आगम स्वाध्याय के १४ अतिचार कहे गये हैं । यदि श्रावक को आगम पढ़ने का अधिकार ही नहीं होता तो उसके लिए अतिचारों के उल्लेख की क्या आवश्यकता थी ।

## सर्गावसाने नवीनं छन्दः—वसंततिलकावृत्तम् ।

चर्चाविवादविजिताश्च स्वयंभुवस्ते, व्याख्याप्रतारणपराः परपक्षपाताः ।
वात्यातिचक्रपतितानि यथातृणानि, नैव स्थितिं गुणिजनेऽप्यलभन्त नूनम् ॥७८॥

अन्वयः—(सिद्धान्तपक्षः) ते स्वम्भुवः व्याख्याप्रतारणपराः परपक्षपाताः (तेरह पन्थाः) चर्चाविवादविजिताः च वात्यातिचक्रपतितानितृणानि यथा गुणिजने अपि नूनम् स्थितिम् न अलभन्त ।

भावानुवादः—अपने को विधाता मानने वाले, सूत्रों की व्याख्या में प्रतारण करने वाले, अपना ही पक्ष लेने वाले, न्याय रहित, तेरापन्थी वादचर्चा में पराजित होने के कारण आंधी चक्र मे निपतित तृण के समान चंचल होने से गुणियों के बीच कहीं नियत स्थिति नहीं प्राप्त कर सके ।

श्रीमज्जवाहरयशोविजयाभिधाने,
नानेशसच्चरणयोः शरणावधाने ।
श्री चन्द्रमौलिकविनिर्मितसत्प्रबन्धे,
पूर्णोऽभूवविजयात्मकएषसर्गः ॥७९॥

एकादशः सर्गः समाप्तः ।

## अथ द्वादशः सर्गः–

### आध्यात्मिकः

गुणरत्नविशिष्टानां, दयादानप्रसारिणा ।
मध्यात्मविषये तेषां, विचारप्रस्तुतेः कृतिः ।।१।।

अन्वयः—गुणरत्नविशिष्टानाम्, दयादानप्रसारिणाम् तेषाम् आचार्यणाम् अध्यात्मविषये विचारप्रस्तुतेः कृतिः (ज्ञेया) ।

भावानुवादः—गुणरत्नों से विशिष्ट, दया दान के प्रचारक सिद्धान्तवादी आचार्य प्रवर के अध्यात्म विषयक विचार प्रस्तुत किये जा रहे हैं ।

शरीरादतिरिक्ता च, सत्तानास्ति तथात्मनः ।
पंचभूतैर्हि जाता सा, तेषु शीर्णेषु शीर्यते ।।२।।

अन्वयः—तथा आत्मनः शरीराद् अतिरिक्ता कापि सत्ता नास्ति । सा सत्तापंचभूतैर्हि जाता (अस्ति) । तेषु भूतेषु शीर्णेष सा शीर्यते ।

अन्वयः—(चार्वाक) शरीर से भिन्न आत्मा की कोई सत्ता नही है । वह चैतन्यसत्ता पंचभूतों से ही उत्पन्न होती है । इसलिए उन भूतों के नष्ट हो जाने पर वह चैतन्यसत्ता भी नष्ट हो जाती है ।

स्वामिरूपे शरीरस्य तदस्तित्वं न विद्यते ।
चार्वाकाः मन्वते केचित् तन्निराक्रिययेऽधुना ।।३।।

अन्वयः—शरीरस्य स्वामिरूपे (आत्मनः) अस्तित्वम् न विद्यते । केचित् चार्वाकाः इत्यम् मन्वते । अधुना तन्निराक्रियते ।

भावानुवादः—शरीर के स्वामी के रूप में आत्मा का स्वतन्त्र अस्तित्व नहीं है । यह चार्वाक मत है । उसका खण्डन किया जा रहा है ।

प्रत्यक्षस्यैव प्रामाण्यं न परोक्षस्य मन्यते ।
जागर्ति भौतिको वादो जडविज्ञानकारणात् ।।४।।

अन्वयः—प्रत्यक्षस्य एव प्रामाण्यम् न परोक्षस्य (चार्वाकमते) मन्यते । जडविज्ञानकारणात् भौतिकवादो जागर्ति ।

भावानुवादः—चार्वाक मत में प्रत्यक्ष, को ही प्रमाण माना जाता है, परोक्ष को नही । जड विज्ञान के कारण वहाँ भौतिकवाद की ही प्रधानता है ।

जडवादनिरासार्थं प्रचार्यं ज्ञानमेवतत् ।
अज्ञानस्य निवृत्यैव स्वात्मज्योतिः प्रकाशते ।।५।।

अन्वयः—जडवादनिरासार्थम् एव तत् ज्ञानम् प्रचार्यम् । अज्ञानस्य निवृत्या एव स्वात्मज्योतिः प्रकाशते ।

भावानुवादः—जडवाद के निरास के लिए ज्ञान का प्रचार करना चाहिये । अज्ञान की निर्वृत्ति से ही आत्मज्योति प्रकाशित होती है ।

सिद्धान्तपक्षः—

अज्ञानस्य प्रचारोहि विद्यते वसुधातले ।
यथाधुना वरीवर्ति न तथा प्रागनेहसि ।।६।।

अन्वयः—यथा अधुना वसुधातले अज्ञानस्य प्रचारोहि विद्यते । तथा प्राक् अनेहसि न वरीवर्ति ।

भावानुवादः—क्योंकि जैसा वर्तमान समय मे पृथ्वीतल पर अज्ञान का प्रचार है । वैसा प्राचीन समय में नही था ।

सर्पस्य च यथा भ्रान्ती रज्जौ, सत्यां प्रजायते ।
जले सत्येव तृष्णायां मृगस्यैवं जलभ्रमः ।।७।।

अन्वयः—यथा रज्जौ सत्यां एवतत्र सर्पस्य भ्रान्तिः । तथा जले सति एव मृगस्य

तृष्णायाम् जलभ्रम: जायते ।

भावानुवाद:—जैसे रस्सी के विद्यमान होने पर उसमें सर्प की भ्रान्ति होती है। तथा जल के सत्य होने पर ही मृगतृष्णा में जल का भ्रम होता है। अन्यथा नही ।

आत्मनश्च तथा सत्वे शरीरे भ्रमकारणात् ।
निर्बाध जायते तथ्यं, तदस्तित्वप्रकाशनम् ।।८।।

अन्वय:—तथा आत्मन: च सत्वे एव शरीरे भ्रमकारणात् निर्बाधं तथ्यं जायते। ततः आत्मन: अस्तित्वप्रकाशनम् तत् अस्ति ।

भावानुवाद:—आत्मा के विद्यमान होने पर ही शरीर में चैतन्य का भ्रम होता है। यह निर्विवाद सत्य है। यह आत्मा के अस्तित्व का ही प्रकाशन है।

"आत्मानास्तीति कथनं" तदस्तित्वप्रसाधकम् ।
तदभावे कथंनाम ततस्तत्खण्डनं कुत: ।।९।।

अन्वयः—"आत्मा नास्तीति कथनम् तदस्तित्वप्रसाधकम् अस्ति। अस्य आत्मनः अभावे ततः खण्डनम् कुत: जायते ।

भावानुवाद:—"आत्मा नही है" यह कथन ही उसके अस्तित्व का प्रधान साधक है। उस आत्मा के अभाव में उसका खण्डन कैसे किया जा सकता है ?

समासहीना ये शब्दा: तथा संकेतवर्जिताः ।
तेषामर्थाश्च सर्वत्र विधिरूपेण निश्चिताः ।।१०।।

अन्वय:—समासहीना: ये शब्दा: तथा संकेतवर्जिता: सन्ति । तेषाम् अर्था: सर्वत्र विधिरूपेण निश्चिता: सन्ति ।

भावानुवाद:—समास हीन तथा संकेत वर्जित जो शब्द है, उनके अर्थ सर्वत्र विधि रूप से निश्चित ही हैं ।

**यथा हस्त्यश्वकाकादिरथाः घटपटादयः ।**
**व्यञ्जन्ति शब्दाः वाच्यार्थं तथात्मापिकथं न च ।।११।।**

अन्वयः—यथा हस्तिअश्वकाकादिरथाः घटपटादयाः शब्दाः वाच्यार्थम् व्यञ्जन्ति । तथा आत्मा अपि कथ न स्यात् ।

भावानुवादः—जैसे हाथी, घोड़ा, कौवा, रथ, घट, पट आदि शब्द वाच्यार्थ प्रकट करते हैं । वैसे ही आत्मा शब्द भी अर्थ को प्रकट क्यों नहीं करता है ? अवश्य करता है ।

**बुद्धिर्बहिर्मुखी नैव, छायां तस्याश्च नो क्षमा ।**
**ग्रहीतुं चंचलत्वात् सा, याथार्थ्यस्य च का कथा ।।१२।।**

अन्वयः—बुद्धिः बहिर्मुखी न एव । तस्याः च छायाँ चंचलत्वात् ग्रहीतुं नो क्षमा । ततः सा याथार्थ्यस्य च का कथा अस्ति ।

भावानुवादः—बुद्धि बहिर्मुखी नहीं होती है । उसकी छाया चंचल होने के कारण ग्रहण नहीं की जा सकती है । तब आत्मा के ग्रहण का तो कहना ही क्या है ।

**तया भौतिकवस्तूनां, विकासः समजायत ।**
**आत्मनश्च विकासाय तदपेक्षा न विद्यते ।।१३।।**

अन्वयः—तया (बुद्धया) भौतिक वस्तूनाम् विकासः समजायत । आत्मनः च विकासाय तदपेक्षान विद्यते ।

भावानुवादः—उसी बुद्धि से भौतिक वस्तुओं का विकास सम्पन्न हुआ है । आत्मा के पूर्ण विकास के लिए उसकी अपेक्षा नही है । उसका विकास तो स्वयं ही सम्पन्न होता है ।

**वैज्ञानिकाः वदन्त्येवं विज्ञानं चैव विद्यताम् ।**
**वैज्ञानिकयुगे चास्मिन्नात्मनः किंप्रयोजनम् ।।१४।।**

अन्वयः—वैज्ञानिकाः एवम् वदन्ति । विज्ञानम् एव विद्यताम् । अस्मिन् वैज्ञानिके युगे आत्मनः किम् प्रयोजनम् (अस्ति) ?

भावानुवादः—(चार्वाक) वैज्ञानिक ऐसा कहते है कि केवल विज्ञान ही रहे । वैज्ञानिक युग में आत्मा का क्या प्रयोजन है ।

(जैन)

मतिरन्तर्मुखीयं स्यात् आत्मानं ज्ञातुमर्हति ।
आत्मार्थिनोऽपि सन्त्येवाऽधुनाऽभावो न विद्यते ॥१५॥

अन्वयः—इयम् अन्तर्मुखी मतिः यदा स्यात् । तदा आत्मनं ज्ञातुम् अर्हति । अधुना अपि आत्मार्थिनः सन्ति एव । अधुना तेषाम् अभावो न विद्यते ।

भावानुवादः—जब वह बुद्धि अन्तर्मुखी हो जाती है । तब आत्मा का ज्ञान प्राप्त कर सकती है । इस समय भी आत्मा को चाहने वाले अर्थात् आत्मजिज्ञासु विद्यमान है । उनका अभाव नहीं है ।

भूतातिरिक्तं यद्वस्तु तदात्मैव विबुध्यताम् ।
नित्योऽक्षयः चिदानन्दः शाश्वतश्च सनातनः ॥१६॥

अन्वयः—भूतातिरिक्तं यद् वस्तु तत् आत्मा एव विबुध्यताम् । सः नित्यः अक्षयः चिदानन्दः शाश्वतः सनातनः च अस्ति ।

भावानुवादः—भूतों से पृथक् जो वस्तु है । वह आत्मा ही है । वह आत्मा, नित्य, अक्षय, चिदानन्द, शाश्वत, और सदा विद्यमान रहने वाला है ।

तर्केणाप्यगम्यश्च, सूक्ष्मो बुद्धेः परस्तथा ।
अतएव च शास्त्रेषु दिव्यशक्ति-निरूपितः ॥१७॥

अन्वयः—तर्केण अगम्यः सूक्ष्मः बुद्धेः परः च आत्मा अस्ति । अतएव शास्त्रेषु दिव्यशक्तिः निरूपितः अस्ति ।

भावानुवादः—वह आत्मा तर्क से अगम्य है। सूक्ष्मबुद्धि से परे है। इसलिए शास्त्रों में उसे दिव्यशक्ति कहा गया है।

अत्यल्पवर्णनेनापि तस्य ज्ञानंप्रजायते ।
यथा कुञ्चिकया लब्ध्या मन्जूषोद्घाट्यते गुरुः ॥१८॥

अन्वयः—तस्य आत्मनः ज्ञानम् अत्यल्पवर्णनेनापि प्रजायते। यथा लब्धिरूपया कुञ्चिकया गुरुः मंजूषा उद्घाट्यते।

भावानुवादः—उस आत्मा का ज्ञान अत्यल्प वर्णन से भी हो जाता है। जैसे लब्धि (सिद्धि) के समान छोटी कुञ्ची से भी बड़ी सन्दूक खोली जा सकती है।

श्रोत्रयोः श्रोत्रमाख्यातो नेत्रयोर्नेत्रमेव च ।
रसस्यापिरसः प्रोक्त इन्द्रियाणां चशक्तिदः ॥१९॥

अन्वयः—स आत्मा श्रोत्रयोः श्रोत्रम् आख्यातः। नेत्रयोः नेत्रम् एव आख्यातः। रसस्य अपि रसः प्रोक्तः। इन्द्रियाणां च स शक्तिदः अस्ति।

अजरामररूपश्च स्वामी करणसन्ततेः ।
तस्यास्तित्वेन विश्वासः किमाश्चर्यमतः परम् ॥२०॥

अन्वयः—स अजरामररूपः करणसन्ततेः स्वामी अस्ति। तस्य अस्तित्वे यदि न विश्वासः अतः परम् किम् आश्चर्यम् अस्ति।

भावानुवादः—आत्मा अजरामररूप है। इन्द्रियसमुदायों का स्वामी है। यदि आत्मा के अस्तित्व में विश्वास नहीं है, तो इससे अधिक आश्चर्य क्या हो सकता है?

मन्दप्राज्ञो यदा वक्ति हीरकं चाश्मखण्डकम् ।
त्यजते च मृषा श्रुत्वा सत्यं रत्नपरीक्षकः ॥२१॥

अन्वयः—मन्दप्राज्ञः यदा हीरकम् अश्मखण्डकम् वक्ति। तस्य मृषावाक्यं श्रुत्वा

मनः व्यथते । तद्विषये तु सत्यवक्ता रत्नपरीक्षक एव भवति ।

भावानुवादः—मन्दबुद्धि वाला मनुष्य जब हीरे को पत्थर का टुकड़ा कहता है तब उसके मृषा वाक्य को सुनकर मन व्यथित होता है । उस विषय मे सत्य वक्ता तो जौहरी ही होता है ।

आत्मासत्यं परं ज्योतिर्निर्मलो नीरजास्तथा ।
परोज्ज्वलः सदानन्दः प्रकाशस्यप्रकाशकः ।।२२।।

अन्वयः—आत्मा सत्यम् परं ज्योतिः निर्मलः, नीरजाः, परोज्ज्वलः, सदानन्दः, प्रकाशस्य अपि प्रकाशकः अस्ति ।

भावानुवादः—आत्मा सत्य, परंज्योतिःस्वरूप, निर्मल नीरज, परमोज्ज्वल, सदानन्द स्वरूप प्रकाश का भी प्रकाशक है ।

सूर्यानन्तगुणोदिव्यः, स्वप्रकाशप्रकाशितः ।
अस्यैव परिबोधेन, परमात्मविबोधनम् ।।२३।।

अन्वयः—(आत्मा) सूर्यानन्तगुणः दिव्यः स्वप्रकाशप्रकाशितः (अस्ति) । अस्य आत्मनः एव परिबोधेन परमात्मविबोधनम् (जायते) ।

भावानुवादः—आत्मा सूर्य से भी अनन्तगुण वाला दिव्य, स्वय प्रकाशित है । इस आत्मा के परिबोध से ही परमात्मतत्त्व का विशिष्ट बोध होता है ।

शरीरं प्राप्य संसारे नचात्मानं विबुध्यते ।
विद्या तथा क्रिया सर्वा, जातेयं निष्प्रयोजना ।।२४।।

अन्वयः—संसारे शरीरं प्राप्य आत्मानं न च विबुध्यते । आत्मज्ञानं विना विद्या तथा इयम् सर्वाक्रिया निष्प्रयोजना जाता ।

भावानुवादः—संसार में शरीर को प्राप्त होने पर यदि आत्मविषयक ज्ञान प्राप्त नहीं किया जाता है । तो आत्मज्ञान के विना विद्या और ये सारी क्रियाएं निष्प्रयोजन हैं ।

जडस्य जडतांवेत्ति, स्वस्यास्तित्वप्रमाणकः ।
जानातीच्छतिसर्वं वै, चात्मानं विद्धि नापरम् ।।२५।।

न्वयः—स्वस्यास्तित्वप्रमाणकः आत्मा जडस्य जडतां वेत्ति । सर्वं वै जानाति, च्छति । तस्मात् कारणात् केवलम् आत्मानम् एव विद्धि । न अपरम् ।

भावानुवादः—अपने अस्तित्व को जानने वाला आत्मा जड की जड़ता को जानता है । वही निश्चय रूप से सब को जानता है । इच्छा करता है, इसलिए केवल आत्मा को ही जानो । अन्य पदार्थ को जानने से क्या लाभ है ।

द्रष्टा सैव च दृश्यश्च ज्ञाता ज्ञेयस्तथैव च ।
तस्य ज्ञानेन भूरेषा सर्वथा स्वर्गसन्निभा ।।२६।।

अन्वयः—स आत्मा एव द्रष्टा दृश्यः च तथा एव ज्ञाता, ज्ञेयश्च स एव । तस्य ज्ञानेन एषाभूः सर्वथा स्वर्गसन्निभाराजते ।

भावानुवादः—वही आत्मा द्रष्टा तथा दृश्य है, वही ज्ञाता तथा ज्ञेय है । उसके ज्ञान से यह पृथ्वी सर्वथा स्वर्ग के समान शोभित होती है ।

अध्यात्मं स्वस्य बोधोहि तथा ज्ञानं विधीयताम् ।
आत्मानं योन जानाति, कस्मादन्यं सभोत्स्यते ।।२७।।

अन्वयः—अध्यात्मम् स्वस्य हि बोधः अस्ति । तथा तस्य ज्ञानम् एव विधीयताम् । यः आत्मानम् न जानाति, स अन्यम् कस्मात् भोत्स्यते ।

भावानुवादः—अध्यात्म जगत् में आत्मा का ज्ञान है । उसी को जानना चाहिये । जो आत्मा को नहीं जानता है । वह दूसरे को कैसे जान पायेगा ?

भौतिकं चापि जानीयात्, अध्यात्मं च तथैव हि ।
उभयोर्ज्ञानमासाद्य, पूर्णज्ञानं प्रजायते ।।२८।।

अन्वयः—मानवः भौतिकम् च अपि जानीयात् । तथा एव अध्यात्मं च जानीयात् । उभयोः ज्ञानम् आसाद्य पूर्णज्ञानं प्रजायते ।

भावानुवादः—मनुष्य भौतिक ज्ञान को भी जाने । उसी प्रकार आध्यात्मिक ज्ञान को जाने । दोनो का ज्ञान पाकर पूर्णज्ञान होता है ।

साधनं साधनं तिष्ठेत्साध्यं नैव भवेदिति ।
साधनं भौतिकं वस्तु साध्यमध्यात्ममुच्यते ॥२९॥

अन्वयः—साधनं साधनम् एव तिष्ठेत् । तत् साध्यम् न एव भवेत् । इति । साधनम् भौतिकं वस्तु भवति । साध्यम् अध्यात्मम् उच्यते ।

भावानुवादः—साधन सावन ही रहना चाहिये । वह साध्य कभी न बने । भौतिक वस्तुशरीरादि साधन है और अध्यात्म वस्तु साध्य होती है ।

आत्मा सूक्ष्मोऽस्ति सर्वेभ्यः श्वासेभ्यः संप्रधार्यताम् ।
विलासस्तस्य सर्वोऽपि स एवायं च शिष्यते ॥३०॥

अन्वयः—आत्मा सर्वेभ्यः श्वासेभ्यः सूक्ष्मः अस्ति, इति संप्रधार्यताम् । तस्य सर्वोपि अयम् विलासः अस्ति । अतः स एव अयम् शिष्यते ।

भावानुवादः—आत्मा सभी श्वासो से भी सूक्ष्म है । ऐसा निश्चय कहना चाहिये । जो कुछ दीखता है । वह सब उसीका वैभाविक विलास कार्य है । अतः वही सबसे विशिष्ट है ।

ध्येयो नः सहि सूक्ष्मोऽयं तथा स्थूलं न कर्हिचित् ।
सूक्ष्माधारे स्थितं स्थूलं, तदाधारे न सोभुवि ॥३१॥

अन्वयः—अय सहि आत्मा सूक्ष्मः अस्ति । नः ध्येयः तथा स्थूलं न कर्हिचित् ध्येयम् स्थूलं सूक्ष्माधारे स्थितम् वर्तते । स सूक्ष्मः आत्मा स्थूलाधारे भुविन ।

भावानुवादः—यह आत्मा सूक्ष्म है । उसे ही हमें ध्यान करना चाहिये और उसके अतिरिक्त स्थूल का ध्यान नहीं करना चाहिये । सम्पूर्ण–स्थूल–शरीर सूक्ष्म आत्मा के आधार पर स्थित है, किन्तु वह सूक्ष्म आत्मा, शरीर इन्द्रियादिस्थूल के आधार पर स्थित नहीं है ।

तस्य जागर्तिलाभाय, यत्नः कार्योऽवधानतः ।
इन्द्रियविजय. कार्यः, रागद्वेषविवर्जनैः ॥३२॥

अन्वयः—तस्य आत्मनः जागर्तिलाभाय अवधानतः सदा यत्नः कर्तव्यः । राग द्वेषविवर्जनैः इन्द्रियविजयः कार्यः ।

भावानुवादः—उस आत्मा को जागृत करने के लिए सावधानी से सदा प्रयत्न करना चाहिये । रागद्वेष के परित्याग के साथ इन्द्रियों पर विजय पानी चाहिये ।

कामः क्रोधस्तथा लोभो वर्तते यत्र मानवे ।
नैव जानाति चात्मानं स नरो नैव साधकः ॥३३॥

अन्वयः—यत्र मानवे कामः क्रोधः तथा लोभो वर्तते । स नरः च आत्मानं न एव जानाति । स परः साधकः एव न ।

भावानुवादः—जिस मनुष्य में काम, क्रोध, तथा लोभ है, वह आत्मा को नही जान पाता है । वह मनुष्य साधक नहीं है ।

दयादानपरोभूत्वा त्यागं कृत्वा स्वसम्पदाम् ।
आत्मोत्सर्गं प्रकुर्वीत यथा मेघरथो नृपः ॥३४॥

अन्वयः—यथा मेघरथो नृपः तथा दयादानपरः भूत्वा स्वसम्पदांत्यागं कृत्वा आत्मोत्सर्गं प्रकुर्वीत ।

भावानुवादः—मेघरथ राजा के समान दयादान में तत्पर होकर अपनी सम्पदाओं का त्याग कर आत्मा का उत्सर्ग करने के लिए भी तत्पर रहना चाहिये ।

उपादानानि चादाय कर्माणि विविधानि च ।
निर्मात्यात्मा स्वयं देहं कारणं चिद्पि निश्चितम् ॥३५॥

अन्वयः—विविधानि कर्माणि उपादानानि च आदाय [illegible]

तत् हि निश्चितम् कारणम् मतम् ।

भावानुवादः—विविधकर्मों को उपादान के रूप में लेकर प्रत्येक संसारी आत्मा अपने देह का निर्माण करती है, वह आत्मा निश्चित रूप से कारण है ।

यथा वारिभृते कुम्भे एकश्चन्द्रो विलोक्यते ।
तथा सर्वशरीरेषु चैकात्मा प्रतिविम्बितः । ३६॥

अन्वयः—(पूर्वपक्ष) यथा वारिभृते कुम्भे एकः चन्द्रः विलोक्यते । तथा सर्वशरीरेषु च एकआत्मा प्रतिबिम्बितः दृश्यते ।

भावानुवादः—(पूर्वपक्ष) जैसे पानी से भरे हुए कलश में एक ही चन्द्रमा दिखाई देता है । वैसे ही सर्वशरीरों में एक ही आत्मा प्रतिविम्बित है । इससे आत्मैकत्व की सिद्धि होती है ।

कथनं नैव युक्तं तद् तथा सर्वैकरूपता ।
दृश्यते न तथा तत्र तस्मान्नैकत्वमान्यता ॥३७॥

अन्वयः—(सिद्धान्तपक्षः) तत् तथा सर्वैकरूपता कथनम् युक्तम् न एव । तथा तत्र न दृश्यते । तस्मात् तत्र एकत्वमान्यता न ।

भावानुवादः—आत्मैकत्व का कथन युक्त नहीं है । इस प्रकार का वह दीखता नही है । इसलिए आत्मैकत्व की मान्यता समीचीन नहीं है ।

यथा वारिभृते कुम्भे चन्द्रभेदो विलोक्यते ।
तिथिभेदात्तथात्मापि कायभेदेन भिद्यते ॥३८॥

अन्वयः—यथा वारिभृते कुम्भे तिथिभेदात् चन्द्रभेदो विलोक्यते । तथा कायभेदेन आत्मापि भिद्यते ।

भावानुवादः—जैसे जलपूर्ण घट में तिथिभेद से चन्द्रभेद देखा जाता है । अर्थात् चन्द्रमा यदि पूर्णिमा का घट होगा तो सभी घटों मे पूर्णिमा का ही दृष्टिगोचर होगा । यदि अन्यतिथि का होगा तो वैसा ही दिखाई देगा । उसी प्रकार कायभेद से आत्मा भी भिन्न–भिन्न दिखाई देता है । यदि सर्वत्र व्याप्त होता

तो इसकी एकरूपता ही दिखाई देती ।

मतिमान् कोपि निर्बुद्धिः पीडितो नन्दितोऽपि वा ।
लोकदर्शनमात्रेत्र चात्माऽनेकत्वमीयते ॥३९॥

अन्वयः— कोपि मतिमान्, कोपि निर्बुद्धिः पीडितः नन्दितः अपि वा लोकदर्शन-मात्रेण च आत्माऽनेकत्वम् ईयते ।

भावानुवादः—ससार में कोई बुद्धिमान् कोई मूर्ख कोई दुःखी है तो कोई सुखी है। इस प्रकार लोकदर्शन मात्र से आत्मा का अनेकत्व ही प्रमाणित होता है।

एकदेहं परित्यस्य परदेहं स गच्छति ।
तथापि मूलरूपं तत् नोपूर्ण परिवर्तते ॥४०॥

अन्वयः—स एकदेहं परित्यज्य परदेह गच्छति । तथापि मूलरूपम् तत् पूर्णं नो परिवर्तते ।

भावानुवादः—आत्मा एक देह को त्याग कर पर शरीर कों धारण करती है; फिर भी मूलरूप से उसका परिवर्तन नही होता है। उमा स्वाती का सूत्र है:—

"उत्पाद व्ययध्रौव्ययुक्तम् सत्" ।

ये गुणाः क्षेत्रकालादिपर्यायेभ्यश्च जज्ञिरे ।
आत्मनः परिवर्तन्ते, सहजाः न तथा मताः ॥४१॥

विज्ञानं यदि जानासि तदात्मानं च विद्धितम् ।
आत्मा करोति विज्ञानजातामुन्नतिमञ्जसा ।।४२।।

अन्वयः—यदि विज्ञानं जानासि तदा तम् आत्मानं विद्धि । आत्मा एव अञ्जसा विज्ञानजाताम् उन्नतिम् करोति ।

भावानुवादः—यदि विशिष्ट ज्ञान शिल्प शास्त्रादि को जानते हों, तो आत्मा को जानो । आत्मा ही शीघ्र पूर्ण विज्ञान सम्बन्धी उन्नति को करती है ।

आत्मनो गुण आनन्दः सच तत्रैव विद्यते ।
परतत्त्वस्यसंयोगेऽन्वेषणं नोचितम् मतम् ।।४३।।

अन्वयः—आत्मनः गुणः आनन्दः सच तत्र एव विद्यते । परतत्त्वस्यसंयोगे अन्वेषणम् उचितम् न मतम् ।

भावानुवादः—आत्मा का गुण आनन्द है । अतः वह वहीं पर रहता है । तत्त्व के संयोग में उसका अन्वेषण नहीं करना चाहिये । वहां उसकी प्राप्ति खपुष्प तुल्य है ।

समस्तमतसंयोगैर्विमुक्तस्य तदात्मनः ।
सहजा सुखसम्पत्तिः वस्तुतः समुपास्यताम् ।।४४।।

अन्वयः—समस्तमतसंयोगैः विमुक्तस्य तदात्मनः सहजा सुखसम्पत्तिः वस्तुतः समुपास्यताम् ।

भावानुवादः—वस्तुतः समस्त मत संयोगों से विमुक्त आत्मा के स्वाभाविक सम्पत्ति को प्राप्त किया जा सकता है ।

जीवस्वभावमानन्दं संसारी नैव बुध्यते ।
सुखं वैषयिकं प्राप्य, मोदते भवजीवने ।।४५।।

अन्वयः—संसारी आत्मा जीवस्वभावम्, आनन्दम् न एव बुध्यते । भव-जीवने वैषयिकं सुखं प्राप्य मोदते ।

भावानुवादः—संसारी आत्मा जीव के स्वाभाविक आनन्द को नहीं जानती है। भौतिक जीवन में विषय सम्बन्धी सुख को पाकर प्रसन्न होती है।

यथा वात्यानिपतितं, तृणं न लभते स्थितिम्।
तथा शान्ति न प्राप्नोति, संसारी मानवः क्वचित्॥४६॥

अन्वयः—यथा वात्यानिपतितम् तृणं स्थितिम् न लभते। तथा संसारी मानवः शान्तिम् न प्राप्नोति।

भावानुवादः—जैसे आंधी में पड़ा हुआ तृण स्थिरता नहीं पाता है। वैसे ही संसारी मनुष्य भी कहीं शान्ति नही पाता है।

यत्रासीत् साधुसंयोगो वियोगस्तत्र विद्यते।
आत्मनः सुखमत्यर्थमेकभावेन तिष्ठति॥४७॥

अन्वयः—यत्र साधुसंयोगः आसीत् तत्र वियोगः विद्यते। किन्तु आत्मनः सुखम् अत्यर्थम् एकभावेन तिष्ठति।

भावानुवादः—जहां सज्जनों का संयोग होता है वहां वियोग भी होता है; किन्तु आत्मा का सुख अत्यन्त एकभाव से विद्यमान रहता है। उसमें कहीं परिवर्तन नहीं होता है।

अस्मिन् सुखे च जायेते सदारम्भपरिग्रहौ।
तौ पापकारणे प्रोक्तौ पापं दुःखस्य कारणम्॥४८॥

अन्वयः—यस्मात् तत् साँसारिकसुखम् विषयजन्यम् सत् नित्यं दु.खस्य कारणम् भवति । तस्मात् ज्ञानी जनः घृणाया दृष्ट्यातत् विलोकते ।

भावानुवादः—जो सांसारिक सुखविषयजन्य होता है । वह सदा दुःख का कारण होता है । इसलिए ज्ञानी मनुष्य उसको घृणा की दृष्टि से देखते है ।

मधुसिक्तासिसंलेहे सुखतुल्यं सुखं स्मृतम् ।
अतस्तत्त्यज्यतामेव जनेन सुखमिच्छता ।।५०।।

अन्वयः—तत् सांसारिकसुखम् मधुसिक्तासिसलेहे सुखतुल्य स्मृतम् । अतः सुखमिच्छता जनेन तत् सुखम् त्यज्यताम् एव ।

भावानुवादः—वह सांसारिक सुख मधु से सिक्त तलवार चाटने रूप सुख के समान माना गया है । इसलिए वास्तविक सुख की इच्छा वाले को उस सुख को त्याग देना चाहिये ।

स्वहस्ते वर्तते तन्त्रम् सुखदुःखविधानयोः ।
आत्मनश्चतदादुःखं नैवोपार्ज्यं कदाचन ।।५१।।

अन्वयः - सुखदुःखविधानयोः तन्त्रम् स्वहस्ते वर्तते । तदा आत्मनः दुःखम् कदाचन न उपार्ज्यम् एव ।

भावानुवादः—सुख दुःख के विधान का तन्त्र अपने हाथ में है । तब आत्मा के लिए दुःख का उपार्जन कभी नहीं करना चाहिये ।

चेतनेन जडस्यायं सम्बन्धोऽनादिकालतः ।
दुःखस्यापि क्रमस्तस्मात् विद्यमानो विलोक्यते ।।५२।।

अन्वयः—अनादिकालतः चेतनेन (आत्मना) जडस्य सुखस्य (कर्मणा) अयम् सम्बन्धः अस्ति । तस्मात् दुःखस्यापि क्रमः विद्यमानः विलोक्यते ।

भावानुवादः—अनादिकाल से चेतन आत्मा के साथ जड का सम्बन्ध है । उससे दुःख का क्रम भी विद्यमान दिखाई देता है ।

यदा क्रमः समाप्तोऽयं यत्नेनैव जनिष्यते ।
तदा दुःखसमाप्तौ च सुखस्यैकान्तदर्शनम् ।।५३।।

अन्वयः—यदा अयं क्रमः यत्नेनैव समाप्तः जनिष्यते । तदा दुःखसमाप्तौ च सुखस्य एकान्तदर्शनम् (जायते) ।

भावानुवादः—जब यह क्रम यत्न से समाप्त हो जायेगा । तब दुःख की समाप्ति होने पर वास्तविक सुख के दर्शन होंगे ।

जीवस्य कर्मसम्बन्धो यद्यनादिर्निरूप्यते ।
तदाकथं क्षयं याति वक्तव्यं व्यक्तबुद्धिभिः ।।५४।।

अन्वयः—(पूर्वपक्ष) यदि जीवस्य कर्मसम्बन्धः अनादिः निरूप्यते तदा कर्म कथं क्षयं याति । इपि व्यक्तबुद्धिभिः वक्तव्यम् ।

भावानुवादः—जिज्ञासा होती है यदि जीव के साथ अनादि है, तो कर्म का क्षय कैसे होता है । इसका बुद्धिमान पुरुष समाधान करें ।

प्रवाहापेक्षयानादिः सम्बन्धो जीवकर्मणोः ।
विशेषापेक्षया सादिरुभयं चोपपद्यते ।।५५।।

अन्वयः—जीवकर्मणोः प्रवाहापेक्षया अनादिः सम्बन्ध अस्ति । विशेषापेक्षया स सम्बन्धः सादिः इति उभयम् च उपपद्यते ।

भावानुवादः—जीव कर्म का सम्बन्ध प्रवाह की अपेक्षा से अनादि है । विशेषापेक्षा (व्यक्ति की अपेक्षा) से वह सम्बन्ध सादि है । इस प्रकार दोनो की उपपत्ति हो जाती है । एकान्त पक्ष की सिद्धि अभीष्ट नही है ।

जायते चात्मना सार्कं कर्मबन्धः प्रतिक्षणम् ।
भुक्त्वा च जीर्यते नित्यं, पूर्वबद्धं च कर्म तत् ।।५६।।

भावानुवादः—आत्मा के साथ कर्म का सम्बन्ध प्रतिक्षण होता रहता है। पूर्व बद्ध कर्म को भोगकर उसका नित्य क्षय किया जाता है।

संवरकरणैर्नित्यमाश्रवः प्रतिरुध्यते ।
तीव्रो जलाशये वेगो जलस्येव विबुध्यताम् ।।५७।।

अन्वयः—जलाशये जलस्य तीव्रवेग इव सवरकरणैः आश्रवः प्रतिरुध्यते। इति विबुध्यताम् ।

भावानुवादः—जैसे बाहर से आता हुआ जल का तीव्र वेग जलाशय पर रोक दिया जाता है। वैसे ही संवर के द्वारा आश्रव भी रोक दिया जाता है। ऐसा जानना चाहिये ।

ततो नागमनं तेन नवीनस्यच कर्मणः ।
नाशश्च जायतेऽवश्यं पूर्वसंचितकर्मणाम् ।।५८।।

अन्वयः—ततः तेन नवीनस्य च कर्मणः आगमनम् न भवति। पूर्वसंचितकर्मणा अवश्यं नाशः च जायते ।

भावानुवादः—तब उससे नवीन कर्म का आत्मा में आगमन नही होता है और निर्जरा से पूर्वसंचित कर्म का अवश्य नाश हो जाता है।

निष्कर्मा निष्कलकश्च, निर्मलश्चनिरंजनः ।
निर्विकारः स्वरूपेण, स्थितो जीवोऽमितद्युतिः ।।५९।।

अन्वयः—तदा निष्कर्मा, निष्कलंकः निर्मलः निरंजनः निर्विकारः च जीवः स्वरूपेण अमितद्युतिः स्थितो भवति ।

भावानुवादः—तब आत्मा कार्य रहित, कलंक रहित, निरजन निर्विकार स्वरूप से अमित द्युति में (विशिष्ट प्रकाशमान) अवस्थित हो जाता है।

पयसश्च यथा सर्पिः प्रयत्नैर्जायते पृथक् ।
तपश्चर्यादिभिः विलष्टैस्तथात्मापि च कर्मणः ।।६०।।

अन्वयः—यथा सर्पिः पयसः च प्रयत्नैः पृथक् जायते । तथा आत्मा पिक्लिष्टैः तपश्चर्यादिभिः कर्मणा पृथक् भवति ।

भावानुवादः—जैसे घृत, दूध, दही से प्रयत्नों के द्वारा पृथक् कर दिया जाता है। वैसे ही विलष्ट तपस्या आदि के द्वारा आत्मा को भी कर्मो से अलग कर दिया जाता है।

**कर्मण्यपगते पूर्णे परात्मद्युतिरात्मनः ।**
**यदाभेदनिवृत्तिः स्यात् तदाऽभेदः प्रवर्तते ॥६१॥**

अन्वयः—कर्मणि पूर्णे अपगते आत्मनः परात्मद्युतिः जायते । यदा भेदनिवृत्तिः स्यात् तदा अभेदः प्रवर्तते ।

भावानुवादः—कर्म के पूर्ण रूप से दूर हो जाने पर आत्मा परमात्मस्वरूप हो जाता है। जब भेद की निवृत्ति हो जाती है। तब अभेद की स्थिति होती है।

**आवृतिरात्मनः कार्येयापरमात्मदर्शने ।**
**बाधारूपा समादिष्टा सापसार्या प्रयत्नतः ॥६२॥**

अन्वयः—या परमात्मदर्शने कार्ये आत्मनः आवृतिः बाधारूपा समादिष्टा । सा प्रयत्नतः अपसार्या ।

भावानुवादः—परमात्मदर्शन कार्य में जो आत्मा पर बाधा स्वरूप आवरण है। उसको प्रयत्नपूर्वक दूर करना चाहिये।

**यस्यां दिशि चगमनं तत्रैवाभिमुखो भवेत् ।**
**तदागन्तव्यलाभः स्यात् अन्यथा रिक्तहस्तता ॥६३॥**

अन्वयः—यस्यां दिशि च गमनं भवेत् । तत्र एव अभिमुखो भवेत् । तदा गन्तव्यलाभः स्यात् । अन्यथा रिक्तहस्तता (भवति) ।

भावानुवादः—जिस दिशा में गमन होता है। वहीं जाना चाहिये। [illegible] [illegible] होती है। तब जाने का लाभ भी होता है। अन्यथा [illegible]

का खाली रह जाता है ।

अहंकारस्य नाशेन प्रथमं, परमात्मनः ।
भक्त्या ध्यानबलेनैव साध्यसिद्धिर्विधीयते ।।६४।।

अन्वयः—प्रथमम् अहंकारस्य नाशेन परमात्मनः भक्त्या ध्यानबलेन एव साध्य-सिद्धिः विधीयते ।

भावानुवादः—सर्वप्रथम अहंकार के नाश से, परमात्मा की भक्ति से, तथा ध्यान के बल से साध्य की सिद्धि की जाती है ।

यावत्परबले निष्ठा भ्रमबाधासमाश्रयः ।
कषायपाशसन्दानं तावन्नैवात्मदर्शनम् ।।६५।।

अन्वयः—यावत्परबले निष्ठा, भ्रमबाधासमाश्रयः (अस्ति) । कषायसन्दानम् च । तावत् आत्मदर्शनम् न एव जायते ।

भावानुवादः—जब तक पराये बल का भरोसा है, भ्रमबाधाएं बनी हुई हैं । कषाय का पाश बन्धा है । तब तक आत्मा का दर्शन नहीं हो सकता है ।

आत्मशक्तौ यदाश्रद्धा, विकारो दूरतो व्रजेत् ।
आविर्भावस्तदाशक्तेः सन्निधौसा विराजते ।।६६।।

अन्वयः—यदा आत्मशक्तौ श्रद्धा, विकारः दूरतः व्रजेत् । तदा शक्तेः आविर्भाव । साशक्तिः सन्निधौ एव विराजते ।

भावानुवादः—जब आत्मा की शक्ति में श्रद्धा होती है । विकार दूर हो जाते है । तब आत्मशक्ति का आविर्भाव होता है, क्योंकि वह शक्ति समीप में ही विराजमान रहती है ।

आत्मशक्त्या शरीरस्य सर्वो व्यापार इष्यते ।
भाषामृषादिभिस्तान्नो विदधीत मलीमसाम् ।।६७।।

अन्वयः—आत्मशक्त्या शरीरस्य सर्वः व्यापारः इष्यते । अतः भाषामृषादिभिः तामलीमसाम् नो विदधीत ।

भावानुवादः—आत्मशक्ति से शरीर के सारे व्यापार चलते हैं । अतः भाषा सम्बन्धी असत्य के द्वारा उसे मलीन नहीं बनाना चाहिये ।

आवृते सदने नैव प्रवेशो जायतेऽतिथेः ।
आहूतस्य यथा शक्तेः विकृतात्मनि तादृशः ।।६८।।

अन्वयः—यथा आहूतस्य अतिथेः आवृते सदने प्रवेशः न एव जायते । तथा विकृतात्मनि शक्तेः अपि तादृशः प्रवेशः नो जायते ।

भावानुवादः—जैसे बन्द घर में बुलाये गये भी अतिथि का प्रवेश नहीं होता है । वैसे ही विकृत आत्मा में इच्छित शक्ति का भी प्रवेश नहीं होता है । [illegible] शक्ति [illegible] नहीं होती है ।

[illegible] नैव तिष्ठन्ति, [illegible] ।
[illegible] ।।६९।।

यस्य स्वात्मबलं तस्य बलं सर्वं प्रतिष्ठितम् ।
संकटेऽपि च काले स रञ्चमात्र न खिद्यति ।।७१।।

अन्वयः—यस्य स्वात्मबलं तस्य सर्वं बलम् प्रतिष्ठितम् अस्ति । स संकटे अपि काले रञ्चमात्रं न खिद्यति ।

भावानुवादः—जिसके पास आत्मा का बल होता है वहीं सभी बल प्रतिष्ठित रहते हैं । वह संकट के समय भी दुःखी नहीं होता है ।

सहते सर्वदुःखानि नान्धकारोपि कुत्रचित् ।
विशाले जलराशौ च समुद्रे संप्रखेलति ।।७२।।

अन्वयः—(आत्मबलसम्पन्नप्राणी) सर्वदुःखानि सहते । कुत्रचित् अन्धकारः अपि न भवति । सविशाले जलराशौ समुद्रे च संप्रखेलति ।

भावानुवादः—आत्मबल सम्पन्न प्राणी सभी दुःखों को सहन करता है । वहां कही अज्ञान नही रहता है । वह विशाल जल राशि वाले समुद्र में भी निर्भय क्रीड़ा करता है ।

नभः संतरते नित्यं, देवतुल्यः प्रभामयः ।
सर्वं विजयते लोकं, विजयश्रीवृतोपि सः ।।७३।।

अन्वयः—स आत्मबली देवतुल्यः प्रभामयः विजयश्रीवृतोपि नित्यं नभः संतरते । सर्वं लोकम् च विजयते ।

भावानुवादः—वह आत्म बली प्राणी देव तुल्य प्रभा विशिष्ट विजयश्री से आवृत भी नित्य आकाश को पार करता है । अर्थात् असम्भव कार्य भी कर लेता है । और सभी लोक की विजय भी करता है ।

अन्तःकरणशुद्धौ च तद्बलं परिवर्धते ।
गम्भीरजलधौ नीरं यथा तिष्ठति शाश्वतम् ।।७४।।

अन्वयः—यथा नीरम् गम्भीरजलधौ शाश्वतम् तिष्ठति । तथा तद्बलम् अन्तःकरण

विशुद्धौ च परिवर्धते ।

भावानुवादः—जैसे पानी गहरे समुद्र में सदा रहता है । वैसे ही आत्मबल भी अन्तःकरण की विशुद्धि से बढ़ता है ।

आत्मनश्च बलं लब्धं भावनात् परमात्मनः ।
बलं तदेवमाख्यातं, किमन्येन प्रयोजनम् ॥७५॥

अन्वय.—परमात्मनः भावनात् आत्मनः चबलं लब्धम् । आत्मबलम् एव बलम् आख्यातम् । अन्येन बलेन किम् प्रयोजनम् अस्ति ?

भावानुवादः—आत्माओं को परमात्मा की भावना से आत्मबल प्राप्त होता है । आत्मबल ही बल माना गया है । उसके अतिरिक्त अन्य बल की क्या आवश्यकता है ।

नेत्रयोरात्मनः शक्तेरभावे किं प्रयोजनम् ।
तस्यां सत्यां प्रपश्यन्ति, मानवाः रूपसम्पदम् ॥७६॥

अन्वयः—आत्मनः शक्तेः अभावे नेत्रयोः किम् प्रयोजनम् अस्ति ? तस्याम् आत्मशक्तौ सत्याम् मानवाः रूपसम्पदम् प्रपश्यन्ति ।

भावानुवादः—आत्मशक्ति के अभाव में नेत्रों की क्या आवश्यकता है ? उस आत्मशक्ति के होने पर ही मानव दृश्य पदार्थों को विशिष्ट रूप से देख सकता है ।

इयमेव दशालोके सर्वेन्द्रियसमूहके ।
तद्बले कार्यकारीणि, दृश्यन्ते तानि सर्वदा ॥७७॥

करता है ।

आत्मशक्तेरभावेन व्यर्थं तद् भौतिकं बलम् ।
बभूव सर्वनाशश्च रावणकुरुवंशयो: ।।७८।।

अन्वय:—आत्मशक्तेः अभावेन तत् भौतिकं बलं व्यर्थम् । रावणकुरुवंशयो. आत्म-शक्ते: अभावे सर्वनाश: च बभूव ।

भावानुवाद:—आत्मशक्ति के अभाव से वह भौतिक बल व्यर्थ ही है । रावण तथा कुरुवंश का नाश आत्मबल के अभाव में ही हुआ था ।

कर्मणा प्रेरितो जीवो भवे भ्रमति चक्रवत् ।
अवशोपि वशे भूत्वा, चतुरशीतियोनिषु ।।७९।।

अन्वय:—कर्मणा प्रेरितः अपि जीव: अवशः अपि वशे भूत्वा भवे चक्रवत् चतुर-रीति योनिषुभ्रमति ।

भावानुवाद:—कर्म से प्रेरित अवश होता हुआ जीव, लाचार होकर संसार मे चक्र के समान चौरासी लाख योनियों में भ्रमण करता है ।

यन्त्रं च चालकाभावे यथा रुद्धं प्रजायते ।
तथैवात्मापि निष्कर्मा प्रजहाति चतुर्गती: ।।८०।।

अन्वय:—चालकाभावे च यथा यन्त्रम् रुद्धम् प्रजायते । तथा एव आत्मा अपि निष्कर्मा सन् चतुर्गती: प्रजहाति ।

भावानुवाद:— चालक के अभाव में जैसे यन्त्र रुक जाता है । वैसे ही आत्मा भी कर्म के अभाव मे चारों गतियो को छोड़ देता है । मुक्त हो जाता है ।

वह्निना पयसो रूपमुष्णत्वं प्रतिपद्यते ।
तथात्मा कर्मसम्बन्धात् भवबंधं प्रपद्यते ।।८१।।

अन्वय:— यथा पयसा रूपम् वह्निना उष्णत्वम् प्रतिपद्यते । तथा आत्मा कर्म

सम्बन्धात् भवबन्धं प्रपद्यते ।

भावानुवादः—जैसे पानी का रूप आग से सम्बन्ध होने से गर्म हो जाता है, वैसे ही आत्मा भी कर्म के साथ होने से साँसारिक बन्धन में आ जाता है ।

योगेन चित्तरोधेन, चाञ्चल्यं परिवर्ज्यते ।
आत्मनो वस्तुरूपं च सहजं प्रतिभासते ॥८२॥

अन्वयः—चित्तरोधेन योगेन चाञ्चल्यम् परिवर्ज्यते । तदा आत्मनः वस्तुरूपं च सहजम् प्रतिभासते ।

भावानुवादः—जब चित्तनिरोध रूप योग से चंचलता दूर हो जाती है, तब आत्मा का वास्तविक रूप स्वाभाविक रूप से प्रतिभासित हो जाता है ।

समये धावनं तीव्रं समये गतिरोधनम् ।
अर्वतां जायते तद्वत् मनसोपि निबोधत ॥८३॥

अन्वयः—अर्वतां समये तीव्रम् धावनम् समये च गतिरोधनम् आत्मनः अपि तद्वत् निबोधत ।

भावानुवादः—यह मननीय है कि मन भी अश्व की तरह समय पर तीव्रता से गति करता है । तथा समय पर गति का निरोध करता है ।

स्थैर्ये प्रज्ञा समाधेया, चांचल्ये न कदाचन ।
भौतिकापेक्षया सर्वैराध्यात्म्यं परिपाल्यताम् ॥८४॥

अन्वयः—स्थैर्ये प्रज्ञा समाधेया चांचल्ये कदाचन न । सर्वैः भौतिकापेक्षया आध्यात्म्यम् परिपाल्यताम् ।

भावानुवादः—बुद्धि को स्थिरता में लगाना चाहिये, चंचलता में कभी नहीं । सभी को चाहिये कि भौतिक वस्तुओं की अपेक्षा से आध्यात्मिकता का पालन [illegible] करें ।

अध्यात्मं परिहाय स्वं मानवैरधिकैर्भु वि ।
आश्चर्यं महदाश्चर्यं व्यवहारश्चसेव्यते ॥८५॥

अन्वयः—भुवि अधिकैः मानवैः स्वम् अध्यात्मं च परिहाय भौतिकसांसारिकव्यवहारः च सेव्यते इति आश्चर्यम् महदाश्चर्यम् (अस्ति) ।

भावानुवादः—पृथ्वी पर अधिक मानव अध्यात्म का त्याग कर भौतिकसासारिक व्यवहार का पालन करते है । यह महान आश्चर्य है ।

महत्त्वमात्मना लोके व्रजेन्नोकायसम्पदा ।
रूप्येणनैव हेम्नावै, मुद्रिकायाश्च निष्क्रयः ॥८६॥

अन्वयः—लोकः कायसम्पदा महत्त्वम् नो व्रजेत् । किन्तु आत्मना व्रजेत् । रूप्येण हेम्ना च वै मुद्रिका निष्क्रयः न (भवति) ।

भावानुवादः—आत्मा से जिस महत्त्व को प्राप्त किया जाता है। उसे शरीर सम्पत्ति से नही पाया जा सकता है । चांदी और स्वर्ण, राजमुद्रादि के महत्त्व को प्राप्त नहीं कर सकते । उसमें प्रधानता राजकीय मुद्रा की होती है ।

ममत्वधारणामिथ्या, यद्येवं परिनश्यतु ।
तदा सम्भाव्यतेऽजस्त्रं, दिव्यशान्तेः समुद्भवः ॥८७॥

अन्वयः—यदि एवं ममत्वधारणा मिथ्या परिनश्यतु । तदा अजस्रम् दिव्यशान्तेः समुद्भवः सम्भाव्यते ।

भावानुवादः—यदि ममत्व की मिथ्या धारणा, नष्ट हो जावे । तो निरन्तर दिव्य शान्ति का समुद्भव हो सकता है ।

हस्ती हयश्च साम्राज्यं भवनं गृहसम्पदः ।
नश्यन्ति पश्यतां क्वापि ह्यनाथी मुनिरब्रवीत् ॥८८॥

अन्वयः—हस्ती, हयः, साम्राज्यं, भवनं गृहसम्पदः च पश्यताम् क्वापि नश्यन्ति इति अनाथी मुनिः अब्रवीत् ।

भावानुवाद।—हाथी, घोड़े और साम्राज्य, भवन गृहसम्पत्ति सब देखते ही देखते नष्ट हो जाते हैं। ऐसा अनाथी मुनि ने कहा था।

आत्मशक्तेः समुद्रेको जायतां पुनरत्र च।
योगक्षेमं वहेद्येन मानवः पुनरीप्सितम् ॥८९॥

अन्वयः—पुनः अत्र च आत्मशक्तेः समुद्रेकः जायताम्। येन मानवः पुनः ईप्सितम् योगक्षेमं वहेत्।

भावानुवादः—संसार में पुनः आत्मशक्ति का उदय हो। जिससे मनुष्य पुनः अपने मन चाहे योगक्षेम को प्राप्त कर सके। अलब्ध का लाभ योग है और लब्ध का परिरक्षण क्षेम है।

यत्रैव वर्तते तत्र विज्ञानं कार्यकारि स्यात्।
सर्वदेशेषु कालेषु हितमध्यात्ममाश्रयेत् ॥९०॥

अन्वयः—विज्ञानम् यत्र एव वर्तते। तत्र तत् कार्यकारिस्यात्। सर्वदेशेषु कालेषु हितम् अध्यात्मम् आश्रयेत्।

भावानुवादः—विज्ञान का साधन जहाँ पर रहता है। वही पर लाभप्रद होता है, किन्तु अध्यात्म भाव तो सभी देशों तथा कालों में हित करता है।

कस्मात् कियत् कथं कुत्र, कुतः दुःखं प्रजायते।
रोगस्य विनिवृत्यर्थं निदानमेव मृग्यताम् ॥९१॥

अन्वयः—कस्मात् कियत् कथं कुत्र कुतः दुःखम् प्रजायते। इति रोगस्य विनिवृत्यर्थं निदानम् एव मृग्यताम्।

भावानुवादः—कितनी, कैसे, कहाँ पर किस कारण से दुःख की उत्पत्ति होती है। इस प्रकार के रोगों को दूर करने के लिए सर्वप्रथम निदान [illegible] [illegible] है।

दुःखस्यैवाङ्कुरोद्भूति, संयोगे [illegible]।
[illegible] च यथा योगं तथास्ते [illegible] ॥९२॥

अन्वयः—बाह्यवस्तुना संयोगे दुःखस्य एव अंकुरोद्भूतिः यथा योगं च बर्धते। तथा कष्टसन्ततिः आस्ते ।

भावानुवादः—यथा योग बाहरी वस्तु के संयोग से दुःख के अंकुरों की उत्पत्ति होती है । और उसके बाद कष्टों की परम्परा वृद्धि पाती है ।

आत्मारामे च रमते सच्चिदानन्दभावतः ।
मरणान्नोभयं तस्य निर्द्वन्द्वो विचरत्यसौ ॥९३॥

अन्वयः—सच्चिदानन्दभावतः आत्मारामे च रमते । असौ निर्द्वद्वा विचरति । तस्य मरणात् भयम् नो भवति ।

भावानुवादः—आत्माराम रूप बगीचे में सच्चिदानन्द भाव से मानव रमण करता है । वह निर्द्वंद्व होकर विचरता है । उसे मरण का भय नही होता है ।

सच्चिदानन्दविश्वासात् पंचभूतानि सेवकाः ।
जायन्ते तस्य धीरस्य निर्भयस्य महात्मनः ॥९४॥

अन्वयः—तस्य निर्भयस्य धीरस्य महात्मनः सच्चिदानन्दविश्वासात् पंचभूतानि सेवका जायन्ते ।

भावानुवादः—उस निर्भय, धीर महात्मा के लिए सच्चिदानन्द के विश्वास से पचभूतसेवक बन जाते हैं ।

आत्मज्ञानविशिष्टस्य, शरीरस्य निपातने ।
दुःखं न जायते तस्य, सुखमेवावभासते ॥९५॥

अन्वयः—तस्य आत्मज्ञानविशिष्टस्य शरीरस्य निपातने दुःखं न जायते । सुखम् एव अवभासते ।

भावानुवादः— आत्मज्ञान के युक्त साधक को शरीर के नष्ट हो जाने पर भी दुःख नहीं होता है, किन्तु सुख ही प्राप्त होता है ।

**ज्ञातुर्द्रष्टारमात्मानं नाटकं भवमेव च ।**
**स्वयमेत्य चरणौ शीघ्रं सेवन्ते सर्वसिद्धयः ॥९६॥**

अन्वयः—भवं नाटकम् एव द्रष्टारम् आत्मानं ज्ञातुः चरणौ सर्वसिद्धयः शीघ्रं स्वयम् एत्य सेवन्ते ।

भावानुवाद।—संसार को नाटक के रूप में देखने वाले आत्मज्ञानी साधक के चरणों की सभी सिद्धियां अपने आप आकर सेवा करती हैं ।

**ज्ञानी न व्यथते स्वप्ने तत्संयोगवियोगयोः ।**
**माध्यस्थ्यभावमासाद्य, समानः सुखदुःखयोः ॥९७॥**

अन्वयः—ज्ञानी स्वप्ने अपि न व्यथते । तत्संयोगवियोगयोः माध्यस्थ्यभावम् आसाद्य सुखदुःखयोः समान एव तिष्ठति ।

भावानुवाद।—सच्चे ज्ञानी स्वप्न में भी व्यथित नहीं होते । संयोग–वियोग में माध्यस्थ भाव को प्राप्त कर सुख दुःख में समान भाव से ही रहते है ।

**परमात्मानमन्वेष्टुं यतन्ते साधकव्रजाः ।**
**नोदूरे बहिरास्ते स आत्मन्येव प्रतिष्ठितः ॥९८॥**

अन्वयः—साधकव्रजाः परमात्मानम् अन्वेष्टुम् यतन्ते । स नोदूरे नो बहिः आस्ते । स आत्मनि एव प्रतिष्ठितः भवति ।

भावानुवाद।—साधक परमात्मा को खोजने के लिए यत्न करते हैं । वह कहीं दूर बाहर नहीं है । वह तो आत्मा मे प्रतिष्ठित है ।

**आत्मानं पश्य भावेन, सर्वतः परितस्तथा ।**
**कस्तूरीमृगतुल्यस्त्वं, माप्रधावान्यतो दिशि ॥९९॥**

अन्वयः—त्वम् सर्वतः परितः तथा भावेन आत्मानम् पश्य । कस्तूरीमृगतुल्यः [illegible] दिशि मा प्रधाव ।

भावानुवादः—तुम सब जगह चारों ओर भाव से आत्मा को ही देखो। कस्तूरी मृगतुल्य (जो कस्तूरी उसके पास ही रहती है) उसके लिए अन्य दिशा में मत दोड़ो।

आवरणे सति तद्रूपं दृश्यते न यथातथम्।
तदपागमनेनैव दिव्यं ज्योतिः प्रकाशते ॥१००॥

अन्वयः—आवरणे सति तद्रूपम् यथातथम् न दृश्यते। तदपागमनेन एव दिव्यं ज्योतिः प्रकाशते।

भावावानुदः—आवरण के होने पर उसका सही रूप दिखाई नहीं देता है। उसको दूर करने से ही दिव्य ज्योति प्रकाशित होती है।

कर्मावृतिमपानेतुमात्मनो हितकारक।
मुत्तमं साधनं प्रोक्तं प्रार्थनं परमात्मनः ॥१०१॥

अन्वयः—कर्मावृतिम् अपानेतुम् आत्मनः हितकारकम् परमात्मनः प्रार्थनम् उत्तमम् साधनम् प्रोक्तम्।

भावानुवादः—कर्मों के आवरण को दूर करने के लिए, आत्मा की भलाई करने के लिए परमात्मा की प्रार्थना उत्तम साधन कही गई है।

आत्मा च स्वयमेवैति परमात्मपदं ध्रुवम्।
तदर्थमखिलैर्मान्या प्रार्थना वांच्छितार्थदा ॥१०२॥

अन्वयः—आत्मा च स्वयम् एव ध्रुवम् परमात्पपदं एति। तदर्थम् अखिलैः वांच्छितार्थदा प्रार्थना मान्या।

भावानुवादः—आत्मा स्वयं ही नियत साधनों से परमात्मपद को प्राप्त होती है। उसके लिए परमात्मा की प्रार्थना सर्वमान्य है।

परात्मादर्शरूपोऽस्ति, तत्पथे गमनेन च।
आत्मापि जायते सैव, विद्यते नात्र संशयः ॥१०३॥

अन्वयः—परात्मा आदर्शरूपः अस्ति। आत्मा अपि तत्पथे गमनेन च स एव जायते। अत्र संशयः न विद्यते।

भावानुवाद:—परमात्मा आदर्शरूप है। आत्मा भी उसके पथ पर गमन से परमात्मा हो जाता है। इस विषय में सन्देह नहीं है।

परात्मतत्त्वसंप्राप्तिः नास्त्यसाध्या कथंचन।
कर्तव्यपथमासाद्य साध्यसिद्धिर्विधीयताम् ।।१०४।।

अन्वय:—परात्मतत्त्वसम्प्राप्तिः कथंचन असाध्या नास्ति। कर्त्तव्यपथम् आसाद्य साध्यसिद्धिः विधीयताम्।

भावानुवाद:—परमात्मतत्त्व की प्राप्ति कभी असाध्य नहीं है। कर्त्तव्यपथ को प्राप्त कर साध्य की सिद्धि की जा सकती है।

कार्यसिद्धिर्भवत्येव विलम्बेनाथवा द्रुतम्।
स्वावलम्बनमासाद्य किं कर्त्तुं ना नहि क्षमः ।।१०५।।

अन्वय:—विलम्बेन अथवा द्रुतम् कार्यसिद्धिः भवति एव। ना स्वावलम्बनम् आसाद्य किम् कर्त्तुम् नहि क्षमः (भवति)।

भावानुवाद:—देरी से अथवा शीघ्रता से कार्य की सिद्धि अवश्य होती है। मनुष्य स्वावलम्बन को लेकर क्या करने में समर्थ नहीं है। अर्थात् सब कुछ कर सकता है।

मुमुक्षुर्यदियत्नेन, साधने भूरि चेष्टते।
मुक्तिः करायिता तस्य दृढविश्वासकारणात् ।।१०६।।

भावानुवादः—तुम सब जगह चारों ओर भाव से आत्मा को ही देखो। कस्तूरी मृगतुल्य (जो कस्तूरी उसके पास ही रहती है) उसके लिए अन्य दिशा में मत दोड़ो।

आवरणे सति तद्रूपं दृश्यते न यथातथम्।
तदपागमनेनैव दिव्यं ज्योतिः प्रकाशते ॥१००॥

अन्वयः—आवरणे सति तद्रूपम् यथातथम् न दृश्यते। तदपागमनेन एव दिव्यं ज्योतिः प्रकाशते।

भावाबानुदः—आवरण के होने पर उसका सही रूप दिखाई नहीं देता है। उसको दूर करने से ही दिव्य ज्योति प्रकाशित होती है।

कर्मावृतिमपानेतुमात्मनो हितकारक।
मुत्तमं साधनं प्रोक्तं प्रार्थनं परमात्मनः ॥१०१॥

अन्वयः—कर्मावृतिम् अपानेतुम् आत्मनः हितकारकम् परमात्मनः प्रार्थनम् उत्तमम् साधनम् प्रोक्तम्।

भावानुवादः—कर्मों के आवरण को दूर करने के लिए, आत्मा की भलाई करने के लिए परमात्मा की प्रार्थना उत्तम साधन कही गई है।

आत्मा च स्वयमेवैति परमात्मपदं ध्रुवम्।
तदर्थमखिलैर्मान्या प्रार्थना वांच्छितार्थदा ॥१०२॥

अन्वयः—आत्मा च स्वयम् एव ध्रुवम् परमात्पपदं एति। तदर्थम् अखिलैः वांच्छितार्थदा प्रार्थना मान्या।

भावानुवादः—आत्मा स्वयं ही नियत साधनों से परमात्मपद को प्राप्त होती है। उसके लिए परमात्मा की प्रार्थना सर्वमान्य है।

परात्मादर्शरूपोऽस्ति, तत्पथे गमनेन च।
आत्मापि जायते सैव, विद्यते नात्र संशयः ॥१०३॥

अन्वयः—परात्मा आदर्शरूपः अस्ति। आत्मा अपि तत्पथे गमनेन च स एव जायते। अत्र संशयः न विद्यते।

भावानुवाद:—परमात्मा आदर्शरूप है। आत्मा भी उसके पथ पर गमन से परमात्मा हो जाता है। इस विषय में सन्देह नहीं है।

परात्मतत्त्वसंप्राप्तिः नास्त्यसाध्या कथंचन।
कर्तव्यपथमासाद्य साध्यसिद्धिर्विधीयताम् ॥१०४॥

अन्वय:—परात्मतत्त्वसम्प्राप्तिः कथंचन असाध्या नास्ति। कर्त्तव्यपथम् आसाद्य साध्यसिद्धिः विधीयताम्।

भावानुवाद:—परमात्मतत्त्व की प्राप्ति कभी असाध्य नहीं है। कर्त्तव्यपथ को प्राप्त कर साध्य की सिद्धि की जा सकती है।

कार्यसिद्धिर्भवत्येव विलम्बेनाथवा द्रुतम्।
स्वावलम्बनमासाद्य किं कर्त्तुं ना नहि क्षमः ॥१०५॥

अन्वय:—विलम्बेन अथवा द्रुतम् कार्यसिद्धिः भवति एव। ना स्वावलम्बनम् आसाद्य किम् कर्त्तुम् नहि क्षमः (भवति)।

भावानुवाद:—देरी से अथवा शीघ्रता से कार्य की सिद्धि अवश्य होती है। मनुष्य स्वावलम्बन को लेकर क्या करने में समर्थ नहीं है। अर्थात् सब कुछ कर सकता है।

मुमुक्षुर्यदियत्नेन, साधने भूरि चेष्टते।
मुक्तिः करायिता तस्य दृढविश्वासकारणात् ॥१०६॥

अन्वय:—मुमुक्षुः यदि यत्नेन साधने भूरि, चेष्टते। तदातस्य मुक्तिः दृढविश्वासकारणात् करायिता (भवति)।

भावानुवाद:—मुमुक्षु यदि यत्न से साधना में अधिक चेष्टा करे, तो उसकी मुक्ति दृढविश्वास के कारण हस्तगत हो जाती है।

दृढां श्रद्धां विधायैव कर्मावरणसन्तती।
रुन्मूलयितुमेकाग्रो यत्नं कुर्यादतन्द्रितः ॥१०७॥

अन्वय:—एकाग्र:, अतन्द्रित: (सन्) दृढां श्रद्धां विधाय एव कर्मावरणसन्तती: उन्मूलयितुम् यत्नम् कुर्यात् ।

भावानुवाद:- जीव एकाग्र अतन्द्रित होता हुआ दृढ़ श्रद्धा को धारण करके ही कर्मों के आवरण समुदाय का जड़ से उन्मूलन करने के लिए यत्न करे।

आत्मा यत्नपरो भूयात् कर्मावरणनाशने ।
तमादर्शं समाश्रित्य निराशो माभवेत्क्वचित् ॥१०८॥

अन्वय:—आत्मा तम् आदर्शं समाश्रित्य कर्मावरणनाशने यत्नपर: भूयात् । क्वचित् निराश: मा भवेत् ।

भावानुवाद:—आत्मा उस आदर्श को समक्ष रखकर कर्मावरण के नाश में यत्नवान् हो ! कभी निराश नही होना चाहिए ।

यया कर्मक्षयो लोके, सुशान्तिर्लभ्यते परा ।
क्षमा लाभकरी प्रोक्ता, चेहामुत्र न संशय: ॥१०९॥

अन्वय:—यया लोके कर्मक्षय:, परा सुशान्ति: च लभ्यते । सा क्षमा इह अमुत्र च लाभकरी प्रोक्ता । अत्र संशय: न !

भावानुवाद:—जिसके द्वारा लोक में कर्म क्षय होता है, परम शान्ति प्राप्त होती है, वह क्षमा उस लोक तथा परलोक में लाभकारी कही गई है । इसमें संशय नहीं है ।

ईश्वर: प्रेरको नास्ति, दण्डद: पापपुण्ययो: ।
निष्कलंको निराकारो वीतरागो निरंजन: ॥११०॥

अन्वय:—निष्कलंक: निराकार: वीतराग:, निरंजन: पापपुण्ययो: दण्डद: प्रेरक: ईश्वर: नास्ति !

भावानुवाद:—ईश्वर कलंक रहित, निराकार, वीतराग, निरंजन है । अत: वह पाप पुण्य के विषय में दण्डदाता तथा प्रेरक नहीं है ।

**सूर्यास्यधिकतेजस्वी, परमात्मा प्रकीर्तितः ।**
**आधातुं तद् गुणानेव प्रयतेतनरः सदा ॥१११॥**

अन्वयः—परमात्मा सूर्याऽस्यधिकतेजस्वी प्रकीर्तितः । नरः सदा तद्गुणान् एव आधातुम् प्रयतेत !

भावानुवाद:—आत्मा का चरम विकसित परमात्म रूप सूर्य से भी अधिक तेजस्वी कहा गया है । साधक सदा उसके ही गुणों को ग्रहण करने का सतत प्रयत्न करे ।

**अपसार्याः प्रयत्नेन सदैवं कामवासनाः ।**
**तत्परश्च तदादेवो वस्तुं हृदयमन्दिरे ॥११२॥**

अन्वयः—(नरैः) सदा एवं प्रयत्नेन कामवासनाः अपसार्याः । तदा एव देवः हृदयमन्दिरे वस्तुम् तत्परश्च (अस्ति) ।

भावानुवाद:—मनुष्यों को चाहिए, कि सदा प्रयत्नों से कामवासना को दूर करे। तभी वह परमात्मा देव हृदयमन्दिर में रहने को तत्पर होता है ।

**परमात्मैवधातव्यः स्वगुणैः सर्वभावनः ।**
**सर्वैः समर्चनीयोऽस्ति, सर्वेषां गतिरव्ययः ॥११३॥**

अन्वयः—नरैः स्वगुणैः सर्वभावनः परमात्मा एव धातव्यः । ससर्वैः समर्चनीयः सर्वेषाम् गतिः अव्ययः च अस्ति !

भावानुवाद:—मनुष्यों को चाहिये कि अपने गुणों से सर्वभावन परमात्मा का ही ध्यान करे । वही सबका इष्ट पूजनीय है । सबका आश्रय स्थान तथा स्वयं अव्यय है ।

**भक्त्या लभ्यो विशेषेण सर्वकल्याणकारकः ।**
**समं पश्यतिसर्वत्र भेदभावोन विद्यते ॥११४॥**

अन्वयः—(सपरमात्मा) सर्वकल्याणकारकः भक्तया विशेषेण लभ्यः । स सर्वत्र-

समं पश्यति । तत्र कोपि भेदभावोन विद्यते ।

भावानुवादः—सर्व कल्याणकारक परमात्मा को विशेषभक्ति के द्वारा ही प्राप्त किया जा सकता है । वह सर्वत्र समभाव से देखता है । वहाँ किसी प्रकार का कोई भेदभाव नहीं है ।

**विराट्व्यापकसत्तां तां नाम्निप्रोतां समाश्रयेः ।**
**गौणं नाम परिज्ञेयं, वस्तुप्राधान्यमिष्यताम् ॥११५॥**

अन्वयः—(त्वम्) ताम् विराट्व्यापकसत्ताम् नाम्निप्रोताम् समाश्रयेः । नाम गौणं परिज्ञेयम् ! वस्तुप्राधान्यम् इष्यताम् ।

भावानुवादः—नाम के धागे से पिरोयी गई उस विराट् एवं ज्ञानापेक्ष व्यापक सत्ता का आश्रय लेना चाहिये । उस सत्ता के नाम को अप्रधान मानना चाहिये । वस्तु की प्रधानता स्वीकार करनी चाहिये ।

**सद्वस्तु च सदेवेति, नामभेदैर्न भिद्यते ।**
**पापनाशाय कर्त्तव्या प्रार्थना परमात्मनः ॥११६॥**

अन्वयः—तद् वस्तु च सद् एवइति । तत् नामभेदैः न भिद्यते । पापनाशाय परमात्मनः प्रार्थना कर्त्तव्या ।

भावानुवादः—सद् वस्तु की सत्ता सत् ही रहती है । नामभेद से उसका भेद नहीं होता । पापों का विनाश करने के लिए परमात्मा की प्रार्थना करनी चाहिये ।

**यथा खगोनभः प्राप्य निर्भयो जायते तथा ।**
**भक्तोऽपि च परात्मानमाश्रयं ननु भक्तितः ॥११७॥**

अन्वयः—यथा खगः नभः प्राप्य निर्भयः जायते । तथा भक्तः अपि भक्तितः परमात्मानम् आश्रय प्राप्य निर्भयः जायते ।

भावानुवादः—जैसे पक्षी आकाश को प्राप्त कर निर्भय हो जाता है । वैसे ही

भक्तसाधक श्री परमात्मा का आश्रय पाकर निर्भय हो जाता है ।

सर्वं विश्वबलं तुच्छमीश्वरस्य बलं बलम् ।
समक्षं रत्नराशेश्च शर्करानैव तिष्ठति ।।११८।।

अन्वयः—सर्वं विश्वबलं तुच्छम् ईश्वरस्य बलमेव बलम् (भवति) । शर्करा रत्न-राशेः च समक्षम् न एव तिष्ठति ।

भावानुवादः—परमात्मा के बल (शक्ति) के सामने संसार का बल तुच्छ है । जैसे कंकड़, रत्न राशि के समक्ष कभी नही टिक सकता ।

संसारस्याटवीं प्राप्य भ्रमन् जीवो भयान्वितः ।
आर्यक्षेत्रनरायुष्ये लब्ध्वा तद्धामकं व्रजेत् ।।११९।।

अन्वयः—भयान्वितः जीवः भ्रमन् (सन्) संसारस्य अटवीम् प्राप्य आर्यक्षेत्रनरा-युष्ये लब्ध्वा तद् धामकं व्रजेत् !

भावानुवादः—भय से युक्त जीव घूमता हुआ संसार की अटवी को प्राप्त कर आर्यक्षेत्र और नरायुष्य को प्राप्त करके साधना के बल से परमात्मस्वरूप को प्राप्त करे ।

परमात्मपदध्यानं स्वहस्ते विद्यते ध्रुवम् ।
भवान्निर्गत्य मेधावी निर्भयं तत्पदं व्रजेत् ।।१२०।।

भावानुवादः—निश्चय ही परमात्मा का ध्यान अपने हाथों में है । अर्थात् स्वाश्रित है । बुद्धिमान को चाहिये कि वह संसार से निकलकर निर्भय बनकर उस परमात्मपद को प्राप्त करे ।

चिन्तनं मननं नित्यं ध्यानादिपरिकल्प्यताम् ।
परमात्मानमालब्धुमात्मशक्तिं प्रबोधयेत् ।।१२१ ।

अन्वयः—चिन्तनं, मननं नित्यम् ध्यानादिपरिकल्प्यताम् ! परमात्मानम् आलब्धुम् आत्मशक्तिम् प्रबोधयेत् !

भावानुवादः—चिन्तन, मनन, ध्यान आदि नित्य करना चाहिये। तथा परमात्म पद को पाने के लिए आत्मशक्ति को प्रबुद्ध करना चाहिये।

शयनं नो वर प्रोक्तं जागरः लाभदायकः।
जागर्तावागतायां च शयनं नोपजायते ॥१२२॥

अन्वयः—शयनं वरं नो प्रोक्तम्। जागरः लाभदायकः (भवति)। जागर्तौ आगतायाम् च शयनं न उपजायते!

भावानुवादः—शयन अच्छा नहीं कहा गया है। जागरण लाभदायक होता है। जागरण के आने पर शयन होता ही नहीं है।

महर्घं रत्नमाप्राप्तमुपहारे ततोऽखिलम्।
उपकाराः बहवस्तस्य मन्तव्यापि कृतज्ञता ॥१२३॥

अन्वयः—महर्घम् रत्नम् अप्राप्तम्। ततः तदुपहारे अखिलम् (परिदेयम्)। तस्य (परमात्मनः) बहवः उपकाराः (सन्ति)। अतः तस्य कृतज्ञता अपि मन्तव्या!

भावानुवादः—आप्त सर्वज्ञों से महर्घरत्न–ज्ञान–दर्शन–चारित्र प्राप्त किया है। उसे पाने के लिए सर्वस्व उपहार रूप में दे देना चाहिये। उस सर्वज्ञ पुरुष के हम पर बहुत उपकार होने से उनकी कृतज्ञता भी स्वीकार करनी चाहिये।

सर्वश्रेष्ठ शरीरं तत् लब्धं पुण्येनभूयसा।
तदेवं भजने भक्तौ साधनं परिकल्प्यताम् ॥१२४॥

अन्वयः—भूयसा पुण्येन तत् सर्वश्रेष्ठम् शरीरम् लब्धम्। एवम् तत् भजने भक्तौ च साधन परिकल्प्यताम्।

भावानुवादः—अनन्त पुण्य से सर्वश्रेष्ठमानव शरीर प्राप्त किया है। उसे भजन एव परमात्मभक्ति में मुक्ति का साधन बना लेना चाहिये।

जलभेदो न भुवने समानं परिलक्ष्यते।
सर्वेषां जीवनं प्रोक्त जिनवाणी तथैव च ॥१२५॥

अन्वयः—भुवने जले भेदः न । तत् सर्वत्र समानं परिलक्ष्यते । तत् सर्वेषां जीवनम् प्रोक्तम् । तथा एव च जिनवाणी अपि मता !

भावानुवादः—लोक में जल के विषय भेद नही है । उसका उपयोग सब जगह समान परिलक्षित होता है । जल को सभी का जीवन कहा गया है । इसी प्रकार जिनवाणी भी प्राणियों की जीवन मानी गई है ।

**पूर्वे येन यथा याताः तेन गन्तव्यमेव च ।**
**लब्धा या स्थितिरेभिः सा, लब्धव्या सर्वमानवैः ।।१२६।।**

अन्वयः—पूर्वे येन पथा याताः तेन पथा च गन्तव्यम् एव । एभिः या स्थितिः लब्धा । सा मानवैः लब्धव्या ।

भावानुवादः—पूर्व तीर्थंकर–सर्वज्ञ पुरुष जिस रास्ते से सिद्धि महल को प्राप्त हुए है । उसी मार्ग से प्रत्येक भव्य को चलना चाहिये । उन्होंने जिस मोक्ष स्थिति को प्राप्त की है । उसी स्थिति को हमें भी प्राप्त करना चाहिए ।

**जनाः प्रियाप्रिये प्राप्तुं यथा यत्नं प्रकुर्वते ।**
**आत्मा ततोऽधिक कुर्यात् परमात्मसमाश्रये ।।१२७।।**

अन्वयः—जना। (लोके) यथा प्रियाप्रिये प्राप्तुम् यत्नं प्रकुर्वते । आत्मापि परमात्मसमाश्रये तत। अधिकं यत्नम् कुर्यात् !

भावानुवादः—मनुष्य जैसे लोक में भौतिक प्रिय–अप्रिय को पाने का यत्न करते हैं । वैसे ही आत्मा को भी परमात्मा की प्राप्ति के लिए अधिक प्रयत्न करना चाहिये ।

**कुर्वीत च नमस्कारं, गुणग्रामस्य कीर्तनम् ।**
**विदधीतविभाकृष्टः सर्वथात्मसमर्पणम् ।।१२८।।**

अन्वयः—(परमात्मनः) नमस्कारं कुर्वीत । गुणग्रामस्य कीर्तनम् च (कुर्वीत) विभाकृष्ट। सर्वथा तत्र आत्मसमर्पण विदधीत !

भावानुवादः—परमात्मा को नमस्कार करना चाहिये। उनके गुणों का कीर्तन करना चाहिये। और उनकी प्रभा से आकृष्ट होकर उन्हे पाने में अपना आत्मसमर्पण कर देना चाहिये।

आत्मौपम्येन संपश्येत् समं सर्वत्र मानवः।
सर्वकर्माणि संत्यज्य परं सिद्धत्वमेष्यति ॥१२९॥

अन्वयः—मानवः आत्मौपम्येन सर्वत्र समं पश्येत् सर्वकर्माणि संत्यज्य परम् सिद्धत्वं एष्यति।

भावानुवादः—मानव अपने समान हो अन्य को देखे। सभी कर्मों को नष्ट कर सिद्धत्वस्वरूप को प्राप्त करे।

सम्यक्दृष्टेस्तथामिथ्यादृष्टेश्च महदन्तरम्।
आद्ययानन्दसंप्राप्तिरन्ययाऽशान्तिरेव च ॥१३०॥

अन्वयः—सम्यक्दृष्टेः तथा मिथ्यादृष्टेः च महद् अन्तरम् अस्ति। आद्यया आनन्दसंप्राप्तिः (भवति)। अन्त्यया च अशान्तिः एव (भवति)।

भावानुवादः—सम्यक्दृष्टि एवं मिथ्यादृष्टि में महान् अन्तर है। सम्यक्त्व से आनन्दप्राप्ति होती है, जबकि मिथ्यात्व से अशान्तिही उत्पन्न होती है।

मुक्तेर्द्वारं समं प्रोक्तमिति ज्ञात्वा प्रवर्तताम्।
तेन जीवस्य जायेत परं कल्याणमीप्सितम् ॥१३१॥

अन्वयः—समम् मुक्तेः द्वारम् प्रोक्तम् इति ज्ञात्वा प्रवर्तताम्। तेन जीवस्य ईप्सितम् परम् कल्याणम् जायेत!

भावानुवादः— समता मुक्ति का द्वार कही गई है। ऐसा जानकर उसमें प्रवृति करनी चाहिए। उससे जोव को ईप्सित परमकल्याण पद की प्राप्ति होती है।

विश्वशान्तेर्दृढं मूलं सर्वजीवसुखावहम्।
इच्छेच्च केवलं लोके, विजयं परमात्मनः ॥१३२॥

न्वयः—लोके विश्वशान्तेः दृढ मूलम् सर्वजीवमुखावहम् परमात्मनः च केवल विजयम् एव इच्छेत् !

ावानुवाद।—लोक में विश्वशान्ति का दृढ मूल सर्वजीवों को सुख देने वाला केवल परमात्मपदप्राप्ति की ही कामना करे ।

**भगवन्नामैव संगृह्णयात् आत्मकल्याणकारकम् ।**
**सत्यमीश्वरतत्त्वस्य भजनं समुपासना ॥१३३॥**

अन्वयः—आत्मकल्याणकारकम् भगवान्नाम एव सगृह्णयात् ! ईश्वरतत्त्वस्य भजनं समुपासना सत्यम् (अस्ति) ।

भावानुवादः—आत्मकल्याणकारक वीतराग देव भगवद् नाम का भी सग्रह करे । मुक्त ईश्वर की भजन-उपासना ही परमार्थ सत्य है ।

**सरलोभक्तिमार्गोऽयमात्मशोधनकारकः ।**
**सर्वेषां सुलभोलोके, मुमुक्षूणां विशेषतः ॥१३४॥**

अन्वयः—आत्मशोधनकारकः अयम् भक्तिमार्गः सरलः अस्ति । लोके अयम् सर्वेणाम् सुलभः विशेषतः मुमुक्षृणा (सुलभः अस्ति) ।

भावानुवादः—आत्मशोधन कारक यह भक्ति मार्ग सुलभ है । लोक में यह सबके लिए सुगम है । विशेष कर मुमुक्षुओं के लिए सुगम है ।

**शार्दूलविक्रीडितछन्दः—**

**भीतिर्नैव कदापि सर्वविषयान्सांसारिकान्मानसे ।**
**शान्तेरेव समस्तजीवनिवहे साम्राज्यमातन्यते ॥**
**निर्वाणं पदमाप्यते सुखकरं कर्मक्षयोयेन स ।**
**जायेतात्मसमुन्नतेरधिगतावध्यात्ममार्गो भुवि ॥१३५॥**

अन्वयः—(येन) सांसारिकात् सर्वविषयात् कदापि मानसे भीतिः न एव । समस्तजीवनिवहे शान्तेरेव साम्राज्यं आतन्यते । येन सुखकरं निर्वाणपदं आप्यते ।

येन च कर्मक्षयो जायेत । आत्मसमुन्नतेः अधिगतौ स अध्यात्ममार्गः भुवि (विजयते) !

भावानुवाद.—जिससे सांसारिक विषयो से मन में कभी भय नही होता । समस्त जोवसमुदाय में शांति का साम्राज्य ही फैलता है । जिससे सुखमय निर्वाण-पद प्राप्त होता है । तथा कर्मक्षय होता है । वह आत्मा की समुन्नति प्राप्त होने पर अध्यात्म जयवन्त होता है ।

आध्यात्मिकः द्वादशः सर्गः समाप्तः ।

श्रीमज्जवाहरयशोविजयाभिधाने,
नानेशसच्चरणयोः शरणावधाने ।
श्री चन्द्रमौलिकविनिर्मितसत्प्रबन्धे,
अध्यात्मभावभृतभास्करसर्गपूर्तिः ॥१३६॥

## अथ त्रयोदशः सर्ग–प्रारम्भः

### अभ्यर्थना सर्गः

ऊर्ध्वां प्रभो ! गतिमनल्पधियाश्रयामि, सर्वोच्चलक्ष्यमपि संयमनाय यामि ।
विश्वप्रलोभपतनं न भवेद्यया मे, तच्छक्तिमेवममितां मयि तां निधेहि ॥१॥

अन्वयः—हे प्रभो ! (अहम्) अनल्पधिया उर्ध्वाम् गतिम् आश्रयामि । संयमनाय सर्वोच्चलक्ष्यम् अपियामि । यया मे विश्वप्रलोभपतनम् न भवेत् । ताम् अमिताम् ततशक्तिम् एव मयि निधेहि ।

भावानुवादः—हे प्रभु ! मैं प्रखर बुद्धि के द्वारा उच्चस्थान को पाना चाहता हू । संयम साधना के लिए मुझे सर्वोच्च लक्ष्य भी प्राप्त हो । जिससे संसार की किसी भी वस्तु के लोभ मे मेरा पतन न हो, मुझमें ऐसी अपारशक्ति का निवास हो । आपकी कृपा से मैं विशिष्ट शक्तिशाली बनूं ।

ससारसंगरधराप्रतिसत्परीतः, तीक्ष्णैः शिलीमुखनिपातचयैर्विविद्धः ।
शस्त्रप्रयोगरहितः त्वयि संप्रतीतः, त्वामेव–रक्षकमयंकवचं लभेय ॥२॥

अन्वय.—अहम् ससारसगरधराप्रतिसत्परीतः तीक्ष्णैः शिलीमुखनिपातचयैः विविद्धः, शस्त्रप्रयोगरहितः, त्वयि सम्प्रतीतः रक्षकमयं कवच त्वाम् एव लभेय !

भावानुवादः—ससार रूपी युद्ध भूमि मे रागद्वेष रूपी शत्रुओं से घिरा हुआ, तीखे-तीखे बाणों के निपात से आहत, स्वय शस्त्र प्रयोग से रहित, आपके प्रति अनन्य विश्वस्त मै आपको ही रक्षा करने वाला अपना कवच बनाना चाहता हूं । यदि आप मेरे रक्षक बन जाये तो शत्रुगण मेरा कुछ भी नहीं बिगाड़ सकते ।

त्वत्तो न वित्तमतुलं भरणाययाचे,
नो कामनापि कलिता हृदिकापिशिष्टा ।
श्रद्धा विभो ! त्वयि ममास्तु च सत्यमेमि,
आशा तवैव वरदानमिदं विधेहि ॥३॥

**अन्वयः—हे** विभो ! भरणाय त्वत्तः अतुल वित्तम् न याचे । हृदिकापि कलिता कामनापि नो शिष्टा । त्वयि मम श्रद्धा अस्तु । सत्यं च एमि । तव एव आशा अस्ति । इद वरदानं विधेहि ।

भावानुवाद:—हे प्रभो ! मै भरण पोषण के लिए आप से अपार धन की कामना नहीं करता हूं । मेरे हृदय में कोई सुन्दर आकर्षक इच्छा भी शेष नही है । आप पर मेरी श्रद्धा हो, मै सत्य को प्राप्त करूं । मुझे केवल आप की ही आशा है । इस प्रकार का वरदान मुझे अवश्य प्रदान करे ।

**सृत्वा प्रयत्नसरणिं सफलोन जातो,**
**युध्वान्तरैः विकटशत्रुभिरर्दितोपि ।**
**कान्तारमध्यपरिपन्थदिशावबोधोऽ,**
**भ्रान्तो भवानि यदि तत्र कृपां कृषीष्ठाः ॥४॥**

**अन्वय:**—अहम् प्रयत्नसरणि कृत्वा सफलो न जातः । आन्तरैः विकटशत्रुभिः युध्वा अर्दितः अपि (अस्मि) । कान्तारमध्यपरिपन्थदिशावबोधः (अस्मि) । यदि त्वं मयि कृपाँ कृषीष्ठाः तर्हि अभ्रान्तो भवानि !

भावानुवाद:—मैं जीवन में अनेक प्रकार के प्रयत्नो को करके भी सफल नही हुआ । भीतरी विकट शत्रुओं से युद्ध कर व्यथित हो गया हू । संसार रुपी घोर जंगल मे विपरीत दिशा में जा रहा हूं । कष्ट पा रहा हू । हे भगवान् ! यदि आपकी आदर्श कृपा हो जाये, तो मेरी सारी भ्रान्ति दूर हो जाये । ऐसी विनम्र प्रार्थना है ।

**आसीय तेंकमहमेव शिशुर्जनन्याः, नान्यत्र कस्य शरणं वरणीयमास्ताम् ।**
**केन्द्रस्त्वमेव मम वृत्तिपथस्य नित्यम्, चिन्वीय चारुचरणौ ननु तावकीनौ ॥५॥**

**अन्वय:**—अहम् जनन्याः शिशुः (इव) ते अङ्के एव आसीय । अन्यत्र कस्य अपि शरणं वरणीयं न आस्ते । मम वृत्तिपयस्य नित्यम् त्वम् एव केन्द्रम् (असि) । ननु तावकीनो चारुचरणौ चिन्वीय !

भावानुवाद:—जैसे बालक माता की गोद में बैठता है, वैसे ही मैं भी आपके बताये हुए मार्ग की गोद में आसीन होऊ । मेरे लिए और कोई दूसरा शरण

वरणीय नही है। मेरी सारी जीवन की गतिविधियों के एकमात्र केन्द्र आप हो हों, और श्रुत एव शील रूप आपके ही सुन्दर चरणों को मैं अपने जीवन का आश्रय बनाऊं। आप ही मेरी अनन्य गति हों !

**सम्प्राप्तमेव कठिनं यदि कर्म केषाम्,**
**साहाय्यमाशु विहितं भवताऽवता तान्।**
**सम्प्राप्नुयादपि तथैव ममापि कच्चित्,**
**तन्मत्कृतेपि कृपया करणीयमास्ताम् ॥६॥**

अन्वयः—केषाम् यदि कठिनं कर्म सम्प्राप्तम् एव ! तान् अवताभवता च आशु साहाय्यम् विहितम्। तथा एव यदि ममापि कच्चित् तत् सम्प्राप्नुयात्। तत् मत्कृते अपि (साहाय्यम्) करणीयम् आस्ताम् !

भावानुवादः—किसी को भी यदि कोई दुःखदायी समय प्राप्त हुआ तो, आप की की श्रद्धा से उनका रक्षण हुआ। वैसे मुझे भी यदि कभी सम्भवतः कठिनाई, विपत्ति का समय प्राप्त हो तो आप ही के मार्ग का सॅबल रक्षक हो।

**ध्यानेन ते गुणगणस्य निरन्तरेण, जातं तवैव कृपया विनतावदातम्।**
**निम्नं निपत्य विधुरेपिभयप्रसंगे, जायेत नो मम मनस् तमसामलीनम् ॥७॥**

अन्वयः—ते गुणगणस्य निरन्तरेण ध्यानेन तव एव कृपया मम मनः विनतावदातम् जातम् (अस्ति)। तत् विधुरे अपि भयप्रसॅगे निम्नं निपत्य तमसामलीनं नो जायेत।

भावानुवादः—हे भगवन्। आपके गुणसमूहों के निरन्तर ध्यान से एवं आपकी कृपा से ही मेरा मन विनय से समुज्ज्वल हो गया है। वह मन भय के प्रसॅग मे या कष्टकर समय में भी कभी नीचे गिरकर अज्ञानान्धकार से मलीन नहीं हो।

**मैवं कदापि तव पूतपथे किरामि, शूलं परैर्बहुविकीर्णचयं चिनोमि।**
**आशा मदीयहृदये बृहदूर्मिलास्ते, सत्यं विलेप्स्यति ममाचरितं च पापम् ॥८॥**

अन्वयः—तवपूतपथे कदापि शूलम् मा एव किरामि। परैः वहुविकीर्णचयं (शूलं)

चिनोमि । मम हृदये (तव) बृहद्‌दूर्मिला आशा आस्ते ! यत् मम आचरितं पापं सत्यं विलेष्यति ।

भावानुवादः—हे भगवन् ! तुम्हारे द्वारा प्रदिष्ट धर्म मार्ग में कभी शूलबाधा नही पहुंचाऊ । और दूसरों के द्वारा अनेक प्रकार की उत्पन्न की गई बाधाओं को चुन-चुनकर दूर करूं । मेरे हृदय में लहराती हुई यह आशा है कि, आपकी अभ्यर्थना से मेरे सम्पूर्ण आचरित पाप विलुप्त हो जायेंगे ।

दोषाकरस्य भवदोषदिशं न पश्य ।
क्षन्ता त्वमेवममुमात्मसमं विधेहि ।
नान्तं न चादि मलिनद्युतिदूषणानाम्,
तत्क्षामये भगवतां शरणाऽगतोऽहम् ॥९॥

अन्वयः—(त्वम्) दोषाकरस्य (मम) भवदोषदिशं न पश्य । त्वमेव क्षन्ता असि । अमुं (माँ) आत्मसमं विधेहि । (मम) मलिनद्युतिदूषणानाम् न अन्तम् न च आदि । (अस्ति) । अहम् तत् क्षामये । भवतां च शरणागतः अस्मि !

भावानुवादः—हे क्षमा के सागर मेरे सांसारिक दोषों की दिशा को मत देखो, मुझे अपने समान बनालो । मेरे मलीन दोषों का आदि अन्त नहीं है । वे अनन्त है । मैं उनकी शान्ति के लिए ही आपकी शरण में आया हूं ।

पश्यामि यद्यवहितो निजदूषणानि,
वक्तुं न शक्तिरपि ते सविधेक्षमायै ।
संश्रुत्य शक्तिविरुद्धं भवशामकं तम्,
आशान्वितो निजसमुद्धरणे महेश ॥१०॥

अन्वयः—हेमहेश ! यदि अवहितः निजदूषणानि पश्यामि ते सविधे क्षमायैवक्तुं शक्तिः अपि न । (ते) भवशामकं तम् शक्तिविरुदम् सश्रुत्य निजसमुद्धरणे आशान्वितः (अस्मि) ।

भावानुवादः—हे महेश ! यदि सावधान होकर अपने दोषों को देखता हूं, तो आपके समक्ष क्षमायाचना कहने की मेरी शक्ति भी नहीं हैं । संसार के दोषों के शान्त करने वाली शक्ति के आपके गौरव का सुनकर अपने समुद्धार के

विषय में आशा से युक्त हो गया हूं। मेरा उद्धार आपके बताए हुए मार्ग से हो जायेगा। ऐसी आशा का संचार हो गया है।

अन्विष्य लब्धमतुलं शरणं त्वदीयम्,
यस्मै स्पृहां विदधते भवभारभुग्नाः।
आशान्वितस्य भवता परिपूरणीया,
त्वत्साम्यमाप्तुमनसो मम चार्थनेयम् ॥११॥

अन्वयः—अन्विष्य अतुल त्वदीयं शरणं लब्धम्! यस्मै भवभावभुग्नाः स्पृहां (नराः) विदधते। भवता त्वत्साम्यम् आप्तुमनसः आशान्वितस्य मम च इयम् अर्थना ननु पूरणीया।

भावानुवादः—मैने बहुत खोजने के बाद आपकी उस शरण को प्राप्त किया है, जिसको संसार के भार से दबे हुए लोग पाने के लिए इच्छा करते है। आपकी समानता पाने की इच्छा वाले आशा ले युक्त मेरी इस प्रार्थना में संबल आये, जिससे अभीष्ट लक्ष्य को पा सकू।

सान्निध्यमाप्य भवतो भवतोऽपितीर्णाः,
पापाः पवित्रचरितस्य कृपाकरस्य।
भक्ताब्जमानसविकासकरं वरेण्यम्,
संश्रूयतेऽमितवचो विततागमेषु ॥१२॥

अन्वयः—पापाः पवित्र चरितस्य कृपाकरस्य भवतः सान्निध्यम् आप्य भवतः अपि तीर्णाः। इत्थं भक्ताब्जमानसविकासकरं वरेण्यम् अमितवचः विततागमेषु संश्रूयते!

भावानुवादः—पवित्र चरित्र वाले कृपालु आपके आदर्श को पाकर पापी भी संसार पार हो गये। इस प्रकार के भक्तों के मानस कमल को विकसित करने वाले सुन्दर आकर्षक अमित दिव्य वचन विस्तृत जैनागभों में सुनाई पड़ते हैं।

प्रामाण्यमागमकृतं परिलभ्य भक्त्या,
सान्निध्यमत्र भवतो भवतोऽपि लब्धम्।
संरक्षणं करुणया सततं विधेयम्,
श्रद्धान्वितस्य मनसो ममभावभूमेः ॥१३॥

अन्वयः—भक्त्या आगमकृतम् प्रामाण्यम् परिलभ्य अत्रभवतः भवतः अपि सान्निध्यम् लब्धम् ! श्रद्धान्वितस्य मम मनसः भावभूमेः करुणया सततं संरक्षणं विधेयम् !

भावानुवाद:—भक्तिपूर्वक आगमकृत प्रामाण्य प्राप्त कर विशिष्ट प्रार्थना करने के लिए आपकी भाव सन्निधि में आया हूं । श्रद्धा से युक्त मेरे मन की भावनाओं को आपकी आदर्श छाया में पवित्र बना सकूं । मेरी भावना सदा आपकी शरण पाने को विद्यमान रहे ।

**सांसारिका विषमया विपुलाः विकाराः,**
**मामत्तुमेवमभितो सततं द्रुवन्ति ।**
**तैरर्दितं विषमभीतिभयान्वितं तम्,**
**त्रायस्व देव ! विरुदं परिपालयन्स्वम् ॥१४॥**

अन्वयः—हे देव ! सांसारिकाः विषमयाः विपुलाः विकाराः माम् अत्तुम् एव अभितः सततं द्रुवन्ति । तैः अर्दितं विषमभीतिभयान्वितं तं (माम्) स्वम् विरुदं परिपालयन् त्रायस्व ।

भावानुवाद:—हे देव ! सासारिक, विषमय, विपुल विकार मुझे खाने के लिए ही चारों ओर से निरन्तर सदा दौड़ रहे हैं । उनसे सताया गया विषम साँसारिक भय से युक्त मैं आपकी छत्रछाया में संरक्षण प्राप्त कर सकूं यही प्रार्थना है ।

**मां भाययन्ति सततं ननु शोणिताक्षाः,**
**वैकारिकाः विषमयोल्वणजालमालाः ।**
**व्यालाः महोग्रफणमुत्फणमाश्रयन्तः,**
**तेभ्यो विभो ! च दयितं परिरक्ष रक्ष्यम् ॥१५॥**

अन्वयः—हे विभो ! विषमयोल्वणजालमालाः महोग्रफणम् उत्फणम् आश्रयन्तः शोणिताक्षाः वैकारिकाः व्यालाः माम् सततम् ननु भाययन्ति । तेभ्यः दयितं रक्ष्यम् च (माम्) परिरक्ष !

भावानुवाद:—हे विभो ! विषैले भयानक जाल की माला वाले, बहुत उग्र फन को फैलाने वाले, लाल-लाल आंखों वाले, साँसारिक विकार रूपी सर्प मुझे

सदैव डराते रहते है, पर मैं आपके मार्ग का संवल लेकर निर्भय रहूं । जिससे उनसे त्राण पा सकूं ।

**कस्यापि कुत्र मयका विहितं हितन्नो, लोके निरामयसुख मम नापि जज्ञे ।**
**पूर्त्यं भवे विफलजन्म निरुद्यमं मे, साफल्यमेष्यति कदाभगवन् विलज्जे ।।१६।।**

अन्वयः—मयका कस्यापि कुत्रापि हित नोविहितम् । मम लोके निरामयसुखम् अपि न जज्ञे ! भवे मे निरुद्यमं विफलजन्म पूर्त्यं एव जातम् । हे भगवन् । कदा साफल्यम् एष्यति इति विलज्जे ।

भावानुवादः—मेरे द्वारा कभी किसी का भला नहीं किया गया । मुझे संसार में निर्बाध आपत्ति रहित सुख भी उत्पन्न नही हुआ । ससार में मेरा उद्योगहीन जीवन व्यर्थ रहा है । हे भगवन् ! वह मेरा जीवन सफल कब होगा ? इस विषय में मैं बहुत लज्जित हूं ।

**क्रोधादिदग्धहृदयो भवभावनाभिः, लोभाहिना च परितः परिदष्टदेहः ।**
**मायाभिमानपरिबद्धसमग्रवृतिः बद्धोहमत्र निगडेन भजेकथं त्वाम् ।।१७।।**

अन्वयः—अहम् भवभावनाभिः क्रोधादिदग्धहृदयः (अस्मि) । लोभाहिना च परितः परिदष्टदेहः (अपि अस्मि) । मायाभिमानपरिबद्धसमग्रवृत्तिः अत्र निगडेन बद्धः अस्मि । त्वां कथं भजे ?

भावानुवादः—मै सांसारिक वासनाओं एवं क्रोधादि से प्रज्ज्जलित हृदय वाला हूं । लोभ रूपी सर्प ने चारों ओर से मेरे शरीर को विष से व्याप्त कर रखा है । माया तथा अभिमान से मेरी समग्रचित्तवृत्तियां परिव्याप्त है । यहां मैं बेडियो से जकड़ा हुआ हू । फिर आपका स्मरण किस प्रकार से करूं ।

**हस्ते समागतमिदं बहुभिः प्रयत्नैः, रत्नत्रयं विबुधदुर्लभमीश ! दिव्यम् ।**
**निद्राप्रमादवशतो विगतं समस्त, मास्ते च केवलमहो तपनं हृदन्तः ।।१८।।**

अन्वयः—हे ईश ! विबुधदुर्लभम् च इदं रत्नत्रयं बहुभिः प्रयत्नैः मम हस्ते समागतम् । तद् निद्राप्रमादवशतः समस्तम् विगतम् ! अहो ! केवलं तपनं (मे) हृदन्तः आस्ते च !

भावानुवाद:—हे ईश सुरदुर्लभ यह रत्नत्रय (सम्यक् ज्ञान दर्शन चारित्र) अनेक प्रयत्नों से मेरे हाथ में प्राप्त हुआ था। वह निद्रा तथा प्रमाद वश मेरे हाथ से चला गया। अहो! अब तो केवल पश्चात्ताप ही मेरे हृदय में अवशिष्ट रह गया है।

अन्यापवादकरणाद् वदनं सदोषम्,
नेत्रं कुदृश्यपरिदशनतो विनष्टम्।
चेतः परापकृतिहानिविधानदक्षम्,
लप्स्ये च कां गतिमतो विपुलास्ति चिन्ता ॥१९॥

अन्वय:—(मम) वदनम् अन्यापवादकरणात् सदोषं। नेत्रम् कुदृश्य परिदर्शनता विनष्टम्। चेतः परापकृतिहानिविधानदक्षम् (अस्ति)। अतः कां गतिम् लप्स्ये इति विपुला चिन्ता ममास्ति!

भावानुवाद:—मेरा मुख दूसरो की निन्दा करने के कारण सदोष है। नेत्र बुरे-बुरे दृश्यों को देखने से विनष्ट है। चित्त अन्य का अपकार तथा हानि ही करने में दक्ष है। उससे मै किस गति को प्राप्त करूंगा। यही अधिक चिन्ता मेरे मन में है।

पापं चरामि सततं तमसाभिभूतः,
चायुर्निरन्तरमपैति न बोधवृत्तिः।
सर्वं वयः परिगतं विषयाभिलाषे,
नाट्यान्यनाटिषत मोहविडम्बनाभिः ॥२०॥

अन्वय:—सततं तमसाभिभूतः पापं चरामि! आयुः निरन्तरम् अपैति। बोधवृत्तिः न (अस्ति)। विषयाभिलाषे सर्वं वयः परिगतम्। इति मोहविडम्बनाभिः (मया) नाट्यानि अनाटिषत।

भावानुवाद:—मैं लगातार अज्ञानान्धकार से व्याप्त होकर पाप का आचरण कर रहा हूं। आयु निरन्तर क्षीण होती जा रही है। मुझमें ज्ञान नहीं है, विषयों की इच्छा में ही सम्पूर्ण जीवन चला गया। इस प्रकार मोहजाल में फसकर मेरे द्वारा संसार के नाटक ही अभिनीत किये गये। धर्माराधन कुछ भी सम्पन्न नहीं हुआ।

नो साधुवृत्तममलं निहितम् हृदन्तो,
जीवोपकारकरणान्न यशोऽर्जितं तत् ।
आत्मोन्नतेः समधिलाभकृते न यत्नो,
व्यर्थं गता च भगवन् सकलाजनिर्मे ॥२१॥

अन्वयः— मया हृदये अमलम् साधुवृत्तम् नो निहितम्जीवोपकारकारणात् तत् यशः न अर्जितम् । आत्मोन्नतेः समधिलाभकृते यत्नः न (कृतः) । हे भगवन् ! इत्थं मे सकला च जनिः व्यर्थगता ।

भावानुवादः—मैंने हृदय में निर्मल साधुवृत्ति धारण नहीं की । जीवों के उपकार से विमल यश भी उपार्जित नही किया । आत्मोन्नति प्राप्ति के लिए प्रयत्न भी नहीं किया । हे भगवन ! इस प्रकार मेरा सारा जन्म व्यर्थ ही चला गया; क्योकि सत्कार्य के अभाव मे जीवन व्यर्थ ही माना जाता है ।

दोषाकरः सुगुणलेशविवर्जितोऽहम्,
युक्तो गुणैर्विपुलबुद्धिसमन्वितस्त्वम् ।
पूर्णस्त्वमेव ननु पूर्णतरोऽसिलोके,
रत्नाकरोऽसि विगतद्युतिरस्मिदूनः ॥२२॥

अन्वयः—अहम् सुगुणलेशविवर्जितः (अस्मि) । त्वम् च गुणैः युक्तः विपुलबुद्धि-समन्वितः: च असि ! लोके त्वम् एव पूर्णः, ननु पूर्णतरः असि ! रत्नाकरः असि, अहम् च दूनः विगतद्युतिः अस्मि !

भावानुवादः- मैं विशिष्ट गुणों के लेश से रहित हूं । आप तो गुणों से युक्त विपुल बुद्धि से समन्वित हैं । लोक मे आप ही पूर्ण, पूर्णतर पूर्णतम हैं । रत्नाकर हैं । गुणों के खजाना—सागर है । मै तो दीन—हीन द्युतिहीन मलीन हूं ।

पूर्णायपूर्णसविधे समुपागतोऽहम्,
आशाप्रशस्तवलिसंबलमेवमाप्य ।
एष्यन्ति दोषनिचयाः गुणरूपतां मे,
लोह च हेमपृथुपारससन्निधाने ॥२३॥

अन्वयः—अहम् पूर्णाय पूर्णसविधे आशाप्रशस्तबलिसंबलम् एवम् आप्य समुपागत। अस्मि ! (मम) दोष निचयाः गुणारूपताम् एष्यन्ति ! लौहं च पारससन्निधाने पृथु हेम (भवति) ।

भावानुवादः—मै अपनी पूर्णता के लिए आशा के प्रशस्त उपहार संबल को प्राप्त कर पूर्ण के पास प्रस्तुत हुआ हू । मेरे अनन्तदोषगुणस्वरूपता को प्राप्त कर लेंगे । क्योकि लोहा पारस मणि के स्पर्श से निश्चित ही सोना बन जाता है।

त्वत्सन्निधानभभिलभ्य जगद्विशिष्टम्,
सर्वातिशायिसकलैर्मनुजैरभीष्टम् ।
दोषाः समस्तबलिनोऽबलिनोभवन्ति,
सूर्यप्रकाशपरिधौ न तमोविलासः ॥२४॥

अन्वयः—समस्तबलिनः दाषाः जगत्विशिष्टम् सर्वातिशायि सकलैः मनुजैः अभीष्टम् त्वत्सन्निधानम् अभिलभ्य अवलिनः भवन्ति ! (यतः) सूर्यप्रकाशपरिधौ तमोविलासः कथम् ?

भावानुवादः—मेरे वलवान् दोष ससार मे विशिष्ट, सम्पूर्ण मनुष्यों से इच्छित आपके सर्वातिशायि सान्निध्य को पाकर निर्बल हो जायेगे; क्योंकि सूर्य के प्रकाश की परिधि में तम का विस्तार कभी नही टिक सकता । आपके पास जाते ही मेरे सारे दोष अवश्य ही दूर हो जायेंगे ।

विद्येत यावदभिहीनवल मदीये,
स्वान्तस्तदावधिसुनावमभिश्रयामि ।
त्वत्पादकौ, भवजलोदधिपारणाय,
शक्तो भवामि, ननु येन हितासमीहा ॥२५॥

अन्वयः—मदीये स्वान्तः यावत् अभिहीनवलम् विद्येत ! तावत् तदावधित्वत्पादकौ सुनावम् भवजलोदधिपारणाय अभिश्रयामि । शक्त. भवामि ! ननु येन समीहा हिता (भवेत्) ।

भावानुवादः—मेरे हृदय में जब तक निर्बलता है, अपूर्णता विद्यमान है, तब तक

आपके दोनों चरणों को संसार सागर से पार जाने के लिए नाव बना रहा हू और विश्वास है कि पार कर जाने में समर्थ भी हो जाऊगा। इस प्रकार मेरी सदीच्छा अवश्य पूर्ण हो जायेगी।

**आवृत्य भूरि परितोऽसिभिरेव खण्डम्,**
**खण्ड च कर्त्तुमिह मां प्रबलाः द्विषन्तः।**
**यद्युद्यताः विपुलसोपकराः सरोषाः,**
**मित्राणि ते च परमात्ममहर्घलाभे ॥२६॥**

अन्वयः—इह प्रबलाः विपुलसोपकराः सरोषाः द्विषन्तः माम् परित आवृत्य असिभिः खडं खण्डं च कर्त्तुम् यदि उद्यताः तर्हि ते च परमात्ममहर्घलाभे मे मित्राणि (सन्ति)।

भावानुवादः—हे प्रभो ! जब दुष्ट शत्रु अपने दलबल के साथ मुझे चारों ओर से घेर ले और अपनी तलवार से मेरे शरीर के टुकड़े-टुकड़े कर डालने को उद्यत हो तब भी मेरी भावना यही बनी रहे कि ये शत्रु नही किन्तु परमात्मा की कृपा प्राप्त कराने वाले सहायक मित्र है।

**धैर्यं लभेत परमा हृदि भावनेयम्,**
**शैथिल्यमेतु विधया न कयापि कुत्र।**
**चिन्ता न कापि शरणागतिमागतस्य,**
**प्राप्स्यन्ति पक्षमितरे परिपन्थिनोऽपि ॥२७॥**

अन्वयः—यदि हृदि इयम् परमाभावना धैर्य लभेत। कयापि विधया कुत्रापि शैथिल्य न एतु। शरणागतिम् आगतस्य (मम) कापि चिन्ता न। इतरे परिपन्थिनः अपि पक्षम् प्राप्स्यन्ति !

भावानुवादः—यदि मेरे हृदय मे पूर्वोक्त विशिष्टभावना धैर्य-स्थिरता को प्राप्त करले, किसी भी तरह कही शिथिल न हो, तो शरण में आये हुए मुझे कोई भी चिन्ता नही है। ऐसी स्थिति में दूसरे शत्रु भी मेरे मित्र बन जायेंगे।

**आयान्तु वैरिनिवहाः विनिहन्तुकामाः, मन्मानसे नविषवैररुजोऽपि सन्तु।**
**मित्रत्वमेवमधिगच्छतु तत्प्रयासः, आदर्शभूतशुभशंसनसूतकाभः ॥२८॥**

अन्वयः—विनिहन्तुकामाः वैरिनिवहाः आयान्तु । मन्मानसे विषवैररुजः अपि न सन्तु । तत्प्रयासः मित्रत्वम् एवम् अधिगच्छतु ! (मम) आदर्शभूतशुभशंसन सूतलाभः स्यात् !

भावानुवादः—मुझे मारने के लिए बैरियों का समूह आवे, किन्तु मेरे मन में विष के समान बैर का रोग कभी नही आवे । मेरे मन में क्रोध या विद्वेष लेश मात्र भी जागृत न हो । उनका प्रयास मित्रत्व के रूप में हो । मेरी इस आदर्श भूत प्रार्थना का लाभ मुझे अवश्य प्राप्त हो ।

**नान्योऽस्ति कोऽपि भुवनेऽखिलशक्तिशाली,**
**वांछाप्रपूर्तिकरणे प्रहितावधानः ।**
**त्वत्तः प्रशस्तशरणागतिमेवमाप्तः,**
**किं याचतेऽर्थपरमर्थिजनोऽपरस्मै ।।२१।।**

अन्वयः—भुवने त्वत्तः कोपि अन्यः वांछाप्रपूर्तिकरणे प्रहितावधान। शक्तिशाली ननु न अस्ति । अतः एवम् (तव) प्रशस्तशरणागतिम् आप्तः अस्मि) । किम् अपरस्मै अर्थिजनः अर्थपरम् याचते !

भावानुवादः—निश्चय ही इस संसार में आपसे भिन्न कोई शक्तिशाली मेरी आशा को पूर्ण करने में सावधान नही है । इसीलिए मैने आपकी शरण प्राप्त की है । क्या कोई याचक अपने लिए किसी अन्य याचक से याचना करता है ? भला कोई भिक्षुक अन्य भिक्षुक से कुछ कभी माँगता है । अर्थात् नहीं माँगता है ।

लोकादिजन्यसुलभो न ममाभिलाषः,
सत्यं तदर्थमिह ते सविधे प्रयासः ।
यस्यास्ति पूर्तिरखिला श्रममन्तरेण,
तस्मै त्वदाश्रयविधेरुचितत्वमास्ते ।।३०।।

अन्वयः—मम अभिलाषः लोकादिजन्यसुलभः न । तदर्थम् इह ते सविधे सत्यं प्रयासः (अस्ति) । श्रमम् अन्तरेण यस्य (अभिलापस्य) (अखिलापूर्तिः) अस्ति । तस्मै त्वदाश्रयविधेः उचितत्वम् (आस्ते) !

भावानुवाद:—मेरी इच्छा की पूर्ति संसार से सुलभ नहीं है। इसीलिए उनकी पूर्ति के लिए आपके पास सत्य रूप से मेरा प्रयास है। विशेष इच्छाएं आपके द्वारा पूर्ण की जा सकती है। इसीलिए उनकी पूर्ति के लिए आपका ही आश्रय लेना उचित है।

ज्ञात्वा त्वदीयमहिमानममोघमेवम्,
संस्थापितोऽसि निजमन्दिरमञ्जुपीठे।
आस्था च तत्र मम मंजुलमानसस्य,
योग्यस्य युक्तपदमर्पितमेवधेयम् ॥३१॥

अन्वय:—हे प्रभो! एवम् अमोघम् त्वदीयमहिमानं ज्ञात्वा निजमन्दिरमजुपीठे त्वम् संस्थापितः असि। मम मंजुल मानसस्य च तत्र आस्था (अस्ति)। योग्यस्यकृते युक्तपदम् अर्पितम् एव धेयम्।

भावानुवाद:—हे प्रभो! इस प्रकार आपकी अतुलनीय महिमा को जानकर अपने मन मन्दिर के सुन्दर पीठ पर आपको संस्थापित किया है। अपने हृदय को तुम्हारा मन्दिर समझता हूं। मेरे मजुल मानस की आस्था आप में है। क्योंकि योग्य के लिए योग्य पद देना ही समुचित है।

नीराम्बुधिः सकलसंसृतिपापराशेः,
तंद्वेष्मि, चैकमपि यः प्रकटीकरोति।
प्रत्येमि मेरुगुणकान् रजसस्समानान्,
चेत्ते परस्य कथमत्र नताधिकारः ॥३२॥

अन्वय:—चेत् अहम् सकलसंसृतिपापराशेः नीराम्बुधिः (अस्मि)। यः च एकमपि (पापम्) प्रकटीकरोति (तं द्वेष्मि)। परस्य मेरुगुणकान् रजसस्समानान् प्रत्येमि। तदा मम ते नताधिकारः कथम् (वर्तते)?

भावानुवाद:—यदि मैं संसार की पापराशि का समुद्र हूं। जो कोई मेरे एक पाप को भी प्रगट करता है तो मै उससे द्वेष करता हूं। मैं दूसरों के मेरु-तुल्य महान् गुणो को धूलि के समान मानता हूं, तो हे भगवन् आपको नमन करने का मुझे अधिकार कहां है?

अन्ये वदन्त्यवितथं तदहं व्यथे च, मिथ्यावदामि पुनरेव भृशं प्रमोदे।
व्यर्थं चरामि कलहं कलिमादधानः, कीदृग् व्यवस्थितिरियं स्वपरप्रसक्तेः ॥३३॥

अन्वयः—अन्ये अवितथं वदन्ति। तदहं व्यथे च। पुनरेवमिथ्या वदामि भृशं प्रमोदेच। कलिमादधानः व्यर्थ कलह चरामि। इति स्वपरप्रसक्तेः इयम् कीदृग् व्यवस्थितिः (अस्ति)।

भावानुवादः—दूसरे सत्य बोलते है, किन्तु मुझे तकलीफ होती है और मैं स्वतः झूठ बोलता हूं। फिर भी प्रसन्न होता हूं। लड़ाई झगड़े का स्वभाव धार कर बिना मतलब कलह किया करता हूं। यह अपने पराये की कैसी विचित्र व्यवस्था है। अपना असत्य भी प्रिय होता है तथा अन्य का सत्य भी कठोर होता है।

जातोयतो विषयपाशनिबद्धचेताः,
सम्पूर्णशक्तिपरिवर्जित एव वर्ते।
सीदामि तत्र पतितोविरसाभिभूतो,
मार्गं त्वदीयमभियातुमलंभवेयम् ॥३४॥

अन्वयः—यतः अहम् विषयपाशनिबद्धचेताः जातः। (अतः) सम्पूर्णशक्तिपरिवर्जित एव वर्ते। तत्र पतितः विरसाभिभूतः सीदामि। त्वदीयं मार्गम् अभियातुम् अलं भवेयम्!

भावानुवादः—चूंकि अनादि से मेरी चेतना विषयो के पाश में बुरी तरह से बन्ध गयी है। इसलिए सम्पूर्ण शक्ति से रहित भी हो गयी है। वहा गिर कर आनन्द विहीन हो गयी है। और कष्ट पा रही है। अतः हे भगवन् मैं आपके मार्ग पर चलता हुआ जीवन की रक्षा करूं।

दुःखत्रयेण महता भृशमर्दितोऽपि,
भ्राष्ट्रेषु भूरिभयकम्पितभर्जितोऽपि।
नाहं बिभेमि करुणाकरमृत्युपाशात्,
यातो यतोहि तव सन्निधिमेव धातः ॥३५॥

अन्वयः—हे धातः! अहम् महता दुःखत्रयेण भृशम् अर्दितः अपि भ्राष्ट्रेषु भूरि-

भयकम्पितर्भाजत: अपि हे करुणाकर ! मृत्युपाशात् न विभेमि । यतः हि तव सन्निधि एव यात: अस्मि !

भावानुवाद:—हे परिपालक ! मै महान् दैहिक, दैविक, भौतिक दु:खों से अधिक कष्ट पाता हुआ भी, दु:खों के भाड़ो में अत्यधिक भय से कम्पित र्भाजित होता हुआ भी मैं करुणाकर ! मृत्यु के पाश से नहीं डरता हूं । क्योंकि मै आपके पास (समीप) हो गया हूं । आपके पास होने से सर्वथा निर्भय हू ।

कामाभिसक्तिमुपलभ्य भवभ्रमेण,
कालं क्षिपामि निजकर्मकलापपाले ।
त्वत्सदृशोऽपि ननु भिक्षुरभावपीनो,
संकष्टमेतदभिमर्दय, कामनेयम् ॥३६॥

अन्वय:–अहम् कामाभिसक्तिम् उपलभ्यभवभ्रमेण निजकर्मकलापपाले कालं क्षिपामि । त्वत्सदृश: अपि । (अहम्) अभावपीन: भिक्षु: (अस्मि) । हे प्रभो ! मम एतत्सकष्टम् अभिमर्दय इति मदीया कामना (अस्ति) ।

भावानुवाद:—मैं सांसारिक कामनाओं में आसक्त होकर ससारभ्रमण से अपने कर्मों के पालन में समय व्यतीत करता हूं । मैं तुम्हारे समान होता हुआ भी अभावों से युक्त होकर भिखारी वन रहा हूं । मै इन संकटों से त्राण पाऊं यही मेरी कामना है ।

संसारसागरनिमज्जनवीतर्वैर्यम्,
नास्त्येव कोपि परिरक्षितुमेवमस्मात् ।
साहाह्य केवलमहो परिकर्त्तुमीश,
शक्तस्त्वमेव, शरणं भवदीयमाप ॥३७॥

अन्वय:—ससारसागरनिमज्जनवोतधैर्यम् (मां) अस्मात् एवम् परिरक्षितुं कोपि नास्ति ! हे ईश ! त्वमेव अहो साहाह्यं केवलम् परिकर्त्तुम् शक्त। असि । अत: त्वदीयम् एव शरणम् आप !

भावानूवाद:—संसार सागर में डूबते हुए मुझ अधीर को उससे बचावे वाला कोई नही है । हे ईश ! केवल आप ही इस विषय में मेरी सहायता कर

सकते हैं। इसलिए मै केवल आपकी ही शरण में आया हूं।

संसारदोषततयः परिकर्षयन्ति,
मोहग्रहाभिपरिपीडित मानसं माम्।
एकत्र संस्थितिरियं परतस्त्वमेव,
बद्धोस्मि पाशयुगले परिकृष्यमाणः ॥३८॥

अन्वयः—संसारदोषततयः मोहग्रहाभिपरिपीडितमानसं माँ परिकर्षयन्ति। एकत्र इयम् संस्थितिः (अस्ति)। परतः त्वमेव (असि)। इति परिकृष्यमाणः अहम् पाशयुगले बद्धः अस्मि !

भावानुवादः—मोह से ग्रस्त परिपीडित मन वाले मुझे संसार के दोष खींच रहे हैं। एक तरफ तो संसार पतन की स्थिति है और दूसरी ओर आप हो। इस प्रकार दोनों ओर से आकृष्ट होता हुआ, दो पाशों में बद्ध हो रहा हूं।

संचीयते यदि मयास्वहृदः परीक्षा,
सम्प्राप्यते ननु तदामहती निराशा।
स्तेनाश्च तत्र बहवोऽवशसन्निविष्टाः,
दूरे कथं कथय ते मयका विधेयाः ॥३९॥

अन्वयः—यदि मया स्वहृदः परीक्षा संचीयते। तदा महती निराशा ननु सम्प्राप्यते। तत्र वहवः स्तेनाः च अवशसन्निविष्टाः (सन्ति)। मयकाते कथ दूरे विधेयाः। इति कथय।

भावानुवादः—हे भगवन् ! यदि मैं अपने हृदय की परीक्षा लेता हूं तो उस समय महती निराशा ही प्राप्त होती है। वहां वहुत से चोर अपने आप लाचार होकर प्रविष्ट हो गये हैं। अब आप ही कहिये कि उन्हे किस प्रकार हृदय से निकाल कर दूर करूं।

मच्छासनान्नमयिताः हृदयाद्द्रुवन्ति,
तन्त्रम्यतन्त्रविधिनोद्धतिमाचरन्ति।
मत्प्रार्थनां न दयते नहि निस्सरन्ति,
दृष्टि विधेहि मयि येन पलायिताः स्युः ॥४०॥

अन्वयः—मत् शासनात् मथिताः सन्तः हृदयात् न द्रवन्ति ! तत्र स्वतन्त्रविधिना उद्धतिम् आचरन्ति । मत्प्रार्थनां न दधते । नहि निस्सरन्ति च । हे प्रभो ! मयिदृष्टि विधेहि ! येन ते पलायिताः स्युः !

भावानुवादः—मेरे कथन से व्यथित होते हुए भी वे हृदय से भागते नहीं है । वे वहाँ मनमानी तौर से उत्पात करते हैं । न तो मेरी प्रार्थना ही सुनते हैं और न वहां से निकलते ही हैं । हे प्रभो ! मुझ पर दृष्टि करें, जिससे वे वहा से भागकर दूर हो जाये ।

पर्याप्तशक्तिसहितो विभवान्वितोऽय,
मात्माभ्रमे निपतितो भ्रमतीतिभीतः ।
तत्कल्पनाश्रितमिमं शरणागतस्य,
क्षेत्ता क्षणेन नहि संशयभूमिरास्ते ।।४१।।

अन्वयः—पर्याप्तशक्तिसहितः विभवान्वितः अपि अयम् आत्माभीत। भ्रमे निपतितः भ्रमति । इति शरणागतस्य (मम) तत्कल्पनाश्रितम् इमम् भ्रमम् (भवान्) क्षणेन क्षेत्ता इति संशयभूमिः नहि आस्ते !

भावानुवादः—यह आत्मा पर्याप्त शक्ति से समन्वित, विशिष्ट विभवों से युक्त होते हुए भी भयभीत एवं पतित होकर घूम रही है । मुझ शरणागत के इस काल्पनिक भ्रम को आप ही क्षण में दूर कर सकते हैं । यह संशयातीत है ।

देवोपसर्गमुपलभ्य न संबिभेमि,
चेत्थं परीक्षणविधौ भवतिप्रसक्तिः ।
स्वात्मोपकारमिह तत्कृतमेव मन्ये,
भव्यप्रसंगनिचये नियता विबाधा ।।४२।।

अन्वयः—अहम् देवोपसर्गम् उपलभ्यन संविभेमि । इत्थं परीक्षणविधौ च प्रसक्तिः भवति । इह तत्कृतमेव स्वात्मोपकारम् मन्ये । भव्यप्रसंगनिचये विबाधा नियता ।

भावानुवादः—मैं देवो के द्वारा प्रदत्त उपसर्गो को प्राप्त करके भी भयभीत नहीं होता हूं । क्योंकि इस प्रकार के परीक्षण के कार्य में बाधाओं का प्रसंग आता ही रहता है । मैं बाधाओं से अपना परम उपकार ही मानता हूं क्योंकि अच्छे

कार्यों में बाधाओं का प्रसंग आता ही है। कहा गया है—"श्रेयांसि बहुविघ्नानि"।

**बोधेर्विलासमधिकं सततं समाधिम्,**
**स्वात्मोपलब्धिमखिलां परिणामशुद्धिम्।**
**स्वोपार्जितागणितपापनिराकृतिं ताम्।**
**लप्स्ये कथं कथय मेऽव्यथितान्तरात्मा ॥४३॥**

अन्वयः—अहम् बोधेः विलासम् सततं अधिकं समाधिम्, स्वात्मोपलब्धि अखिलाम् परिणामशुद्धिम् ताम् स्वोपार्जितागणितपापनिराकृतिम् कथय कथ लप्स्ये इति मेव्यथितान्तरात्मा (अस्ति)।

भावानुवादः—हे भगवन्! मै ज्ञान के विलास को, निरन्तर अधिक चित्त की एकाग्रता को, आत्मा के स्वरूप की प्राप्ति को, परिणाम विशुद्धि को और अपने से उपार्जित अगणित पापों की निवृत्ति को कहो, कैसे प्राप्त करूंगा। इस विषय में मेरी अन्तरात्मा विशेष रूप से व्यथित है।

ध्यायन्ति योगनिरताः मुनयो महान्तः,
स्तुन्वन्ति यं निखिलदिव्यगुणैरुपेतम्।
गायन्ति यस्य चरितं चरणप्रधानम्,
तं देवदेवममितं हृदये दधामि ॥४४॥

अन्वय—यं योगनिरताः मुनयः ध्यायन्ति निखिलदिव्यगुणैरपेत स्तुन्वन्ति। यस्य चरणप्रधानं चरितं गायन्ति। तम् अमितं देवदेवम् हृदये दधामि।

भावानुवादः—योग में निरत मुनि जिसका ध्यान करते है, जिस निखिल दिव्य गुणों से युक्त की स्तुति करते है। जिसके सदाचार सम्पन्न चरित्र कागान करते हैं। उस अमितद्युति देवों के देव को मै अपने हृदय मे धारण करता हूं।

सोढान्यपारविधुराणि मया चिरेण,
चान्याममाप सहनेऽन्यधिका न चिन्ता।
सा नैववर्तनविधौ विहिते मदीये,
जागर्ति नित्यमिह त्वद्विषये विशिष्टा ॥४५॥

अन्वयः—मया चिरेण अपारविधुराणि सोढानि । अहम् सहने च अभ्यासम् आप । सहने अभ्यधिका चिन्तान । मदीये विहिते वर्तनविधौसा न एव वर्तते । त्वद् विषये सा विशिष्टाचिन्ता (वर्तते) ।

भावानुवादः—मैंने बहुत दिनों तक अपार कष्ट सहे है । चूंकि मैंने सहन का अभ्यास कर लिया है । अतः अब सहन करने में मुझे अधिक चिन्ता नहीं है । मुझे अपने किये हुए कार्यो के विषय मे भी अब विशेष चिन्ता नही है; किन्तु आपके विरुद के विषय में विशिष्ट चिन्ता अवश्य है । तुम दीनदयाल पतित-पावन कहलाते हो मुझे कष्ट पाने से कही तुम्हारी विरुदावली को धक्का न लगे । (यहाँ भक्तिपूर्णभावुकता का अभिव्यंजन है ।

विश्वे दयालुरिति संप्रथितः पृथिव्याम्,
पूतं च चारुचरितं विततं विशालम् ।
माहन्यतां तुविरुदः सहमानकष्टे,
तस्मात्तदन्तकरणं सहसा विधेयम् ।।४६।।

अन्वयः—पृथिव्यां संप्रथितः विश्वेदयालुः इति (प्रसिद्धः) विततं विशालम् पूतम् चारुचरितम् तव (अस्ति) । सहमानकष्टे (मयि) तु विरुदः न हन्यताम् । तस्मात् तदन्तकरणं सहसा विधेयम् !

भावानुवादः—आप विश्व में सर्वत्र दयालु के रूप में प्रसिद्ध हो, आपका सुविस्तृत विशाल पवित्र चारुचरित्र है । मेरे कष्ट सहते हुए कही आपकी बड़ाई ही समाप्त न हो जाए । इसलिए मेरे सम्पूर्ण कष्टो को नाश आप तुरन्त कर दें । (यहाँ भी भक्तिपूर्ण भावुकता का प्राधान्य है) ।

शक्ति प्रयच्छ यदि स्यां ननु सत्यमार्गे,
चैतादृशीं विपुललाभकरीं समन्तात् ।
कारानिपात विधुरेऽसुखवर्धकेऽपि,
न्याय्यात्पथः प्रविचलामि पदं न धीरः ।।४७।।

अन्वयः—हे भगवन् ! यदि एतादृशीं समन्तात् विपुललाभकरीम् शक्तिं प्रयच्छ-नहि सत्यमार्गे ननु स्याम् । असुखवर्धके अपि कारानिपातविधुरे न्याय्यात् पथः पदं न प्रविचलामि !

भावानुवादः—हे प्रभो ! यदि आप मुझे ऐसी चारों ओर से विपुल लाभकारी शक्ति प्रदान करें, तो मै सत्यमार्ग पर चल सकता हू । कष्टदायी जेलखाना आदि पहुंचने पर भी मैं न्याय मार्ग से धीरता पूर्वक कभी विचलित न होऊ।

यत्कारणान्नवदशानुभवो बभूव,
दु:खं च सोढुमपि वृत्तिरपीहजाता ।
सत्यं परात्मशरणं गतिरेतिकान्ता,
कष्टप्रदाश्चरिपवो मम भद्रकाराः ॥४८॥

अन्वयः—यत्कारणात् नवदशाऽनुभवः बभूव । इह दुःखं च सोढुम् अपि वृत्तिः जाता । परात्मशरण कान्ता गतिः सत्यम् एति । तस्मात् मम कष्टप्रदाः च रिपवः भद्रकाराः सन्ति ।

भावानुवादः—जिनके कारण से मुझे नवीन दशाओं का अनुभव हुआ है । और संसार में दुःख सहने की प्रवृत्ति भी हुई है । परमात्मा की शरण में मेरी सुन्दर गति भी हुई है । इसलिए वे कष्ट देने वाले मेरे शत्रु भलाई करने वाले ही हैं । अर्थात् मेरे आन्तरिक शत्रु भी मेरी भलाई करने वाले ही सिद्ध हुए है ।

पश्येयमत्र जगदेव समानरूपम्,
वैषम्यभावविरतिर्भवजीवने स्यात् ।
भूयासमाशु विरतः परमात्मलीनो,
मित्रं न कोऽपि मम शत्रुरपीहचास्ताम् ॥४९॥

अन्वयः—अहम् सर्वं जगदेव समानरूपं पश्यामि भवजीवने वैषम्यभावविरतिः अस्ति । अहम् विश्वासपूर्वकं परमात्मलीनः (अस्मि) । आशु इहलोके विरतः भूयासम् । मम कोपि शत्रुः मित्र च न अपि आस्ताम् ।

भावानुवादः—मैं सम्पूर्ण ससार को समान रूप मे देखू । इस जीवन में कहीं विषमता नही रहे । मैं पूर्ण विश्वास के साथ परमात्मा में लीन हो जाऊ। इस लोक में मेरा न कोई मित्र ही है और न कोई शत्रु ही है। सर्वत्र समभाव ही है ।

प्राप्स्यमि शक्तिमतुलां बलवर्धनं स्यात्,
एष्यन्तिशान्तिममिताः भववासनास्ताः ।
मोहादितीव्रतमसा रहितो भवेयम्,
त्वत्तेजसां च किरणान्मयिसन्निधेहि ।।५०।।

अन्वयः—हे प्रभो ! त्वत्तेजसां चकिरणान् मयि सन्निधेहि । येन अतुलाँ शक्तिम् प्राप्स्यामि बलवर्धनं स्यात् । ताः अमिताः भववासनाः शान्तिम् एष्यन्ति ! अहम् मोहादितीव्रतमसा रहितः भवेयम् ।

भावानुवादः—हे प्रभो आप अपने तेज की किरणे मुझ पर डालिये; जिससे मैं अतुलशक्ति प्राप्त करूं । मेरा बल बर्धन हो, व मेरी अपार भववासनाये शान्त हो जाय, और मै मोहादितीव्रअन्धकार से रहित हो जाऊं ।

प्रेयांस्त्वमेव भुवने सकलेऽप्यनन्ते,
स्याः सर्वदो धवलधामधराप्रपन्नः ।
प्राणप्रियोऽसि महतामसवोऽप्यसूनाम्,
रत्नं च कस्य भविकस्य भवेन्न हृद्यम् ।।५१।।

अन्वयः—सकले अपि अनन्ते भुवने त्वमेव मम प्रेयान् (असि) धवलधामधराः प्रपन्नः त्वम् सर्वदः स्याः । महताम् अपि प्राणप्रियः असि ! असूनाम् अपि असवः । कस्य च भविकस्य रत्नं हृदय न भवेत् !

भावानुवादः—समस्त विश्व मे तुम्ही मेरे परम प्रिय हो । सिद्धस्थानको प्राप्त तुम्ही मेरे लिए सर्वस्व आदर्श स्वरूप हो; क्योकि किस भविक जन को सुन्दर रत्न प्रिय नहीं लगता है । तुम रत्न से भी विशिष्ट हो, इसलिए सबके परम आदरास्पद हो ।

दूरीचकार विषयं भवभीतिजालम्,
सर्वं च पश्यति ततं जगदन्तरालम् ।
चान्तर्गतो विजयते सकलेषु सत्सु,
दृग्गोचरो भवतुमे मनसाप्यगम्यः ।।५२।।

अन्वयः—भवभीतिजालम् विषयं दूरी चकार ! सर्वं चततं जगदन्तरालम्

सकलेषु सत्सु अन्तर्गतः विजयते च । समनसाऽपि अगम्यः भगवान् मे दृग्गोचरो-भवतु ?

भावानुवादः—जिसने भवभीति जाल स्वरूप विषयों को दूर किया है । सम्पूर्ण फैले हुए जगत के अन्तराल को देखता है । सम्पूर्ण पदार्थों को देखने का आलोक जिसमें है । वह मन से भी अगम्य परमात्मा मुझे प्रत्यक्ष हो !

मोक्षस्यमार्गमभिशंसति साधकेभ्यो,
यश्चास्ति जन्ममरणव्यसनाद्व्यतीतः ।
सर्वैः स्मृतः सकलपापकलंकहीनो,
दृग्गोचरो भवतुमे सच जीवबन्धुः ॥५३॥

अन्वयः - यः साधकेभ्यः मोक्षस्यमार्गम् अभिशसति । यः च जन्ममरणव्यसनात् व्यतीतः अस्ति । सकलपापकलकहीनः, सर्वः स्मृतः सच दीनबन्धुः मे दृग्गोचरो भवतु !

भावानुवादः—जो साधकों के लिए मोक्षमार्ग का निर्देश करते हैं । जो जन्म-मरणादिदुःख से रहित है । सम्पूर्णपापमयकलंक से दूर हैं, जो सभी के द्वारा स्मृत हैं । उसी दीनवन्धु परमात्मा का मुझे दर्शन हो ।

मैत्री च सत्वनिवहे परिरक्षितुं स्यात्,
दृष्ट्वा गुणान्दितजनान् भवतात्प्रमोदः ।
दुःखाभिभूतमनुजेषु परोपकारः,
सज्जीवनस्य मयिस्यादमलस्वरूपम् ॥५४॥

अन्वयः—सत्वनिवहे परिरक्षितुम् मैत्री च स्यात् । गुणान्वितजनान् दृष्ट्वा प्रमोदः भवतात् । दुःखाभिभूतमनुजेषु परोपकारः (स्यात्) इतिमयि सज्जीवनस्य अमलस्वरूपम् स्यात् !

भावानुवादः—प्राणी रक्षा के रूप में जीवों के समूह पर मेरी मित्रता हो । गुणी मनुष्यों को देखकर मुझमें प्रसन्नता के भाव प्रगट हों । दुःख से व्याकुल मनुष्यों पर परोपकार का भाव बनें । इस प्रकार से मुझमें अच्छे जीवन का निर्मल स्वरूप ही विकसित हो ।

दीने धनाढ्यभरिते विभवेऽप्यभूतौ,
शत्रौ च मित्रनिवहे भवनेवनेवा ।
दुःखे सुखे च ननु योगवियोगयोर्वा,
साम्यस्य वृत्तिरमला हृदये ममास्ताम् ।।५५।।

अन्वयः—दीने-धनाढ्यभरिते, विभवे अभूतौ अपि शत्रौ मित्रनिवहे च भवनेवनेवा, दुःखे सुखे च ननुयोगवियोगयोः वा मम हृदये साम्यस्य अमलावृत्तिः आस्ताम् !

भावानुवादः—निर्धन, धनवान्, धन अधन शत्रु मित्रसमूह भवन, वन, सुख, दुःख योगवियोग कोई भी दशा क्यों न हो, मेरे हृदय में समता की निर्मल वृत्ति सदा ही विराजमान रहे ।

पाषाणमध्यगतहेम समानरूपम्,
काष्ठस्थितानलविभासितशक्तिकंत ।
आनन्दचिन्मयमहं परमात्मतत्त्वम्,
ज्ञास्ये कदा विगतभीतिरमर्त्यभासम् ।।५६।।

अन्वयः—विगतभीतिः अहम् पाषाणमध्यगतहेमसमानरूपम्, काष्ठस्थितानलविभासितशक्तिकम्, आनन्दचिन्मयं अमर्त्यभासम् परमात्मतत्त्वम् कदा ज्ञास्ये ?

भावानुवादः—पाषाण के बीच स्वर्ण के समान कान्तिवाले, काष्ठ में स्थित अग्नि के समान विभासित शक्तिवाले, आनन्द चैतन्य स्वरूप, दिव्य द्युतिसम्पन्न परमात्मतत्त्व का ज्ञान मैं निर्भय वृत्ति से कब करूंगा ?

सम्पूर्णजीवनिवहं विदधाति चाङ्के,
रागादिदोषततयो नहि यत्र सन्ति ।
हीनोहियः स्वकरणैरनपायबोधो,
देवस्य तस्य सविधे गतिरेवमास्ताम् ।।५७।।

अन्वयः—(यः) सम्पूर्णजीवनिवहं च अके विदधाति । यत्र रागादिदोषततयः नहि सन्ति । यः हि स्वकरणैः हीनः अनपायबोधः च (अस्ति) । तस्य देवस्य सविधे एवम् (मम) गतिः आस्ताम् ।

भावानुवादः—जो सम्पूर्ण जीवों के समूह को अपनी ज्ञानरूपी गोद में देखते हैं, जहाँ राग द्वेषादि दोषों "का समुदाय नहीं है; जो अपनी इन्द्रियों से भी रहित है; बाधा रहित ज्ञान वाले है। उस परमात्मा के पास मेरी गति अवश्य हो ?

**तंव्यापकं विततविश्वजनीनदेवम् सिद्धं विबोधसहितं महनीयरूपम् ।**
**ध्येयं सदाधृतिपरैः रहितं विकारैः सर्वज्ञमाप्तशरणं वरणं करोमि ।५८।।**

अन्वयः—अहम् व्यापक विततविश्वजनीनदेवम्, सिद्धं विबोधसहितम् महनीयरूपम् सदाधृतिपरैः ध्येयम्, विकारैः रहितम् सर्वज्ञम् आप्तशरणं वरणं करोमि !

भावानुवादः—मै व्यापक, विस्तृत विश्व की भलाई करने वाले सिद्धदेव, ज्ञान-सहित प्रशंसित स्वरूप वाले, सदा धैर्य युक्त साधकों से ध्यान करने योग्य, विकारों से रहित आप्तरूप सर्वज्ञ भगवान् को शरण के रूप मैं स्वीकार करता हूं।

बाह्यं पदार्थवरणं न समीहमानम्,
वेविद्यते किमपि विश्वविकासमध्ये ।
त्यक्त्वा कषायकलनां कलितस्वरूपम्,
भद्रायतं सकलभद्रकरं प्रयामि ।५९।।

अन्वयः—विश्वविकासमध्ये बाह्यं पदार्थवरणं समीहमानम् किमपि न वेविद्यते । कलितस्वरूपाँ कपायकामनाम् त्यक्त्वा तं सकलभद्रकरंभद्राय प्रयामि !

भावानुवादः—सकल संसार में कुछ भी बाह्य भौतिक पदार्थ स्वीकार करने योग्य नहीं है। मै कपायों के लुभावने आकर्पण को दौड़कर सम्पूर्ण लाभ प्रदान करने वाले उसी परमात्मा की शरण कल्याण के लिए जा रहा हूं।

सर्वं विकल्पकलितं प्रविहाय जालं,
मात्मानमात्मनि सदा परिभाव्यमानः ।
संसारसागरसमुत्तरणाय चैवम्,
एष्यामि तत्र मिसितुं परमात्मतत्त्वे ।।६०।।

की प्राप्ति होती है। यहां मोक्षाधिकारी ही योग्य माना जाता है।

## अवसानेछन्दःपरिवर्तनम्:-

परिज्ञाय रूपं च धर्मस्य सर्वम्, तथा संस्कृतेरत्र संदर्शनस्य।
यथातत्त्वबोधेन कर्मक्षयेण, विमुक्तेः पदं प्राप्यते भव्यजीवैः ।।७६।।

अन्वयः—अत्र भव्यजीवैः धर्मस्य संस्कृतेः संदर्शनस्य च सर्वम् रूपं परिज्ञाय यथातत्त्वबोधेन कर्मक्षयेण विमुक्तेः पदम् प्राप्यते !

भावानुवादः—इस प्रकार भव्य जीवों के द्वारा धर्म, सस्कृति, सम्यक्दर्शन का सम्पूर्ण स्वरूप जानकर यथार्थ तत्त्वों के बोध से सम्पूर्ण कर्मों के क्षय होने पर मोक्ष पद प्राप्त किया जाता है।

"धर्म दर्शन चतुर्दश सर्गः समाप्तः"

श्रीमज्जवाहरयशोविजयाभिधाने,
नानेशसच्चरणयोः शरणावधाने।
श्री चन्द्रमौलिकविनिर्मितसत्प्रबन्धे,
पूर्तिजगामननुदर्शनधर्मसर्गः ।।७७।।

होता है। संवर मे रागद्वेष आदि चित्तवृतियो को रोका जाता है। तदनन्तर तत्त्वबोध सम्पन्न हो जाता है।

**प्राग्बद्धकर्मक्षयतः क्रमेण, तपोभिरासाद्यत एव मोक्षः।**
**यथा च जीवैरतिशायिरूपः सा निर्जरा निर्जरणैकहेतुः ॥७३॥**

अन्वयः—जीवैः यथा प्राक्बद्धकर्मक्षयतः क्रमेण तपोभिः अतिशायिरूपः मोक्षः आसाद्यते एव। सा निर्जरणैकहेतुः निर्जरा (नाम)!

भावानुवादः—प्राणियो के पूर्व बद्ध कर्मो का जिन तपादि साधनों के द्वारा आंशिक क्षय होता है। वही निर्जरण का हेतु होने से निर्जरा है। अतिशय अर्थात्–पूर्ण रूप से कर्मो का क्षय मोक्ष है।

**सर्वोत्तम तत्त्वमवादि मोक्षः, जीवस्य लक्ष्यं परमं विशिष्टम्।**
**तत्प्राप्तिमूला पुरुषार्थसिद्धिः, ततश्चिदानन्दमयस्वरूपम् ॥७४॥**

अन्वयः—सर्वोत्तमं तत्त्वम् मोक्षः अवादि। जीवस्य परमं विशिष्टम् लक्ष्यं (अस्ति), तत्प्राप्तिमूलापुरुषार्थसिद्धिः (अस्ति)। ततः च चिदानन्दमयस्वरूप (प्राप्यते)।

भावानुवादः—जिनेश्वरों के द्वारा सर्वोत्तम तत्त्व मोक्ष ही कहा गया है। वही जीव का परम विशिष्ट लक्ष्य है। उसकी प्राप्ति में कारण उद्योग कर्तव्यनिष्ठा आदि है। उसके बाद चिदानन्दमय स्वरूप परमात्मतत्त्व की प्राप्ति हो जाती है। आत्मस्वरूप परमात्मा के रूप में हो जाता है।

**त्रिरत्नलब्ध्या तपसा च मोक्षः कर्मक्षये लभ्यत एव भव्यैः।**
**ज्ञानाय चोक्तं नवतत्त्वमेतत्, मोक्षाधिकारी भवतीहयोग्यः ॥७५॥**

अन्वयः—भव्यैः त्रिरत्नलब्ध्या तपसा च कर्मक्षये मोक्षः लभ्यत एव। एतत् नवतत्त्व ज्ञानाय च उक्तम्। इह मोक्षाधिकारी योग्यः भवति।

भावानुवादः—भव्य पुरुषों के द्वारा सम्यक् ज्ञान, दर्शन, चारित्र की प्राप्ति में और तपस्या से सम्पूर्ण कर्मो के क्षय हो जाने पर मोक्ष प्राप्त किया जाता है। यह नवतत्त्वों का विवेचन ज्ञान के लिए किया गया है। इसमे परम पद

की प्राप्ति होती है। यहां मोक्षाधिकारी ही योग्य माना जाता है।

### अवसानेछन्दःपरिवर्तनम्:-

**परिज्ञाय रूपं च धर्मस्य सर्वम्, तथा संस्कृतेरत्र संदर्शनस्य ।**
**यथातत्त्वबोधेन कर्मक्षयेण, विमुक्तेः पदं प्राप्यते भव्यजीवैः ॥७६॥**

अन्वय:—अत्र भव्यजीवैः धर्मस्य संस्कृतेः संदर्शनस्य च सर्वम् रूपं परिज्ञाय यथातत्त्वबोधेन कर्मक्षयेण विमुक्तेः पदम् प्राप्यते !

भावानुवादः—इस प्रकार भव्य जीवों के द्वारा धर्म, संस्कृति, सम्यक्दर्शन का सम्पूर्ण स्वरूप जानकर यथार्थ तत्वों के बोध से सम्पूर्ण कर्मों के क्षय होने पर मोक्ष पद प्राप्त किया जाता है।

"धर्म दर्शन चतुर्दश सर्गः समाप्तः"

श्रीमज्जवाहरयशोविजयाभिधाने,
नानेशसच्चरणयोः शरणावधाने ।
श्री चन्द्रमौलिकविनिर्मितसत्प्रबन्धे,
पूर्तिजगामननुदर्शनधर्मसर्गः ॥७७॥

## "अथ पंचदश सर्गः प्रारभ्यते"

## "रत्नत्रय सर्गः"

ज्ञानात्मनोरैक्यविधाऽभिधानम्, प्राचीनशास्त्रेषु विचर्चितं च ।
स्वात्मस्वरूपस्य विबोधनार्थम्, ज्ञानस्वरूपं परिचेयमास्ते ।।१।।

अन्वय:—प्राचीनशास्त्रेषु ज्ञानात्मनोः ऐक्यविधाभिधानम् विचर्चितम् च (अस्ति) । ततः स्वात्मस्वरूपस्य विबोधनार्थम् ज्ञानस्वरूपम् परिचेयम् आस्ते ।

भावानुवाद:—प्राचीन जैनशास्त्रों में ज्ञान और आत्मा के अभेद विधान का कथन पूर्ण रूप से किया गया है । आत्मा और ज्ञान में एकदृष्टि से तादात्म्य सम्बन्ध होने से ऐसे गुणगुणिभाव हैं । कोई भेद नही है । अतः आत्मा के स्वरूप को समझने के लिए ज्ञान का स्वरूप समझना अत्यन्त आवश्यक है ।

स्वतः प्रकाशोपि परप्रकाशः ज्ञानं सदेवं व्यवसायिमान्यम् ।
दीपो यथा भासयते पदार्थान्, तथा स्वयं कासयते स्वतन्त्रम् ।।२।।

अन्वय:—ज्ञानम् स्वतः प्रकाशः अपि परप्रकाशः (अस्ति) । तत् एवम् सत् व्यवसायि मान्यम् । यथादीपः पदार्थान् भासयते । तथा स्वतन्त्रम् स्वयम् अपि कासयते !

भावानुवाद:—जैसे दीपक पदार्थो को प्रकाशित करता हुआ स्वतन्त्र रूप से स्वयं को भी प्रकाशित करता है । वैसे ही ज्ञान भी अपने आपको जानता हुआ दूसरे पदार्थो को भी जानता है । ज्ञान स्वपर प्रकाशक कहलाता है । इसलिए ज्ञान निश्चयात्मक ही है ।

विमुक्तिलब्धेः सदुपायभूतमपेक्षणीयम् ध्रुवसाधनायाम् ।
पदार्थबोधो भवतीह येन, तद् ज्ञानमाख्यातमिदंनिबोध ।।३।।

अन्वय:—विमुक्तिलब्धेः सदुपायभूतम् ध्रुवसाधनायाम् अपेक्षणीयम् तत् आख्या-

तम् इदम् ज्ञानम् निबोध । येन इह पदार्थबोधो भवति !

भावानुवादः— मोक्ष प्राप्ति की सदुपायभूत ध्रुवसाधना में सम्यग् ज्ञान को अपेक्षणीय समझना चाहिये। जिससे यहां पर पदार्थों का बोध होता है। क्योंकि वह शास्त्रों में स्वपरव्यवसायी माना जाता है।

मतिः श्रुतं चावधिरूपमन्यत्, पर्यायिजातं मनसोऽपिवेत्ति ।
अन्त्यं च तत्केवलबोधरूपम, ज्ञानस्य पंचात्रभवन्ति भेदाः ।४।।

अन्वयः—मतिः श्रुतम् अन्यत् अवधिरूपम् मनसः अपि पर्यायिजातं यत्वेत्ति (मन.पर्यवम्) । अन्त्यम् च तत् केवलबोधरूपम् इति अत्र ज्ञानस्य पंच भेदाः भवन्ति !

भावानुवाद.— मति, श्रुत, अवधि, मनःपर्यव और पचम केवल ज्ञान होता है। इस प्रकार यहां ज्ञान के पाँच भेद माने गये है।

यन्मन्यते तन्मतिरेव मान्यम्, ज्ञानं स्मृतिश्चैवतथैव चिन्ता ।
संज्ञेतिपर्यायिपदानि तस्य, नेत्रादिज चैव मनोनिदानम् ।।५।।

अन्वयः—यन्मन्यते तत् मतिः एव ज्ञानम् इति मान्यम् । तस्य ज्ञानम् स्मृतिः च एव तथा एव चिन्ता, सज्ञा इति पर्यायपदानि (भवन्ति) । तत् मतिज्ञानम् नेत्रादिजम् मनोनिदान च एव ।

भावानुवादः—जो मनन किया जाता है वही मति ज्ञान होता है। इसके ज्ञान, मति, चिन्ता सज्ञा आदि पर्याय शब्द हैं। वह मति ज्ञान इन्द्रियों तथा मन से उत्पन्न होता है।

श्रुताश्रितं चाश्रुतनिश्रितं च, भेदद्वयं तत्र निरूपणीयम् ।
एकैकशस्तत्र पृथक् सरूपाः, चतुर्विभेदाः परिकल्पनीयाः ।।६।।

अन्वयः—तत्र तस्य (मतिज्ञानस्य) श्रुताश्रितम् च अश्रुतनिश्रितं च भेदद्वयम् निरूपणीयम् ! एकैकशः पृथक् स्वरूपा चतुर्विभेदाः परिकल्पिताः (सन्ति) ।

भावानुवादः—मतिज्ञान के प्रथम दो भेद हैं:—श्रुतनिश्रित तथा अश्रुतनिश्रित

ऐसा निरूपण करना चाहिये। फिर उनमें प्रत्येक के चार-चार भेद किये हैं।

अवग्रहेहे त्रितयोऽप्यपायः तदन्तरं साखलुधारणैव ।
नेत्रादिसत्कारणजायमानाः चतुर्विभेदाः मतिबोधनस्य ॥७॥

अन्वयः—मतिबोधनस्य अवग्रहेहे त्रितयः अपि अपायः (तदन्तरम्) सा खलु धारणा एव नेत्रादिसत्कारणजायमानाः चतुर्विभेदाः (भवन्ति)।

भावानुवादः—श्रुतनिश्रित मतिज्ञान के अवग्रह, ईहा, अवाय, धारणा ये चार भेद होते है। ये सभी इन्द्रियों तथा मन से होने वाले ज्ञान है।

नामादिवैशिष्ट्यविकल्पशून्यः, सामान्यमात्रग्रहणग्रहोऽसौ ।
अस्तीह किंचित्परिबोधरूपः, प्रतीतिरत्रास्ति न निश्चयस्य ॥८॥

अन्वयः—नामादिवैशिष्टयविकल्पशून्यः किंचित्परिबोधरूपः सामान्यमात्रग्रहणग्रहः असौ अवग्रहः अस्ति। अत्र निश्चयस्य प्रतीतिः न।

भावानुवादः—नाम जाति आदि विशिष्ट विकल्पो से शून्य कुछ है ऐसा ज्ञान, सामान्यार्थ को ग्रहण करने वाला, अवग्रह कहलाता है। वहां पर विशेषरूप से निश्चय की प्रतीनि नहीं होती है।

अर्थेन नेत्रादिकृतोहिबन्धः सामान्यरूपं ननु दर्शनं तत् ।
तत्पूर्वकावग्रहबोधरूपम्, ज्ञेय सदा ज्ञेयविबोधमद्भिः ॥९॥

अन्वयः—अर्थेन नेत्रादिकृतो हि बन्धः सामान्यरूपम् ननु तत् दर्शनम्। तत्पूर्वकावग्रहबोधरूपम् सदा ज्ञेयविबोधमद्भिः ज्ञेयम्!

भावानुवादः—इन्द्रिय और अर्थ का सामान्य सम्बन्ध दर्शन कहलाता है। दर्शन के बाद उत्पन्न होने वाला सामान्य ज्ञान अवग्रह है। ऐसा पदार्थज्ञानविशिष्ट पुरुषों के द्वारा जाना गया है। इसमें केवल सत्ता का ही ज्ञान नही होता, अपितु पदार्थ का प्रारम्भिक ज्ञान हो जाता है।

आद्यस्य भेदद्वयमेव बोध्यमव्यक्तव्यक्तात्मकमेवमत्र ।
अव्यक्तकं व्यंजननामधेयमर्थाग्रहो व्यक्तपदेन वाच्यः ॥१०॥

अन्वयः—अत्र आद्यस्य अव्यक्तव्यक्तात्मकं एवम् भेदद्वयम् एव बोध्यम् । अव्यक्तकम् व्यजननामधेयम् । अर्थाग्रहः व्यक्तपदेय वाच्यः !

भावानुवादः—यहाँ अवग्रह के दो भेद होते हैं । अव्यक्तरूप तथा व्यक्तरूप । अव्यक्तरूप व्यंजनावग्रह होता है । तथा व्यक्त रूप अर्थावग्रह कहलाता है । अर्थ और इन्द्रियों का संयोग व्यंजनावग्रह है । यह अव्यक्त रूप है । यह ज्ञान क्रमशः पुष्ट होता हुआ अर्थावग्रह की कोटि में आ जाता है ।

**चक्षुर्मनोभ्यां प्रथमो न भिन्नः, ताभ्यां द्वितीयः सहितो विभाति ।**
**तथा भवन्तीह च षड्विभेदाः ईहाप्यपायो ननु धारणा च ॥११॥**

अन्वयः—प्रथमः (व्यंजनावग्रहः) चक्षुर्मनोभ्याँ नभिन्नः । ताभ्यां सहितः द्वितीयः (अर्थावग्रहः) विभाति । तथा इह चतस्य षड्भेदाः भवन्ति । ईहा, अपायः, धारणा च (तथैव) ।

भावानुवादः—चक्षु और मन से व्यंजनावग्रह नहीं होता है; क्योंकि ये दोनों अप्राप्यकारी है । उसके लिए अर्थ और इन्द्रियों का सहयोग अपेक्षित है । अर्थावग्रह संयोग रूप नही अपितु सामान्यज्ञानरूप है । इस प्रकार अर्थावग्रह के ६ भेद होते हैं । इस प्रकार ईहा, अपाय, धारणा भी पांचों इन्द्रियों और मनपूर्वक होने से छः २ प्रकार के होते हैं ।

**गृहीततत्त्वस्य विशेषबोधः, ईहाविशेषं परिणाममेति !**
**सन्देहपूर्वा किमुशांख एषः शार्गोऽस्ति ? शांखेन च भाव्यमत्र ॥१२॥**

अन्वयः—गृहीततत्त्वस्य विशेषबोधः ईहा । विशेषं परिणामम् एति । किमुएषः (शब्दः) शांखः शार्ङ्गोवा अस्ति । इति सन्देहपूर्वा । अत्र शांखेन भाव्यम् इति ईहाभवति !

भावानुवादः—अवग्रह के बाद ज्ञान ईहा में परिणत होता है । अवग्रहीतार्थ को विशेष रूप से जानने की इच्छा ईहा है । इसमें क्या यह शंख का शब्द है ? या शृंगका शब्द है । इस प्रकार का पहले सन्देह अवश्य होता है, फिर यह शंख का ही होना चाहिये । ऐसा निश्चय की ओर झुका हुआ ज्ञान ईहा है । संशय ईहा से पहले होता है । ईहा बाद में होती है । संशयरूप ज्ञान से प्रमाण नही है ।

गृहीतशब्दो ननु शांख एव, निर्णायकंज्ञानमवायरूपम् ।
सम्यक्त्वबोधो परिपक्वमेति, चावर्तनाबुद्ध्यभिधानमास्ते ॥१३ ।

अन्वय:—गृहीतशब्द: ननु शाँख एव इति निर्णयकं ज्ञानम् अवायरूपम् भवति । अत्र सम्यक्त्वबोध: परिपक्वम् एति । अस्य च आवर्तना बुद्ध्यभिधानम् आस्ते !

भावानुवाद:—यह शख का ही शब्द होना चाहिये। ऐसा ईहितार्थ का विशेष निर्णय अवाय ज्ञान कहलाता है । यहां सम्यक् असम्यक् की विचारणा पूर्ण रूप से परिपक्व हो जाती है । नन्दीसूत्र के अनुसार इसके पर्याय आवर्तना प्रत्यावर्तना, अवायबुद्धि, विज्ञान आदि विशेष प्रकार है ।

अपायबोधश्च निषेधरूप: चावायबोधोविधिरूपकोऽसौ ।
एतन्मतस्यापि परम्परासीत्, प्राक्वक्तुमीष्टं न विशेषभेद: ॥१४॥

अन्वय:—अपायबोध: चनिषेधरूप: असौ च अवायबोध: विधिरूपक: प्राक् एतन्मतस्यअपि परम्परा आसीत् । इति वक्तुम् ईष्टम् (अथापि) विशेषभेद: न ।

भावानुवाद:—विशेषावश्यकभाष्य के अनुसार अपाय निषेध रूप है या अवाय विधिरूप है । जो परम्परा ज्ञान को निषेधात्मक मानती है । वहां अपाय शब्द का प्रयोग हुआ है । अन्यत्र अवाय का । प्राचीनकाल में ऐसी परम्परा थी । ऐसा कहा जा सकता है । फिर भी दोनो परम्पराओं में विशेष भेद नही है । क्योकि विधिनिषेध एक दूसरे से सम्बन्धित है ।

दृढात्मक धारणमित्यवेहि, स्मृतेर्निदानं कथितं जिनेन्द्रै: ।
अविच्युतिर्वासनमत्र बोध्यम्, स्मृतिस्तथैवेति च भेदभिन्नम् ॥१५॥

अन्वय:—स्मृते: निदानम् दृढात्मक (ज्ञानं) धारणम् अवेहि । इति जिनेन्द्रै: कथितम् । अविच्युति: वासनम् तथा एव स्मृति: इति च भेदभिन्नं इदम् (ज्ञेयम्) ।

भावानुवाद:—स्मृति का कारण दृढात्मकज्ञान धारणा है । ऐसा जिनेन्द्रों ने कहा है । धारणा को स्मृति का हेतु कहा गया है । यह संख्येय तथा असंख्येय काल तक रहती है । जो ज्ञान शीघ्रनष्ट न हो और स्मृति के हेतु का कार्य करे वह धारणा है । इसके तीन भेद होते हैं:— १. अविच्युति २. वासना ३. और स्मृति ।

**परन्तुभेदत्रयमत्र कोऽपि, न मन्यते युक्तितमं तदेव ।**
**तदेवमष्टाधिकविंशतिश्च भवन्तिभेदाः गतिबोधनस्य ॥१६॥**

अन्वयः—परन्तु अत्र कोपि भेदत्रयम् तदेव युक्तितमं न मन्यते । मतिबोधनस्य अष्टाविंशतिः च भेदा भवन्ति !

भावानुवादः—वादिदेवसूरि इन तीनों भेदों को युक्तिसंगत नहीं मानते है । धारणा अवायप्रदत्त ज्ञान की दृढावस्था है । धारणा स्मृति का कारण नहीं हो सकती । ऐसी उसकी मान्यता है, पर वस्तुतः धारणा स्मृति की इस प्रकार कारण वनती भी है । मतिज्ञान के २८ भेद होते है । व्यजनावग्रह के ४ तथा अर्थावग्रह के २४ । संयुक्त होने पर २८ भेद होते है ।

विशेषः—यद्यपि मति और श्रुत के निमित्त पाच इन्द्रियाँ और मन है पर परिणति मे अन्तर है । मति प्रारम्भिक ज्ञान है और श्रुत उसी मतिज्ञान का परिपुष्टरूप है । जैसे कच्चा दूध और पक्कादूध ।

**आप्तप्रणीतेन सदागमेन, ज्ञानं श्रुतं तन्मतिपूर्वकं स्यात् ।**
**अंगाद्विवाह्य च निविष्टमगे, भेदद्वयं तस्य कृतं विशेषः ॥१७॥**

अन्वयः—आप्तप्रणीतेन सदागमेन तन्मतिपूर्वकं श्रुतं ज्ञानम् स्यात् । तस्य अंगाद् विवाह्यम् अगे निविष्टम् च विशेषः भेदद्वयम् कृतम् (अस्ति) ।

भावानुवादः—आप्तों के द्वारा प्रणीत आगमों से होने वाला ज्ञान श्रुत है । श्रुतज्ञान मतिज्ञानपूर्वक होता है । उसके अंगवाह्य तथा अंगप्रविष्ट विशेष रूप से दो भेद होते हैं ।

**अंगप्रविष्टं द्वितयोऽस्ति भेदः, साक्षाच्च तत्तीर्थंकरप्रणीतम् ।**
**सूत्रैश्च बद्धं गणपैस्तथैव, ज्ञेयं च तद्द्वादशभेदभिन्नम् ॥१८॥**

अन्वयः—द्वितयः भेदः अगप्रविष्टम् अस्ति । तत् च साक्षात् तीर्थंकरप्रणीतम् (भवति) । तथा एव गणपैः सूत्रैः बद्धम् च द्वादशभेदभिन्नम् ज्ञेयम् ।

भावानुवादः—श्रुत ज्ञान का द्वितीय भेद जो अगप्रविष्ट है । वह तीर्थंकर से

साक्षात् तीर्थकरो द्वारा प्रणीत होता है। उसी प्रकार गणधरो के द्वारा सूत्र रूप से ग्रथित होता है। उसके १२ भेद होते है। अंगबाह्य अनेक प्रकार के होते है। वे आचार्यप्रणीत हैं और अंग से अविरुद्ध होने पर प्रमाणकोटि मे आते है।

**प्रत्येकजीवे जिनदर्शनेषु मतिः श्रुतज्ञानमवश्यमेव ।**
**संजायते, यत्र मतिः श्रुतं स्यात्, यत्र श्रुतं तत्र मतेश्च सत्ता ॥१९॥**

अन्वयः—जिनदर्शनेषु प्रत्येकजीवे मतिः श्रुतज्ञानम् अवश्यम् एव संजायते। यत्र मतिः तत्र श्रुतम् स्यात्। यत्र च श्रुतम् तत्र मतेः च सत्ता (भवति एव)।

भावानुवादः—जिनदर्शनो की मान्यता के अनुसार प्रत्येक जीव में मतिश्रुत ज्ञान अवश्य ही होते है। उमास्वाती के अनुसार श्रुतज्ञान मतिपूर्वक ही होता है; किन्तु मतिज्ञान भी श्रुतपूर्वक हो ऐसा आवश्यक नही है। नन्दीसूत्र का मत है, कि जहा मति है, वहा श्रुत है, जहाँ श्रुत है वहा मतिज्ञान है।

**ज्ञानद्वयं तत्र परोक्षरूपम्, दृष्ट्यात्मनः स्यात्परकारणत्वात् ।**
**प्रत्यक्षमन्यत् ननु जायमानम्, तदात्मनस्तत् त्रिविधस्वरूपम् ॥२०॥**

अन्वयः—तत्र आत्मनः दृष्ट्या परकारणत्वात् ज्ञानद्वय परोक्षरूपम् स्यात्। अन्यत् तदात्मनः जायमान तत् त्रिविधस्वरूपम् प्रत्यक्षम् (बोध्यम्)।

भावानुवादः—इन्द्रियमन से आत्मा को होने वाले मति श्रुतज्ञान आत्मदृष्टि से परोक्ष हैं, किन्तु सांव्यवहारिक दृष्टि से प्रत्यक्ष है। दूसरे ज्ञान आत्मा को स्वयं होने वाले प्रत्यक्ष है। वे तोन प्रकार के अवधि, मनःपर्यव, तथा केवलज्ञान हैं।

**ततोऽवधिर्ज्ञानमशेषरूपि, सीमायुतं पुद्गलदर्शिद्रव्यम् ।**
**तस्याधिकारी गुणकारकः स्यात्, तथा द्वितीयो भवहेतुकश्च ॥२१॥**

अन्वयः—ततः अशेषरूपि, सीमायुतं पुद्गलदर्शि द्रव्यम् अवधिज्ञानम् (अस्ति)। तस्य अधिकारी गुणकारकः प्रथमः, तथा द्वितीयः भवहेतुकः च स्यात्।

भावानुवादः—सीमा युक्त रूपी पुद्गलद्रव्यदर्शी अवधि ज्ञान होता है। उसके अधिकारी दो प्रकार के होते हैः—प्रथम गुणप्रत्यय मनुष्य तिर्यञ्चों को होता है। द्वितीय देव तथा नारकों हो होता है। उनमें जन्म से ही अवधिज्ञान होता है।

मनाऽनुचिन्तार्थविकासकारि, तथामनःपर्यवरूपमास्ते ।
अस्य प्रकारद्वयमत्रबोध्यम्, ऋजुस्तथादः विपुलोविशुद्धः ॥२२॥

अन्वयः—तथा मनोनुचिन्तार्थविकासकारिमनःपर्यवरूपम् आस्ते । अत्र अस्य ऋजुः तथा विशुद्धः विपुलः च इति अदः प्रकारद्वयम् बोध्यम् ।

भावानुवादः—मनुष्यो के मन के चिन्तन अर्थ को प्रकट करने वाला मन.पर्यव ज्ञान है। यह मनुष्यक्षेत्र तक सीमित है। गुण के कारण उत्पन्न होता है। चारित्रवान् व्यक्ति इसका अधिकारी है। इसके दो भेद हैः—ऋजुमति और विपुलमति। ऋजुमति की अपेक्षा विपुलमति विशुद्धतर होता है। प्रथम प्रतिपाती होता है। द्वितीय अप्रतिपाती। वह केवल की प्राप्ति तक रहता है।

उत्पत्तिकालादनुप्राक्निपाती, द्वितीयबोधो न विनश्यतीति ।
आकेवलज्ञानमवश्यमास्ते, प्रत्यक्षमीष्टं ननु चात्मनिष्ठम् ॥२३॥

अन्वयः—प्राक् (बोधः) (ऋजुमतिः) उत्पत्तिकालात् अनुनिपाती (भवति)। द्वितीयबोधः (विपुलमतिः) न विनश्यति इति । आकेवलज्ञानम् अवश्यम् आस्ते। ननु इदम् आत्मनिष्ठ प्रत्यक्षम् ईष्टम् ।

भावानुवादः—प्रथम ऋजुमति मन.पर्यवज्ञान उत्पत्ति काल के बाद गिर भी जाता है। द्वितीय ज्ञान विपुलमति नष्ट नही होता है। केवलज्ञान तक अवश्य ही रहता है। यह ज्ञान आत्मप्रदेशों से होने के कारण अवधिज्ञान की तरह प्रत्यक्ष होता है।

कर्मक्षये क्षायिकरूपमेतत, विशुद्धियुक्तं सकलेषुमुख्यम् ।
नाम्नासदा केवलमस्य द्रव्यं पर्यायजातं सकलं विबोध्यम् ॥२४॥

अन्वयः—कर्मक्षये एतत् क्षायिकरूपम् विशुद्धियुक्तं सकलेषुमुख्यम् नाम्ना सदा

केवलम् अस्ति । अस्य विषयरूपम् सकलं द्रव्यम् पर्यायजातम् च विबोध्यम् ।

भावानुवादः—केवलज्ञान मोहनीय, ज्ञानावरणीय दर्शनावरणीय और अन्तराय-कर्म के क्षय होने से उत्पन्न होता है । अतः वह क्षायिक, विशुद्धतम, सभी ज्ञानों में मुख्य होता है । इसका विषय सभी द्रव्य, तथा सभी पर्याय हैं । ऐसा जानना चाहिये ।

**अस्योदये लुम्पति सर्वबोधः सर्वात्मतत्त्वस्य च सद्विकासः ।**
**सर्वाणि वस्तूनि च सर्वकालोऽस्यैवास्ति नित्यं विषयो विशिष्टः ॥२५॥**

अन्वयः—अस्य उदये सर्वबोधः लुम्पति । सर्वात्मतत्त्वस्य च सद् विकासः अस्ति । अस्य एव सर्वाणि वस्तूनि सर्वकालः च नित्यं विशिष्टः विषयः अस्ति ।

भावानुवादः—केवल ज्ञान के उदय होने पर अन्य सभी ज्ञान समाहित हो जाते हैं । यह सर्वात्मतत्त्व का सम्पूर्ण विकास है । सभी वस्तु तथा सभी काल केवल-ज्ञान के विशिष्ट विषय हैं । केवलज्ञानी सभी विषयों को जानता है । केवल-ज्ञान सकल प्रत्यक्ष है, सम्पूर्ण है । उसके साथ मति आदि अपूर्ण ज्ञान की स्व-तन्त्र उपलब्धि नही रह सकती है ।

**यः केवली स्यात् सतु सर्ववेत्ता सर्वं च जानात्यवलोकते च ।**
**सर्वेन्द्रियं तस्य फलेन हीनम्, नोज्ञानलब्धावुपयुज्यते तत् ॥२६॥**

अन्वयः—यः केवली स्यात् सतु सर्ववेत्ता सन् सर्वम् च जानाति, अवलोकते च । तस्य सर्वेन्द्रियम् फलेन हीनम् ज्ञानलब्धौ तत् नो उपयुज्यते ।

भावानुवादः—जो केवली होता हे । वह सब कुछ जानने वाला होता है । वह सबको जानता है, और देखता है । सर्वज्ञ के ज्ञान का सम्बन्ध इन्द्रियों तथा मन से निरपेक्ष आत्मा से होता है । जब तक वह सशरीर रहता है । तब इन्द्रियाँ उसके साथ रहती अवश्य हैं, किन्तु केवलज्ञानी को ज्ञान की प्राप्ति के लिए उनका कोई उपयोग नहीं होता है । किन्तु अन्य को बोध देने के लिए यथास्थान प्रयोग में लाई जाती है ।

**सम्यक्त्वयुक्तः परिबोधशालो, पर्याप्तभावाचरणप्रधानः ।**
**तत्त्वज्ञसाक्षादनुभूतिभूतिः, महत्तमः स्यान्ननुमानवोऽसौ ॥२७॥**

अन्वयः—सम्यक्त्वयुक्तः, परिबोधशाली, पर्याप्तभावाचरणप्रधानः तत्त्वज्ञसाक्षादनु-भूतिभूतिः ननु असौ सर्वज्ञः मानवः महत्तमः स्यात् ।

भावानुवादः—सम्यक्त्वयुक्त अर्थात् परिपूर्णसमत्वदर्शी, विमलपरिपूर्णज्ञानी, सम्पूर्ण यथाख्यातचारित्र के धारक, सर्वप्रधान तत्त्वज्ञ, साक्षात् अनुभूति के उपभोक्ता सर्वज्ञ महाप्रभु निश्चित ही महामानव है ।

**ज्ञान पवित्रं परमं विशिष्टम्, नोतत्समं वस्तु समस्तलोके ।**
**ज्ञानस्य दृष्टिः पृथगेव भद्रा, भद्रात्मकं सर्जति किंचिदेव ।।२८।।**

अन्वयः—ज्ञानम् परमं पवित्रम् विशिष्टम् (अस्ति) । समस्तलोके तत्समं वस्तु नो । ज्ञानस्य दृष्टिः पृथक् एव भद्रा (अस्ति) । सा किंचित् भद्रात्मकम् एव सर्जति ।

भावानुवादः—ज्ञान परमपवित्र विशिष्ट वस्तु है । समस्तलोक मे उसके समान अन्य कोई वस्तु नही है । ज्ञान की दृष्टि विशिष्ट मंगलकारिणी है । वह महा मंगलात्मक है । जिस तत्त्व की सिद्धि अन्य से नही होती है । वह केवलज्ञान से सम्पन्न हो जाती है ।

**यस्यास्ति बोधः परमार्थरूपः नोवेदनामर्दयते नरं तम् ।**
**ज्वालावलीढे सकले शरीरे, नैवात्मनः कापि कदापिहानिः ।।२९।।**

अन्वयः—यस्य परमार्थरूपः बोधः अस्ति । तनरं वेदना नो मर्दयते । ज्वालावलीढे सकले शरीरे आत्मनः कदापि कापि हानिः न एव (भवति) ।

भावानुवादः—जिसको सकल परमार्थ ज्ञान हो जाता है । उस मनुष्य को वेदना कभी पीडित नही करती है । ज्वाला से सम्पूर्ण शरीर के परिव्याप्त हो जाने पर भी उससे आत्मा की कभी कोई हानि नही होती है । ज्ञानी दुःख को दुःख ही नही समझता है ।

**अध्यात्मदृष्ट्यानिखिला प्रवृत्ति, रन्तःसमावेशमयी बहिर्नो ।**
**ज्ञाने प्रपन्ने सुखदुःखभावो विशीर्यते ज्ञानसमन्वितस्य ।।३०।।**

अन्वयः—ज्ञानसमन्वितस्य अध्यात्मदृष्ट्या निखिला प्रवृत्तिः अन्तःसमावेशमयी (भवति)। बहिः नो। ज्ञाने प्रपन्ने सुखदुःखभावो विशीर्यते।

भावानुवादः—आध्यात्मिक दृष्टि से ज्ञानी मनुष्य की सभी प्रवृत्तियाँ अन्तर्मुखी होती है। बाहर नही होती; पर विज्ञान समग्र होता है। ज्ञान की प्राप्ति होने पर तो सभी प्रकार के लौकिक सुख दुःख के भाव समाप्त ही हो जाते हैं।

**सामान्यतो भीषणभूतवार्ता, ज्ञानान्वितस्यात्मसमग्रदृष्टेः।**
**पर्येति पर्याप्तसुखस्वरूपम्, कष्टानुभूतिर्नतुकापि शिष्टा ॥३१॥**

अन्वयः—ज्ञानान्वितस्य आत्मसमग्रदृष्टेः सामान्यतोभीषणभूतवार्तापि पर्याप्तसुख-स्वरूपम् पर्येति। कापि कष्टानुभूतिः शिष्टा नतु (भवति)।

भावानुवादः—संपरिपूर्ण आत्मिक स्वरूप को जानने वाले को सामान्यरूप से भयानक वार्ता भी पर्याप्ति सुखरूप में बदल जाती है। कोई कष्ट की अनुभूति उस समय शेष नहीं रह जानो है। ज्ञानी को सर्वत्र सदा सर्वथा सुख हो प्राप्त होता रहता है।

**ज्ञानी सदा बालकवद् विभाति, मातृत्वदृष्टिर्महिलासुतस्य।**
**उपेक्षते सर्वविरुद्धभावम्, सम्यक्त्वबोधस्य बिभर्तिवर्म ॥३२॥**

अन्वयः—ज्ञानी सदावालकवत् विभाति। तस्य महिलासुमातृत्वदृष्टिः भवति। स सर्वविरुद्धभावम् उपेक्षते। सम्यक्त्वबोधस्य च वर्म बिभर्ति।

भावानुवादः—सम्पूर्ण ज्ञानी सदा बालक के समान रहता है। उसकी महिलाओं में मातृत्वदृष्टि होती है। सभो विपरीत भाव उसको पीड़ित नहीं कर सकते। शुद्धाचार पूर्वक सम्यक्त्वज्ञान का ही कवच धारण करता है।

**क्षुब्धाः जनाः वेदनया ययासत्, विवेकहानिं परियन्ति तथ्यम्।**
**परं मनस्वी च तयैव वृद्धः, सायुज्यशान्ति लभते निरश्राम् ॥३३॥**

अन्वयः—यया वेदनया क्षुब्धाः जनाः विवेकहानिम् तथ्यम् परियन्ति। परम् तया

एव (वेदनया) मनस्वी बुद्धः सन् निरभ्राम् सायुज्यशान्तिम् लभते ।

भावानुवाद:—जिस वेदना से क्षुब्ध मनुष्य सही रूप से विवेकहानिको पाते हैं। अर्थात् उनका विवेक नष्ट हो जाता है। उसी वेदना से मनस्वी मनुष्य प्रबुद्ध होकर बाधा रहित सायुज्य परमशान्ति को पाता है। ज्ञानी वेदना में समभावी रहता है। वह उससे प्रभावित नही होता है।

ज्ञानी नरोऽनारतमेव पुण्यम्, त्रियोगयुक्तः समुपार्ज्य पूर्णम् ।
बन्धं च पुण्यप्रकृतेः करोति, पापः सदा तद्विपरीतमेव ॥३४॥

अन्वय:—ज्ञानी नरः त्रियोगयुक्तः अनारतम् एव पूर्णम् पुण्यं समुपार्ज्य पुण्यप्रकृतेः चबन्ध करोति। पापः (अज्ञानी) सदा तद्विपरीतम् एव (करोति)।

भावानुवाद:—ज्ञानी मनुष्य मन, वचन, शरार से आत्मशुद्धिपूर्वक लगातार पूर्णपुण्य का उपार्जन करता है। एवं पुण्यप्रकृति का ही बन्ध करता है। पापी अज्ञानी मनुष्य सदा उसके विपरीत ही आचरण करता है।

प्रत्येककार्यं जनशर्महेतोः, ज्ञानात्मनः कामनया यथेष्टम् ।
संजायते, ऽज्ञानयुतस्य लिप्सामादाय निन्द्यां निजलाभसिद्धेः ॥३५॥

अन्वय:—ज्ञानात्मनः जनशर्महेतोः कामनया यथेष्टम् प्रत्येककार्यम् संजायते। अज्ञानयुतस्य (नरस्य) निन्द्याम् लिप्साम् आदाय निजलाभसिद्धेः (प्रत्येककार्यं संजायते)।

भावानुवाद:—ज्ञानी मनुष्य का प्रत्येक कार्य मनुष्यों की भलाई के हेतु होता है; किन्तु अज्ञानी तो निन्दनीय तृष्णा को लेकर केवल अपने स्वार्थ की सिद्धि के लिये ही प्रत्येक कार्य करता है।

प्रयाति बोधेन नरोद्युलोकम्, भूत्वाऽधिपो धर्मविधेः कलापैः ।
नरश्च बोधाद्रहितो निराशो, निराकृतोऽसौ निरयं प्रयाति ॥३६॥

अन्वयः—नरः बोधेन धर्मविधेः कलापैः अधिपोभूत्वा द्युलोकं प्रयाति। नरः एव बोधाद्रहितः निराशः निराकृतः असौ निरयं प्रयाति।

भावानुवाद:—मनुष्य सम्यक् ज्ञान के कारण धर्मानुष्ठान के कलापों से पूत बनकर स्वर्ग (सद्‌गति) मे जाता है। पर अज्ञानी मनुष्य सब जगहों से निराशापूर्वक निकाला गया नरक (दुर्गति में) जाता है।

आत्मस्वरूपं कथित हि यत्र, जीवस्वरूपं ह्युपयोगयुक्तम् ।
साकारतोऽनाकृतितोद्विभेद, आद्योऽस्ति बोधोऽपरदर्शनं तत् ।।३७।।

अन्वय:—यत्र आत्मस्वरूपं कथितम् । तत्र उपयोगयुक्तं जीवस्वरूपं (भवति) । (स उपयोगः) साकारतः अनाकृतितः द्विभेदः (अस्ति) । आद्यः बोधः अस्ति । तत् )तस्मात्) अपर दर्शनम् च ।

भावानुवाद:—आत्मस्वरूप के कथन में उपयोग को जीव के लक्षण के रूप मे स्वीकार किया गया है। वह उपयोग साकार तथा अनाकार के भेद से दो प्रकार का होता है। ज्ञान साकार होता है। दर्शन निराकार होता है।

द्वयोश्च चर्चा निखिलागमेषु, प्राचीनरूपा ननु मान्यतेयम् ।
जानाति बोधेन च, दर्शनेन, सपश्यतीत्थं विहितः प्रयोगः ।।३८।।

अन्वय।—निखिलागमेषु द्वयोः (ज्ञानदर्शनयोः) च चर्चा (अस्ति) । ननु इयम् मान्यता प्राचीनरूपा (अस्ति)। बोधेन जानाति । दर्शनेन संपश्यति । इति इत्थम् प्रयोगः विहितः (वर्तते) ।

भावानुवाद:—सम्पूर्णआगमों मे ज्ञान और दर्शन की चर्चा है। यह मान्यता अत्यन्त प्राचीन है। केवली ज्ञान से जानते हैं। तथा दर्शन से देखते हैं। इस प्रकार के प्रयोग किये जाते है।

सामान्यधर्मो ननु दर्शनेऽस्ति, ज्ञानोपयोगे च विशेषधर्मः ।
तिरस्कृतिर्नैव परस्य तत्र, चानन्तधर्मात्मकवस्तु सिद्धम् ।।३९।।

अन्वय:—दशने ननु सामान्यधर्मः अस्ति । ज्ञानोपयोगे च विशेषधर्मः (अस्ति) । तत्र परस्य तिरस्कृतिः न एव । यतः अनन्तधर्मात्मकवस्तु सिद्धम् ।

भावानवाद:—दर्शनोपयोग में सामान्य धर्म झलकता है। और ज्ञानोपयोग में

विशेषधर्म रहता है। किसी का तिरस्कार कर अन्य का ग्रहण नहीं होता है। अनन्तधर्मात्मकवस्तु के सिद्ध होने पर भी उपयोग किसी एक धर्म को मुख्य रूप से ग्रहण कर सकता है।

सामान्यपुंसामुपयोग एषः सहैव नो ज्ञानसुदर्शनस्य ।
सञ्जायते सक्रमशो विशेषः सर्वज्ञपृच्छा विषये विभेदः ।।४०।।

अन्वय:—सामान्यपुंसाम् ज्ञानसुदर्शनस्य एषः उपयोग सह एव न संजायते। विशेषः सक्रमशः (भवति)। सर्वज्ञपृच्छा विषये विभेदः (अस्ति)।

भावानुवाद:—सामान्य व्यक्ति को ज्ञान और दर्शन का उपयोग साथ नहीं होता है। विशेषरूप से क्रमशः होता है। किन्तु केवली के उपयोग को लेकर आचार्यों में कुछ मतभेद है, आगम पक्ष क्रमिक उपयोग को स्वीकार करता है।

ज्ञानं सदा दर्शनपूर्वकं तत्, नो दर्शनं ज्ञाननिदानभूतम् ।
सर्वज्ञदेवस्य विचारकाले, क्रमस्य भावो नहिविद्यतेऽत्र ।।४१।।

अन्वय:—तत् ज्ञान सदा दर्शनपूर्वकम्। दर्शनम् ज्ञाननिदानभूतम् नो। सर्वज्ञ देवस्य विचारकाले अत्र क्रमस्य भावः नहि विद्यते।

भावानुवाद:—ज्ञान सदा दर्शनपूर्वक होता है, किन्तु दर्शन ज्ञानपूर्वक नहीं होता है। सर्वज्ञ देव के विचार के काल में क्रम की स्थिति नही होती है। केवली अवस्था मे अपेक्षाकृत दर्शन तथा ज्ञान में भेद नही होता है। केवली को जब ज्ञान दर्शन युगपद पैदा हो जाते हैं तब पुनः दर्शन नहीं हो सकता। इसलिए वहां उत्पत्ति की दृष्टि से ज्ञानदर्शन का क्रमभाव नही घटता है। ज्ञान दर्शन पैदा नहीं होते वे स्थायी रूप से रहते हैं।

ज्ञानस्य सिद्धिर्भवति क्रियायाम्, लक्ष्यं द्वयोर्वर्तत एकमेव ।
एकस्य सत्वे नहि कार्यजातम्, द्वयोः स्थितावेव समीहिताप्तिः ।।४२।।

अन्वय:—क्रियायाम् ज्ञानस्य सिद्धिः भवति। द्वयोः (ज्ञानक्रिययोः) लक्ष्यम् एकम्

एव वर्तते । एकस्य सत्त्वे कायजातम् नहि (भवति) । द्वयोः स्थितौ एव समीहिताप्तिः (भवति) ।

भावानुवादः—क्रिया के होने पर ही ज्ञान की सिद्धि होती है । ज्ञान तथा क्रिया दोनों का लक्ष्य एक ही होता है । एक के होने पर कार्य नहीं चल सकता है। इसलिए ज्ञान क्रिया दोनों के होने पर ही अभिलषितवस्तु की प्राप्ति होती है ।

**एकेन पादेन गतिर्न लोके नैकेन चक्रेण रथः प्रयाति ।**
**तथैव बोधक्रिययोर्युतिश्च, बोध्या विधानस्य फलप्रदाने । ४३ ।**

अन्वयः—यथा लोके एकेन पादेन गतिः न भवति । रथः अपि एकेन चक्रेण न प्रयाति । तथा एव विधानस्य फलप्रदाने बोधक्रिययोः युतिश्च बोध्या ।

भावानुवादः—लोक में देखा जाता है कि एक पैर से चलना नही होता है । रथ भी एक चक्र से नही चलता है । इसी तरह विधानादि का फल प्रदान करने के लिए ज्ञान और क्रिया का योग अवश्य होना चाहिये ।

**क्रियानिषेधं च करोति बोधो, यो नास्ति सोऽबोधमयो नितान्तम् ।**
**विधीयते यत् परिबोधहीनम् ससारभूतौ च निदानमात्रम् ।।४४।।**

अन्वयः—य बोधः क्रियानिषेधं च करोति सनास्ति । सः नितान्तम अबोधमयः अस्ति । यत् परिबोधहीनम् विधीयते । तत् संसारभूतौ च निदानमात्रम् अस्ति ।

भावानुवादः—जो ज्ञान क्रिया का निषेध करता है । वह ज्ञान नहीं है । अज्ञानमय है । जो क्रिया अज्ञानपूर्वक की जाती है । वह संसार (भ्रमण) का कारण होती है ।

**यथाद्वयोरूपमपेक्ष्यते च, संसाधनायांतु, तथैव लोके ।**
**कृषेः कृतौ नामनिचायनेन, लभेत किं धान्यविभूतिमीप्टाम् ? ।।४५।।**

अन्वयः—संभावनायां तु यथा द्वयोः (ज्ञानक्रिययोः) रूपम् अपेक्ष्यते च तथा एव लोके (अपि) कृषेः कृतौ नाम निचायनेन क्रियां विना ना (इति अग्रेण

सम्बन्धः) किम् इष्टांधान्यविभूतिं (लभेत) ?

भावानुवादः—जैसे विशिष्ट साधना में ज्ञान और क्रिया दोनों की अपेक्षा होती है। वैसे ही लोक मे भी समझना चाहिये। क्या खेती के काम में कार्य किये बिना कोई मनुष्य खेती का नाम ले लेने से भी इच्छित पदार्थो का कथन कर ले, तो क्या उससे धान्य की सम्पत्ति प्राप्त हो सकती है ? अर्थात् कभी नहीं मिल सकती है।

**क्रियां बिना ना, च तथैव बोध्यो, विमुक्तिमार्गेऽपि च तत्प्रयोगः।**
**अन्धाक्रिया ज्ञानविहीनरूपा, क्रियाविहीनो ननु पंगुबोधः ।।४६।।**

अन्वयः—यथा क्रियाँ विना ना न लभेत। तथा एव विमुक्तिमार्गे अपि च तत्प्रयोगः बोध्यः। ज्ञानविहीनरूपा क्रिया अन्धा, क्रियाविहीनः ननु पंगुबोधः (भवति)।

भावानुवादः—जैसे क्रिया के बिना मनुष्य शस्यसम्पत्ति नहीं पा सकता। उसी तरह मोक्ष के मार्ग में भी ज्ञान क्रिया दोनों का प्रयोग जानना चाहिये। ज्ञान के बिना क्रिया अन्धी है। और क्रिया के बिना ज्ञान निश्चय रूप से पंगु है। दोनों के योग से लाभ होता है। इस विषय में "अन्धपंगु न्याय का स्मरण करना चाहिये।

**भवेत्क्रियायाश्चरणं समन्तात्, सद्ज्ञानपूर्वं परमोपयोगि।**
**तदेव मोक्षांगमियर्ति नूनम्, भेदप्रभेदाः विहितास्तदीयाः ।।४७।।**

अन्वयः—क्रियायाः चरणं सद्ज्ञानपूर्वं परमोपयोगि समन्तात् भवेत्। तदेव (आचरणं) मोक्षांगम् नूनम् इयर्ति। (अतः) तदीयाः भेदप्रभेदाः अग्रे विहिता.।

भावानुवादः—क्रिया का आचरण सम्यक् ज्ञानपूर्वक सर्वथा उपयोगिता की दृष्टि से होना चाहिये। तभी वह क्रिया मोक्ष का अंग मानी गई है। उसके भेद प्रभेद आगे निर्दिष्ट है।

**[illegible]स्यासमितया ननुधर्मवृत्त्याऽ, नुप्रेक्षया चैव परीषहाणाम्।**
**[illegible]येन, चारित्रसमाश्रयेण, संजायते संवरतत्त्वमेतत् ।।४८।।**

अन्वय:—गुप्त्या, समित्या, धर्मवृत्या, अनुप्रेक्षया परीषहाणाम् एव जयेन, चारित्र्य-समाश्रयेण च एतत् संवरतत्त्वम् संजायते ।

भावानुवाद:—गुप्ति, समिति, धर्म, अनुप्रेक्षा, परीषहजय और चारित्र से यह संवर तत्त्व उत्पन्न होता है । सामान्यत: संवर का स्वरूप एक ही है । फिर भी प्रकारान्तर से उसके अनेक भेद बताये हैं ।

**कार्यं तपः संवरनिर्जरार्थम्, योगस्यसन्निग्रहगुप्तिरेषा ।**
**कायेन, वाचा मनसा विधेया, प्रशस्तरूपेणच संप्रधार्य ।।४९।।**

अन्वय:—सवरनिर्जरार्थम् तप: कार्यम् । एषा योगस्य सन्निग्रहगुप्ति: (अस्ति) । प्रशस्तरूपेण च संप्रधार्य (सागुप्ति:) कायेन, वाचा मनसा च विधेया ।

भावानुवाद:— संवर और सकाम निर्जरा के लिए तप करना चाहिये । सोच समझकर श्रद्धापूर्वक योगों का भली प्रकार निग्रह करना गुप्ति है । उसे शरीर, वचन मन से करना चाहिये । अर्थात् बुद्धि और श्रद्धापूर्वक मन, वचन, और काया को उन्मार्ग से रोकना गुप्ति है । सम्मार्ग में लगाना समिति है । योग के संक्षिप्त तीन भेद होने से गुप्ति के भी तीन भेद हो जाते हैं । और सत्प्रवृत्ति के पांच भेद हैं । ये पंच समिति कहलाती है । ये अष्टप्रवचन माता कहलाती हैं ।

**ईर्या च भाषैषणसम्यगर्थे, चादाननिक्षेपणसर्गरूपाः ।**
**एताश्च पंचापि विशेषधर्माः, स्युः, सत्क्रियावर्तनरूपमुख्या। ।।५०।।**

अन्वय:—ईर्याभाषैषणसम्यगर्थे च आदाननिक्षेपणसर्गरूपा: च एता: सत् क्रियावर्तनरूपमुख्या: पंचापि विशेषधर्मा: स्यु: ।

भावानुवाद:—१.ईर्यासमिति २. सम्यक् भाषा समिति ३. सम्यक् एषणा समिति ४. सम्यक् आदाननिक्षेपसमिति तथा सम्यगुत्सर्ग समिति । ये पाँच विवेकयुक्त प्रवृत्ति के रूप में विशेषधर्म स्वरूप हैं । सभी संवर की उपाय भूत है ।

**क्षमार्जवे मार्दवशौचसत्यसत्संयमाः त्यागतपोऽममत्व—**
**सद्ब्रह्मचर्याणि दशप्रकारः प्रशस्तधर्मोस्तिधराधुरीणः ।।५१।।**

अन्वयः—क्षमार्जवे मार्दवशौचसत्यसत्संयमाः त्यागतपोऽममत्वसद्ब्रह्मचर्याणि च धराधुरीणः दशप्रकारः—प्रशस्तधर्मोऽस्ति ।

भावानुवादः - यतिधर्म के दस प्रकार है । वे धराभार को वहन करने वाले प्रशस्त धर्म हैं:—क्षमा, नम्रता, मृदुता, पवित्रता, सत्य, संयम, त्याग, तप निर्ममत्व, ब्रह्मचर्य, इनका पालन अनिवार्य रूप से करना चाहिए । (यहां यति शब्द वास्तविक साधु के लिए प्रयुक्त हुआ है। ।

**यस्याः प्रभावेण च जीवनस्य, शुद्धिर्विशिष्टा ननु भावना सा ।**
**संख्या समाद्वादश जैनशास्त्रेऽनुप्रेक्षणं चापि पराभिधानम् ।।५२।।**

अन्वयः—यस्याः प्रभावेण च जीवनस्य विशिष्टा शुद्धिः (भवति) । ननु सा भावना । जैनशास्त्रे द्वादश समा (संख्या) (अस्ति) । अनुप्रेक्षणम् अपि चतस्याः पराभिधानं (वर्तते) ।

भावानुवादः—जिसके प्रभाव से जीवन की विशिष्ट शुद्धि होती है । उसे भावना कहते हैं । जैनशास्त्रों में उसके १२ प्रकार है । उसका दूसरा नाम अनुप्रेक्षा भी है । इन्हे अन्य स्थानों से जानना चाहिये ।

**द्वाविंशतिः सन्ति परीषहाश्च, सोढा इमे धर्मपथे स्थिरार्थम् ।**
**विनाशनार्थं श्रितकर्मणां च, निजोदयार्थं समभावभूत्या ।।५३।।**

अन्वयः—परीषहाः च द्वाविंशतिः सन्ति । इमे धर्मपथे स्थिरार्थम् श्रितकर्मणां विनाशनार्थं समभावभूत्या निजोदयार्थम् च सोढा। ।

भावानुवादः—परीषह बाईस हैं । उन्हें धर्ममार्ग पर स्थिरतापूर्वक गमन करने के लिए, उपार्जितबद्धकर्मों के विनाश के लिए, समताभाव की विभूति से अपने पूर्णविकास के लिए, सहना चाहिये । बिना कष्ट सहे धर्मसाधना दुर्लभ है ।

**क्षुधातृषाशीत्यबितापनानि, दंशादिबाधारतिनग्नताश्च ।**
**स्त्रीचर्याशयनं निषद्याऽ, क्रोशो वधो याचनताप्यलाभः ।।५४।।**

अन्वयः - क्षुधा, तृषा शैत्यवितापनानि, दंशादिबाधारतिनग्नताः च स्त्री च एव चर्या शयनं निषद्या आक्रोशः बधः याचनता अलाभः अपि (अग्रेण सम्बन्धः)।

भावानुवादः—क्षुधा, तृषा, शीत, उष्ण, दंशमशक, नग्नत्व, अरति, स्त्री, चर्या, निषद्या शय्या आक्रोशः वध, याचना, अलाभ ये परीषह हैं। शेष आगे निर्दिष्ट हैं।

रोगस्तृणस्पर्शमलानि तत्र, सत्कारबुद्धी ननु बोधहानि।
राशाम्बरैः विप्रतिपत्तिरत्र श्वेताम्बराणां परिदृश्यते च ।।५५।।

अन्वयः—तत्र रोगः तृणस्पर्शमलानि सत्कारबुद्धी ननु बोधहानिः इति परिषहाः सन्ति। अत्रविषये श्वेताम्बराणाँ आशाम्बरैः सह विप्रतिपत्तिः परिदृश्यते।

भावानुवादः—राग, तृण, स्पर्श, मैल, सत्कार, पुरस्कार, प्रज्ञा, बोधहानिः (अज्ञान) ये परीषह हैं। इस विषय में कुछ के विषय में श्वेताम्बरों का दिगम्बरों के साथ मतभेद है।

स्थातुं समत्वे सकलाः प्रवृतीरशुद्धरूपाः विसृजेदजस्रम्।
सामायिकं स्वोन्नतिलब्धिहेतोः चारित्रमेतत् ग्रहणाय युक्तम् ।।५६।।

अन्वयः—समत्वे स्थातुम् अशुद्धरूपाः सकलाः प्रवृतीः अजस्रम् विसृजेत्। एतत् सामायिक चारित्रम् स्वोन्नतिलब्धिहेतोः ग्रहणाय युक्तम् (अस्ति)।

भावानुवादः—समत्व में स्थिरता के लिए अशुद्धरूपो सभी प्रवृत्तियों को निरन्तर त्याग कर दें, और अपनी उन्नति की प्राप्ति के लिए सामायिक आदि चारित्र को ग्रहण करना चाहिये।

बाह्यात्तथाभ्यन्तरभेदतश्च, तपोद्विभेदं कथितं मुनीन्द्रैः।
बिनाशहेतोर्भववासनानामध्यात्मलाभाय विधेयमेतत् ।।५७।।

अन्वयः—मुनीन्द्रैः बाह्यात् तथा आभ्यन्तरभेदतः च द्विभेदं तपः कथितम्। भववासनानाम् विनाशहेतोः अध्यात्मलाभाय च एतत् (तपः) विधेयम्।

भावानुवादः—मुनीन्द्रों के द्वारा बाहरी तथा भीतरी भेद से तप दो प्रकार के

कहे गये हैं । सांसारिक वासनाओं को दूर करने के लिए अध्यात्मसम्बन्धि लाभ के लिए दोनों प्रकार के तपों को करना चाहिए ।

**ऊनोदरी लोभविवर्जनंच, रसादिहानं सुविविक्तदेशः ।**
**कायादिकष्टं प्रथमोपवासो, बाह्यं तपस्तच्चरणीयमास्ते ।।५८।।**

अन्वयः—प्रथमोपवासः, ऊनोदरीलोभविवर्जनम्, रसादिहानम्, सुविवितदेशः कादाादिकष्टम् इति वाह्यम् तपः आचरणीयम् आस्ते ।

भावानुवादः—अनशन, ऊनोदरी, (अवमौदर्य) वृत्तिपरिसंख्यान, रसपरित्याग, विविक्त, शय्यासन, और कायक्लेश ये बाह्य तप हैं । इनका आचरण करना चाहिए ।

**दोषापनोदो विनयश्च सेवा, स्वाध्यायवृत्तिर्ममतानिरासः ।**
**ध्यानं च शुक्लं समुपासनीयमाभ्यन्तरं विद्धि तपो विशिष्टम् ।।५९।।**

अन्वयः—दोषापनोदः, विनयः, सेवा, स्वाध्यायवृत्तिः, ममतानिरास। शुक्लं ध्यानम् च इति आभ्यन्तरम् विशिष्टं तपः विद्धि तत् समुपासनीयम् च ।

भावानुवादः—दोषों को दूर करना, नम्रता, सेवा, शास्त्रों का निरन्तर अध्ययन ममत्व का त्याग, और शुभ ध्यान इन्हें आभ्यन्तरिकविशिष्ट तप जानना चाहिये । इनका अभ्यास करना चाहिये । इन दोनों वाह्य आभ्यन्तरतपों में सापेक्षिक भेद हैं । किन्तु एक दूसरे के परिपूरक हैं ।

**ज्ञानस्य पश्चाद् विहितास्तिशास्त्रे, प्रमाणचर्चा विततामिघाना ।**
**पुरागमे संभवतिस्म वक्तुम्, शक्यं तयोस्तद्विषये प्रमाणैः ।।६०।।**

अन्वयः—ज्ञानस्य चर्चा पश्चात् विहिता अस्ति । शास्त्रे पुरागमे विततानिघाना प्रमाणचर्चा अपि सम्भवतिस्म । इति तयोः तद्विषये प्रमाणैः वक्तुम् शक्यम् ।

भावानुवादः—पीछे ज्ञान की चर्चा की गई है । प्राचीन आगमग्रन्थों में विस्तार पूर्वक प्रमाण की चर्चा भी की गई थी । ऐसा इस विषय में प्रमाणपूर्वक कहा

अन्वयः - क्षुधा, तृषा शैत्यवितापनानि, दंशादिबाधारतिनग्नताः च स्त्री च एव चर्या शयनं निषद्या आक्रोशः बधः याचनता अलाभः अपि (अग्रेण सम्बन्धः)।

भावानुवादः—क्षुधा, तृषा, शीत, उष्ण, दंशमशक, नग्नत्व, अरति, स्त्री, चर्या, निषद्या शय्या आक्रोशः वध, याचना, अलाभ ये परीषह हैं। शेष आगे निर्दिष्ट हैं।

**रोगस्तृणस्पर्शमलानि तत्र, सत्कारबुद्धी ननु बोधहानि।**
**राशाम्बरैः विप्रतिपत्तिरत्र श्वेताम्बराणां परिदृश्यते च ॥५५॥**

अन्वयः—तत्र रोगः तृणस्पर्शमलानि सत्कारबुद्धी ननु बोधहानिः इति परिषहाः सन्ति। अत्रविषये श्वेताम्बराणाँ आशाम्बरैः सह विप्रतिपत्तिः परिदृश्यते।

भावानुवादः—राग, तृण, स्पर्श, मैल, सत्कार, पुरस्कार, प्रज्ञा, बोधहानिः (अज्ञान) ये परीषह हैं। इस विषय में कुछ के विषय में श्वेताम्बरों का दिगम्बरों के साथ मतभेद है।

**स्थातुं समत्वे सकलाः प्रवृतीरशुद्धरूपाः विसृजेदजस्रम्।**
**सामायिकं स्वोन्नतिलब्धिहेतोः चारित्रमेतत् ग्रहणाय युक्तम् ॥५६॥**

अन्वयः—समत्वे स्थातुम् अशुद्धरूपाः सकलाः प्रवृतीः अजस्रम् विसृजेत्। एतत् सामायिक चारित्रम् स्वोन्नतिलब्धिहेतोः ग्रहणाय युक्तम् (अस्ति)।

भावानुवादः—समत्व में स्थिरता के लिए अशुद्धरूपो सभी प्रवृत्तियों को निरन्तर त्याग कर दें, और अपनी उन्नति की प्राप्ति के लिए सामायिक आदि चारित्र को ग्रहण करना चाहिये।

**बाह्यात्तथाभ्यन्तरभेदतश्च, तपोद्विभेदं कथितं मुनीन्द्रैः।**
**बिनाशहेतोर्भववासनानामध्यात्मलाभाय विधेयमेतत् ॥५७॥**

अन्वयः—मुनीन्द्रैः बाह्यात् तथा आभ्यन्तरभेदतः च द्विभेदं तपः कथितम्। भववासनानाम् विनाशहेतोः अध्यात्मलाभाय च एतत् (तपः) विधेयम्।

भावानुवादः—मुनीन्द्रों के द्वारा बाहरी तथा भीतरी भेद से तप दो प्रकार के

कहे गये हैं। सांसारिक वासनाओं को दूर करने के लिए अध्यात्मसम्बन्धि लाभ के लिए दोनों प्रकार के तपों को करना चाहिए।

**ऊनोदरी लोभविवर्जनंच, रसादिहानं सुविविक्तदेशः।**
**कायादिकष्टं प्रथमोपवासो, बाह्यं तपस्तच्चरणीयमास्ते ।।५८।।**

अन्वयः—प्रथमोपवासः, ऊनोदरीलोभविवर्जनम्, रसादिहानम्, सुविवितदेशः कायादिकष्टम् इति बाह्यम् तपः आचरणीयम् आस्ते।

भावानुवादः—अनशन, ऊनोदरी, (अवमौदर्य) वृत्तिपरिसंख्यान, रसपरित्याग, विविक्त, शय्यासन, और कायक्लेश ये बाह्य तप है। इनका आचरण करना चाहिए।

**दोषापनोदो विनयश्च सेवा, स्वाध्यायवृत्तिर्ममतानिरासः।**
**ध्यानं च शुक्लं समुपासनीयमाभ्यन्तरं विद्धि तपो विशिष्टम् ।।५९।।**

अन्वयः—दोषापनोदः, विनयः, सेवा, स्वाध्यायवृत्तिः, ममतानिरासः शुक्लं ध्यानम् च इति आभ्यन्तरम् विशिष्टं तपः विद्धि तत् समुपासनीयम् च।

भावानुवादः—दोषों को दूर करना, नम्रता, सेवा, शास्त्रों का निरन्तर अध्ययन ममत्व का त्याग, और शुभ ध्यान इन्हें आभ्यन्तरिकविशिष्ट तप जानना चाहिये। इनका अभ्यास करना चाहिये। इन दोनों बाह्य आभ्यन्तरतपों में सापेक्षिक भेद हैं। किन्तु एक दूसरे के परिपूरक हैं।

**ज्ञानस्य पश्चाद् विहितास्तिशास्त्रे, प्रमाणचर्चा विततामिधाना।**
**पुरागमे संभवतिस्म वक्तुम्, शक्यं तयोस्तद्विषये प्रमाणैः ।।६०।।**

अन्वयः—ज्ञानस्य चर्चा पश्चात् विहिता अस्ति। शास्त्रे पुरागमे विततामिधाना प्रमाणचर्चा अपि सम्भवतिस्म। इति तयोः तद्विषये प्रमाणैः वक्तुम् शक्यम्।

भावानुवादः—पीछे ज्ञान की चर्चा की गई है। प्राचीन आगमग्रन्थों में विस्तार पूर्वक प्रमाण की चर्चा भी की गई थी। ऐसा इस विषय में प्रमाणपूर्वक कहा

जा सकता है। इससे जान पड़ता है कि ज्ञान के समान प्रमाण की चर्चा भी शास्त्र सम्मत है।

**प्रमाणचर्चागमशास्त्रसिद्धा, प्रत्यक्षमाद्यं च ततः परोक्षम्।**
**आद्यं द्विभेदं, स्मृतिप्रत्यभिज्ञे, तर्कानुमानागमरूपमन्यत् ।।६१।।**

अन्वयः—प्रमाणचर्चा आगमशास्त्रसिद्धा (अस्ति)। आद्यं प्रत्यक्षम्। ततः परोक्षम् द्वितीयम्। आद्यम् प्रत्यक्षम् द्विभेदम् तथा अन्यत् परोक्षम् स्मृति प्रतिभिज्ञेतर्कानुमानागमरूपम् (अस्ति)।

भावानुवादः—प्रमाणों की चर्चा आगम तथा शास्त्रों में की गई है। प्रथम प्रमाण प्रत्यक्ष है। द्वितीय परोक्ष है। प्रत्येक के दो भेद हैं:—१. सांव्यवहारिक प्रत्यक्ष तथा २. पारमार्थिक प्रत्यक्ष। परोक्ष के पांच भेद है:—स्मृति, प्रत्यभिज्ञातर्क, अनुमान तथा आगम।

**वैशद्यरूपं प्रथमं निदिष्टम् स्वभासने चैव सदा समर्थ—**
**मस्पष्टमेतन्ननु लिंगजन्यम् तदन्यथा चैव परोक्षमानम् ।।६२।।**

अन्वयः—प्रथमं स्वभासने च एव सदा समर्थम्, वैशद्यरूप निदिष्टम्। तदन्यथा च एतत् परोक्षमान्यम् लिंगजन्यम् ननु अस्पष्टम् एव।

भावानुवादः—प्रत्यक्ष ज्ञान अपने प्रकाश में सदा समर्थ है। वह स्पष्ट रूप माना गया है। उससे भिन्न परोक्ष ज्ञान है, जो लिग से उत्पन्न होता है और अस्पष्ट स्वरूप होता है। प्रत्यक्ष में जैसी विशदता होती है वैसी परोक्ष में नहीं होती है। वैसी परोक्ष में नही होती है। वहां तो धूमादि के कारण ही अविनाभाव सम्बन्ध होने से अग्नि आदि का ज्ञान होता है।

**द्वयंगं परोक्षं विदुषां विबोधे पक्षश्च हेतुश्च परार्थमाने।**
**मन्दस्य बोधायमतानितत्र, चांगानिपंचापि जिनागमेऽपि ।।६३।।**

अन्वयः—विदुषां विबोधे परार्थमाने पक्षः च हेतुः च इति परोक्षम् द्वयंगम् (भवति)। अत्र मन्दस्य बोधाय च जिनागमे अपि पंच अपि अंगानि मतानि।

भावानुवादः—विद्वानों के ज्ञान में जहां परार्थानुमान होता है। वहां परोक्षज्ञान के पक्ष और हेतु ये दो ही अंग होते हैं। किन्तु जिनागम में न्याय के समान ही मन्दमति के बोध के लिए परार्थानुमान में भी पांच अंग माने गये हैं। पक्ष, हेतु, दृष्टान्त, उपनय, तथा निगमन।

साध्येन युक्तोऽभिमतोऽस्तिपक्षः हेतुस्तथोदाहरणोपनीती ।
मान्यत्वरूपे परबोधनार्थम् यथार्थतोऽयं निगमोऽपि वाच्य: ।।६४।।

अन्वय:—मान्यत्वरूपे परबोधनार्थम् साध्येन युक्तः पक्षः, अभिमत: अस्ति। तथा हेतुः उदाहरणोपनीती, अयम् यथार्थत: निगम: अपि वाच्य:।

भावानुवादः - प्रमाण के अंग के रूप में परार्थानुमान में नैयायिकमतानुसार साध्य से युक्तपक्ष तथा हेतु, उदाहरण, उपनय तथा निगमन भी माने गये हैं।

उद्बोधनात्प्राक्तनवासनाया:, "तदेव" बोधः स्मृतिरत्रबोध्या ।
प्रमाणरूपैव मतास्ति सेयम् प्रमाधृतिर्वस्तुयथार्थतैव ।।६५।।

अन्वय:—प्राक्तवासनायाः उद्बोधनात् अत्र "तदेव" (इत्याकारक:) बोधः स्मृतिः बोध्या। सा इयम् प्रमाणरूपा एव मता अस्ति। प्रमाधृतिः वस्तुयथार्थता एव।

भावानुवादः—प्राक्तन संस्कार के उद्बोध होने पर "वह" इस प्रकार का ज्ञान स्मृति है। वह प्रमाणरूप ही मानी गई है। ज्ञान के प्रामाण्य का आधार वस्तु की यर्थाथता है उसकी वर्तमानता नहीं। पदार्थ किसी भी समय उपस्थित क्यों न हो, यदि ज्ञान उसकी वास्तविकता का ग्रहण करता है तो वह प्रमाण है।

स्यात्प्रत्यभिज्ञेति प्रमाणमेव, मिदंतदेवेति च रूपमाप्तम्
जात सदादर्शनतः स्मृतेश्च पृथक्भिदं संकलनात्मकं तत् ।।६६।।

अन्वय:—"इदम् तत् एव इति" रूपम् आप्तम् दर्शनतः स्मृतेश्च जातम् प्रत्यभिज्ञेति एवम् प्रमाणम् एव। पृथक्भिदं तत् संकलनात्मकम् अस्ति।

भावानुवाद:—दर्शन स्मरण से उत्पन्न होने वाला "यह वही है" यह उसके समान है"। "यह उससे विलक्षण है" यह उसका प्रतियोगी है। इत्यादि रूप में रहा हुआ संकलनात्मक ज्ञानप्रत्यभिज्ञान होता है। वह भी प्रमाण माना गया है। जिसमें प्रत्यक्ष तथा स्मृति का संकलन होता है वह ज्ञान प्रत्यभिज्ञान है।

**लिंगस्य सद्भावनतो हि साध्यसद्भावबोधो ननु तर्करूप ।**
**मूहाभिधानोऽनुमितौ निदानम्, व्याप्तिस्वरूपं पृथगेवमानम् ॥६७॥**

अन्वय:—लिगस्य सद्भावनत: हिसाध्यसद्भावबोध: ऊहाभिधान। अनुमितौ निदानम् व्याप्तिस्वरूपम् ननु तर्करूपं पृथक् एव मानम् (अस्ति)।

भावानुवाद:—लिंग के सद्भाव से साम्य के सद्भाव का ज्ञान, ऊहापरनामक, अनुमान में कारण, व्याप्तिरूप तर्क पृथक् प्रमाण भूत होता है। इसके होने पर ही यह होता है। इस प्रकार का ज्ञान तर्क है। इसका दूसरा नाम ऊहा है। निष्कर्ष यह है जो त्रिकालविषयक निर्णय पर पहुंचने में समर्थ हो, वह प्रमाण तर्क है।

**आप्तस्य वाच: परिजायमानम्, अर्थस्य संवेदनमागमोऽस्ति ।**
**प्रमाणभूतो विशदार्थयुक्त:, तथोपचारेण वचस्तथैव ॥६८॥**

अन्वय:—आप्तस्य वाच: परिजायमानम् अर्थस्य सवेदनम् आगम: अस्ति। प्रमाणभूत: विशदार्थयुक्त: (आप्तोभवति) तथा उपचारेण तद्वच: तथा एव प्रमाणभूतम्।

भावानुवाद:—आप्त पुरुष के वचन से आविर्भूत होने वाला, अर्थ संवेदना आगम है। विशदार्थ से युक्त प्रमाणभूत तो आप्त होता है। किन्तु उपचार से (लक्षणा) आप्त के वचनों का संग्रह भी आगम है। पदार्थानुमान के लिए आप्तत्व आवश्यक नहीं; किन्तु आगम के लिए वह आवश्यक होता है।

**यथास्थितं वस्तु च वुध्यते यः तथैव वक्तीति परोपकारी ।**
**रागादिदोषैः रहितो विशिष्टः, सैवाप्तनाऽमानि, जिनागमेषु ॥६९॥**

अन्वय:—जिनागमेषु यथास्थितं च वस्तु यः वुध्यते तथा एव वक्ति। इति परो-

पकारी रागादिदोषैःरहितः विशिष्टः स एव आप्त ना अमानि । (नरः) मतः ।

भावानुवादः—जिनागमों में जो यथास्थिति समग्र को सही रूप में जानता है । उसके अनुरूप ही बोलता है, परोपकारी है । रागादि दोषों से रहित है । सर्व-विशिष्ट है । वही आप्त माना गया है । इसके दो भेद है, एक लौकिक तथा दूसरा लोकोत्तर । साधारण व्यक्ति प्रथमकोटि में आते है । तीर्थकरादि विशिष्ट पुरुष लोकोत्तर आप्त हैं ।

**सर्वं च तत्त्वं परमार्थरूपम्, ब्रवीति वीरो गणपेसमन्ता ।**
**दादायतच्चैव करोति सूत्रम्, स शास्त्रमेतत् प्रथितं पृथिव्याम् ।।७०।।**

अन्वयः—वीरः परमार्थरूपं सर्वं च तत्त्वम् गणपेसमन्तात ब्रवीति । स (गणधरः) तद् च एव आदाय सूत्रं करोति । एतत् शास्त्रम् पृथिव्याम् प्रथितम् ।

भावानुवादः—भगवान् महावीर सम्पूर्णपरमार्थस्वरूप तत्त्वों को गणधरों के लिए अर्थरूप मे कहते है । और गणधर उसी अर्थ को लेकर सूत्रो की रचना करते हैं । उन्ही का रचा हुआ शास्त्र आगम प्रमाणरूप से संसार में प्रसिद्ध हैं ।

**परोक्षभेदाः कथिताः यथार्थाः, निर्दिष्टरूपाः परितोविभान्ति ।**
**आचार्यवर्यैरतिशायियुक्तैः, युगावतारैश्च युगप्रधानै ।।७१।।**

अन्वयः—युगावतारैः युगप्रधानैः अतिशायियुक्तैः आचार्यवर्यैः निर्दिष्टरूपाः कथिताः यथार्थाः परोक्षभेदाः परितः विभान्ति !

भावानुवादः—युगावतार युगप्रधान अतिशययुक्त पूज्य आचार्यवर्य श्रीमद्जवाहराचार्य के द्वारा निर्देश रूप से कहे गये यथार्थपरोक्ष के भेद चारों ओर शोभित हो रहे हैं ।

**प्रज्ञाविशिष्टा परिलक्ष्यतेऽत्र विवेचनेतत्त्वमये सवीजा ।**
**स्वच्छे यथादर्शतलेसुविम्वमाचार्यवर्यस्य गुणाकरस्य ।।७२।।**

अन्वयः—अत्र तत्त्वमये विवेचने स्वच्छे आदर्शतले सुविम्वं यथा गुणाकरस्य विशिष्टा सवीजा प्रज्ञा परिलक्ष्यते ।

भावानुवादः—इस तत्त्व सम्बन्धी विवेचना में निर्मल आदर्श में प्रतिबिम्ब के समान गुणाकर आचार्यवर्य चरितनायक की विशिष्टप्रज्ञा परिलक्षित हो रही है।

### "ज्ञानक्रियासर्गः"

मन्दामतिर्मेक्व विबोधहीना, क्व तादृशाः सन्ति गुणाः गुरूणाम् ।
तथापितत्सत्कृपयैव सद्यो, निबद्धुमेतत् परिपारयामि ।।७३।।

अन्वयः—मम विबोधहीना मन्दामतिः क्व ? गुरूणाम् तादृशाः गुणाः क्व सन्ति ? तथापि तत् सत्कृपया एव एतत् निबद्धुम् सद्यः एव परिपारयामि ।

भावानुवादः—मेरी विबोधहीन मन्दमति कहाँ ? और गुरुवर के विशिष्ट गुण कहाँ ? फिर भी उनकी सम्पूर्ण सत्कृपा से ही इस ग्रन्थरत्न के निर्माण में सफल हो रहा हूं।

### सर्गावसाने "स्रग्धरावृत्तम्"

ये लोके सन्ति शुद्धाः परिमलमतयो, नास्ति संदेहलेशः ।
वन्दन्तेनित्यमेवं गुरुपदकमलम्, भक्तिभावेन भव्याः ।।
सान्द्रार्द्राः सर्वभूते मृदुतममनसा, प्राणिनां तर्पणाय ।
विद्यन्ते सावधानाः धृतिघनमहिताः, सन्तुते लाभभाजः ।।७४।।

अन्वयः—ये लोके परिमलमतयः शुद्धाः सन्ति । (येषाम्) सन्देहलेशः न अस्ति । ये भव्याः भक्तिभावेन गुरुपदकमलम् नित्यम् एवम् वन्दन्ते । ये मृदुतममनसा सर्वभूते सान्द्रार्द्राः (सन्ति) । प्राणिनांतर्पणाय धृतिघनमहिताः सावधानाः विद्यन्ते ते (अनेन) (ग्रन्थेन) लाभभाजः सन्तु !

भावानुवादः—जो लोक में शुद्धनिर्मलमति वाले हैं, जिन्हें सन्देह नाममात्र का भी नहीं है। जो भव्यभक्ति भाव से गुरुपदकमल की नित्य वन्दना करते हैं। जो कोमल मन से सभी जीवों के लिए सघन कोमल हैं, प्राणियों को तृप्त करने के लिए धैर्य तथा धन से पूजित हैं; वे इस ग्रन्थरत्न से लाभयुक्त हों।

श्रीमज्जवाहरयशोविजयाभिधाने,
नानेशसच्चरणयोः शरणावधाने ।
श्री चन्द्रमौलिकविनिर्मितसत्प्रबन्धे,
पूर्णःत्रिरत्नमयपचदशोपिसर्गः ॥७५॥

इति पंचदशसर्गः समाप्तः ।

## "कर्मसिद्धान्त षोडश सर्गः प्रारभ्यते"

**व्याख्यायते येन सदात्मरूपम्, योवर्तते कुञ्चिकया समानः ।**
**उद्घाटनार्थं जिनदर्शनस्य, कर्मप्रवादोऽपि विविच्यतेऽसौ ॥१॥**

अन्वयः—येन सदा आत्मरूपम् व्याख्यायते । यः जिनदर्शनस्य उद्घाटनार्थंकुञ्चिकया समानः वर्तते । असौ कर्मप्रवादः अपि विविच्यते !

भावानुवादः—जिसके द्वारा बद्धआत्मस्वरूप की व्याख्या की जाती है, जो जिनदर्शन के तत्त्वों को प्रकट करने के लिए कुञ्चिका के समान है, उसी कर्म विद्धान्त की विवेचना प्रस्तुत की जा रही है ।

**आत्मा स्वतन्त्रः सुखदुःखकर्ता, भोक्ता स्वयं कर्मफलस्य नित्यम् ।**
**शुद्धोपि कायेन समन्वितश्च भ्राम्यत्यहो संततकर्मजालैः ॥२॥**

अन्वयः—स्वतन्त्रः सुखदुःखकर्ता, कर्मफलस्य स्वय नित्यं भोक्ता, च आत्मा (अस्ति) । स शुद्धः अपि कायेन समन्वितः अहो ! संततकर्मजालैः भ्राम्यति !

भावानुवादः—आत्मा स्वतन्त्र, सुखदुःख का कर्ता अपने किये हुए कर्मों का स्वयं भोक्ता है । निश्चय नय की अपेक्षा से वह स्वयं शुद्ध होने पर भी शरीर से युक्त होने पर आश्चर्य है कि कर्मजालों से वद्ध होकर चतुर्विध गतियों में तब तक भ्रमण करता रहता है । जब तक मोक्ष प्राप्त नहीं हो जाता है ।

**सोऽयं परं शक्तिसमन्वितोऽपि, संसारिरूपो दयनीयतावान् ।**
**स्वकर्मणावद्धतमोऽतिहीनः कष्टानुभावी भवसिन्धुमग्नः ॥३॥**

अन्वयः—सः अयम् (आत्मा) परं शक्तिसमन्वितः अपि संसारिरूपः दयनीयतावान् स्वकर्मणावद्धतमः अतिदीनः कष्टानुभावी भवसिन्धुमग्नः (जायते) !

भावानुवादः—वह आत्मा अत्यन्त शक्तिशाली होने पर भी संसारी रूप में दयनीय होकर स्वकृत कर्मों से परिबद्ध अत्यन्त दीन हीन कष्टों का अनुभव करता

हुआ, संसार रूप सागर में निमग्न होता है। भ्रमण करता रहता है।

**पतन्वहन् मृत्युजराप्रवाहे, ज्योतिःस्वरूपः सुखदुःखचक्रे ।**
**चैतन्ययुक्तोऽचितिमाप दीनो, माहात्म्यमेतत्कृतकर्मणश्च ॥४॥**

अन्वयः—(स) ज्योतिस्स्वरूपः सुख–दुःखचक्रे पतन्, मृत्युजराप्रवाहे वहन्, चैतन्य-युक्तोपि दीनः अचितिम् आप। एतत् च कृतकर्मणः माहात्म्यम् (अस्ति)।

भावानुवादः—वह आत्मा परमज्योतिःस्वरूप होता हुआ, सुखदुःख के चक्र में पड़ा हुआ, मृत्युजरारूपीसरित्प्रवाह में बहता हुआ चैतन्यसम्पन्न होकर भी दीन भाव से अज्ञानभाव को प्राप्त हो जाता है। यह सब किये हुए कर्म की ही महिमा है।

**कर्मप्रभावेण विभावितस्य, जीवस्य सर्वस्य निराश्रितस्य ।**
**कठोरकान्तारपथे प्रयाणम्, संसारसिन्धौ विनिमज्जनं स्तः ॥५॥**

अन्वयः—कर्मप्रभावेण विभावितस्य निराश्रयस्य सर्वस्य जीवस्य कठोरकान्तार-पथे प्रयाणम् संसारसिन्धौ विनिमज्जनं च स्तः।

भावानुवादः—प्रबलतम कर्म के प्रभाव से प्रभावित सभी जीवों को घोर भयानक जगल मे निराश्रित भटकना पड़ता है। तथा संसार सागर में गोते लगाना होता है। सरल कठिन सामान्य मगल अमंगल सभी कार्य कर्म से ही सम्पादित होते है और कर्मक्षय से परम शुद्ध मगल एवं परमशुद्ध स्वरूप प्राप्त होता है।

**समस्तविश्वस्य विचित्रतायाः, समग्ररूपे सुखदुःखयोश्च ।**
**जीवो निदान ननु मूलतोऽस्ति, सहायकं मुख्यतमं च कर्म ॥६॥**

अन्वयः—जीव एव समस्तविश्वस्य विचित्रतायाः सुखदुःखयोः च समग्ररूपे ननु मूलतः निदानम् अस्ति। तत्र कर्म च मुख्यतमं सहायकम् (भवति)।

भावानुवादः—जीव ही समस्तविश्व की विचित्रता में तथा सुखदुःख के सम्पूर्ण-रूप मे नियत एव मूलतः कारण होता है। कर्म उसमें मुख्यतम सहायक होता है।

**रागादिदोषैश्च समन्वितेन, महाबलाढ्यं कृतमात्मनातत् ।**
**कर्त्तारमेवं नयतीति बन्धे, कर्माभिधं पौद्गलिकं सशक्तम् ॥७॥**

अन्वयः—रागादिदोषैः च समन्वितेन (नरेण) आत्मना यत् कृतम् तत् महाबलाढ्यम् सशक्तम् पौद्गलिक कर्माभिधम् कर्त्तारम् एव बन्धे नयति इति ।

भावानुवादः—रागादिदोषों से युक्तमानव के द्वारा जो कुछ किया जाता है। वह कर्म है वह कर्म महाबलशाली, शक्तिसम्पन्न, पौद्गलिक होते हुए भी आत्मा को बन्धन में डाल देता है ।

**जीवेन साकं च विजातितत्त्वाऽजीवस्य सम्बन्धनतो विकारः ।**
**संजायते तत्र च कार्यरूपो, निर्दिश्यते दर्शनभूमिकर्म ॥८॥**

अन्वयः—जीवेन साकम् च विजातितत्त्वाजीवस्य सम्बन्धनतः तत्र च कार्यरूपो विकारः संजायते । अतः दर्शनभूमिकर्म निर्दिश्यते ।

भावानुवादः—जीव के साथ उससे विजातीय अजीवतत्त्व रागादि के सम्बन्ध से उसमें कार्यरूप विकार उत्पन्न होता है। इसलिए संसार में प्रत्यक्ष दिखाई देने वाले कर्मों का यहाँ निर्देश किया जा रहा है ।

**प्राप्तव्यमेतत् सुखदु.ख जातम्, कर्मातिरिक्तं नहिकिंचिदस्ति ।**
**मूलं निदानं जनिमृत्युराशेः, तदेव जागर्ति चिराज्जगत्याम् ॥९॥**

अन्वयः—सुखदुःखजातम् एतत् प्राप्तव्यम् कर्मातिरिक्तम् किंचित् नहि अस्ति । जागत्याम् जनिमृत्युराशेः मूल निदानं तद् (कर्म) एव चिरात् जागर्ति !

भावानुवादः—सुखदुःखादि जो कुछ भी संसार में पाने योग्य है। उसका कारण कर्म के अतिरिक्त अन्य कुछ भी नही है। वह सब कर्म से ही प्राप्त होता है। संसार में चिरकाल से जन्म मरण राशि का मूल कारण कर्म ही है ।

*प्रयाति जीवः स्वशुभाशुभैश्चा कर्तव्यजातैः परलोकमार्गं ।*
*यथाकृतंतत्फलमश्नुवानो, यदुप्यते तन्नु कर्त्यते च ॥१०॥*

अन्वयः—जीवः (स्वेन) यथाकृतम् तत्फलम् अश्नुवानः स्वशुभाशुभैः च कर्तव्यजातैः परलोकमार्गं प्रयाति । यत् उप्यते ननु तत् च कर्त्यते !

भावानुवादः—जीव स्वयं जैसा कर्म करता है प्रायः वैसा ही फल पाता हुआ है। वह अपने स्वयंकृत शुभअशुभ कर्तव्यों से परलोक मार्ग में गतिशील होता है। इससे सिद्ध होता है, कि जो जैसा बोता है, वैसा ही काटता है।

**प्रत्येकजीवस्य च कर्म भिन्नम्, स्वेनैव सम्बद्धमिदं विभाति ।**
**अनादिकालाच्च विवर्तितसत्, क्रियाविशेषैः क्षयमेतिनूनम् ॥११॥**

अन्वयः—प्रत्येकजीवस्य च कर्म भिन्नम् (भवति) इदम् अनादिकालात् च विवर्तितम् सत् स्वेन एव सम्बद्धम् विभाति । तत् नूनम् क्रियाविशेषैः क्षयम् एति !

भावानुवादः—प्रत्येक जीव का कर्म भिन्न-भिन्न होता है। वह अनादिकाल से प्रवर्तित होता हुआ अपने से ही सम्बद्ध शोभित होता है। और नियतरूप से निश्चय तपादिप्रशस्त क्रियाविशेषों से क्षय को प्राप्त होता है।

**क्रियाफलं लभ्यत एव किंचित्, न जायते कापि च निष्फलासा ।**
**निर्दिष्ट आस्ते ननु जैनशास्त्रे, प्रस्तारतः कर्म फलस्य भावः ॥१२॥**

अन्वयः—क्रियाफलम् किंचित् लभ्यत एव । सा कापि निष्फला न जायते । जैनशास्त्रे ननु प्रस्तारतः कर्मफलस्य भावः निर्दिष्टः आस्ते ।

भावानुवादः—क्रिया का कुछ न कुछ फल अवश्य प्राप्त होता ही है। कोई भी निष्फल नही होती है। जैनागमों में कर्मफल एवं कर्मसिद्धान्त का विस्तृत-विवेचन उपलब्ध होता है।

**क्रियाफलं नैव च वर्तमाने, सम्प्राप्यतेऽनागतजन्मलभ्यम् ।**
**आत्मा च भोगं लभते नवीनम्, बध्नाति कर्मापि भवेप्रसंगात् ॥१३॥**

अन्वयः—(यदि) क्रियाफलं वर्तमाने न च एव (तदा) अनागत जन्मलभ्यम् सम्प्राप्यते भवप्रसंगात् आत्मा च भोगं लभते । नवीनम् कर्म अपि बध्नाति !

भावानुवादः—किसी भी प्राणी को यदि किसी क्रिया का फल वर्तमानजीवन में प्राप्त नहीं होता, तो उसके लिए भविष्यकालीनजीवन अनिवार्य होता है। उस समय उसे कर्मों का फल मिलता है। कर्म का कर्ता एवं भोक्ता स्वतन्त्र-आत्मतत्त्व निरन्तर एक भव से अन्यभव मे गमन करता रहता है। भव के माध्यम से ही पूर्वकृतकर्मों का भोग तथा नवीन कर्मों का बन्ध करता है।

**जन्मादिशक्तेरखिलोविभेदो, वैषम्यसृष्टिः सुखदुःखभावः।**
**यल्लोक्यते लोकसमग्रपीठे, तत्कर्मजन्यं च विबोधनीयम् ॥१४॥**

अन्वयः—लोकसमग्रपीठे जन्मादिशक्तेः अखिलः विभेदः वैषम्यसृष्टिः सुखदुःख-भावः यत् लोक्यते तत् सर्वम् कर्मजन्यम् च विबोधनीयम्!

भावानुवादः—इस सम्पूर्ण लोक में जन्मादिशक्ति का सम्पूर्ण भेद सांसारिक समस्त विषमताएं सुखदुःखादि भाव, जो कुछ भी दिखाई देते है। वह सब कर्म से ही उत्पन्न होते है। यह समझने का विषय है।

**स्वेच्छानुसारं करणे समर्थो, जीवो विभिन्ते कृतकर्मजालम्।**
**नो सर्वथाकर्म वशेसमास्ते, स्वतन्त्रतावाद समाश्रितोऽस्ति ॥१५।**

अन्वयः—जीवः स्वेच्छानुसारं करणे समर्थः कृतकर्मजालम् विभिन्ते। (स) सर्वथा-कर्मवशे नो समास्ते। स स्वतन्त्रतावादसमाश्रितः अस्ति!

भावानुवादः—जीव अपनी इच्छा की स्वतन्त्रता से कार्य करने में समर्थ होता हुआ अपने द्वारा कृतकर्मों के जाल का भेदन करता है। वह कर्म करने में सर्वथा परतन्त्र नही है, अपितु किसी सीमा तक स्वतन्त्र भी है।

**कालस्वभावौ नियतिर्यदृच्छा, भूतेश्वरौ तौ ननुदैवमेवम्।**
**प्रयत्नजातं सकलं मिलित्वा, कार्यस्य निष्पत्तिकृतौ निदानम् ॥१६॥**

अन्वयः—कालस्वभावौ नियतिः यदृच्छा तौ भूतेश्वरौ ननु एवम् दैवम् सकल प्रयत्नजातम् च मिलित्वा कार्यस्य निष्पत्तिकृतौ निदानम् (मन्तव्यम्)।

भावानुवादः—जैनसिद्धान्त कर्म को प्राणियों की विचित्रता का प्रधान कारण

मानता है, तथापि काल स्वभाव, नियति, यदृच्छा भूत, ईश्वर, भाग्य (दैव) प्रयत्न आदि को अपनी दृष्टि में समन्वित कर लेता है।

**सुखादिजातं च सकारणं तत्, कार्यत्वहेतोरनुमानरीत्या ।**
**पूर्वोक्तकार्यस्य च कारणं यत्, तदेव कर्मेतिसमर्थनीयम् ।।१७।।**

अन्वयः—तत् सुखादिजातम् कार्य च सकारणम् कार्यत्वहेतोः इति अनुमानरीत्या पूर्वोक्तकार्यस्य च यत् कारणम् तत् एव कर्मेति समर्थनीयम् ।

भावानुवादः—सुखदुःखादि सकारण है, कार्य होने से इस अनुमान की रीति से कार्यत्व को साधन मानकर कार्य का जो कारण है वह कर्म ही है। जैसे अंकुर रूप कार्य का कारण बीज होता है। सुखादि कार्य का जो कारण है वही कर्म है। दृष्ट कारण सदोष होने से अदृष्ट कर्म को कारण मानना अनिवार्य है।

**आद्यं च बालस्य शरीरमेतत्, सदैव देहान्तरहेतुकं हि ।**
**सर्वेन्द्रियैर्युक्ततमत्वहेतोः यथा जिहीते युवदेहरूपम् ।।१८।।**

अन्वयः—बालस्य एतत् च आद्यम् शरीरम् सदा एव देहान्तरहेतुकम् हि सर्वेन्द्रियैः युक्ततमत्वहेतोः यथा बालशरीरम् युवदेहरूपम् जिहीते ।

भावानुवादः—(कर्मसाधक द्वितीयहेतु इस प्रकार से है।) आद्य—बाल शरीर देहान्तरपूर्वक है:—क्योंकि वह इन्द्रियादि से युक्त है। जैसे युवदेह बालदेह-पूर्वक होता है। आद्य बालशरीर जिस देहपूर्वक है। वहीं कर्म (कार्मण-शरीर) है।

**दानादिरूपा कृतिरत्र युक्ता, फलादिभिः चेतनसंकृतत्वात् ।**
**यथा कृषिः कर्मस्वरूपसिद्धौ, विबोधनीयं त्रितयानुमानम् ।१९।।**

अन्वयः—अत्र दानादिरूपा कृतिः फलादिभिः युक्ता चेतनसंकृतत्वात् । यथा कृषिः इति । कर्मस्वरूपसिद्धौ त्रितयानुमानम् विबोधनीयम् !

भावानुवादः—कर्म का अस्तित्व सिद्ध करने वाला तीसरा हेतु इस प्रकार से है:—दानादिरूप क्रिया का कोई फल अवश्य होना चाहिये, क्योंकि वह सचेतन

व्यक्तिकृत क्रिया है। जैसे कृषि। दानादिरूपक्रिया का जो फल है वहीं कर्म है।

कायादिकार्यस्य चमूर्तिमत्वात्, तत्कारणं कर्म च मूर्तमेव।
यथाघटादेर्नियतं निदानम्, मूर्ताः मतास्ते परमाणवोऽपि ॥२०॥

अन्वयः—कायादिकार्यस्य च मूर्तिमत्वात् तत् कारणं कर्म च मूर्तम् एव। यथा घटादे नियतं निदानम् ते परमाणवः अपि मूर्ताः मताः (सन्ति)।

भावानुवादः—शरीरआदि के मूर्त होने से तन्निमित्तभूत कर्म भी मूर्त ही है। जैसे परमाणुओं का घटादि कार्य मूर्त होने के कारण परमाणु भी मूर्त है। इस तर्क से जैनदर्शन में कर्म को मूर्त माना गया है।

मूर्तमत कर्म यतो हितेन, सम्बन्धने शान्तिसुखानुभूतिः।
यथाशन चान्वयवृत्तिरेषा, यथानभस्तद्व्यतिरेकवृत्या ॥२१॥

अन्वयः—यतः हि तेन सम्बन्धने शान्तिसुखानुभूतेः कर्मभूर्त मतम्। यथा अशनम्। एषा अन्वयवृत्तिः (अस्ति)। तद्व्यतिरेकवृत्या यथा आकाशम्।

भावानुवादः—कर्म मूर्त है, क्योंकि उनसे रूपी सांसारिक आत्मा का सम्बन्ध होने पर सुखशान्ति आदि का अनुभव होता है। जैसे भोजन मूर्त होता है। उससे सम्बन्ध होने पर सुखादि का अनुभव होता है। यह अन्वयवृत्ति है। जो अमूर्त होता है। उससे सम्बन्ध होने पर सुखादि का अनुभव नहीं होता है। जैसे आकाश। यह व्यतिरेकवत्ति है।

मूर्तं मतं कर्म युतौ च तस्य, कष्टानुभूतेरनलो यथात्र।
तथैव बाह्यैरखिलैः पदार्थैः, पराक्रमाधानयुतेर्घटोवा ॥२२॥

अन्वयः—तस्य च (आत्मनः) कर्म युतौ कष्टानुभूतेः कर्म मूर्तम् मतम्। यथा अत्र अनलः। वा तथा एव अखिलैः बाह्यैः पदार्थैः पराक्रमाधानयुतेः (कर्म-मूर्तम्) घट।

भावानुवादः—कर्म मूर्त है; क्योंकि उसके सम्बन्ध से वेदना का अनुभव होता है। जैसे अग्नि। जो अमूर्त होता है। उसके सम्बन्ध से वेदना का अनुभव नही होता है। जैसे आकाश वैसे ही अन्य हेतु भी इस विषय मे दिया जा

सकता है ।

**अपेक्षयात्मापि च मूर्तरूपः, तेनापिमूर्तात्मककर्मयोगः ।**
**करोति तस्मात् ननु कर्म तस्यो पघातनं चोपकृतिं तथैव ।।२३।।**

अन्वयः—अपेक्षया आत्मा अपि च मूर्तरूपः (अस्ति) । तेन अपि मूर्तात्मककर्म-योगः (भवति) । तस्मात् कर्म तथा एव । तस्य उपघातनम् उपकृति च ननु करोति ।

भावानुवादः—अमूर्त ज्ञान का मूर्तमदिराविषादि के द्वारा उपघात होता है । वैसा ही अमूर्त आत्मा का मूर्त कर्म के द्वारा उपघात समझना चाहिये । क्योंकि ससारी आत्मा एकान्ततः अमूर्त नही है । जीव और कर्म का अनादि सम्बन्ध होने से कथंचित् मूर्त आत्मा का मूर्त कर्म से सम्बन्ध होने पर कर्म आत्मा का उपघात तथा उपकार करता है । अर्थात् उससे हानि तथा लाभ होता है ।

**जीवस्य कर्मप्रतिबद्धताचाऽ, नादिर्मता सा च तथैव कार्यैः ।**
**परस्परं कार्यनिदानभावो, यथा च बीजांकुरजन्मभावे ।।२४।।**

अन्वयः—यथा जीवस्य च कर्मप्रतिबद्धता अनादिः मता । तथा एव सा कार्यैः (शरीरैः) अपि मता । यथा बीजाँकुर जन्मभावे कार्यनिदानभावः तथा एव तत्रापि समान्यः ।

भावानुवादः—जिस प्रकार आत्मा तथा कर्म का सम्बन्ध अनादि है । उसी प्रकार शरीर और कर्म का सम्बन्ध भी अनादि है । शरीर और कर्म मे परस्पर कार्य कारण भाव है । जैसे बीज से अंकुर तथा अंकुर से बीज की उत्पत्ति होती है । वैसे ही शरीर से कर्म तथा कर्म से शरीर का उद्‌भव होता है । इससे बीजांकुर के समान शरीर और कर्मपरम्परा अनादिकालीन प्रमाणित होती है । इस प्रकार कर्म, आत्मा और शरीर का सम्बन्ध अनादि है ।

**जिनागमे कर्म विलोक्यते च, निर्दिश्यमानं भवमूलरूपे ।**
**स्थानांगयाचारकृतो च वाख्या प्रज्ञप्तिप्रज्ञापनयोर्विशेषः ।।२५।।**

अन्वयः—जिनागमे भवमूलरूपे निर्दिश्यभामं च कर्म विलोक्यते । स्थानांगे आचारकृतौ, व्याख्या प्रज्ञप्तिप्रज्ञापनयोः, विशेषः (अस्ति) ।

भावानुवादः—सामान्य रूप से सभी जिनागमों में ससार के निदान के रूप में कर्मविषयक चिन्तन उपलब्ध होता है; किन्तु स्थानांग, आचारांग, समवायाग, भगवती, प्रज्ञापना तथा उत्तराध्ययन मे कर्म पर विशेष रूप से प्रकाश डाला गया है ।

**जिनागमेरक्षितमेवमास्ते, मूलस्वरूपं कृतिकर्मवादे ।**
**तदुत्तरे कर्मनिदेशशास्त्रे, तस्यैव जातो विविधो विकासः ।।२६।।**

अन्वयः—जिनागमे कृतिकर्मवादेमूलस्वरूपम् एवम् रक्षितम् (आस्ते) तदुत्तरे कर्म निदेशशास्त्रे तस्य एव विविधविकासः जातः (अस्ति) !

भावानुवादः—जिनागमों में कृतिस्वरूप कर्मवाद का स्वरूप पूर्ण सुरक्षित है । तथा उसके उत्तरवर्ती कर्मसाहित्य में कर्म का विविध रूप में विकास सम्पन्न हुआ है ।

**आख्यातमेतत् कृतकर्मरूपम्; पौद्गलयजन्यं परमाणुपिण्डम् ।**
**सम्बध्यते कर्म यदैव जीवैः, मनोवचः कायकृता प्रवृत्तिः ।।२७।।**

अन्वयः—पौद्गलयजन्यं परमाणुपिण्डम् एतत् कर्मरूपम् आख्यातम् । यदा एव कर्म जीवैः सम्बध्यते । तदा एव मनोवचःकायकृता प्रवृत्तिः (जायते) ।

भावानुवादः—अनन्तानन्तपुद्गल परमाणुओं के समूह को जैनागमों में कर्म कहा गया है । जब मन वचन काय की प्रवृत्ति होती है । तब जीव के साथ उन कर्म परमाणुओं का सम्बन्ध होता है । इस प्रकार कर्म से प्रवृत्ति तथा प्रवृत्ति से कर्म की परम्परा अनादि काल से चली आ रही है । पुद्गल परमाणुओं के पिण्ड रूप कर्म को द्रव्यकर्म तथा रागद्वेषादि रूप प्रवृत्तियों को भावकर्म कहा गया ह । यह कार्य कारण भाव अनादि है ।

**इत्थं प्रवृत्तिः कृतकर्मणा च तया प्रवृत्यापिच कर्मवृत्तिः ।**
**अनादिकालात्परिवर्धमाना, प्रवर्तते कर्मपरम्परेयम् ।।२८।।**

अन्वयः—इत्थं कृतकर्मणा च प्रवृत्तिः तथा प्रवृत्या च कर्मवृत्तिः (भवति) इयम् कर्म परम्परा अनादिकालात् परिबर्धमाना प्रवर्तते !

भावानुवादः—इस प्रकार किये गये वचनों से भी मन वचन काय की प्रवृत्ति होती है और इस प्रवृत्ति से भी कर्म की वृत्ति होती है। इस प्रकार यह कर्म की परम्परा परिवर्धित होती हुई अनादिकाल से चली आ रही है।

**पौद्गलयरूपाः परमाणवस्ते संख्यातिमाप्ता ननु कर्मद्रव्यम् ।**
**द्वेषादिरूपा सकला प्रवृत्तिः वदन्ति विज्ञाः ध्रुवभावकर्म ॥२९॥**

अन्वयः—विज्ञाः पौद्गलयरूपाः तेपरमाणवः सख्यानिम् आप्ताः। ननु कर्म द्रव्यम् (तथा) द्वेषादि रूपा सकला प्रवृत्ति ध्रुवम् भावकर्म इति वदन्ति ।

भावानुवादः—महान् प्रज्ञानिधि शास्त्रकर्ता ऐसा कहते है कि बाहर प्रसिद्धि को प्राप्त पुद्गल परमाणुओं का समूह द्रव्य है। तथा द्वेषादि सकल प्रवत्तियां नियत रूप से भावकर्म हैं।

**जडैश्च साकं चितिचेतनस्य, सम्मिश्रणात्कर्मजनिर्जगत्याम् ।**
**जडाश्च शिष्टाः बहुपुद्गलास्ते, जीवस्सदाचेतनताविशिष्टः ॥३०॥**

अन्वयः—जगत्याम् कर्मजनिः जडैः च साकम् चितिचेतनस्य सम्मिश्रणात् (जायते) तेवहुपुद्गलाः जडाः च शिष्टाः। सदा चेतनताविशिष्टः जीवः च शिष्टः।

भावानुवादः—संसार में कर्म का जन्म जड के चेतन के साथ मिलने पर ही होता है। पुद्गल तथा आत्मा के सम्मिश्रण से ही कर्म का निर्माण होता है। वे पुद्गल तो जड़ कहे गये हैं। तथा सदा सर्वथा चेतना से विशिष्ट को जीव कहा गया है।

**कर्तृत्वभोक्तृत्वविशिष्टयोगः स्यात्कर्मणो बद्धनतात्मना च ।**
**विशुद्धचैतन्यसमन्वितेन मुक्तात्मना नो च तथैव योगः ॥३१॥**

अन्वयः—कर्मणः कर्तृत्व भोक्तृत्व विशिष्ट योगः बद्धनतात्मना च स्यात्। विशुद्ध चैतन्य समन्वितेन मुक्तात्मना च तथा एव योगः नो (भवति) !

भावानुवादः - कर्म का कर्तृत्व भोक्तृत्वविशिष्ट रूप सम्बन्ध बद्ध एवं नत आत्मा के साथ होता है वह सम्बन्ध विशुद्ध चैतन्य समन्वित मुक्त आत्मा के साथ नही होता है। बद्ध आत्मा की प्रवृत्ति के कारण जो पुद्गल परमाणु आकृष्ट होकर उसके साथ मिल जाते है। अर्थात् नीर क्षीरवत् एक हो जाते है। वे ही कर्म कहलाते है। कर्म भी जड चेतन का मिश्रण ही होता है।

**आत्मा यदामुच्यत एवकर्म पाशात्तदामुक्तिपदं प्रयाति।**
**तथैव कर्मापि पृथक् ततश्च, पौद्गलयरूपं परिशुद्धमेति ॥३२॥**

अन्वयः - आत्मा यदा कर्मपाशात् मुच्यते तदा मुक्तिपद प्रयाति। तथा एव कर्म अपि ततः च पृथक् (सत्) परिशुद्धम् पौद्गलयरूपम् एति!

भावानुवादः—आत्मा जब कर्मबन्धन से सर्वथा मुक्त हो जाता है। तब वह संसारी आत्मा न रहकर मुक्त आत्मा अर्थात् शुद्धचैतन्य बन जाता है। इसी प्रकार कर्म जब आत्मा से अलग हो जाता है। तब वह कर्म न रहकर शुद्ध पुद्गल बन जाता है। आत्मा से सम्बद्ध पुद्गल द्रव्य कर्म है। तथा द्रव्य कर्म युक्त आत्मा की रागद्वेषात्मकप्रवृत्ति भावकर्म है।

**जीवो यदा सक्रियरूपमेति, पराणुरूपा ननु पुद्गलास्ते।**
**तत्राऽऽसमाकर्षयुताः विलीनाः, तादात्म्यरूपं परियन्ति नित्यम् ॥३३॥**

अन्वयः—जीवः यदा सक्रियरूपम् एति। परमाणु रूपाः तेपुद्गलाः ननु। आसमाकर्ष रूपा. तत्र विलीनाः (सन्तः) तदा नित्य तादात्म्यरूपं परियन्ति!

भावानुवादः—जीव जब जड़ पदार्थों की ओर सक्रिय होता है। तभी पुद्गल परमाणु उसकी ओर आकृष्ट हो, उसी में विलीन हो जाते है। और उसी समय आत्मा के साथ संयुक्त हो जाते है।

सत्येवकाले च फल प्रदाय, ततः पुनस्ते विलगाः भवन्ति।
सर्वक्रियायां जगदुद्भवायामात्मान एवोत्तरदायिरूपाः ॥३४॥

अन्वयः—काले च सति एव फलम् प्रदाय तत. पुनः ते विलगाः भवन्ति। जगदुद्भवायाम् सर्वक्रियायाम् आत्मान एव उत्तरदायिरूपाः (सन्ति)।

भावानुवाद:—समय आने पर पुद्गल परमाणु अपना फल प्रदान कर आत्मा से पुनः अलग हो जाते हैं। संसार की इन सभी क्रियाओं से जीव ही पूर्ण रूप से उत्तरदायी होते हैं। निष्कर्ष यहहै कि जीव को क्रिया के कारण ही पुद्गल परमाणु उसकी ओर आकृष्ट होते है। उससे सम्बद्ध होते है, तथा उसे यथोचित फल प्रदान करते हैं। यह प्रक्रिया न तो अकेले जीव से सम्भव है, और न अकेले पुद्गल से।

**शरीरमात्मा च मनः ससीमम्, व्यक्तेस्तदा कर्म चतत्र भूत्वा।**
**कृत्यं विधत्ते निखिलं स्वकीयम् तदन्यथा व्यापकमेव भूयात् ॥३५॥**

अन्वय:—व्यक्तेः शरीरम्, आत्मा, मनः च ससीमम् (भवति) तदा कर्म च तत्र भूत्वा सीमायामेव स्वकीयम् निखिल कृत्यं विधत्ते। अन्यथा तत (कर्म) व्यापकमेव भूयात् !

भावानुवाद:—व्यक्ति के शरीर, आत्मा और मन सोमित होते है। तब कर्म भी उसी सीमा मे रहकर अपना सारा काम करता है। यदि कर्म को यह सीमा न मानी जाय, तो वह आकाशादि को तरह सर्वव्यापक हो जायेगा।

**ससारि जीवश्च सदैवमास्ते, केनापिदेहेन च बद्धरूपः।**
**तथा च तेनैवसितं च कर्म, तद्देहसीमापरिसीमितं तत् ॥३६॥**

अन्वय:—ससारिजीवः च सदा एवम् केन अपि देहेन च बद्धरूपः (भवति) तथा च तेन एव सितम् च तत् कर्म तद्देहसीमापरिसीमित च (तिष्ठति) !

भावानुवाद:—इसी प्रकार संसारी आत्मा अथवा जीव सदैव किसी न किसी प्रकार के शरीर से परिबद्ध रहता है। उस आत्मा से सम्बद्ध कर्म पिण्ड भी उसी शरीर की सीमा मे सीमित रहता है। कर्म के जिन आठ प्रमुख प्रकारों का उल्लेख किया गया है; उनमें कोई भी प्रकार ऐसा नहो है, जिसका सम्बन्ध आत्मा और शरीर से भिन्न किसी अन्य पदार्थ से हो।

**जीवस्य सर्वाः कृतकर्मजन्याः, दशाः भवन्तीह जनि नमेत।**
**पितुश्च पुण्योदयतो न पुत्रो, न चापि पापोदयहेतुमृत्युः ॥३७॥**

अन्वय।—इह जीवस्य सर्वाः दशाः कृतकर्मजन्याः भवन्ति । (तस्मादेव) जीवः जनि लभते । पितुः पुण्योदयतः न पुत्रः (भवति) तस्य पापोदयहेतुमृत्यु। अपि न च (भवति) ।

भावानुवाद:—इस संसार में जीव की सभी विचित्र दशाएं उसके द्वारा किये कर्मो के कारण होती है । उसी से उसका जन्म भी होता है । पिता के पुण्योदय से पुत्र की उत्पत्ति तथा पिता के पापोदय से पुत्र की मृत्यु नही होती है । पुत्र की उत्पत्ति तथा मृत्यु का कारण पुत्र का कर्मोदय है ।

**समस्तकर्माभिविनाशनेन, संजायते जन्म पुनर्न तस्य ।**
**न विद्यते बन्धनमत्र कर्म, निर्वाणसिद्धेः परमंपदंतत् ॥३८॥**

अन्वय:—तस्य (जीवस्य) समस्तकर्माभिविनाशनेन जन्म पुनर्न संजायते । अत्र कर्मबन्धनम् न विद्यते । तत् निर्वाणसिद्धेः परमम् पदम् (अस्ति) ।

भावानुवाद:—जीव के समस्त कर्मो के विनष्ट हो जाने पर उसका पुनः जन्म नहीं होता है । क्योंकि उसको पुनः कर्मोपार्जन नही होता है । आत्मा की इसी दशा को मुक्ति मोक्ष, निर्वाण अथवा सिद्धि कहते है ।

**योगैः कषायैर्ननु कर्मबन्धः, शरीरवाणी मनसां प्रवृत्तौ ।**
**कषाय भेदौ रतरागवैरे, जिनागमे विस्तरतो विचारः ॥३९॥**

अन्वय:—शरीरवाणीमनसां वृत्तौ योगैः कषायैः (च) ननु कर्मबन्धः (भवति) । कषाय भेदौ रतरागवैरे (भवत ) । एतत् विषये जिनागमे विस्तरतः विचारः कृतः वर्तते !

भावानुवाद:—शरीर वाणी मन की प्रवृत्ति रूप योगों से तथा कषायों से सामान्यतया कर्मोपार्जन या कर्मबन्ध होता है । कषाय के दो प्रधान विभेद होते हैं । राग तथा द्वेष । इस विषय में जैनागमों मे विस्तारपूर्वक विचार किया गया है ।

**सर्वत्र सन्त्येव च कर्मयोग्याः, विशेषतः पौद्गलिकाणवस्ते ।**
**प्राणी प्रवृत्ति कुरुते यदैव, संजायते कर्षणमेव तेषाम् ॥४०॥**

अन्वयः—विशेषतः कर्मयोग्याः ते पौद्गलिकाणव. च सर्वत्र सन्ति एव । प्राणी-यदा एव प्रवृत्तिम् कुरुते । तेषाम् कर्षणम् सजायते एव !

भावानुवादः—विशेष रूप में कर्म योग्य पुद्गल परमाणु सर्वत्र विद्यमान होते हैं। जब प्राणी अपने मन वचन अथवा तन से किसी प्रकार की प्रवृत्ति करता है तब चारों ओर से कर्म योग्य पुद्गल परमाणुओ का आकर्षण होता है। जितने प्रदेश में आत्मा विद्यमान रहती है। उतने ही प्रदेश मे विद्यमान परमाणु उसके द्वारा उस समय ग्रहण किये जाते हैं। अन्य नही।

**प्रवृत्तिमात्राभ्यधिके विजाते, विवर्धते सापरमाणुसख्या ।**
**वृत्यल्पतायां परमाणुरल्पः, कर्मप्रकारे विहिता व्यवस्था ॥४१॥**

अन्वयः—सा परमाणुसख्या प्रवृत्तिमात्राभ्यधिके विजाते विवर्धते वृत्यल्पतायाँ परमाणुः अपि अल्पः (भवति) । कर्मप्रकारे च इयम् व्यवस्था विहिता (अस्ति) ।

भावानुवादः—मन वचन काय की प्रवृत्ति में अधिकता होने पर कर्म परमाणुओं की संख्या में अधिकता होती है। एवं प्रवृत्ति की मात्रा में न्यूनता होने पर परमाणुओ की संख्या में भी न्यूनता होती है। जैनदर्शन में कर्म के विषय में ऐसी प्रदेशवन्ध की व्यवस्था की गई है।

**जाते गृहीते ननु पुद्गलानाम्, समूहमात्रस्य च कर्मरूपे ।**
**आत्माभिसम्बन्धनमत्रशास्त्रे, प्रदेशबन्धव्यवहारसिद्धिः ॥४२॥**

अन्वयः—पुद्गलानां समूहमात्रस्य ननु कर्म रूपे गृहीते जाते आत्माभिसम्बन्धनं अत्र शास्त्रे प्रदेशबन्धव्यवहारसिद्धिः (कथ्यते) ।

भावानुवादः—पुद्गलों के समूह मात्र का कर्मरूप में ग्रहण होने पर आत्मा के साथ सम्बद्ध होना प्रदेशबन्ध कहलाता है।

**[illegible]नां नियतस्थितानाम्, ज्ञानावृतादौ विविध[illegible] ।**
**[illegible]भावं समुपागतानाम्, निगद्यते प्राकृतबन्ध [illegible] ॥४३॥**

अन्वयः—नियतस्थितानाम् एषाम् अणूनाम् ज्ञानावृतादौ (ज्ञानावरण) विविधे स्वरूपे विपाकभावं समुपागतानाम् एषः प्राकृतबन्धः (प्रकृतिबन्धः) (कथ्यते)।

भावानुवादः—इन्हीं नियतस्थित परमाणुओं की ज्ञानावरणादि अनेक रूपों में परिणति होना प्रकृति बन्ध कहलाता है।

**जीवैः गृहीताः ननु पुद्गलास्ते, कालस्य सीमामभिगृह्यजीवैः।**
**साकं चतिष्ठन्ति निजस्वरूपैः, यतः च कालः स्थितिबन्ध एषः ॥४४॥**

अन्वयः—जीवैः गृहीताः ननु ते पुद्गलाः कालस्य सीमाम् अभिगृह्य जीवैः साकम् निजस्वरूपैः च तिष्ठन्ति। यतः (नियतः) च कालः एषः स्थितिबन्धः (अस्ति)।

भावानुवादः—जीव के द्वारा गृहीत कर्म परमाणुओं मे जो काल की नियत मर्यादा निश्चित होती है और उतने काल तक कर्म पुद्गल आत्मा के साथ सम्बद्ध रहते हैं, वह काल मर्यादास्थितिबन्ध है।

**जीवै र्गृहीतेषु यथा स्थितेषु, यथायथं कार्मणपुद्गलेषु।**
**फलं प्रदातुं तरतम्यभावः, सम्प्रोच्यतेऽसौ रसबन्ध एव ॥४५॥**

अन्वयः—जीवैः गहीतेषु यथा स्थितेषु यथायथं कार्मण पुद्गलेषु फलं प्रदातुं तरतम्यभावः असौ रसबन्ध एव सम्प्रोच्यते !

भावानुवादः—जीवों के द्वारा ग्रहण किये हुए यथा स्थित कर्म पुद्गलों मे यथा योग्य फल देने के तरतम भाव का होना रसबन्ध कहलाता है।

**कर्मप्रवादे ननु चाष्टमूलाः, उक्ताः स्वभावाः फलदायकास्ते।**
**यैरत्रभिन्नानि फलानि तूर्णम्, दीयन्त इष्टान्यथवातिरिक्तम् ॥४६॥**

अन्वयः—कर्मप्रवादे ननु फलदायकाः अष्टमूलाः स्वभावाः (प्रकृतयः) उक्ताः (सन्ति)। यैः अत्र विभिन्नानि इष्टानि फलानि तूर्णम् दीयन्ते। अथवा अतिरिक्तम् (प्रतिकूलं) दीयते !

भावानुवादः—कर्म सिद्धान्त में कर्म की आठ मूल प्रकृतियां मानी गई है । ये प्राणी को विभिन्न प्रकार के अनुकूल एवं प्रतिकूल फल प्रदान करती है ।

**यथाकषायश्च फलं तथैव, तत्तीव्रतायामशुभंविकर्म ।**
**कषायमुक्तौ शुभ कर्मलाभो, जीवो विशुध्दोऽशुभ कर्महीनः ॥४७॥**

अन्वयः—यथा कषायः फलम् च तथा एव । तत्तीव्रतायाम् (कषाय) अशुभं विकर्म (भवति) । कषाय मुक्तौ शुभकर्मलाभः (भवति) । जीवः अशुभकर्म-हीनः विशुद्धः (भवति) ।

भावानुवादः—जिस प्रकार के काषायिक परिणाम होगे (स्थिति एवं अनुभाग) भी उसी तारतम्य मे होगा । कषाय की तारतम्यता ही अनुभाग बन्ध एव स्थिति बन्ध की न्यूनाधिकता में कारण है । कषाय की तीव्रता में अशुभ कर्म अधिक शक्तिशाली बंधेगे और कषाय की अल्पता में अशुभकर्म अल्प शक्तिशाली होगे ।

**आत्मा यथास्ते स्वशरीरमानः, तथैव कर्मापि च बोधनीयम् ।**
**सीमानिबद्धं प्रकरोति कार्यम्, नैवास्ति सर्वत्र च सर्व रूपम् ॥४८ ।**

अन्वयः—यथा आत्मा स्वशरीरमानः आस्ते । तथा एव च कर्म अपि विबोधनी-यम् । तत् सीमानिबद्धं सत् कार्यम् करोति । सर्वत्र सर्वरूप च न एव अस्ति ।

भावानुवादः—जैसे आत्मा स्वदेहपरिमाण होता है । कर्म को भी उसी रूप मे मानना चाहिये । वह भी स्वशरीरप्रमाण व्यक्ति तक ही सीमित रहता है । जैसे जीव अपने शरीर में बद्ध रहकर ही अपना कार्य करता है । वैसे ही कर्म भी अपनी आत्मा की सीमा में रहकर ही अपना काम करता है, जैसे आत्मा सर्वव्यापक नहीं है । वैसे ही कर्म भी सर्वव्यापक नहीं है ।

**जैनागमे प्राकृतबन्धनस्य चाष्टौ प्रकाराश्च भवन्ति नाम ।**
**ज्ञानावृतिर्दर्शनतस्तथैव, वैवेदनीया परमोहनीया ॥४९॥**

अन्वयः—जैनागमे प्राकृतबन्धस्य अष्टौ प्रकाराः च भवन्तिनाम । ज्ञानावृतिः तथा एव दर्शनतः वेदनीया, मोहनीया च वै (भवति) ।

भावानुवाद।—जैनकर्मशास्त्र में बन्ध के आठ प्रकार माने गये हैं। अर्थात् कर्म की मूल आठ प्रकृतियां है। ये प्राणी को भिन्न-भिन्न प्रकार के अनुकूल एवं प्रतिकूल फल प्रदान करती हैं। ज्ञानावरणीय, दर्शनावरणीय, वेदनीय और मोहनीय।

**आयुश्चनामाभिधगोत्ररूपे, ततोऽन्तरायश्चविशिष्टरूपः।**
**एषां चतस्रः प्रथमाश्चतिस्रः, अन्त्याश्च ताः घातिपदेनशिष्टाः ॥५०॥**

अन्वयः—आयुः नामाभिधगोत्र रूपे च ततः विशिष्टरूपः अन्तरायः च। एषाम् चतस्रः प्रथमाः तिस्रः च तथा अन्त्याः च ताः घातिपदेन शिष्टाः (सन्ति)।

भावानुवादः—आयु, नाम गोत्र तथा अन्तराय इसमें से चार प्रथम के, तीन ज्ञानावरणीय, दर्शनावरणीय, मोहनीय तथा अन्तिम अन्तराय प्रकृतियां घाती कही गई हैं। क्योंकि इनमें आत्मा के मूल गुणों का ज्ञान, दर्शन, सुख, वीर्य का घात होता है।

**अन्याश्चशिष्टाः ननु कायबद्धाः, अघातिरूपाः कथिताः जिनेन्द्रैः।**
**कुर्वन्ति नैवात्मगुणस्य घातम् एताः सदाप्राकृतरूप वाच्याः ॥५१॥**

अन्वयः—शिष्टाः अन्याः च जिनेन्द्रैः कायबद्धाः अघातिरूपाः कथिताः। एताः च आत्मगुणस्य घातम् न एव कुर्वन्ति। एताः सदा प्राकृतरूपवाच्याः।

भावानुवादः—बची हुई शेष चार प्रकृतियां वेदनीय, आयु, नाम और गोत्र जिनेन्द्रों के द्वारा अघाती कही गई हैं। ये शरीर से सम्बद्ध होती हुई, आत्मा के किसी मूल गुण का घात नही करती हैं। इन्हीं आठों को प्रकृति कहा जाता है।

**अस्मिन्भवे नैवफलं तदा च, पुनर्भवेलभ्यत एव मान्यम्।**
**इत्थं च वक्तुं परिशक्यतेऽत्र तेनास्ति सम्बन्धितमेवकर्म ॥५२॥**

अन्वयः—कर्म फलम् अस्मिन् भवेन एव (मिलति)। तदा च पुनर्भवे लभ्यते। एव इति मान्यम्। अत्र कर्म तेन सम्बन्धितम् एव अस्ति। इत्थम् च वक्तुम् परिशक्यते।

भावानुवादः—कर्म सिद्धान्त के अनुसार यह ध्रुव सत्य है कि जिन कर्मों का फल इस जन्म में नहीं मिलता है। उनका फल पुनर्जन्म (परलोक) में मिलता है। यह निश्चित रूप से कहा जा सकता है; कि कर्म और पुनर्जन्म का अविच्छेद्य सम्बन्ध है। कर्म की सत्ता पुनर्जन्म से सम्बद्ध होती है।

समस्त जीवाश्च विभागमाप्ता:, मनुष्यतिर्यक् नरके च देवे ।
मृत्योश्च पश्चात् निजकर्मभिश्च, प्रयान्ति पूर्वोक्तगतौ ध्रुवं ते ।।५३।।

अन्वयः—समस्त जीवाः च मनुष्य तिर्यक् नरके देवे च विभागम् आप्ता। मृत्योः च पश्चात् ते (जीवाः) निजकर्मभिः च पूर्वोक्तगतौ ध्रुवम् प्रयान्ति ।

भावानुवा:द—संसार के समस्त जीव मनुष्य तिर्यंच, नारकदेव गतियों में समावेश पाते हैं। मृत्यु के पश्चात् प्राणी अपने कर्मानुसार इन चार गतियों में से एक गति में जाकर जन्म लेते हैं।

शरीरमेकं प्रविहाय जीवो, धर्तुं परं चैव यदा प्रयाति ।
स्थाने जन प्राप्यते तदीशम्, तदानुपूर्वीयतनाम कर्म ।।५४।।

अन्वयः—जीवः एकं शरीरम् प्रविहाय यदा परम् धर्तुम् च प्रयाति । तदा तत् ईशम् तदानुपूर्वी यतनामकर्म स्थाने जनम् प्रापयते ।

भावानुवादः—जब जीव एक शरीर का त्यागकर अन्य शरीर को धारण करने के लिए जाता है। तब तत्कार्यकारी आनुपूर्वी नाम कर्म उसे उसके उत्पत्ति स्थान तक पहुंचा देता है।

अपेक्ष्यते चेदमपीह नित्यम्, विशेषतोवक्रगतेर्नितान्तम् ।
गतान्तरे तैजसकार्मणं तत्, कायद्वयं तिष्ठतिजीवयुक्तम् ।।५५।।

अन्वयः—इह च इदम् (आनुपूर्वीकर्म) विशेषतः वक्रगतेः नितान्तम् नित्यम् अपेक्ष्यते। गतान्तरे जीवयुक्तम् तत् तैजसकार्मण कायद्वयम् च तिष्ठति ।

भावानुवादः—यहाँ यह स्मरणीय है कि इस आनुपूर्वी नामक कर्म की [illegible] समश्रेणी ऋजु गति के लिए नहीं होती है। अपितु विश्रेणी [illegible]

लिए होती है। दूसरी गति में जाते समय जीव के साथ केवल तैजस और कार्मण दो ही शरीर रहते हैं। औदारिक का निर्माण वहाँ पहुंचने के बाद आरम्भ होता है।

**चैतन्ययोगाच्च विशेषशक्तिः, संजायते कर्मणि काचिदित्थम्।**
**ययाच काले नियते तदेव विपाकजात प्रकटीकरोति ॥५६॥**

अन्वयः—कर्मणि चैतन्ययोगात् च इत्थ काचित् विशेषशक्तिः संजायते। यया च नियते काले तत् एव विपाकजातम् प्रकटीकरोति।

भावानुवादः—कर्म में चैतन्य के योग से इस प्रकार की कोई विशेषशक्ति पैदा हो जाती है। जिसके द्वारा नियत समय पर वह कर्म सुखदुख को प्रकट करता है।

**नवीनकर्मार्जनतो निवृत्या, पूर्वार्जितस्यापि विनाशनेन।**
**आत्मा विमुक्ति नियतां प्रयाति, तपोयुतः संवरनिर्जराभ्याम् ॥५७॥**

अन्वयः—आत्मा नवीनकर्मार्जनतः निवृत्या पूर्वार्जितस्य अपि विनाशनेन संवर निर्जराभ्याम् तपोयुक्तः नियतां विमुक्ति प्रयाति।

भावानुवादः—श्रुतचारित्र धर्म सम्पन्न आत्मा नवीन कर्मों के उपार्जन की निवृत्ति रूप सवर तथा पूर्वार्जित कर्म के क्षय रूप सकाम निर्जरा के द्वारा तपोयुक्त होकर नियत रूप से विमुक्ति पद को पाती है। ये दोनों तत्व क्रमशः आश्रव तथा बन्ध के विपरीत है। इनसे कर्ममुक्ति होती है।

**जीवस्य शक्ति विपुलावृतास्ते, नचेश्वरस्यापि तथा मतासा।**
**कर्मावृतेर्मुक्तिपथं प्रयातः, सोऽयं तदा चेश्वरतामुपैति ॥५८॥**

अन्वयः—जीवस्य विपुला शक्तिः आवृता आस्ते। तथा सा ईश्वरस्य अपि नमता। यथा कर्मावृतेः मुक्तिपथं प्रयातः सअयम् (जीवः) भवति। (तदा) च ईश्वरताम् उपैति!

भावानुवादः—जीव की विपुल शक्ति जिस प्रकार आवृत है। उस प्रकार ईश्वर की नहीं है। यह जीव जब कर्मों के आवरणों से रहित होकर मुक्ति मार्ग

की ओर बढता है । तब वह ईश्वर पद को प्राप्त करता है ।

मलच स्वर्णात्पयसश्चसर्पिः, प्रयत्नजातैः क्रियतेपृथक्तत् ।
तथात्मनः कर्मविनाशनंतत्, विधीयते संयमसाधनाभिः ॥५९॥

अन्वय।—यथा स्वर्णात् मलम्, पयसः च सर्पिः, प्रयत्न जातैः तत् पृथक् क्रियते !
तथा आत्मनः संयमसाधनाभिः तत् कर्मविनाशनम् विधीयते !

भावानुवादः—जैसे सोने से मल, तथा दूध दही से घृत प्रयत्नों के द्वारा अलग किया जाता है । वैसे ही आत्मा से कर्मो का विनाश भी संयम साधनाओं के द्वारा किया जाता है ।

महेशकर्तृत्वनिरासनार्थम्, संखण्डनार्थं क्षणिकत्वसिद्धेः ।
रात्माविभिन्नो जडतत्त्वजालात्, इत्येतदर्थं खलुकर्मवादः ॥६०॥

अन्वयः—महेशकर्तृत्वनिरासनार्थम् क्षणिकत्वसिद्धेः संखण्डनार्थम् जडतत्त्वजालात् आत्मा विभिन्नः इति । एतदर्थम् खलु कर्मवादः (निर्दिष्टोविभाति) ।

भावानुवादः—कर्मवाद के प्रतिपादन से ईश्वरकर्तृत्व, बौद्धों का क्षणिकवाद, जडत्व से आत्मा की पृथक् सत्ता सिद्धि अर्थात् चार्वाक दर्शन का स्वतः निरास हो जाता है ।

सर्वे समानाः जनजीवरूपाः चाध्यात्मविद्याधिगतोऽस्तिसारः ।
दृष्ट्वाच वैषम्य विशिष्टरूपम्, प्रादुर्बभूवात्रच कर्मवादः ॥६१॥

अन्वयः—अत्र कर्मवादः जनजीवरूपाः सर्वे समानाः अध्यात्म विद्याधिगतः सारः अस्ति । वैषम्य विशिष्ट रूपम् दृष्ट्वा च प्रादुर्बभूव ।

भावानुवादः—सभी जीव मूलसत्ता की दृष्टि से समान हैं. आध्यात्म विद्या ही सार है । विषमता के मूल में रहने वाले मुख्य हेतु रूप कर्म का प्रतिपादन कर्मवाद के रूप में प्रचलित हुआ है ।

सम्यक्त्वयुक्तं ननु दर्शनंतत् तथैवबोधश्चरितं तथैव ।
एतानिसर्वाणि च यत्नभाञ्जि, दिष्टानिकर्मक्षयसाधनानि ॥६२॥

अन्वयः—सम्यक्त्वयुक्तम् ननुतत् दर्शनम् । तथा एव बोधः । तथा एव चरितम् एतानि सर्वाणि अपि च यत्नभाञ्जिकर्मक्षयसाधनानि दिष्टानि (सन्ति) ।

भावानुवादः—सम्यक् दर्शन, सम्यक् ज्ञान, तथा सम्यक् चारित्र ये सभी आत्मिक निजगुण होने से कर्मक्षय के साधन हैं । कर्मों का आगमन होता है, किन्तु पूर्वोक्त रत्नत्रय की आराधना से उनका निराकरण हो जाने से मोक्षमार्ग मिल मिल जाता है ।

**बन्धैश्च सत्तोदयतोऽत्रकर्म, दशाश्चतस्रोननु जैनशास्त्रे ।**
**कर्मस्थतत्त्वस्य विवेचनाय, सारांशरूपं परिबोधनीयम् ।।६३।।**

अन्वयः—अत्र जैनशास्त्रे बन्धैः सत्तोदयतः चतस्रः कर्म दशाः (सन्ति) । कर्मतत्त्वस्य विवेचनाय इदम् सारांश रूपम् परिबोधनीयम् !

भावानुवादः—यहां जैनशास्त्र में बन्ध, सत्ता, उदय उदीरणाँ से कम की चार दशाए मानी गई हैं । कर्मतत्त्व के विवेचन के लिए इन्हें सारांश रूप में जानना चाहिये ।

**कर्मप्रवादात्मकपूर्वशास्त्रे,, यथार्थतो विवृतिरस्य चासीत् ।**
**परमहाशास्त्रमपूर्वरूपम्, कालप्रभावेण विलुप्तिमाप ।।६४।।**

अन्वयः—अस्य (कर्मप्रवादस्य) कर्मप्रवादात्मकपूर्वशास्त्रे यथार्थतः विवृतिः आसीत् । परम् अपूर्वरूपम् इदम् महाशास्त्रम् कालप्रभावेण विलुप्तिम् आप ।

भावानुवादः—इसका प्राचीन कर्मप्रवादात्मकशास्त्र में यथार्थ रूप से विवरण था, किन्तु इस अपूर्व महाशास्त्र का कालप्रभाव से कुछ लोप हो गया । इससे सिद्ध हाता है कि कर्म का विवेचन नवीन नहीं है ।

**तस्यैव कंचिल्लवमंशरूप, मादायशास्त्रं रचितंविभाति ।**
**लब्धेन कार्यंकरणीयमास्ताम्, तेनैव सन्तोषसृतिर्विधेया ।।६५।।**

अन्वयः—तस्य एव किंचित् अंशरूपम् लवम् आदायरचितं (कर्म) शास्त्रम् विभाति । लब्धेन कार्यम् करणीयम् आस्ताम् । तेन एव सन्तोषसृतिः विधेया ।

भावानुवाद:—उसी प्राचीन शास्त्र के कुछ अंश को लेकर बनाया हुआ कर्म सिद्धान्त शोभित हो रहा है । जितना वर्तमान मे प्राप्त है ; वह भी आत्म-शुद्धि के ज्ञान में परिपूर्ण है । उसी से कार्य करते हुए साधना के बल से मोक्ष मार्ग अपनाना चाहिये ।

**अत्रास्तिसूक्ष्मोविततोयतोऽपि, कर्मप्रपंचस्य विचार एष: ।**
**वीरेण दत्तश्च विभाति नूनम्, कर्मोपदेशः परमोपकारी ॥६६॥**

अन्वय:—अत्र कर्मप्रपचस्य यत: वितत: अपि एप: सूक्ष्म: विचार: अस्ति । वीरेण परमोपकारी दत्तः कर्मोपदेशः च नूनम् विभाति ।

भावानुवाद:—जैन दर्शन में कर्म प्रपंच का सयत विस्तृत सूक्ष्म विचार है । परमोपकारी भगवान् महावीर के द्वारा दिया हुआ कर्मोपदेश निश्चय रूप से शोभा पा रहा है ।

## शिखरिणीवृत्तम्:—

**नवीनस्यैवात्र विषयगततत्त्वस्य विवृतिः,**
**कृताकर्माख्याने प्रकृतिपृथुरूपस्य महती ।**
**सतांलब्ध्वा धीरः विपुलमतिरत्यर्थसहितः,**
**विधातातत्त्वज्ञो निखिलभृतकर्मार्थविलयम् ॥६७॥**

अन्वय.—अत्र कर्माख्याने प्रकृतिपृथुरूपस्य विषयगततत्त्वस्य नवीनस्य एव महती विवृतिः कृता (अस्ति) । अत्यर्थसहित: विपुलमति: तत्त्वज्ञ: सधीर: (पुरुष) ताम् (विवृतिम्) । लब्ध्वा निखिलभृतकर्मार्थविलयम् विधाता ।

भावानुवाद:—इस कर्म के निरूपण के प्रकरण मे स्वाभाविक रूप से व्यापक नवीन ही विषयगत तत्त्व का महान् विवरण किया गया है । विशिष्ट अर्थों के ज्ञाता विपुल मति धीर पुरुष संक्षिप्त तत्त्व विवरण को पाकर इनसे उपार्जित कर्मों का क्षय अवश्य ही करेंगे ।

उत्कृष्टरूपं च निकृष्टरूपम् मध्यस्वरूपं चरित निदिष्टम् ।
**विभाति नूनं त्रिविध स्वरूपम्, जीवस्य मात्या च दशाविभिन्ना ॥६८॥**

अन्वय:—विकासभूमेः चरितम् उत्कृष्टरूपम् निकृष्टरूपम् मध्यस्वरूपं च त्रिविध-स्वरूप निदिष्टम् । इत्थ जीवस्य विभिन्ना दशा च माम्या ।

भावानुवाद:—आत्मा की कर्म जनित विविध अवस्थाओं को तीन विभिन्न रूपों में विभाजित किया जा सकता है । निकृष्टतम, उत्कृष्टतम और मध्यस्वरूप । अज्ञान अथवा मोह का प्रगाढतम आवरण आत्मा की निकृष्टतम अवस्था, अज्ञान अथवा अत्यन्त मोह की निवृत्ति रूप उत्कृष्टतम, और मध्यस्थित अवस्था तृतीय है ।

**विकासमाप्तस्य यतात्मनश्च, दशाः समस्ताः जिनकर्मशास्त्रे ।**
**स्थानानि सन्त्येव गुणस्य तानि, सोपानभूतानि चतुर्दशैव ।।६९।।**

अन्वय:—जिनकर्मशास्त्रे विकासम् आप्तस्य यतात्मनः च समस्ताः दशाः सोपान-भूतानि चतुदर्श एव तानि गुणस्य स्थानानि सन्ति एव ।

भावानुवाद:—जैनशास्त्रों में विकासशील आत्माओं की समस्त दशाएं—सोपान-भूत चौदह ही गुण स्थान हैं । जैन चारित्र की १४ सीढ़ियाँ हैं । साधकों को इन्हीं से आरोह करना पड़ता है ।

**आद्ये गुणस्थानपदे प्रकाशो मन्दोभवत्यात्मविकासशक्तेः ।**
**अन्त्ये च तत्रैव सदात्मरूपम् स्वाभाविकं तत् गणपैः निदिष्टम् ।।७०।।**

अन्वय:—आद्ये गुणस्थान पदे आत्मविकासशक्तेः प्रकाशः मन्दः भवति । तत्र एव अन्त्ये (गुणस्थाने) तत् आत्मरूपं स्वाभाविकं (भवति) । इति गणपैः निदि-ष्टम् ।

भावानुवाद:—आत्मिक गुणों के विकास की क्रमिक अवस्थाओं को गुणस्थान कहते हैं । आत्मा का वास्तविक स्वरूप शुद्ध, ज्ञानमय व परिपूर्ण सुखमय है । इसे अनन्त ज्ञान, अनन्त दर्शन, अनन्त सुख, व अनन्तवीर्य कहा गया है । इस स्वरूप को विकृत अथवा आवृत करने का कार्य कर्मो का है । प्रथम गुणस्थान में आत्मविकासशक्ति का सही प्रकाश नही होता है । अन्तिम चौदहवें गुण-स्थान में आत्मा का स्वाभाविक रूप होता है ।

अनन्तबोधेन चदर्शनेन, सुखेन वीर्येण तथैव युक्तः ।
आत्मामतः पूर्णतमो विशुद्धः, जैनागमे कर्मविवर्जितोऽसौ ॥७१॥

अन्वयः—जैनागमे असौ आत्मा तथा एव अनन्तबोधेन, अनन्तदर्शनेन, सुखेन, वीर्येण च युक्तः कर्मविवर्जितः पूर्णतमः विशुद्धः मतः ।

भावानुवादः—जैनागमों में यह आत्मा अनन्त ज्ञान दर्शन सुख वीर्य से युक्त, कर्मों से रहित होने पर पूर्णतम विशुद्ध मानी गई है और वही उसका परमात्मरूप है ।

श्रीमज्जवाहरयशोविजयाभिधाने,
नाचेशसच्चरणयोः शरणावधाने ।
श्री चन्द्रमौलिकविनिर्मितसत्प्रबन्धे,
पूर्णचकर्मभृतषोडशसर्गरूपम् ॥७२॥

**कर्मसिद्धान्तनिरूपकः समाप्तः षोडशसर्गः ।**

## "अथ सप्तदश सर्गः"

आचार सामा–चारी सर्गः–

अथातिरम्ये सुखदप्रदेशे, पदातिगं स्वेदलवैः समेतम् ।
मुनिव्रजैः साकममुं व्रजन्तमाचारपूत पवनः सिषेवे ॥१॥

अन्वयः—अथ पवनः अतिरम्ये सुखदप्रदेशे पदातिगं स्वेदलवैः समेतम्, मुनिव्रजैः साकम् व्रजन्तम् आचारपूतम् अमुम् (जवाहराचार्यम्) सिषेवे ।

भावानुवादः—अनन्तर अनन्त रमणीय सुखद प्रदेश में पैदल चलते हुए पसीनों की बूंदों से परिपूर्ण मुनि समुदाय के साथ जाते हुए, आचार से परम पवित्र, पूज्य जवाहराचार्य की सेवा में पवन भी सन्नद्ध हो गया । कवि की कल्पना है कि–ग्रीष्मऋतु मे विहार करते हुए आचार्य भगवन् की सेवा शीतलमन्द सुगन्ध स्वाभाविक रूप से बहता हुआ स्वयं पवन सेवारत है, ऐसा ज्ञात होता था ।

निरुद्धवाते रविरश्मितप्तम्, तीव्रातपैः पूर्णपरीतगात्रम् ।
ससेवितुं श्रावकवत्पयोदाः, खं–खेचराः संपरिवव्रुरेनम् ॥२॥

अन्वयः—एनम् (आचार्यम्) निरुद्धवाते रविरश्मितप्तम् तीव्रातपैः पूर्णपरीतगात्रम् श्रावकवत् ससेवितुम् खेचराः पयोदाः खंसंपरिवव्रुः ।

भावानुवादः—उन आचार्य भगवान् की जिनका शरीर ग्रीष्मऋतु में सहसा हवा के बन्द हो जाने से सूर्य का किरणों मे तप गया है । तीव्र धूप से सारा अंग परितप्त हो गया है, उन आचार्यदेव की सेवा में श्रावक बनकर सेवा करने के लिए आकाश मण्डल में विचरण करने वाले बादल आकाश में छा गये । विहार के समय सेवार्थ मानो बादल अचानक आकाश में छा जाते थे । जिससे धूप का प्रभाव कम हो जाता था ।

यत्रैवभातो पततः प्रभाभिः, संजायते तत्र पयोजशोभा ।
स्पर्शं समादाय पदोः पवित्रम्, वसुन्धरा संकुचतीवचित्ते ॥३॥

अन्वयः—यत्रएव भातौ (पादौ) प्रभाभिः पततः तत्र पयोजशोभा संजायते । पदोः पवित्रम् स्पर्श समादाय वसुन्धरा चित्ते संकुचति इव ।

भावानुवादः—जहां आचार्य भगवन् के श्री सम्पन्न चरण पड़ते थे । वहाँ कमलवत् शोभा उत्पन्न हो जाती थी । दोनो चरणो के पवित्र स्पर्श को पाकर मानो वसुन्धरा अपनी कठोरता के लिए मन मे संकोच करती थी । वह समझती थी कि मुझे कठोर नहीं बनना चाहिये था । यदि मुझ में कोमलता होती तो पूज्य आचार्य को कोमल पृथ्वी पर पैर रखना होता ।

मुक्ताप्रभं स्वेदलवं समग्रमाचार्यवर्यस्य शुचौशरीरे ।
जातं विहारे विहरैकवृत्तिः, प्रमार्जयामास शनैः समीरः ॥४॥

अन्वयः—विहरैकवृत्तिः समीरः विहारेजातं आचार्यवर्यस्य शुचौ शरीरे मुक्ताप्रभं । समग्रं स्वेदलवम् शनैः प्रमार्जयामास ।

भावानुवादः—आचार्यदेव के पवित्र शरीर पर विहार करने से उत्पन्न मोती के दानो के समान सम्पूर्ण पसीने की बून्दों को अनवरत प्रवहमान पवन ने धीरे-धीरे प्रमार्जित कर दिया । उसे सुखा दिया । अपने स्वभाव के अनुसार हवा ने मानो उनकी सेवा की । धूप से पसीना होना भी सम्भव होता है । और केवल अपने आप हवा से पसीना सूखता भी है । कवि द्वारा यहां इसी की उत्प्रेक्षा की गई है ।

स्थिताः प्रशाखासुच पादपस्य, मध्येपथं विस्तृतमुत्पतन्त. ।
स्वैर विरावैः विविधैरनल्पाः, चरित्रगानं विहगाः वितेनुः ॥५॥

अन्वयः—मध्येपथ पादपस्यच प्रशाखासु स्थिताः विस्तृतम् उत्पतन्तः अनल्पाः विहगाः स्वैर विविधैः विरावैः (तेषाम्) चरित्रगानम् वितेनुः ।

भावानुवादः—मार्गो के मध्य मे पेड़ों की शाखाओं पर बैठे हुए तथा इधर-उधर [illegible] विस्तार में उड़ते हुए बहुत से विहगों (पक्षियों) ने अनेक प्रकार के अपने [illegible] मे (चहचहाते) आचार्य भगवन् का ही चरित्र गान किया । उत्प्रेक्षा [illegible] [illegible] है कि मनुष्यो के सदृश पक्षी भी भगवान् का गुणगान करते थे ।

**विश्वासपूर्वं मधुरं पिबन्सन्, सुधामय रूपमजातशत्रोः ।**
**समक्षमागत्य मृगव्रजोपि, प्रदर्शयामासगतिं स्वकीयाम् ।।६।।**

अन्वयः– मृगव्रजः अपि अजातशत्रोः सुधामयं मधुरं रूपम् विश्वासपूर्वम् पिबन् सन् समक्षम् आगत्य स्वकीयाम् गतिम् प्रदर्शयामास ।

भावानुवादः—अजातशत्रु पूज्य जवाहराचार्य के सुधासिक्त मधुर रूप को विश्वासपूर्वक देखते हुए मृग समुदाय ने भी उनके पास आकर अपनी स्वाभाविक गति दिखलाई । वे निर्भय होकर छलांगे भरते हुए उनके पास से निकल जाते थे । हिरण उनको विश्वासपूर्वक देखते हुए तृप्त नहीं होते थे ।

**पुष्पेषु भृंगा भ्रमणप्रधानाः, परागपीताः परिमोदमानाः ।**
**गुंजारवन्तः तृषयार्दितास्ते, पपुः समन्ताद्यश एव तस्य ।।७।।**

अन्वयः– भ्रमणप्रधानाः परागपीताः परिमोदमानाः पुष्पेषु गुंजारवन्तः तृषयार्दिताः ते भृंगाः तस्य यश एव समन्तात् पपुः ।

भावानुवादः—पुष्पों को धूलि से पीत हो आए प्रसन्न फूलों पर गुंजार करने वाले भ्रमणशील भ्रमरों ने अत्यन्त प्यार से आचार्य भगवन् के यश का ही चारों तरफ से पान किया उनका यश सर्वत्र फैला हुआ होने से पुष्पों के पराग के रूप में भ्रमरों ने उसका ही पान किया ।

**तदेवगानं नभसः प्रदेशे, जले स्थले निर्झरिणीप्रवाहे ।**
**आचार्य देवस्य यशोऽवदातम्, सन्नद्धलीला प्रकृतिर्विगातुम् ।।८।।**

अन्वयः—तदेवगानम् नभसः प्रदेशे, जले स्थले, निर्झरिणीप्रवाहे (व्याप्तम्) प्रकृतिः आचार्य देवस्य अवदातम् यशः विगातुम् सन्नद्धलीला (अजायत) ।

भावानुवादः—आकाश में, जल में, स्थल पर झरणों के प्रवाह मे भ्रमरों का वही गान व्याप्त था । प्रकृति भी इस प्रकार आचार्यदेव के उज्ज्वल यश को ही गाने के लिए तत्पर थी । यत्र–तत्र–सर्वत्र चरित्रनायक का यश ही श्रवण गोचर हो रहा था ।

**ख्यातुं च संख्यां दिवितारकाणाम्, शक्तो भवेत्कोपि नरः कदाचित् ।**
**परन्तु संवर्णयितुं न कोऽपि, क्षमः क्षमायां यशसोविभूतिम् ।।९।।**

अन्वयः—कः अपिः नरः दिवितारकाणाम् संख्यां च ख्यातुं कदाचित् शक्तः भवेत् । परन्तु (आचार्यस्य) यशसः विभूति संवर्णयितुं क्षमायां क्षमः कोपिन ।

भावानुवादः—कदाचित् कोई मनुष्य आकाश में तारों की गणना करने में समर्थ हो जाय, किन्तु धरा पर आचार्य भगवन् के यश की विभूति के वर्णन में कोई समर्थ नहीं है । तारे भी गिने जा सकते हैं, पर यश का वर्णन कभी सम्भव नही है ।

**धन्य परिस्पर्धनताविजेतृ, सन्देशपूतं सुधयांचितंतत् ।**
**स्वर्गस्य, संसाधनधामजातम्, पादांकित दीव्यति भूमिरूपम् ।।१०।।**

अन्वयः—सन्देशपूतम् सुधयांचितम् स्वर्गस्य परिस्पर्धनताविजेतृ पादांकितम् तत् भूमिरूपम् संसाधनधाम जातम् (सत्) दीव्यति ।

भावानुवादः—आचार्य भगवन् के चरणों से सनाथित वह धरा उनके सन्देशो से पवित्र अमृत से सिंचित, प्रतियोगिता में स्वर्ग को भी जीतने वाली, साधना का पवित्र स्थान बनकर शोभा पा रही हैं । विहार के प्रसंग से जहाँ—जहाँ वे पधारते हैं वहा—वहाँ पृथ्वी तीर्थधाम के समान हो जाती है ।

**यथावनिः पट्टनवास संघाः, मरुस्थली जंगलजालमाला· ।**
**विभूषिताः पद्रजसा तथैव पादामृताप्लावितपर्वतालिः ।।११।।**

अन्वयः—यथा पद्रजसा अवनिः, पट्टनवाससंघाः मरुस्थली, जंगलजालमाला: विभूषिताः तथा एव पादामृताप्लावितपर्वतालिः (अपि) अभवत् ।

भावानुवादः—विहार प्रसगो में आचार्यदेव के चरणों की धूलि ने जिस प्रकार पृथ्वी, नगर, ग्राम, मरुभूमि, जंगल विभूषित हुए, इसी प्रकार उनके चरणामृत से पर्वतों का समुदाय भी सनाथित हुआ । अर्थात् यात्रा प्रसंग में भगवान् का विहार सर्वत्र होता था; क्योंकि वे परीषहजयी थे ।

**आचार्यवर्यस्य हितावहस्य, विश्वस्य गोप्तुः श्रुतनिश्रितस्य ।**
**जिनोपदिष्टस्य तदाश्रितस्य, प्रदर्श्यते मंगलकारिमार्गः ॥१२॥**

अन्वयः—जिनोपदिष्टस्य तदाश्रितस्य विश्वस्य गोप्तु श्रुतनिश्रितस्य हितावहस्य आचार्यवर्यस्य मंगलकारिमार्गः प्रदर्श्यते ।

भावानुवादः—जिनों के द्वारा उपदिष्ट तदाश्रित, मगलकारी मार्ग, संसार के रक्षक, श्रुतज्ञान सम्पन्न, परोपकारी आचार्यश्री के द्वारा प्रदर्शित किया जा रहा है । अर्थात् श्रुतिपरम्परा से प्राप्त आप्तप्रणीत, मार्ग से ग्रहीत समाचारी का वर्णन आचार्यदेव द्वारा प्रस्तुत किया जा रहा है ।

**कार्या न कस्यापि कदापि हिंसा, भवेद्यतः कर्मविमुक्तिरत्र ।**
**अभ्युन्नतिः सर्वविधा तदैव, तत्रापि मूलं समता समग्रा ॥१३॥**

अन्वयः—कस्यापि कदापि हिंसा न कार्या । यतः अत्र कर्म विमुक्तिः भवेत् । सदा एव सर्वविधा अभ्युन्नतिः (स्यात्) तत्रापि समग्रा समता मूलम् (अस्ति) ।

भावानुवादः कभी किसी भी प्राणी की हिंसा नही करनी चाहिये । कर्मों से मुक्ति अहिंसा धर्म से ही मिल सकती है । सर्वतोमुखी विशेष उन्नति भी तभी सम्भव है । उस अहिंसा का मूल आधार समता ही है ।

**लपन्ति जीवा भुविजीवितु ते, सुख प्रियं नैव कदापि दुःखम् ।**
**स्वप्नेऽपि तेषां मरणं प्रिय नो, लाभक्रिया दृष्टिपथं समेता ॥१४॥**

अन्वयः—भुविते जीवाः जीवितुम् एव लपन्ति (सर्वेषां) सुखं प्रियम् (भवति) । दुःखम् कदाचित् एव न । स्वप्ने अपि तेषा मरणप्रियनो । लाभक्रिया दृष्टिपथं समेता ।

भावानुवादः—ससार मे सभी प्रकार के जीव जीवन चाहते है । सभी को सुख प्रिय है । दु ख किसी को भी प्रिय नही है । स्वप्न मे भी वे मरना नहीं चाहते है । सभी प्राणी सर्वत्र लाभ का काम ही करते है । हानि के लिये कोई भी यत्न नही करता है ।

केषां विरुद्धाचरणंन कार्यम्, योगैस्तथा सत्करणैश्च नित्यम् ।
तथाकृतिः पापमयो प्रवृत्तिरहिंसनं चैव सदाविधेयम् ॥१५॥

अन्वयः—योगैः तथा सत्करणैः च नित्यम् केषाम् अपि विरुद्धाचरण न कार्यम् । तथाकृतिः पापमयी प्रवृत्तिः (अस्ति) सदा अहिंसनं च एवं विधेयम् ।

भावानुवादः—तीन योग तथा तीन करणों से सदा कभी किसी के विरुद्ध आचरण नहीं करना चाहिए । वैसा करना पाप की प्रवृत्ति है । सदा अहिंसा का भाव रखना चाहिये । क्योंकि अहिंसा को परमधर्म माना गया है ।

एकेन्द्रियान्मानवसृष्टिरेषा, विवर्धनीयापरिपालनीया ।
तदैव रक्षापि भविष्यतीति, प्राणस्वरूपप्रथमव्रतस्य ॥१६॥

अन्वयः—एकेन्द्रियात् एषा मानवसृष्टिः विवर्धनीया. परिपालनीया च । तदा एव प्राणस्वरूपप्रथमव्रतस्य रक्षा अपि भविष्यति इति ।

भावानुवादः—एकेन्द्रिय से लेकर इस मानवसृष्टि तक की वृद्धि तथा पालना करनी चाहिये । तभी प्राण स्वरूप प्रथम अहिसा की परिपूर्ण रक्षा हो सकती है । सूक्ष्म जीवों से लेकर सभी स्थूल जीवो की रक्षा करनी चाहिये । तभी अहिंसा व्रत का पूर्णतया पालन सम्पन्न होगा ।

सर्वेषु जीवेषु दया विधेया, प्रमादवृत्तिर्न हितावहास्ते ।
इदं व्रतं कायरता न चैव, वीरस्य वृत्तिः सतत विचर्या ॥१७॥

अन्वयः—सर्वेषु जीवेषु दया विधेया । प्रमादवृत्तिः हितावहा न आस्ते । इदं व्रत कायरता न च एव । सतत वीरस्य वृत्तिः विचर्या ।

भावानुवादः—सभी जीवों पर दया करनी चाहिये । प्रमाद करना हितकर नहीं है । अहिंसा व्रत का पालन कायरता नहीं है । क्योंकि यह व्रत वीरों का धर्म है । सदा इसका पालन करना चाहिये । अहिंसक ही सच्चा वीर हो सकता है ।

कार्ये न सत्यं प्रकृतिप्रदत्तो, गुणोऽस्ति सिद्धान्तसमन्वयः ।
वचस्य वाधारगिसा विशिष्टा, प्रयोगरूपे परिपालनीयम् ॥१८॥

अन्वयः—सत्यं च धार्यम् । अयम् प्रकृतिप्रदत्तः गुणः अस्ति । सिद्धान्तसमन्वयः च । धर्मस्य विशिष्टा आधारशिला च । अतः प्रयोगरूपे (सत्य) सदा परिपालनीयम् ।

भावानुवादः—सदा सत्य को धारण करना चाहिये । यह प्रकृति के द्वारा दिया हुआ विशिष्ट महान् गुण है । इसी में सिद्धान्तों का समन्वय भी है । धर्म की विशिष्ट दृढ आधारशिला सत्य ही है । इसलिए प्रयोगरूप में सत्य का सदा परिपालन करना चाहिये ।

**सत्येन जायेत समस्तसिद्धिः, विभूषणं मानवजीवनस्य ।**
**अनेन मानं लभते मनुष्यः, प्रतिष्ठितं सर्वमपीह सत्ये ॥१९॥**

अन्वयः—सत्येन समस्त सिद्धिः जायते । मानवजीवनस्य विभूषणम् । अनेन मनुष्यः मानं लभते । इह सर्वम् अपि सत्ये प्रतिष्ठितम् (वर्तते) ।

भावानुवादः—सत्य से सकल सिद्धियां प्राप्त होती हैं । सत्य मानवजीवन का अलकार है । इससे मनुष्य मानसम्मान प्राप्त करता है । इस संसार में सब कुछ सत्य में ही प्रतिष्ठित है ।

**सत्यं च भव्यं समुपासनीयम्, कायेन वाचा मनसा तथैव ।**
**आराधना तस्य भवेद्भवेस्मिन्, निष्ठानमत्रैव जनैर्विधेयम् ॥२०॥**

अन्वयः—कायेन, वाचा मनसा च भव्यं सत्यं समुपासनीयम् । तथैव अस्मिन्भवे तस्य आराधना भवेत् । अत्र एवं जनैः निष्ठानम् विधेयम् ।

भावानुवादः—शरीर, वचन, तथा मन से सत्य भगवान् की समुपासना करनी चाहिये । इस संसार में उसकी ही आराधना होनी चाहिये । इस विषय में समस्त मनुष्यों को पूर्ण विश्वास व्यक्त करना चाहिये । सत्य में सभी कुछ है । उससे बढ़कर अन्य कोई धर्म नहीं है ।

**परस्य द्रव्यं न कदापि हार्यम्, न कोपि लाभो जगतीतलेऽस्मिन् ।**
**संजायतेऽनेन गुणस्य नाशः, चौर्यं सदा गर्हितमेवमान्यम् ॥२१॥**

भावानुवादः—सस्कार नष्ट करने वाले साहित्य को नहीं पढ़ने से, विचार की परिशुद्धि से, पवित्र भावनाओं से, भोज्य पदार्थ की दृष्टि से जीभ पर नियन्त्रण रखने से, अच्छी प्रवृत्ति से उस ब्रह्मचर्य का परिपालन करना चाहिये।

विशेष टिप्पण–साधु को अब्रह्मचर्य–विषयक कुछ भी प्रवृत्ति नहीं करनी चाहिये। सूर्यास्त के बाद सूर्योदय तक किसी भी छोटी से छोटी स्त्री जाति को रात्रि निव स के मकान में नहीं आने देना चाहिये। दिन के समय भी एक दो तक तो क्या हजार बहनें हों तो भी समझदार पुरुष की साक्षी के बिना मुनियों के निवास स्थान में उनको नहीं बैठने देना चाहिये।

समझदार पुरुष कानों से सुन सके, तथा आँखों से देख सके ऐसा होना चाहिये। महाराज क्या कह रहे हैं, आदि का ज्ञान होना चाहिये। इस ब्रह्मचर्य की सुरक्षा हेतु स्त्री–पुरुष के सगाई सम्बन्ध का प्रपच भी साधु को नहीं करना चाहिये। क्योंकि सम्बन्ध जुड़ाना भी अब्रह्मचर्य की सेवना कराना है। शादी का समर्थन करना अब्रह्मचर्य का अनुमोदन करना है। अतः साधु को इस ब्रह्मचर्य की सुरक्षा हेतु इस प्रकार की प्रवृत्ति में नहीं पड़ना चाहिये। शास्त्रानुसार नववाड़ ब्रह्मचर्य की विधि बताई गई है। उसका भी ज्ञान करना चाहिये। इसी प्रकार साध्वी वर्ग को पुरुष वर्ग का ध्यान रखना चाहिये। (इति अस्मद् गुरुचरणाः)।

**दुखस्य मूल कथितास्ति तृष्णा, सानेकरूपा विततप्रकारा।**
**निपातनोन्मादनकारिणीयम्, तस्याः निरोधः प्रथमं विधेयः ॥२५॥**

अन्वयः—तृष्णा दुःखस्य मूलम् कथिता अस्ति। सा अनेकरूपा विततप्रकारा च (अस्ति)। इयम् निपातनोन्मादनकारिणी (अस्ति)। प्रथमंतस्याः निरोधः विधेयः।

भावानुवादः—तृष्णा दुःख की जड़ कही गई है। वह अनेक तरह की होती है। और संसार में सर्वत्र व्याप्त है। यह जीवन में पतन की निमित्त तथा पागलपन को उत्पन्न करने वाली है। इसलिए सर्वप्रथम उसका निरोध करना चाहिये। संसार के पदार्थों के लिए होने वाला लोभ अनर्थकारी है। उसे बढ़ने से रोकना हितकर होता है।

विशेष टिप्पण:—साधु को धनादि भौतिक पदार्थों की तृष्णा का भी वर्जन करना चाहिये । वस्त्रादि मर्यादित वस्तुए शास्त्रों में बताई गयी हैं । उनके अतिरिक्त द्रव्यादि सोना, चाँदी, टिकट, लिफाफा, पोस्टकार्ड कोई वस्तु साधु अपने पास नही रखे । न दूसरों के पास रखावे । तथा रखने का अनुमोदन भी न करे । न चन्दे चिट्ठे के प्रपंच में ही पड़ें । तटस्थभाव से दान का उपदेश दिया जा सकता है, पर परिग्रह सम्बन्धी अन्य विषयों मे भाग न ले । यहां तक कि धातु की सामग्री स्थायी रूप से अपनी नेश्राय मे न रखे ।

सामान्यचर्या, श्रमणस्य दिष्टा, चावश्यिकी चैव निषेधयुक्ता ।
आपृच्छना वैप्रतिपृच्छना च, स्यात् छन्दनेच्छाकरणं तथैव ।।२६।।

अन्वय:–(साधुसामाचारीप्रदर्श्यते) साद्विधा सामान्य दिनचर्या तथा पर्यूषणा कल्पश्च । श्रमणस्य सामान्यचर्या आदिष्टा (१) आवश्यिकी (२) निषेधयुक्ता (३) आपृच्छना एववै (४) प्रतिपृच्छना च (५) छन्दना (६) तथा एव इच्छाकरणम् (इच्छाकार:) स्यात् ।

भावानुवाद:—साधुओं की सम्यक् चर्या दो प्रकार की होती है:—(१) सामान्य दिनचर्या तथा पर्यूषणाकल्प । प्रथम १० प्रकार की है:-- (१) आवश्यिकी (२) नैषधिकी (३) आपृच्छना (४) परिपृच्छना (५) छन्दना (६) तथा इच्छाकार उत्तराध्ययन सूत्र के छव्वीसवें अध्ययन मे इसकी चर्चा की गई है ।

मिथ्याकृतिश्चैव तथेतिकारोऽभ्युत्थानलक्ष्मीरुपसम्पदा च ।
चतुर्विभागेषु दिनस्य चर्या, सम्पादनीया विधिवद् विधिज्ञैः ।।२७।

अन्वय:—(७) मिथ्याकृति: (मिथ्याकार:) (तथेतिकार:) तथाकार: अथवा तथेतिकार: (९) अभ्युत्थान लक्ष्मी:) अभ्युत्थानम् तथा (१०) उपसंपदा च विधज्ञै: दिनस्यचर्या चतुर्विभागेषु विधिवत् सम्पादनीया ।

भावानुवाद.—(७) मिथ्याकार (८) तथेतिकार। (९) अभ्युत्थान तथा (१०) उपसम्पदा ये दस हैं । शास्त्रकारों के द्वारा मुनि की दिनचर्या विधिवत् चारों विभागों मे विभक्त की गई है । मैं आवश्यक कार्य मे बाहर जाता हूँ । (प्रथम) अब मुझे निष्कारण बाहर नही जाना है (मैं लौट आया हूँ) (द्वितीय) गुरु से पूछना (तृतीय) पुन. पूछना (चतुर्थ) गोचरी के लिए साम-

न्त्रित करना (छन्दना) परस्पर इच्छानुसार व्यवहार (षष्ठ दोषों को मिथ्या बनाना (सप्तम) कथन यथार्थ (कथन) (अष्टम) भक्ति विनय (नवम) योग्य गुरु का आश्रय उपसपदा है। ये सामाचारी सन्तों के परस्पर व्यवहार से सम्बद्ध है।

**स्वाध्यायकार्यं प्रथमे विभागे, ध्यानं द्वितीये त्रितये च भिक्षा।**
**पुनश्चतुर्थेऽध्ययनं विधेयम्, रात्रौ तृतीये शयन विशेषः ॥२८॥**

अन्वय—प्रथमे विभागे स्वाध्यायकार्यम्। द्वितीये ध्यानम्, त्रितये च भिक्षा, पुनः चतुर्थे अध्ययनं विधेयम्। रात्रौ अपि अयमेव विभागः परन्तु तृतीये विभागे शयनम् भवति। इति विशेषः।

भावानुवादः—प्रथम प्रहर मे स्वाध्याय करना चाहिये। द्वितीये प्रहर में ध्यान, तृतीय में गोचरी, तथा चतुर्थ में फिर अध्ययन करना चाहिये। इसी प्रकार से रात्रि के चार पहरों की चर्या होती है, किन्तु वहां तृतीय पहर में शयन होता है। यही विशेषता है। और प्रहरों के काम दिनवत् ही करने चाहिये।

**स्वाध्यायकृत्यस्य महत्त्वमेतत्, संदृश्यते साधुचरित्रवृत्तौ।**
**ध्यानं ततस्तत्करणे विशेषः, व्यर्थं क्षणं नो गमनीयमास्ते ॥२९॥**

अन्वयः—साधुचरित्रवृत्तौ स्वाध्यायकृत्यस्य एतत् महत्त्वं सदृश्यते। ततः ध्यानम् तत्करणे विशेषः। व्यर्थम् क्षणं नो गमनीयम् आस्ते।

भावानुवादः—साधुओं की दिन रात्रिचर्या में अध्ययन का यह महत्व दिखाई देता है। इसके बाद ध्यान का स्थान है। उसे अच्छी तरह से करना चाहिये। चार प्रहर अध्ययन दोपहर ध्यान व एक प्रहर भोजन तथा एक प्रहर शयन के लिए है। इसी प्रकार क्षण भर का समय भी व्यर्थ नहीं खोना चाहिये।

**वस्त्रादिपात्रप्रतिलेखनं च, विधेयमेतन्नियते च काले।**
**तथैव कार्यं गुरुवन्दनादि, प्रमादशून्या यतना विधेया ॥३०॥**

अन्वयः—नियते च काले एतत् वस्त्रादिपात्रप्रतिलेखनम् विधेयम्। तथा एवं गुरु

वन्दनादि कार्यम् । प्रमादशून्या च यतना विधेया ।

भावानुवादः—नियत समय पर वस्त्र पात्रादि का प्रतिलेखन (पलेवणा) करना चाहिये । वैसे ही गुरु वन्दनादि कार्य भी सम्पादित करने चाहिये । और सदा प्रमाद से शून्य होकर यतना करनी चाहिये । चलने, फिरने, उठने, बैठने में सावधानी रखनी चाहिये ।

विशेष टिप्पणः—तीसरी पौरुषी में एक बार का नियम उस काल विशेष से सम्बन्धित है । जब मानव एक ही समय भोजन करता था । पर यह स्थायी नियम नही है । मुनि एक समय के अतिरिक्त भी आवश्यकतानुसार भिक्षा ग्रहण कर सकता है । जिसका उल्लेख भगवती में है:—

इस विषय मे अन्य विधान भी शास्त्र में इस प्रकार से है: काले काल समायरे (दशवैकालिक) अर्थात् साधु को जिस समय जिस विषय का काल उचित हो, वैसा ही व्यवहार करना चाहिये । उदाहरणार्थः—गृहस्थो के यहाँ भिक्षा जिस समय उपलब्ध होती हो, उस समय भिक्षा के लिए जाना भिक्षा का काल कहलायेगा । इसलिए साधु को भिक्षा के समय का ध्यान रखते हुए अन्य स्वाध्यायादि दिनचर्या का समय निर्धारण कर लेना चाहिये । जो भी समय जिस विषय का निर्धारण किया गया हो । उस समय में वैसी ही प्रवृत्ति करनी चाहिये । ये जो शास्त्र के उल्लेख हैं, वे तीनो कालों से सम्बन्धित है (इति गुरुचरणाः) ।

अवश्यकार्यो नियतोऽविवासो, वर्षर्तुकाले श्रमणेन कल्पः ।
कस्यापि जीवस्य जनि गतस्य, संजायते येन विराधना नो ।।३१।।

अन्वयः—श्रमणेन वर्षर्तुकाले नियतः अविवासः कल्पः अवश्यं कार्यः । येन जनि गतस्य कस्यापि जीवस्य विराधना नो संजायते ।

भावानुवादः—साधुओं को चाहिये कि वे वर्षाऋतु मे अवश्य नियत एक स्थान पर रहकर चौमासा करने का कल्प स्वीकार करें । जिनमे उत्पन्न हुए किसी भी जीव की कोई विराधना न हो । उस समय जीवो की उत्पत्ति अधिक होती है । विहार की प्रक्रिया मे उनकी हत्या की सम्भावना से विहार नहीं करना चाहिये ।

**आहार पानीयकृते च गच्छेद्, ग्राह्यं च तत्प्रासुकमेषणीयम् ।**
**सत् श्रावकस्यैव गृहे परन्तु, देवे जलं वर्षति नैव यायात् ।।३२।।**

अन्वय:—आहारपानीयकृते च गच्छेत् । तत् प्रासुकम् एषणीयम् च सत् श्रावकस्य एव गृहे ग्राह्यम् । परन्तु देवे जलं वर्षति सति न एव यायात् ।

भावानुवाद:—साधु को गोचरी धोवण लाने के लिए उपाश्रय से बाहर जाना चाहिये । वह निर्दोष तथा एषणीय अच्छे श्रावक के गृह से लेना चाहिये । किन्तु यदि वर्षा हो रही हो तो, उस समय गोचरी के लिये नही जाना चाहिये ।

**वक्तव्यमेतत् श्रमणैः कदाचिदुद्वेजनं क्लेशकरं वचो नो ।**
**केशस्य लोचो नियतोविधेय , षड्मासमध्ये शमनप्रधानैः ।।३३।।**

अन्वय:—श्रमणैः कदाचित् उद्वेजन क्लेशकरम् च एतत् वचः नो वक्तव्यम् । शमनप्रधानैः (तै.) षड्मासमध्ये केशस्य नियतः लोचः विधेयः ।

भावानुवाद:—साधुओं को कभी उद्विग्नकारी क्लेशप्रद वचन नहीं बोलना चाहिये । शान्ति धारण करने वाले साधुओं को चाहिये, कि वे नियमरूप से ६ (छह) मास की अवधि में केश का लोच अवश्य ही करे ।

**पर्यूषणे पर्वणि धर्मधानम्, कार्यो यथाशक्ति तपोविशेषः ।**
**संवत्सरीपर्वदिने च जीवैः, क्षमापन सन्निखिलैविधेयम् ।।३४।।**

अन्वय:—पर्यूषणे पर्वणि धर्मधानम् (विधेयम्) यथाशक्ति तपोविशेषः कार्य. । संवत्सरीपर्वदिने च सन्निखिलैः जीवैः क्षमापन विधेयम् ।

भावानुवाद:—पर्यूषणपर्व पर अधिक धर्मध्यान होना चाहिये । यथाशक्ति विशेष तप करना चाहिये । संवत्सरीपर्व के दिन सम्पूर्ण विद्यमान जीवों से खमत खामणा अवश्य ही करनी चाहिये ।

**भोगाभिसक्ताः विषयाभिलाषाः, अज्ञानिनोऽमून् नियतं त्यजन्ति ।**
**परे समाधौ निरताः यताश्च, निरामयं मुक्तिपदं प्रयन्ति ।।३५।।**

अन्वयः—भोगाभिसक्ताः विषयाभिलाषाः अज्ञानिनः नियतं असून् त्यजन्ति । परे च समाधौ निरताः यताः निरामयं मुक्तिपदं प्रयन्ति ।

भावानुवादः—सांसारिक भोगों में लिप्त विषय वासना को चाहने वाले साधारण अज्ञानी लोग तो नियतरूप से अपने प्राणों को छोड़ते ही हैं। मरते हैं। किन्तु ज्ञानी समाधि में लीन हो, संयत हो, बाधा रहित सर्वोत्तम निर्द्वन्द्व मुक्तिपद को प्राप्त करते हैं।

**तपःकृशं कायमिति प्रबुध्य, रोगादियुक्तं च समाहितः सन् ।**
**संलेखना चैव तथा विदध्यात्, संस्तारकं वाशनपानहानम् ॥३६॥**

अन्वयः—समाहितः सन् तपःकृशं कायम् इति रोगादियुक्तम् च प्रबुध्य तथा च संलेखनाम् विदध्यात् वा अशनपानहानम् संस्तारकं (विदध्यात्) ।

भावानुवादः—भिक्षु या भिक्षुणी को जब यह प्रतीत हो जाता है, कि शरीर तपस्या आदि के कारण कृश हो गया है, अथवा रोगादि से दुर्बल हो गया है। संयम का निर्वाह असम्भव है। तब क्रमशः आहार पान का संकोच करता हुआ कषायों को कृश करें। और शरीर का त्याग करें। यही समाधिमरण है। इसे ही संलेखना कहते हैं। इसमें निर्जीव एकान्त स्थान में तृण शय्या बिछाकर आहारादि का त्याग करने से इसे संस्थारक (संथारा) भी कहते हैं।

**समाधिमृत्युं वृणुते मनस्वी, बुद्धोऽस्ति माध्यस्थ्ययुतो महात्मा ।**
**आसक्तिहीनः समभावयुक्तो, वीरोपदिष्टं वचनं महीयः ॥३७॥**

अन्वयः—(यः) आसक्तिहीनः, समभावयुक्तः माध्यस्थ्ययुतः महात्मा मनस्वी बुद्धः अस्ति (सः) समाधिमृत्युं वृणुते । एतत् वीरोपदिष्टं महीयः वचनम् ।

भावानुवादः—जो आसक्तिहीन समभावयुक्त, महात्मा, मनस्वी, प्रबुद्ध वीतराग धर्मानुयायी हैं, वे समाधिमृत्यु को प्राप्त करते हैं। पण्डितमरण मरते हैं। यह महत्वपूर्ण वचन श्रमण भगवान् महावीर के द्वारा निर्दिष्ट है।

**[illegible] नामयतेऽनगारः, सर्वत्र नैवास्ति ममत्वभावः ।**
**निरन्तरं महतो महीयान्, विमुक्तिमायाति पदं गरीयः ॥३८॥**

अन्वय:—त्रिरत्नपूत: महतो महीयान् यस्य सर्वत्र एव ममत्वभाव: न एव अस्ति । स अनगार: सन् महाव्रतं पालयते । गरीय: विमुक्तिपदं च आयाति ।

भावानुवाद: - सम्यक् ज्ञान दर्शन चरित्र से पवित्र सर्व महान् निर्मम सन्त महाव्रतो का पालन करते है । और सर्वश्रेष्ठ मोक्ष पद को प्राप्त करते उच्चकोटि के महामुनि ही मोक्षपद के अधिकारी होते है ।

**निर्ग्रन्थदेवे गुरुधर्मयोश्च, याचातिनिष्ठा ननु पक्ष एव ।**
**अनेन सावद्यकृतेर्विहिंसा, या: शुद्धिमान् पाक्षिकगेहयुक्त: ।।३९।।**

अन्वय:—निर्ग्रन्थदेवे गुरुधर्मयो: चया च अतिनिष्ठा ननुपक्ष: एव । अनेन (पक्षेण) सावद्यकृते: विहिसाया: शुद्धिमान् पाक्षिक: गेहयुक्त: (श्रावक:) (भवति) ।

भावानुवाद:—श्रावकों की समाचारी निम्न है, जो सदैव निर्ग्रन्थ गुरु तथा दया धर्म में अत्यन्त निष्ठावान् है । उसे सावद्यकृति हिसादि से शुद्धि वाला पाक्षिक श्रावक कहा जाता है । उपासक धर्म का प्रतिपादन तीन प्रकार से किया गया है:—(१) बारह व्रतों के आधार पर (२) ग्यारह प्रतिमाओं के आधार पर (३) तथा पक्ष, निष्ठा तथा साधन के आधार पर ।

**जीवादिहिंसाविरतोनयेन, स्वजीविकाया: समुपार्जकश्च ।**
**सर्वव्रतादिप्रतिमाभिरक्ष:, चर्यायुत: श्रावक उच्यते स: ।।४०।।**

अन्वय:—(य:) जीवादिहिमाविरत:नयेन स्वजीविकाया: समुपार्जक: च सर्वव्रतादिप्रतिमाभिरक्ष: सचर्यायुत: श्रावक: उच्यते ।

भावानुवाद:—जीवो की हिसा से विरत, न्यायपूर्वक अपनी जीविका चलाने वाला, बारह व्रतों तथा ग्यारह प्रतिमाओं का पालन करने वाला श्रावक अपनी चर्या मे निष्ठायुक्त होता है । अत: वह नैष्ठिक श्रावक कहलाता है ।

**न्यायेन, शीलेन, परिश्रमेण, युक्तं च वित्तार्जनमत्र लोके ।**
**संजायतेलौकिकशर्म तस्मात्, धनोपयोग: सुकृतो विधेय: ।।४१।।**

अन्वय:—अत्रलोके वित्तार्जनम् न्यायेन शीलेन परिश्रमेण च युक्तम् । तस्मात्

सांकिन्शर्म संजायते । सदा सुकृतौ धनोपयोगः विधेयः ।

भावानुवादः- इस संसार में न्याय से गृहस्थ का कर्तव्य बनता है कि सत्प्रवृत्ति (स्वभाव) से, परिश्रम से धन कमाना उचित है । धन से सांसारिक सुखों की प्राप्ति भी होगी । एवं परोपकार आदि से उनका व्यय होने से वह एकदम व्यर्थ भी नही है । इसलिए सदा धन का उपयोग पुण्यकार्यों में करना चाहिये ।

**अणुव्रतानि प्रथमानि पंच, त्रीण्येव सन्तीह गुणव्रतानि ।**
**शेषाणि चत्वारिच देशितानि, शिक्षाव्रतान्याप्तजनेन तानि ॥४२॥**

अन्वयः—आप्तजनेन प्रथमानि पंच अणुव्रतानि (तत्) त्रीणिइह गुणव्रतानि एव । तत् शेषाणि चत्वारि तानि शिक्षाव्रतानि देशितानि (सन्ति) ।

भावानुवादः—आप्तों के द्वारा श्रावक के १२ व्रतों में प्रथम पांच अणुव्रत हैं । उसके बाद के तीन गुणव्रत हैं । शेष चार शिक्षाव्रत माने गये हैं ।

**महाव्रतानां सविधे च बोध्यमणुव्रतानां लघुरूपमेतत् ।**
**महाव्रतं साधुकृते निदिष्टम्, अणुव्रतं श्रावकजीवनं तत् ॥४३॥**

अन्वयः—महाव्रतानां सविधे अणुव्रतानाम् एतत् लघुरूपम् च बोध्यम् । महाव्रतम् साधुकृते निदिष्टम् । तत् अणुव्रतं च श्रावकजीवनम् (अस्ति) ।

भावानुवादः—महाव्रतों के समक्ष अणुव्रतों का लघुरूप है । महाव्रत साधुओ के लिए है । अणुव्रत श्रावकों का जीवन है । साधु महाव्रत को पालते हैं । उनकी योग्यता उन्हे पालने की होती है । श्रावक लघुव्रतों को पालने मे ही समर्थ होते हैं ।

**यत्नेन नैजव्रतपालनेषु, प्रमादतोऽज्ञानवशेन जातु ।**
**विवर्जनीयानि च दूषणानि, वदन्ति ते तान्यतिचारकानि ॥४४॥**

अन्वयः—ते नैजव्रत पालनेषु अज्ञानवशेन प्रमादतः जातु तानि दूषणानि अतिचार-कानि वदन्ति । तानि यत्नेन विवर्जनीयानि ।

भावानुवादः—आप्तों से स्वकीयनियत व्रत पालने में अज्ञान के वश से या प्रमाद के कारण होने वाले नियत दोषों को अतिचार कहा गया है। लगे हुए अति-चारों को यत्न से दूर कर देना चाहिये। सावधानी से व्रत पाला जाय तो अतिचार नहीं लगते।

**प्रभूतवित्तं नहि रक्षणीय मुच्छिद्यते वृत्तिरतः परेषा—**
**मनर्थभूतं मदनाय शक्तम् तस्मान्नरः स्यादपरिग्रही च ॥४५॥**

अन्वयः—प्रभूतवित्त नहि रक्षणीयम्। अतः परेषाँ वृत्तिः उच्छिद्यते। अनर्थभूतं (तत्) मदनाय शक्तम्। तस्मान्नरः अपरिग्रही च स्यात्।

भावानुवादः—गृहस्थ को मर्यादा से अधिक धन नहीं रखना चाहिये। उसे आसक्ति का त्याग करना चाहिये। उससे दूसरों की जीविका का उच्छेद होता है। अन्य का भाग लेकर ही एक जगह धन एकत्र होता है। धन सभी अनर्थों का मूल है। वह मतवालापन तथा कामप्रवृत्ति का वर्धक है। इसलिए अधिक धनसंग्रह वर्जनीय माना गया है।

**अणुव्रतानां परिरक्षणार्थम्, विकासनार्थं च जिनेन्द्रमार्गे।**
**गुणव्रतानां विहिता व्यवस्था, सारल्ययुक्ता सुगमापिलोके ॥४६॥**

अन्वय.—अणुव्रतानि परिपालनार्थ जिनेन्द्रमार्गे विकाशनार्थं चलोके सारल्ययुक्ता सुगमा अपि च गुणव्रतानाम् व्यवस्था विहिता (अस्ति)।

भावानुवादः—अणुव्रतों की रक्षा के लिए, जिनेन्द्र मार्ग विकासहेतु लोक में सरल सरस, सुगम गुणव्रतो की व्यवस्था की गई है। अणुव्रतों की भावना की दृढता के लिए गुणव्रत आवश्यक हैं। (१) दिग्परिमाणव्रत (२) उपभोग परिभोग परिमाणव्रत (३) अनर्थ दण्ड विरमणव्रत तीन गुणव्रत है।

**अभ्यासपूर्वं धृतसद्व्रतानाम्, अभ्यासजात क्रियते विशेषः।**
**सत् श्रावकैरत्र पुनः पुनश्च, शिक्षाव्रतं तत्कथितं मुनीन्द्रैः ॥४७॥**

अन्वयः—अत्रसत् श्रावकैः धृतसद्व्रतानाम् अभ्यासपूर्वम् अभ्यासजातम् विशेषः पुनः पुनः क्रियते। तत् मुनीन्द्रैः शिक्षाव्रतम् कथितम्।

भावानुवादः—सम्यक् विशिष्ट श्रावकों के द्वारा धारण किये हुए जिन सत् व्रतों का विशेषरूप से पुनः पुनः अभ्यास किया जाता है। उन्ही को मुनीन्द्रों ने शिक्षाव्रत कहा है। जिस प्रकार विद्यार्थी गृहीत विद्या का पुनः पुनः अभ्यास करता है। उसी प्रकार श्रावकों को भी शिक्षाव्रतों का बार-बार अभ्यास करना चाहिये।

अन्ते सदाहारविवर्जकश्च, ध्यानेन शुद्धयात्मविशोधियुक्तः।
समेतुकामः कमनीयमुक्तिम्, स श्रावकः साधकनामधेयः ॥४८॥

अन्वयः—अन्ते सदाहारविवर्जकः ध्यानेन शुद्धयात्मविशोधियुक्तः कमनीयमुक्तिं समेतुकाम। स साधकनामधेयः श्रावकः (अस्ति)।

भावानुवादः—जीवन के अन्त में सदा आहार आदि का त्यागकर ध्यान शुद्धिपूर्वक आत्मशोधक कमनीय मुक्ति को प्राप्त करने की इच्छा वाला साधक श्रावक कहलाता है। श्रावक के १२ व्रतों का विधान शास्त्र सम्मत है। ग्यारह प्रतिमाएं होती है।

कषायनाशाय समाधिरूपा, हारादिपानादिविवर्जनेन।
तपोविशेषस्य च साधनार्थम्, संलेखना सा सकलावसाने ॥४९॥

अन्वयः—सकलावसाने कषायनाशाय आहारादिपानादिविवर्जनेन समाधिरूपा तपो विशेषस्य च साधनार्थं सा सलेखना (उच्यते)।

भावानुवादः—जीवन के अन्तिम समय में कषायों के नाश के लिए आहारपान का त्याग कर तपस्या विशेष के साधन के लिए समाधिरूप आराधना संलेखना कही जाती है। इसे शास्त्रीय परिभाषा में अपश्चिममारणान्तिक संलेखना कहते है। सलेखना का अर्थ है कषायादि को कृश कर सम्यक् आलोचनायुक्त तपस्या। समाधिपूर्वक मृत्यु का वरण करना।

शान्तेन चित्तेन विविक्तदेशे, शेते भवान्ते सकलं विहाय।
त्यजति देहं ममभावपूर्वम्, समाधिमृत्युः सकलैरभीष्टः ॥५०॥

अन्वयः—(संलेखक) भवान्ते सकलं विहाय। शान्तेन चित्तेन विविक्तदेशे शेते।

समभावपूर्वम् देह जहाति । सकलैः समाधिमृत्युः अभीष्टः (स्यात्) ।

भावानुवादः—सलेखना कर्ता इस सम्पूर्ण व्रत की समाप्ति पर सलेखना में सबको ज्ञात कर शान्तचित्त से एकान्त स्थान पर सोता है और समभावपूर्वक शरीर को त्यागता है । सभी को समाधि मृत्यु अभीष्ट होनी चाहिये । चित्त की प्रसन्नता तथा शान्ति के कारण संलेखना अथवा संथारा आत्मघात नही है ।

**आत्माविघाते मनसो न शान्तिः, संलेखनायां न कषाययोगः ।**
**साम्यस्य दृष्टः परमः प्रकर्षोऽत्रैवास्ति संस्तारकमेवमान्यम् ।।५१।।**

अन्वयः—आत्माविघाते मनसः शान्तिः न । संलेखनायां कषाययोगः न। अत्र एव साम्यस्य परमः प्रकर्षः अस्ति । अतः संस्तारकम् एव मान्यम् अस्ति ।

भावानुवादः—आत्महत्या मे मन को शान्ति नही मिलती है । संलेखना के मूल मे कषायों का प्रायःउपशमन रहता है । संलेखना में समभाव का परमोत्कर्ष होता है । यह आध्यात्मिक वीरता है । इसलिए यही मान्य है। जबकि आत्मघात कायरता का ही प्रतीक है ।

**ग्राह्यश्च कोऽपि प्रतिमाविशेषः, सत् श्रावकैर्ज्ञानविवृद्धये च ।**
**आद्या च सा सर्वगुणेषु भावः, ख्याता द्वितीया व्रतपालनाय ।।५२।।**

अन्वयः—सत् श्रावकैः ज्ञानविवृद्धये च कोऽपि प्रतिमाविशेषः ग्राह्यश्च । आद्या च सा सर्वगुणेषु भावः (अस्ति) । द्वितीया व्रतपालनाय (आख्याता) ।

भावानुवादः—प्रतिमा का अर्थ है नियमविशेषादि । श्रावक के लिए ग्यारह प्रतिमाएं है सच्चे श्रावकों को ज्ञान की विशेषवृद्धि के लिए प्रतिमा ग्रहण करना चाहिये । प्रथम प्रतिमा में सर्वगुण विषयक प्रीति होती है । दृष्टि गुणो की ओर जाती है । यह प्रतिमा दृष्टि विशुद्धता श्रद्धा की सच्चाई से सम्बन्ध रखती है । यह एक मास की होती है । दूसरी व्रत प्रतिमा है । इसमें शील-गुणविरमण, प्रत्याख्यान, व्रतादि की सम्यक् आराधना होती है। यह दो मास की होती है ।

**सामायिकी सा प्रतिमा तृतीया, समान आयो भवतीह सम्यक् ।**
**जीवेषु सर्वेषु समत्वभावादाराधकः स्वस्यविशुद्धभावः ।।५३।।**

अन्वय।—सा तृतीया प्रतिमा सामायिकी (अस्ति)। इह सर्वेषु जीवेषु समत्व-भावात् सम्यक् समान आयः भवति। अत्र आराधकः स्वस्थविशुद्धभावः (भवति)।

भावानुवादः—तीसरी प्रतिमा सामायिकी है। इसमें सभी जीवों पर समता का भाव होने से आत्मसाधना का समान लाभ होता है। इस आराधना में श्रावक स्वस्थविशुद्धभाव वाला होता है। इसमें सामायिक की सम्यक् आराधना होती है। यह तीन मास की होती है।

**चतुर्थरूपा ननु पौषधस्य, ग्राह्या विशेषः प्रतिमा तथान्या।**
**प्रपाल्यते सन्नियमो नयेन, सा पंचमी सद्गणपैर्निदिष्टा ॥५४॥**

अन्वयः—ननु पौषधस्य विशेषः चतुर्थरूपा प्रतिमा ग्राह्या (सापौषध) (प्रतिमास्ति)। तथा अन्यायत् नयेन नियमः प्रपाल्यते सा पंचमी प्रतिमा सद्गणपैः निर्दिष्टा।

भावानुवादः—पौषध का विशेष स्वरूप चतुर्थ प्रतिमा चार मास की मानी गई है उसे पौषध प्रतिमा कहते हैं। उससे अतिरिक्त पाँचवी कायोत्सर्ग प्रतिमा पाँच मास की है जिसमें न्यायपूर्वक श्रावक नियमो को पालता है। ऐसा संयमी गणधरो ने कहा है। पांच नियमः—(१) स्नान नही करना। (२) रात्रि भोजन परिहार (३) धोती की लांग नही लगाना (४) दिन मे ब्रह्मचर्यपालन (५) रात्रि में मैथुनमर्यादा।

**सचित्तभोज्यस्य न वर्जनं च, षष्ठात्मके तत्प्रतिमाविशेषे।**
**सद्ब्रह्मचर्यस्य समाश्रयेण, श्राद्धो विधत्ते निजकार्यजातम् ॥५५॥**

अन्वयः—षष्ठात्मके तत्प्रतिमा विशेषे सचित्तभोज्यस्य च वर्जनं न। सद्ब्रह्मचर्यस्य समाश्रयेण श्राद्धः निजकार्यजातम् विधत्ते।

भावानुवादः—छठी प्रतिमा ब्रह्मचर्य प्रतिमा है। इसमें श्रावक दिन को भांति रात्रि में भी ब्रह्मचर्य का पालन करता है। इसमें सर्वप्रकार के सचित्त आहार का परित्याग नही होता है। यह छह मास की होती है।

**सचित्तहानप्रतिमा विशिष्टा, स्यात्सप्तमीयं भगवन् निदिष्टा ।**
**नोत्यज्यतेऽल्पा कृषिकर्मजन्या, हिंसा च वाणिज्यभवाभवेस्मिन् ।।५६।।**

अन्वयः—भगवन्निदिष्टा इयम् विशिष्टा सप्तमी । सचित्तहानप्रतिमा निदिष्टा स्यात् । अस्मिन्भवे कृषिकर्मजन्या वाणिज्यभवा च अल्पा हिंसा च नो त्यज्यते ।

भावानुवादः—भगवान् महावीर द्वारा निदिष्ट विशिष्ट सातवीं प्रतिमा सचित्त त्याग प्रतिमा है । इसमें सचित्त आहार का परित्याग कर दिया जाता है; किन्तु कृषिकर्म से उत्पन्न तथा व्यापार आदि में होने वाली अल्पहिसा का त्याग नही किया जाता है । यह जघन्य एक दिन की तथा उत्कृष्ट सात मास की होती है ।

**आरम्भहानप्रतिमाष्टमीयमुपासको नारभते स्वयं च ।**
**परं परेषां करणस्य नैव, त्यागाय चेष्टां कुरुते कदाचित् ।।५७।।**

अन्वयः—इयम् अष्टमी (प्रतिमा) आरम्भहान (त्याग) प्रतिमा अस्ति (अत्र) । उपासकः स्वयं च न आरभते । परं परेषाँ करणस्य त्यागाय कदाचित् चेष्टाम् न एव कुरुते ।

भावानुवाद.—अ.ठवी आरम्भत्याग प्रतिमा है । इसमें उपासक स्वयं आरम्भ करने का त्याग कर देता ह; किन्तु दूसरों से आरम्भ करवाने का त्याग नही होता । यह जघन्य एक दिन । उत्कृप्ट आठ मास की है ।

**परिग्रहत्यागमयी प्रतिज्ञा समुद्यते यत्र न भक्तहानम् ।**
**द्वितीयनाम्नापि निदिश्यते सा, प्रेष्याऽऽपरित्यागमयी प्रतिज्ञा ।।५८।।**

अन्वयः—यत्र भक्तहानम् न समुद्यते । सापरिग्रहत्यागमयी प्रतिज्ञा (अस्ति) । सा प्रतिज्ञा प्रेप्याऽऽपरित्यागमयी इति द्वितीयनाम्नाअपि निदिश्यते ।

भावानुवादः—जिसमे अपने निमित्त से वने हुए भोजन का त्याग नहीं करता है । वह परिग्रह त्यागमयी प्रतिमा है । यह प्रेप्य परित्यागमयी प्रतिमा इस द्वितीय नाम से भी निर्दिप्ट की जाती है । यह कम से कम एक दिन तथा

अन्वयः—स श्रावकः साधुवेशे तिष्ठति । तथैव धर्मं प्रतिपालयन् सन् एव जीवनं यापयते । स ननु आत्मीयगेहे भिक्षते च ।

भावानुवादः—वह श्रावक साधु वेश में रहता है । उसी प्रकार का धर्म पालता हुआ अपना जीवन व्यतीत करता है । उसके लिए आत्मीय परिचितगृह में गोचरी मांगता है ।

**प्रारम्भतोऽन्त्यां प्रतिमां प्रयाति, श्राद्धोयदा सर्वगुणाः विशिष्टाः।**
**आयान्ति, दीक्षां वृणुयान्मनस्वी, तदन्यथा वा प्रतिमां धरेत ।।६२।।**

अन्वयः—श्राद्धः यदा आरम्भतः अन्त्यां प्रतिमाँ प्रयाति । (तदा) विशिष्टाः सर्वगुणाः आयान्ति । (ततः) मनस्वी दीक्षाँ वृणुयात् । तदन्यथा वा प्रतिमां धरेत ।

भावानुवादः—श्रावक जब प्रथम से लेकर अन्तिम प्रतिमा को प्राप्त कर लेता है; तो उसमें समस्त प्रतिमाओं के विशिष्ट गुण आ जाते हैं । उसके वाद अपनी शक्ति के अनुसार चाहे तो मुनिधर्म की दीक्षा ग्रहण कर सकता है । अन्यथा उसी प्रतिमा को धारण किये रह सकता है ।

**दानं च शुद्धं परिदेयमास्ते, कीर्तिप्रतिष्ठे नहि तेन साध्ये ।**
**वामेतरेण प्रहितं च गुप्तम्, वामो न बुध्येत भवेद् व्यवस्था ।।६३।।**

अन्वयः—शुद्धं च दानं परिदेयम् आस्ते । तेन कीर्तिप्रतिष्ठे नहि साध्ये । वामेतरेण यत् गुप्तं प्रहितम् । तत् वामो न बुध्येत, इति व्यवस्था (स्यात्) ।

भावानुवादः—न्यायोपार्जित शुद्ध धन का दान देना चाहिये । उससे कीर्ति तथा प्रतिष्ठा की लिप्सा नही करनी चाहिये । दाहिने हाथ से गुप्त रूप से दिये गये दान को वाम हाथ नहीं जाने । ऐसी प्रशस्त गुप्त दान की भावना होनी चाहिए । दत्तदान के विषय मे अन्य से कभी चर्चा नही करनी चाहिये । अर्थात् दान का प्रदर्शन नहीं होना चाहिये ।

**दीयेत यस्मै स महान्महात्मा, विशिष्टरूपेण महोपकारी ।**
**अहंकृति यत्र समेन चेतो, दानं न पूतं परिभावनीयम् ।।६४।।**

अन्वयः—यस्मै दीयते स महान् महात्मा विशेषरूपेण महोपकारी च (अस्ति)। यत्र (दाने) चेतः अहंकृति लभेत। तत् दानं पूतम् न परिभावनीयम्।

भावानुवादः—जिसके लिए दिया जाता है वह दान, पात्र—महात्मा विशेषरूप से दाता का उपकारी होता है। जिस दान में चित्त को अहंकार हो जाये वह दान पवित्र नहीं, ऐसा समझना चाहिये। दाता का दान पात्र पर कोई उपकार नही है। प्रत्युत दान पात्र जो दान स्वीकार करता है यह दाता के लिए महान् उपकार है।

**दानेन वित्तं न विनाशमेति, तत् वर्धते प्रत्युत सर्वभावैः।**
**नो न्यूनता चैव कदापि क्वापि, ज्ञात्वाच दानं परिकल्पनीयम् ॥६५॥**

अन्वयः—दानेन वित्तम् विनाशम् न एति। प्रत्युत सर्वभावैः तत् वर्धते। दानेन कदापि क्वापि न्यूनता नो। इति ज्ञात्वा च दानम् परिकल्पनीयम्।

भावानुवादः—दान देने से धन कभी नष्ट नहीं होता है। प्रत्युत बढ़ता ही है। दान से स्वप्न में भी कभी कोई कमी नहीं आती है। ऐसा जानकर शक्ति के अनुसार सदा दान देना चाहिये। दयादान धर्म ही श्रेष्ठ धर्म है।

विशेष टिप्पण:—पंचम महाव्रतधारी, विशेषसाधक, उत्कृष्ट सुपात्र की कोटि में गिने गये हैं। वैसे ही व्रतधारी श्रावक भी मध्यम श्रेणी के सुपात्र पद से विभूषित होते है। सम्यक्दृष्टि जीव वीतराग प्ररूपित सिद्धान्तों पर हेय, ज्ञेय, उपादेय की दृष्टि से परिपूर्ण आस्थावान् होता है। जीवन में यथाशक्ति यथा-स्थान देने का भी विचार श्रद्धारूप में चलता है। पर परिस्थितिवश व्रत अंगीकार नहीं कर सकता; फिर भी श्रद्धा की दृष्टि से छोटा सुपात्र की कोटि में प्रविष्ट होता है।

इनके अतिरिक्त जो दीन दुःखी असहाय हों, निःस्वार्थ भावना से उनके आर्त रौद्र ध्यान की स्थिति को मिटाने की भावना से उनकी सहायता करने वाला व्यक्ति भी अनुकम्पा के पात्र को ही पोषित करता है। भले वह कैसी ही अवस्था में क्यों न हो। अनुकम्पा दान का पात्र तो है ही। इस विषय का विवेचन ठाणांग सूत्रादि में उपलब्ध है। वैसे ही मरते हुए प्राणी के प्राणों की रक्षा करने वाला पुरुष भी अभयदान का दाता कहलाता है। इसलिए

शास्त्रकारों ने कहा है:- सब दानों में श्रेष्ठ यानि मृत्यु के भय से उनके प्राणों को बचा लेना अभयदान कहलाता है। ऐसे अभयदान को सब दानों में श्रेष्ठ माना गया ह। कहा भी है अभयदान सुपात्र दान देता हुआ जीव कर्मों की कोटि को विनष्ट कर उत्कृष्ट भावना की रसायन मे पहुच जाय तो तीर्थंकर नामक कर्म की सर्वोच्च उत्कृष्ट पुण्यप्रकृति को सम्पादित करता है। अथवा भव्यजनों को अपनी शक्ति के अनुसार श्रद्धाप्ररूपण एवं यथास्थान सव्यवहरण में भी लाना चाहिये। ताकि वीतराग के सत्यार्थ में उपासक कहा जा सके। (इति गुरुचरणाः)।

भद्रो मनुष्यो यदि शीलमन्त्रम्, ज्ञात्वाप्रयोगं कुरुते यथार्थ—
मानन्दपूर्तिर्हृदये च तस्य, विशिष्टजागर्तिमसौलभेत ॥६६॥

अन्वयः—भद्रः मनुष्यः यदि शीलमंत्रम् ज्ञात्वा तत्प्रयोगं यथार्थम् कुरुते। तस्य च हृदये आनन्दपूर्तिः (भवति)। असौ विशिष्टां जागर्तिम् च लभेत।

भावानुवादः—सज्जन पुरुष यदि शीलमन्त्र को भलीभांति जानकर उसका प्रयोग करता है; तो उसके हृदय में आनन्द की पूर्ति होती है। और वह विशिष्ट जागरण को भी प्राप्त करता है। अच्छा स्वभाव एक वशीकरण-मत्र के समान होता है।

संसारसम्पत्तिरपीह शीलम्, सत्पालनं सच्चरितस्यनूनम्।
मितन्न माहात्म्यमिदं विशालम्, समाश्रितः स्यान्ननु शीलधर्मः ॥६७॥

अन्वयः—इह शीलम् संसारसम्पत्तिः अपि (अस्ति)। सच्चरितस्य नूनम् सत्पालनम् च (अस्ति)। इदम् तस्य माहात्म्यं मितं न विशालम् (अस्ति)। अतः ननु शीलधर्मः समाश्रितः स्यात्।

भावानुवाद।—इस संसार में शील बहुमूल्य सम्पत्ति के समान है। वह नियत रूप से सदाचार का सम्यक् पालन है। उसकी यह महिमा अपरिमित एवं विशाल है। इसलिए सदा शीलधर्म का आश्रय लेना चाहिये।

असन्निवृत्या शुभकार्यवृत्तिः, न्यायेन वित्तस्य समार्जनंस्यात्।
कस्यापि जीवस्य च पीडनं नो, शान्तः स्वभावः परिपालनीयः ॥६८॥

[illegible]न्वयः—असत् निवृत्या शुभकार्यवृत्तिः न्यायेन वित्तस्य समार्जनं स्यात् । कस्य अपि जीवस्य च पीडनं नो । शान्तः स्वभावः परिपालनीयः (स्यात्) ।

भावानुवादः—बुरे कार्यों को छोड़कर अच्छे कार्यो में प्रवृत्ति करना, न्यायपूर्वक आवश्यकतानुसार धन का अर्जन करना, किसी भी जीव को पीड़ा नहीं देना, तथा सदा शान्तस्वभाव धारण करना ये महत्त्वपूर्ण गुण हैं । अतः इस विषय में सतत सावधान रहना चाहिये ।

मर्यादया चैव विधानजातम् क्वचिन्न पापं व्यसनं विधेयम् ।
दयालुभावः परिपालनीयः, सर्वेषु जीवेषु समत्वयोगैः ॥६९॥

अन्वयः—मर्यादया च एव विधानजातम् (सम्पादनीयम्) क्वचित् पाप व्यसनं न विधेयम् । सर्वेषु जीवेषु समत्वयोगैः दयालुभावः परिपालनीयः ।

भावानुवादः—सभी कार्य मर्यादा से ही करने चाहिये । कहीं कोई पाप या बुरी आदतें नही डालनी चाहिये । सभी जीवों पर समत्व योग से दया का भाव रखना चाहिये । मन वचन और काया से जीवों पर दया करनी चाहिये ।

तपोऽग्नितापेनसुतप्तजीवः, सुवर्णतुल्यो विभयापरीतः ।
संराजते कल्मषपंकहीनः, समेति शान्तिं शमनैकवृत्तिः ॥७०॥

अन्वयः—तपोऽग्नितापेन सुतप्तजीवः, विभया परीतः सुवर्णतुल्यः कल्मशपकहीनः (भूत्वा) संराजते । शमनैकवृत्तिः (सन्) शान्तिं च समेति ।

भावानुवादः—तपस्या की आग से तपा हुआ जीव शोभा सम्पन्न हो सोने के समान चमक उठता है । उसमें शान्ति की वृत्ति का उदय होने से विशिष्ट शान्ति भी पाता है ।

तपस्वी तपोहंकृतिभावशून्यः, समर्जयन् शान्तिकरीं च शक्तिम् ।
स्वं हि लोकस्य विधातुकामो, जयेन्निजं प्राक् विततप्रयत्नैः ॥७१॥

अन्वयः—यः तपस्वी अहंकृतिभावशून्यः शान्तिकरीं च शक्तिं समर्जयन् लोकस्य स्वं विधातुकामः प्राक् विततप्रयत्नैः निजं जयेत् ।

भावानुवाद:– अहंकारशून्य तपस्या करके शान्तिकारिणी शक्ति को प्राप्त कर लोक में विजय प्राप्त करने की इच्छा से सर्वप्रथम अनेक सफल प्रयत्नों से स्वयं पर विजय प्राप्त करता आवश्यक है। जब तक आत्मविजय नहीं। तब तक अन्य विजय असम्भव ही है।

**संकल्पशक्तिर्जयिनीमतेयम्, दुःखस्य हानिः सततं यथैव ।**
**सर्वस्य कार्यस्य समग्रसिद्धि, स्तस्या सदासंश्रयण विधेयम् ।७२॥**

अन्वयः—इयम् संकल्पशक्तिः जयिनी मता। यया एव सततं दुःखस्य हानिः (जायते) तथा एव सर्वस्य कार्यस्य समग्रसिद्धिः (भवति)। अतः तस्याः सदा संश्रयणं विधेयम्।

भावानुवाद:—संकल्पशक्ति जयशालिनी होती है। दृढ़ प्रतिज्ञा का भाव होना चाहिये। उससे सदा दुःख दूर होते है। सभी कार्यो की समग्र सिद्धि भी होती है। इसलिए उस संकल्प सिद्धि का सदा समाश्रयण करना चाहिये। साधना के लिए संकल्पशक्ति का होना आवश्यक है।

**न कापि हानिर्भवभीतिरेवम्, पलायते सर्वत एव सर्वा ।**
**एकाग्रतां प्राप्य सदा विधेयः, कार्योपयोगे मनसो निरोधः ॥७३॥**

अन्वयः—कापिहानिः न। एवम् सर्वाभवभीतिः सर्वत्र एव पलायते। एकाग्रतां विधाय कार्योपयोगे मनसः निरोधः सदा विधेयः।

भावानुवाद:—उससे कोई हानि नहीं होती। इस प्रकार सभी संसार के भय पूर्णतया दूर हो जाते हैं। इसलिए चारों ओर से एकाग्रता कर कार्य के उपयोग में सदा मन का निरोध करना चाहिये। मन भव बन्धन का कारण भी होता है। और मुक्ति का भी उसी से बन्ध तथा मोक्ष प्राप्त होता है। इसलिए कहा जाता है, कि "जगत्जितं केन"। जगत् को किसने जीता? "मनोजित येन" मन को किसने जीता?

**अवसानेआर्याछन्दः—**

**सामाचारी कथिता, जिनप्रदिष्टेन शुद्धमार्गेण ।**
**तस्याश्चरणं कार्यम्, विमुक्तिपथगामिभिर्मनुजैः ॥७४॥**

अन्वयः—जिनपतिदर्शितेन शुद्ध मार्गेण सामाचारी कथिता। अतः विमुक्तिपथ गामिभिः मनुजैः तस्याः आचरणम् कर्तव्यम्।

भावानुवादः—जिनेश्वर के दिखाये मार्ग से सामाचारी का कथन किया गया है इसलिए विमुक्ति मार्ग पर चलने वाले मनुष्यों को चाहिये कि वे उक्त सामाचारी का जीवन में आचरण करें। यहीं प्रथम साधु सामाचारी का तथा बाद में श्रावकसामाचारी का निर्देश किया गया है।

सामाचारी नामधेयः सप्तदशसर्गः समाप्तः।

श्रीमज्जवाहरयशोविजयाभिधाने,
　　नानेशसच्चरणयोः शरणावधाने।
श्री चन्द्रमौलिकविनिर्मितसत्प्रबन्धे,
　　पूर्णोऽभवच्चरणसप्तदशोऽपिसर्गः ॥७९॥

## "ईश्वरजगत्कर्तृत्वनिरास:"

### अष्टादश: सर्ग:—

(वियोगिनी छन्द:)

तव सृष्टिकरोयदीश्वरो, बहुभेदोपिच दृश्यते कथम् ।
ननु कोपि सुखी विपन्नतां, भजते, कोपि धनी चनिर्धन: ॥१॥

अन्वय:—यदि तव सृष्टिकर्ता: ईश्वर: अस्ति । इह बहुभेद: अपि च कथं दृश्यते । ननु क। अपि सुखी तथा कोपि विपन्नतां भजते । क: अपि धनी क: अपि निर्धन: च (अस्ति) ।

भावानुवाद:—यदि ईश्वर सृष्टिकर्ता है, तो यहां इस संसार में ये अनेक भेद क्यों दिखाई देते है । कोई सुखी, कोई दु:खी कोई धनी तो कोई निर्धन क्यों है ? समभावी ईश्वर के सृष्टिकर्ता होने पर तो ऐसी विषमता नहीं होनी चाहिये ।

समदृष्टिरसौ निरूपित:, कथथ सत्यमिदं न रोचते ।
कथमुन्नतनिम्नगा: नरा:, परत: सन्ति, दयालुनिर्दया: ॥२॥

अन्वय:—असौ समदृष्टि: निरूपित: इदं कथनं सत्यं न रोचते । तदा एकत: उन्नतनिम्नगा: नरा: कथम् ? परत: दयालुनिर्दयाश्च कथम् सन्ति ।

भावानुवाद:—यदि सृष्टिकर्ता ईश्वर समदृष्टि माना गया है, तो यह कथन सत्य एवं रुचिकर नहीं लगता है । तब क्यों तो कोई मनुष्य ऊंचे हैं क्यों नीचे हैं। कोई दयालु हैं तो कोई निर्दय क्यों हैं । समदृष्टि की रचना में विषमता का क्या काम है ?

कुरुते निजभक्तरक्षणम्, मुदमेषां वितनोति नित्यश: ।
परिपन्थिजनाय यच्छति, विकरालं विधुरं विभायक: ॥३॥

अन्वयः—सः निजभक्तरक्षणं कुरुते । एवम् निस्पृहः सुखं वितनोति । विरोधकः (च) परिपन्थिजनाय विकरालं विधुरं यच्छति (इत्यपि नो वरम्) ।

भावानुवाद:—वह परमात्मा अपने भक्तों की रक्षा करता है और उन्हें सुख रखता है और भय प्रदाता बनकर शत्रुओं एवं अपने विरोधियों को भयानक कष्ट देता है। रागद्वेष से ईश्वर उचित कैसे माना जा सकता है। क्योंकि परिणति ईश्वरत्व की बाधिका है।

प्रियचाटुकरोस्ति सर्जकः, कथमास्तां करणीयनिस्पृहः ।
समयोप्ययमेवनिश्चितः, स न धत्ते च कदापि सर्जनम् ॥४॥

अन्वयः—(जैनः) (तदा) सर्जकः (ईश्वरः) प्रियचाटुकरः अस्ति । निस्पृहः (सन्) करणाय कथम् आस्ताम् । (ततः) अयमेवं समयः निश्चितः : स च कदापि सर्जनं न धत्ते ।

भावानुवाद:—पूर्वोक्त गुणों के कारण यह सिद्ध होता है कि वह ईश्वर चाटुकारी पसन्द करता है। यदि वह निस्पृह है, तो सृष्टि के कार्य में क्यों कर प्रयत्नशील होता है। इन्हीं कारणों से जैन मत में यह सिद्धान्त निश्चित है कि कोई ईश्वर सृष्टि का कर्ता नहीं है।

स्वकर्मनिदानतो नृणाम्, ददते शान्तिसुखादिकं फल—
मुचितं कथनं न दृश्यते, किमुजीवेषु च कर्म संगतम् ॥५॥

अन्वयः—प्रथमं खलु जीवनिर्मितौ एषा कृतिः (कर्म) कुतः आगता इति वदेः। करणेन एव विना च कर्मणाम् जनिः एव कथं च जायताम् ?

भावानुवादः—यह विचारणीय है कि सर्वप्रथम जीव के निर्माण में कर्म कहां से आ गया। जबकि उस समय कोई क्रिया ही नहीं हुई तो कर्म की उत्पत्ति ही कैसे हो सकती है ?

**पृथुतेन च कर्म निर्मितम्, ननु हीनं भवजीवपीडकम् ।**
**इदमस्ति च कोपनं प्रभोः, पतनं स्याद् यदि दुःखसम्पदाम् ।।७।।**

अन्वयः—तेन (ईशेन) च पृथुकर्म निर्मितं। (तदा) भवजीवपीडकम् तत् (कर्म) ननु हीनम्। यदि दुःखसम्पदाम् पतनं स्यात्। (तदा) प्रभोः इदम् कोपनं च अस्ति।

भावानुवादः—उस ईश्वर ने यदि विभिन्न प्रकार के कर्म बनाये हैं, तो संसार के जीवों को पीड़ित करने वाले कर्म क्यों बनाएं हैं ? यदि मनुष्यों पर दुःख पड़ते हैं, तो यह ईश्वर का कोप ही मानना चाहिये।

**वितथ च वृथा प्ररूपणम् करणीयं न मुधा प्रतारणम् ।**
**विदधाति च सृष्टिमीश्वरः, सदिग्धं मतमेव केवलम् ।।८।।**

अन्वयः—(त्वदीयम्) प्ररूपणम् वितथं वृथा च। मुधा प्रतारणं न करणीयम्]। ईश्वरः च सृष्टि विदधाति इति मतम् केवल संदिग्धम् एव (अस्ति)।

भावानुवादः—ईश्वर वादी का ऐसा प्ररूपण असत्य तथा व्यर्थ है। व्यर्थ में जन सामान्य को नहीं ठगना चाहिये। ईश्वर सृष्टि करता है। यह मत पूर्णरूप से भ्रान्त है। अर्थात् सन्देह से भरा हुआ है अतः त्याज्य है।

**कुरुतेऽखिलजीवसर्जनम्, यदि कर्माश्रितिदण्डपूर्वकम् ।**
**कुलटजननिर्मितिः कथम्, व्यभिचारस्यविवर्धनं यतः ।।९।।**

अन्वयः—यदि (ईश्वरः) कर्माश्रिनिदण्डपूर्वकम् अखिलजीवसर्जनम् कुरुते। यतः व्यभिचारस्य विवर्धनं (ना) कुलटाजननिर्मितिः कथम् (कृता) ?

भावानुवादः—यदि ईश्वर कर्म का आश्रय लेकर दण्डपूर्वक सम्पूर्ण जीवों की सृष्टि करता है, तो जिससे व्यभिचार की ही वृद्धि होती है ऐसी वेश्या की सृष्टि किसलिए की ।

कुरुते यदि सास्वयं तथाऽखिलबोधत्वपलायनं तदा ।
रचनं परिबुध्य तस्य तत्, हतकर्मैव कथं न कथ्यताम् ।।१०।।

अन्वय.—सा (कुलटा) तथा स्वयं यदि कुरुते । तदा (तस्य) अखिलबोधत्वपलायनम् (जातम्) । तस्य तत् रचनं परिबुध्य (कृतम्) । तत् हतकर्म एव कथम् न कथ्यताम् ?

भावानुवादः—वह वेश्या यदि स्वाधीनता से अनर्थ कार्य करती है, तो ईश्वर का सर्वज्ञत्व एव सर्वकर्तृत्व नष्ट हो गया । यदि जानकर ईश्वर ने वेश्या का निर्माण किया है । तब उसका यह कार्य नीच हो क्यो नहीं कहा जाय ? अर्थात् यह सारा दोष ईश्वर पर ही आ जाता है ।

विनिहन्ति सदैव निर्दयो, दुरितो ना ननु निर्मितः कथम् ।
परिबोधयुतस्य शंसिता, कृतिरेषा नहि मानमर्हति ।।११।।

अन्वयः—निर्दयः ना सदा एव विनिहन्ति । ननु दुरितः (सः) कथं निर्मितः । परिबोधयुतस्य एषा कृतिः शंसिता (सती) मानम् नहि अर्हति ।

भावानुवादः—निर्दय मनुष्य सदा जीवों की हिसा करता रहता है, तो वैसे पापी मनुष्य को ईश्वर ने क्यो उत्पन्न किया ? ज्ञानी होने पर भी ऐसा अज्ञानी के समान किया गया कर्म कभी प्रशसित होकर मान्य नहीं हो सकता है ।

प्रभुरिष्टबोधोऽनुसारतः, परिघाती ननुघातमाचरेत् ।
ववदत्र सदोषघातुकः, ननु दोषोऽस्ति निदेशकारिणः ।।१२।।

ईश्वर के आदेशानुसार ही प्राणिघात करता है। फिर इसमें घातक का कोई दोष नहीं है, दोष तो केवल आदेश देने वाले ईश्वर का ही है।

**भगवान् हरणाय नोदको, धनिकस्यैवच कर्मयोगतः ।**
**लभते फलमत्र हारकः स्खलनं कस्य फलं च कस्यचित् ।।१३।।**

अन्वयः—भगवान् धनिकस्य एव च कर्म योगतः हरणाय नोदकः (अस्ति)। हारक. अत्र फलं लभते। कस्य स्खलनं फलं च कस्यचित् (अस्ति)।

भावानुवादः—भगवान धनी के ही कर्म योग के कारण चोर को उसके धन को चुराने की प्रेरणा देते हैं। और चोरी करने का दण्ड चोर को मिलता है। यह महान् अनर्थ है। गल्ती तो ईश्वर की है और चोरी करने का दण्ड चोर को मिलता है। यह महान् अनर्थ ही तो है। गल्ती तो ईश्वर की है और दण्ड चोर को मिलता है। यहां तो यह उक्ति चरितार्थ है "करे कोई भरे कोई"।

**घटते भगवान्दयानिधिः विहितास्ते किमु तापकारिणः ।**
**अवनं जगतो न जायते, ध्रुवमत्रास्ति कृता प्रतारणा ।।१४।।**

अन्वयः—भगवान दयानिधिः घटते। (तत्) ते तापकारिणः किमु विहिताः। (सन्ति) जगतः अवनं न जायते। अत्रध्रुवम् प्रतारणा कृता अस्ति।

भावानुवादः—दयानिधि भगवान् जगत की रक्षादि की चेष्टा करते हैं, तो दुःख देने वाले दुष्ट नीचों की सृष्टि ही क्यों की। उसके द्वारा जगत की रक्षा तो होती नही। प्रत्युत विनाश ही होता है। क्या यह स्पष्ट रूप से प्रतारणा नहीं है।

**घटमध्यभवो यदीश्वरः, कुरुते पापमितो न पापकाः ।**
**लभते फलमत्र कारकः, परमेषा क्वच नीतिरीदृशी ।।१५।।**

अन्वयः—यदि ईश्वर घटमध्यभवः (तदा स एव) पापम् कुरुते। इतः पापकाः (पापम्) न (कुर्वते)। कारकः अत्र फलं लभते। परम् एषा ईदृशी नीतिः क्व

क्व (वर्तते) ?

भावानुवाद:—यदि ईश्वर सब घट वासी है। तब सारा पाप वही करता है, कराता है। करने वाला स्वतः कोई पाप नहीं करता है, किन्तु पाप का फल करने वाले को मिलता है, न कि कराने वाले ईश्वर को। तो यह कहाँ की नीति है ?

**सततं स्थितिमांश्च मानसे, यदिदेवस्तव सर्वजीविनाम् ।**
**नहि जन्तुरुपैति तन्त्रताम्, परतन्त्रश्च तदा स मानवः ॥१६॥**

अन्वयः—यदि तव देवः सर्वजीविनाम् मानसे स्थितिमान् च अस्ति। (तदा) जन्तुः (स्व) तन्त्रताम् नहि उपैति। तदा स मानवः परतन्त्रः च (एव)।

भावानुवादः—यदि सृष्टिकर्ता वह एक ही ईश्वर सभी प्राणियों के मन में सदा रहता है, तो जीव स्वतन्त्र नहीं है। और वैसी स्थिति में कोई भी प्राणी पूर्ण-रूप से पराधीन ही है।

**मयि वर्तत एवमीश्वरः अहमेवं च करोमि खण्डनम् ।**
**विदधाति स्वय स तत्कृतिम्, मम दोषो न कदापि विद्यते ॥१७॥**

अन्वयः—ईश्वरः मयि वर्तत एव। अहम् एवं च (तस्य) खण्डनम् करोमि। स तत्कृतिम् (खडनं) स्वयं विदधाति। (अत्र) मम दोषः कदापि न विद्यते।

भावानुवादः—मुझ में ईश्वर है। और मैं ही उसका खण्डन भी करता हूं तो क्या वही ईश्वर अपना खण्डन स्वयं करता है। और इस प्रकार में मेरा दोष कुछ भी नहीं होगा।

**मम दूषणमत्र विद्यते, ननु नामास्ति न तस्य मण्डनम् ।**
**करणाय समर्थनं कुतः, रचनायाः वद संजनिष्यते ॥१८॥**

अन्वयः—यदि अत्र मम दूषणं विद्यते। ननु न तस्य (ईश्वरस्य) मण्डनम् नाम अस्ति। रचनायाः करणाय कुतः समर्थनं जनिष्यते इति वद।

भावानुवादः—यदि इस विषय में मेरा दोष है कि मै उस ईश्वर का खण्डन करता हूं। तब उस ईश्वर का समर्थन भी नहीं किया जा सकता। जब वह है ही नहीं। तब वह संसार की रचना करता है। ऐसा कथन सत्य कैसे होगा ? ईश्वर वादी स्वयं ही विचार करें।

मनुते यदि तन्निराकृतिः, कुरुते सृष्टिविधिं विधानतः।
शशशृंगमिवास्ति तद्वचः, मतमेतन्न कदापि मन्यताम् ॥१९॥

अन्वयः—यदि तन्निराकृतिः विधानतः सृष्टिविधि कुरुते। इति मनुते (ईश्वर-वादी) तद् वचः शशशृंगम् इव अस्ति। एतत् मतम् कदापि न मन्यताम्।

भावानुवादः—यदि ईश्वरवादी यह मानते; कि ईश्वर आकार के बिना ही विधानपूर्वक सृष्टि करता है, तो यह कथन शशशृंग खरगोश से सिग के समान असम्भव है। ऐसे ईश्वर कर्तृत्व को कभी नहीं माना जा सकता है।

सकलांग चयैर्विवर्जितः, विवशश्चेति विधातुमेव स।
"जननी विफला च मान्यता", नहि मन्तुं मनुजैश्च पार्यते ॥२०॥

अन्वयः—स (ईश्वरः) सकलांगचयैः विवर्जितः विवशः विधातुम् एव च एति। इति जननी विफला च मान्यतामनुजैः च मन्तुं नहि पार्यते।

भावानुवा:द—"वह ईश्वर सभी दैहिक अंगों से रहित होने से विवश है फिर भी जगत् का निर्माण करता ही है। यह कथन तो 'माता बन्ध्या है इसके तुल्य ही है। भला ऐसे सिद्धान्त को समझदार मनुष्य कैसे स्वीकार कर सकते हैं ?

मतमेव न मान्यतां व्रजेत्, विपरीतं सकलं प्ररूपणम्।
मतिमान्न कदापि मंस्यते लपितं मूलविहीनमत्र यत् ॥२१॥

अन्वयः—(ईश्वर वादी) मतम् एव न मान्यतां व्रजेत्। सकलं प्ररूपणम् विपरी-तम् (अस्ति)। अत्र यत् मूलविहीनम् लपितम् (तत्) मतिमान् न कदापि मंस्यते।

भावानुवादः—इस विषय में ईश्वरवादी का मत सर्वथा अमान्य है। उसका सभी प्ररूपण विपरीत है। इस विषय में जो भी निर्मूल कथन किया गया है। उसे बुद्धिमान् कभी नही मानेंगे।

यदिरोचिरतीव दृश्यते, विततं तस्य महामहीयसः।
विहितं च तदानिराकृतेः, स्वयमेवं च विखण्डनं ततः ॥२२॥

अन्वयः—तस्य महामहीयसः यदि अतीव विततं रोचिः दृश्यते। तदा च निराकृतेः ततः स्वयमेव च विखण्डनम् विहितम्।

भावानुवादः—यदि महामहिमा शाली ईश्वर का अत्यन्त विस्तृत प्रकाश दिखाई देता है। तब उसके निराकार का कथन अपने आप खण्डित हो जाता है। अर्थात् निराकार का प्रकाश नहीं हो सकता।

यदि जीवचयः स्वतन्त्रताम्, गतवानीश्वर आशु हीनताम्।
गतएव तदा तु मन्यताम्, परिबोधोऽपि न तत्र सम्भवेत् ॥२३॥

अन्वयः—यदि जीवचयः स्वतन्त्रताम् गतवान् (तर्हि) ईश्वरः आशु हीनताम् गत एव। तदा तु परिबोधोऽपि न तत्र सम्भवेदिति मन्यताम्।

भावानुवादः—यदि ईश्वर के होते हुए भी जीव कार्य करने में स्वतन्त्र है; तो ईश्वर शक्तिहीन हो गया। तब तो उस ईश्वर में सर्वज्ञता भी सम्भव नहीं होगी यही स्वीकार करना चाहिये।

स दयालुरहो न सिध्यति, सकलं वेत्तिनमन्यतां क्वचित्।
शठतुल्यमसौ समाचरेत्, जनमानं विदधीत केवलम् ॥२४॥

अन्वयः—असौ (ईश्वरः) शठतुल्यं समाचरेत्। केवलं जनमानं च विदधीत। तदा दयालुः न सिध्यति। क्वचित् सकलं न वेत्ति इति मन्यताम्!

**घटसंवनस्य मान्यता स्वत एवेतिच खण्डिताऽधुना ।**
**समदृष्टिगुणोऽपि नैवहि परिपालोऽपि न सम्भविष्यति ।।२५।।**

अन्वयः—अधुना (तस्य) घटसंवसनस्य मान्यताइति स्वत एव च खण्डिता । समदृष्टिगुणः अपि न एवहि । तदा परिपालः अपि न सम्भविष्यति !

भावानुवादः—पूर्वप्रतिपादित दृष्टान्तों से वह घट-घट वासी अन्तर्यामी है । इस मान्यता का स्वतः खण्डन हो जाता है । इस प्रकार वह समदृष्टि भी सिद्ध नही होता और वह रक्षक भी नहीं रह जाता है । क्योंकि वहाँ विशेषणों की संगति नही है ।

**कथमत्र विकारशून्यता परिदृश्यापि च तत्र जायताम् ।**
**यदि कर्तृपदंगमिष्यति, खलुनो पूर्वगुणोभविष्यति ।।२६।।**

भावानुवादः—(ईश्वरः) यदि कर्तृपदं गमिष्यति तदा परिदृश्यापि विकारशून्यता अत्र कथं जायताम् । तदा ननु पूर्वगुणः (अपि नो भविष्यति) ।

भावानुवादः—यदि ईश्वर को जगत् का कर्ता मानेगे तो आपके द्वारा देखी हुई भी विकारशून्यता की सिद्धि उसमें कैसे होगी ? ऐसी स्थिति में तो आपने पूर्व में जितने भी उसके गुणों की गणना की है । वह भी सिद्ध नहीं होती है ।

**परिदूषणपूर्णतेश्वरे, यदि कर्तृत्वमतो जनिष्यते ।**
**अत एव च जीवकर्तृता, परिसाध्या नहि कर्तरीश्वरे ।।२७।।**

अन्वयः—अतः तत्र यदि कर्तृत्वं जनिष्यते (तदा) ईश्वरे च परिदूषणपूर्णता (जायते) । अत एव कर्तरि ईश्वरे जीवकर्तृतापरिसाध्या नहि ।

भावानुवादः—इस प्रकार से यदि ईश्वर में कर्तापन होगा तो उसमे दोषों की बहुलता ही होगी । इसलिए आपके द्वारा मान्य संसार के कर्ता ईश्वर में जीवो की कर्तृता की सिद्धि नही करनी चाहिए ।

**स्वयमेव विपंचमास्थितो, रचयित्वा जगदीश्वरो वृथा ।**
**न बभूव विशेषलम्भनो, विततैर्मायनजालतानकैः ।।२८।।**

अन्वयः—ईश्वरः जगत् वृथा रचयित्वा एवम् एव विपंचम् आस्थितः। विततैः मायनजालतानकैः विशेषलम्भनी न बभूव।

भावानुवादः—ईश्वर जगत् को रचकर व्यर्थ के प्रपच मे पड़ गया। फैले हुए मायाजालों से उसे लाभ कुछ भी नहीं हुआ। केवल उसने अपने पर बवाल ही मोल लिया।

इति वागपि नैव सगता, अहमेवं बलशालिसर्जकः।
मम सत्वमिदं विलोक्यताम्, भवमाया निखिला दुरत्यया ॥२९॥

अन्वयः—अहम् एवम् बलशालिसर्जकः। इदम् मम सत्व विलोक्यताम्। मम भव-माया निखिला दुरत्यया इति वाग् अपि सगता न एव।

भावानुवादः—और इस प्रकार मैं ही एकमात्र बलवान्, जगत् निर्माता हूं, यह मेरा बल देखो। मेरी संसार की सम्पूर्ण माया जानी नही जा सकती है। यह कथन भी संगत नही ठहरता है।

अभिमानवचः स्वनिर्मितौ, सृतिजालं विततं भवान्तरे।।
रचनं सनिदानमत्र किम् ? प्रतिभाता तदकर्तृका सृतिः ॥३०॥

अन्वयः—भवान्तरे सृतिजालम् वितत (वर्तते)। इतिस्वनिर्मितौ अभिमानवचः (नयुक्तम्) अत्र सनिदानम् रचनम् किम् ? सृतिः तदकर्तृका प्रतिभाता !

भावानुवादः—लोक लोकान्तरों में सृष्टि फैली हुई है। ऐसा अपने निर्माण मे इस प्रकार का अभिमान का वचन संगत नही है। प्रश्न यह होता है कि यह सृष्टि किस कारण से की गई ? इसका क्या उद्देश्य है ? जान पड़ता है कि उद्देश्य विहीन होने से यह ईश्वर के द्वारा निर्मित नही है।

निजनिर्मितवस्तुसम्पदाम्, हरण तस्य न साधु मन्यताम्।
विषवृक्षमपोह यत्नतः परिसंवर्ध्य न छेत्तुमर्हति ॥३१॥

**घटसंवनस्य मान्यता स्वत एवेतिच खण्डिताऽधुना ।**
**समदृष्टिगुणोऽपि नैवहि परिपालोऽपि न सम्भविष्यति ॥२५॥**

अन्वयः—अधुना (तस्य) घटसंवसनस्य मान्यताइति स्वत एव च खण्डिता । समदृष्टिगुणः अपि न एवहि । तदा परिपालः अपि न सम्भविष्यति !

भावानुवादः—पूर्वप्रतिपादित दृष्टान्तों से वह घट-घट वासी अन्तर्यामी है । इस मान्यता का स्वतः खण्डन हो जाता है । इस प्रकार वह समदृष्टि भी सिद्ध नही होता और वह रक्षक भी नहीं रह जाता है । क्योंकि वहाँ विशेषणों की संगति नही है ।

**कथमत्र विकारशून्यता परिदृश्यापि च तत्र जायताम् ।**
**यदि कर्तृपदंगमिष्यति, खलुनो पूर्वगुणोभविष्यति ॥२६॥**

भावानुवादः—(ईश्वरः) यदि कर्तृपदं गमिष्यति तदा परिदृश्यापि विकारशून्यता अत्र कथं जायताम् । तदा ननु पूर्वगुणः (अपि नो भविष्यति) ।

भावानुवादः—यदि ईश्वर को जगत् का कर्ता मानेगे तो आपके द्वारा देखी हुई भी विकारशून्यता की सिद्धि उसमें कैसे होगी ? ऐसी स्थिति में तो आपने पूर्व में जितने भी उसके गुणों की गणना की है । वह भी सिद्ध नहीं होती है ।

**परिदूषणपूर्णतेश्वरे, यदि कर्तृत्वमतो जनिष्यते ।**
**अत एव च जीवकर्तृता, परिसाध्या नहि कर्तरीश्वरे ॥२७॥**

अन्वयः—अतः तत्र यदि कर्तृत्वं जनिष्यते (तदा) ईश्वरे च परिदूषणपूर्णता (जायते) । अत एव कर्तरि ईश्वरे जीवकर्तृतापरिसाध्या नहि ।

भावानुवादः—इस प्रकार से यदि ईश्वर में कर्तापन होगा तो उसमें दोषों की बहुलता ही होगी । इसलिए आपके द्वारा मान्य संसार के कर्ता ईश्वर में जीवो की कर्तृता की सिद्धि नहीं करनी चाहिए ।

**स्वयमेव विपंचमास्थितो, रचयित्वा जगदीश्वरो वृथा ।**
**न बभूव विशेषलम्भनो, विततैर्मायनजालतानकैः ॥२८॥**

अन्वयः—ईश्वरः जगत् वृथा रचयित्वा एवम् एव विपंचम् आस्थितः। विततैः मायनजालतानकैः विशेषलम्भनी न बभूव।

भावानुवादः—ईश्वर जगत् को रचकर व्यर्थ के प्रपच मे पड़ गया। फैले हुए मायाजालों से उसे लाभ कुछ भी नहीं हुआ। केवल उसने अपने पर बवाल ही मोल लिया।

**इति वागपि नैव सगता, अहमेवं बलशालिसर्जकः।**
**मम सत्वमिदं विलोक्यताम्, भवमाया निखिला दुरत्यया ॥२९॥**

अन्वयः—अहम् एवम् बलशालिसर्जकः। इदम् मम सत्त्व विलोक्यताम्। मम भवमाया निखिला दुरत्यया इति वाग् अपि सगता न एव।

भावानुवादः—और इस प्रकार मैं ही एकमात्र बलवान्, जगत् निर्माता हूं, यह मेरा बल देखो। मेरी संसार की सम्पूर्ण माया जानी नही जा सकती है। यह कथन भी संगत नही ठहरता है।

**अभिमानवचः स्वनिर्मितौ, सृतिजालं विततं भवान्तरे।।**
**रचनं सनिदानमत्र किम्? प्रतिभाता तदकर्तृका सृतिः ॥३०॥**

अन्वयः—भवान्तरे सृतिजालम् वितत (वर्तते)। इतिस्वनिर्मितौ अभिमानवचः (नयुक्तम्) अत्र सनिदानम् रचनम् किम्? सृतिः तदकर्तृका प्रतिभाता!

भावानुवादः—लोक लोकान्तरों में सृष्टि फैली हुई है। ऐसा अपने निर्माण में इस प्रकार का अभिमान का वचन संगत नही है। प्रश्न यह होता है कि यह सृष्टि किस कारण से की गई? इसका क्या उद्देश्य है? जान पड़ता है कि उद्देश्य विहीन होने से यह ईश्वर के द्वारा निर्मित नही है।

**निजनिर्मितवस्तुसम्पदाम्, हरणं तस्य न साधु मन्यताम्।**
**विषवृक्षमपीह यत्नतः परिसंवर्ध्य न छेत्तुमर्हति ॥३१॥**

अन्वयः—तस्य (ईश्वरस्य) निजनिर्मितवस्तुसम्पदाम् हरणं साधु न मन्यताम्। इह यत्नतः (नरः) विषवृक्षम् अपि संवर्ध्य छेत्तुन्न अर्हति।

भावानुवादः—उस ईश्वर का अपनी बनाई वस्तुओं का नाश करना उचित नहीं माना जा सकता है। क्योंकि यहाँ यत्नपूर्वक विष का वृक्ष भी बढ़ाकर काटा नहीं जाता है। अपनी निर्मितवस्तु का स्वयं नाश करना अनुचित ठहरता है।

**चतुरोपि नरः स्वनिर्मितम्, यदि खण्डीकुरुते स्वयं मुधा।**
**जगतीतलमानवैः सदा, सच मूर्खः पुनरुच्यते बुधैः ॥३२॥**

अन्वयः—यदि चतुरः अपि नरः स्वनिर्मितं स्वयं मुधा खण्डीकुरुते। तदाबुधैः जगतीतलमानवैः स च पुनः मूर्खः उच्यते।

भावानुवादः—यदि चतुर मनुष्य भी अपने बनाये हुए को अपने आप निष्प्रयोजन नष्ट करता है, तो संसार के बुद्धिमान् लोग उसे मूर्ख कहते हैं। अर्थात् अपने बनाये हुए को स्वयं नष्ट नही करना, बुद्धिमत्ता है।

**निजपाणिसुधाभिषिचितो, यदिलेखो लिखितो न रोचते।**
**मननं च विधेयमत्र का, त्रुटिरासींदथवा निरर्थकः ॥३३॥**

अन्वयः—यदि निजपाणिसुधाभिषिचितो लिखितो लेखः न रोचते। तत् अत्र मननं च विधेयम्। का त्रुटिः आसीत्। अथवा (स) निरर्थक (आसीत्)।

भावानुवादः—यदि अपने हाथों के अमृत से सिंचित लिखा हुआ लेख अच्छा नही लगता है तो उस विषय में ऐसा सोचा जाता है, कि इस लेख में कुछ त्रुटि रह गई थी, या निरर्थक था। तब ईश्वररचित सृष्टि के नाश करने पर क्या ऐसा नहीं सोचा जा सकता है ?

***इयमेव दशा च निर्मितौ, भवजीवस्य विधाय मारणम्।**
**प्रकटीकुरुते जगत्पतेः, ननु चाज्ञत्वममोघमानिनः ॥३४॥**

अन्वयः—निर्मितौ च इयम् एव दशा (अस्ति)। अमोघमानिनः जगत्पतेः विधाय भवजीवस्य मारणं ननु तस्य अज्ञत्वम् एव प्रकटीकुरुते।

भावानुवादः—जगत् का निर्माण करके उसके नाश करने में भी यही दशा है।

अपने को पूर्ण सफल मानने वाले ईश्वर की संसार को निर्मित कर नष्ट करना नियत रूप से अज्ञता ही प्रकट करता है।

**नहि नाशयते जगत्पतिः, कमपीशो भवजीवधारकम्।**
**कुरुते च तथा प्ररूपणम्, शिरसीत्थ ननु भारदापनम् ॥३५॥**

अन्वयः—जगत्पतिः ईशः भवजीवधारकम् (प्राणिनम्) कम् अपि नहि नाशयते। तथा च प्ररूपण कुरुते। इत्थ ननु तस्य शिरसि भारदापनम् एव (मन्तव्यम्)।

भावानुवादः—ईश्वर किसी भी प्राणी का विनाश नही करता है। केवल निर्माण ही करता है। यदि इस प्रकार का प्ररूपण किया जाय; तो उस ईश्वर के शिर पर केवल जगत्कर्तृत्व का भार ही डालना होगा।

**श्रयते ननु दोषसन्ततिम् परमेशो विकृतेर्विधायकः।**
**इदमस्ति कथं निरूपणम् भजते तंभजको विनिन्दति ॥३६॥**

अन्वयः—(तथा) परमेशः कपटी पापकः च (इति)। ननु दोषसन्ततिम् श्रयते। इदम् निरूपणं कथम् अस्ति ? भजकः तम् भजते (तथा) विनिन्दति (च)।

भावानुवादः—यदि उसे जगत का कर्ता मानते हो तो, उसमें अनेक दोष आ जाते हैं। वह विकृति का विधायक सिद्ध होता है। तब आप ऐसी प्ररूपणा क्यो करते है। यह कहा का न्याय है कि भजन करने वाला भक्त उसका भजन भी करता है और उसी की निन्दा भी करता है।

**विदधाति कृति भुनक्तिना, स्वयमेवं नियतं निबोधत।**
**कुरुते तनयश्च पातकम्, जनको वा च फलंतु निश्चितम् ॥३७॥**

अन्वयः—ना स्वयमेव कृतिम् विदधाति। (तत्फलम्) भुनक्ति च इति नियत निबोधत। तनयः पातकम् कुरुते फलं लभते। जनकोवा च। फलंतु द्वयोः निश्चितम् अस्ति।

भावानुवादः—मनुष्य अपने आप कर्म करता है और उसका फल भी स्वयम् भोगता है। इसमें ईश्वर का क्या काम है। जैसे कोई पुत्र पाप या धर्म

करता है तो उसका फल वही भोगता है। यदि पिता करता है तो उसे भी अलग ही फल प्राप्त होता है।

**परिपक्ष्यमहो विहाय च, हृदये धारय मे निवेदनम्।**
**न करोति कदापि सर्जनम् परमात्मेति मतं च गृह्यताम् ॥३८॥**

अन्वयः—(त्वम्) अहोपरिपक्ष्यं विहाय च मे निवेदनं हृदये धारय। परमात्मा कदापि सर्जनं न करोति इति मतम् गृह्यताम्।

भावानुवादः—अतः इस विरोध भाव को छोड़ कर मेरे निवेदन को हृदय में धारण करे। परमात्मा कभी सृष्टि नहीं करता है। इस मत को स्वीकार करे। क्योंकि उसका जगत्कर्तृत्व किसी भी प्रकार से सिद्ध नहीं होता है।

**भवजीवसमग्रतत्त्वकम् अवबुध्यस्व न चादिनाशने।**
**निजकर्मकलापकारणात् सुखदुःखादि लभेत जोवकः ॥३९॥**

अन्वयः—त्वम् भवजीवसमग्रतत्त्वकम् अवबुध्यस्व। (तस्य) आदिनाशने च न (स्तः)। जीवकः निजकर्मकलापकारणात् सुखदुःखादि लभेत।

भावानुवादः—संसारी जीवों के सम्पूर्ण तत्त्व को अच्छी तरह से जानें तो ज्ञात होगा कि जीव का आदि अन्त नहीं है। वह अनादि अनन्त है। वह जीव स्वयं अपने कर्म कलाप के कारण से सुख दुःख पाता है।

**विदधाति न दण्डबाधने, हरते नैव करोति नैवच।**
**अनुरागविरागवर्जितः, रमते मोक्षपदे सदेश्वरः ॥४०॥**

अन्वयः—ईश्वरः दण्डबाधने न विदधाति। न एव च करोति। न एव च हरते। अनुरागविरागवर्जितः मोक्षपदे सदा एव रमते।

भावानुवादः—ईश्वर किसी को दण्ड तथा बाधाएं नहीं देता है। और न सृष्टि करता है। वह रागद्वेष से रहित होकर सदा मोक्ष पद में ही रमण करता है।

परिकृत्य जनोहि पापकम्, लभते दुःखफलं सुपुण्यतः ।
सुखमेति, विलाप्य यौगलम् परमानन्दपदं सुखावहम् ॥४१॥

अन्वयः—जनोहि पापकं परिकृत्य दुःखफलं लभते । सुपुण्यतः सुखम् एति । यौगलं विलाप्य (च) सुखावहं परमानन्दपदं (प्राप्नोति) ।

भावानुवादः—मनुष्य पाप करके दुःख का फल पाता है । अच्छे पुण्य करने से सुख पाता है । इन दोनों सुखदुःख के भावों को या पुण्यपाप को त्याग कर सदा-सदा के लिए परमानन्दपद को प्राप्त करता है ।

जगतोऽस्ति च कोऽपि कारकः, अनुमानेन विभुर्विभाव्यते ।
वसुधादि बुधेन निर्मितम् ननु हेतोर्विदिताच्च कार्यतः ॥४२॥

अन्वयः—जगतः च कः अपि कारकः अस्ति । अनुमानेन विभुः विभाव्यते । विदितात् च कार्यतः हेतोः बुधेन वसुधादि निर्मितम् ननु (इति सिध्यति) ।

भावानुवादः—सृष्टिकर्तृत्ववादी का कथन है कि संसार का कोई कर्ता है । अनुमान से ईश्वर की सिद्धि होती है । विदितकार्यरूपी कारण (हेतु) से बुद्धिमान् कर्ता ने वसुधादि को बनाया यह सिद्ध होता है ।

कुरुते रचनां निरन्तरम् अनुमानेन च साध्यसाधनम् ।
भगवानतिशायिसर्जकः, सृजतीतीश्वर एव सर्वतः ॥४४॥

अन्वयः—अतिशायिसर्जकः भगवान् निरन्तरं रचनां कुरुते । अनुमानेन च साध्य साधनम् (भवति) । इति ईश्वर एव सर्वतः सृजति इति (तात्पर्यम्) ।

भावानुवादः—"सबसे उत्तम रचयिता भगवान् ही लगातार सृष्टि की रचना करता है । अनुमान से उस साध्य की सिद्धि होती है । अतः यह कहा जा सकता है, कि ईश्वर ही सम्पूर्ण सृष्टि का निर्माता है ।

(जैन)—

अनुमानमिव न संगतम्, न च कर्ताऽस्ति नुकोपितांप्रतिः ।
सृजतीति न देहदुर्लभः, सशरीरोहि सदैव सर्जकः ॥४४॥

अन्वयः—संसृतेः नु कः अपि कर्ता न च अस्ति । इति पूर्वोक्तं इदं अनुमानं न संगतम् (अस्ति) देहदुर्लभः न सृजति इति । सर्जकः सदा एव सशरीरो हि भवति ।

भावानुवादः—जैनदर्शन कहता है कि संसार को कोई बनाने वाला नही है । इसलिए आपका प्रथम प्रदर्शित अनुमान संगत नही है । निराकार होकर कोई सृष्टि नही करता है । कोई भी कार्य करने वाला सदा सशरीरी ही होता है ।

**अनुमानकृतिर्न जायते, अविनाभावविधिर्नसिध्यति ।**
**व्यभिचारिसरूपसाधनात्, नहि जातास्ति च साध्यसाधना ।।४५।।**

अन्वयः—तत्र अनुमानकृतिः न जायते । (अत्र) अविनाभावविधिः न सिध्यति । व्यभिचारसरूपसाधनात् नहि साध्यसाधना च जाता अस्ति ।

भावानुवादः—(जैन) 'पृथ्वी आदि किसी बुद्धिमान् कर्ता के बनाये हुए है । कार्य होने से घट की तरह" । यह अनुमान ठीक नहीं है, क्योकि इस अनुमान में व्याप्ति का ग्रहण नही होता है । जहां–जहां कार्यत्व है वहाँ सशरीर कर्तृत्व है । यह व्याप्ति नहीं बनती । व्यभिचारी साधन से साध्य की सिद्धि नहीं होती है ।

**अयमस्ति गिरिश्च वह्निमान्, अभिधेयत्वविशेषकारणा—**
**अनुमानमिदं विहेतुकम्, प्रथमोक्तं च तथैव मन्यताम् ।।४६।।**

अन्वयः—(यथा) अभिधेयत्वविशेषकारणात् अयम् गिरिः च वह्निमान् अस्ति । इदम् अनुमानं विहेतुकम् अनैकान्तिकहेत्वाभास अस्ति । (तथैव) तव प्रथमोक्तं मन्यताम् ।

अन्वय.—जैसे यह पर्वत अग्निवाला है अभिधेय या (प्रमेय) होने से । यहां अभिधेयत्व हेतुअनैकान्तिक हेत्वाभास है । उसी तरह से पृथ्वी आदि अशरीरी बुद्धिमान् कर्ता के बनाए हुए हैं, कार्य होने से, घट की तरह । इसमें भी कार्यत्वहेतु साधारण अनैकान्तिक हेत्वाभास से दोषपूर्ण है ।

**अशरीरविशेषसर्जकः यदि मन्येत तदा न जायते ।**
**अनुमाविधिपक्षसाधने, घटदृष्टान्तविधिः सुसंगतः ।।४७।।**

अन्वयः—(जैनः) यदि अशरीरसर्जकः मन्येत । तदा अनुमाविधिपक्षसाधने घट-दृष्टान्तविधिः सुसंगतः न जायते ।

भावानुवादः—यदि स्रष्टा ईश्वर को अशरीरी मानोगे तो, अनुमान के पक्ष साधन मे घट का दृष्टान्त संगत नहीं हो सकता है । दृष्टान्त घट तथा दार्ष्टान्तिक बुद्धिमत् कर्तृत्व में वैषम्य है, क्योंकि घटादि शरीरी कुम्भकार के द्वारा बनाये हुए ही देखे जाते हैं । फिर अशरीर ईश्वर किस प्रकार जगत् को बना सकता है ।

**अवलोकनमत्र पद्यते, अशरीरं गगनं न कारकम् ।**
**तव रूपविहीनसर्जकः, प्रभुरेवं प्रथते न कारकः ॥४८॥**

अन्वयः—(यथा) अशरीरं गगनं न कारकं इति अवलोकनम् अत्र पद्यते । (तथा) एव तव रूपविहीनसर्जकः प्रभुः कारकः न प्रथते ।

भावानुवादः—जैसे अशरीरी आकाश कोई कार्य नहीं कर सकता । ऐसा देखने मे आता है उसी तरह तुम्हारा अशरीरी ईश्वर भी जगत् निर्माणादि कार्य करने में असमर्थ ही है । इस कारण एक सशरीर और अशरीर दोनों पक्षों में कार्यत्वहेतु की सकर्तृत्व साध्य के साथ व्याप्ति नहीं होती है ।

**यदि नैव सुसिद्ध ईश्वरो, गुणगानाय कथं विशेषणम् ।**
**तदखण्डशिखण्डितुष्टये, ललनारूपविमुग्धवर्णनम् ॥४९॥**

अन्वयः—(जैनः) यदि ईश्वरः सुसिद्ध एव न । (तदा) गुणगानाय विशेषणं कथम् । (दीयताम्) तत् अखण्डशिखण्डितुष्टये ललनारूपविमुग्धवर्णनम् एव मन्तव्यम् ।

भावानुवादः—(जैन) यदि आपके मत से ईश्वर की सिद्धि नही हो सकी, तो उसके गुणगान के लिए विशेषण देना व्यर्थ ही है । तथा ईश्वर के जगत् कर्तृत्वसाधन में जो एकत्व आदि विशेषण प्रयुक्त हुए हैं । वे सब पूर्ण नपुंसक के प्रति स्त्रियों के रूप लावण्यादि का कथन करने के समान है ।

**"असहायविशेषईश्वरः, जगदेको विदधाति सर्वथा ।"**
**इति वाभिमतं न संगतम्, बहवः संहतिमाप्य कुर्वते ॥५०॥**

अन्वयः—(नैयायिकः) "असहायविशेषः ईश्वरः जगत् सर्वथा विदधाति" (जैनः) इति वादिमतं न संगतम् । बहवः सहतिम् आप्य कुर्वते ।

भावानुवादः—ईश्वर कर्तृत्ववादी (नैयायिक) किसी प्रकार के अन्य साधनों से रहित एक ईश्वर ही सम्पूर्ण जगत् की रचना करता है । जिससे निर्माण में एकरूपता बनी रहती है । (जैनदर्शन) ऐसा पूर्व पक्ष का कथन संगत नही है । अनेक जीव मिलकर के कार्य करते है । उनमें एकरूपता खण्डित नहीं होती । जैसे अनेक कीड़ियाँ, अनेक शिल्पी तथा मधुमक्खियां क्रमशः बल्मीक, महल, एवं छत्तों का निर्माण करते हैं ।

**शतशो ननु कीटसंहतिः, कुरुते तन्मृदनल्पसर्जनम् ।**
**अवलोकनमेति सत्यत., मधुकीटाश्च तथैव कुर्वते ॥५१॥**

अन्वयः—शतशः कीटसहतिः तत् मृदनल्पसर्जनं ननु कुरुते । तथैव मधुकीटाश्च कुर्वते । इति सत्यतः अवलोकनम् एति ।

भावानुवादः—सैकड़ों चीटियाँ मिलकर ही वल्मीक का निर्माण करती हैं । ऐसे ही मधुमक्खियां भी शहद के छाते की रचना करती है । और उनमें कोई मत-भेद दिखाई नहीं देता है । ऐसा सही देखने में आता है । इसी प्रकार कई ईश्वर भी समुदाय रूप से जगत् का निर्माण एकरूप से क्यों नहीं करते है ?

**निखिले च पदेसतिष्ठति, सकल वेत्ति समं च बोधनैः ।**
**अत एव करोति सर्जनम्, कथनं चैव सयुक्ति संगतम् ॥५२॥**

अन्वयः— जैनः (वैदिक) स च निखिले पदे तिष्ठति । बोधनैः समं च सकलं वेत्ति । अत एव सर्जनम् करोति । इति कथनं सयुक्ति संगतं च एव (अस्ति) ।

भावानुवादः—(वैदिकदर्शन) ईश्वर सर्वत्र रहता है, सम्पूर्ण ज्ञान के साथ सबको जानता है, इसलिए वह सृष्टि सही रूप से करता है । यदि उसे नियत प्रदेश मे ही व्याप्त माना जाय तो अनियत स्थानों के तीनों लोकों के समस्त पदार्थों की यथारीति उत्पत्ति नही होगी । इसीलिए वह सर्वज्ञ है तथा सर्वगत है यह कथन युक्ति संगत है ।

यदि तादृश एवमीश्वरः पदमेवं न पदार्थसंततेः ।
सममेव च बोधकारणात्, विपरीतं तव वेदशासनात् ।।५३।।

अन्वयः—(जैन) यदि एवम् ईश्वरः (व्यापकः) एव । (तदा) संसारे पदार्थ संततेः एवम् पदम् न । बोधकारणात् च (व्यापकः) इति मतं समम् एव । यदि तव वेदशासनात् (शरीरापेक्षया व्यापकः) तदाइति मतम् विपरीतम् (मान्यम्) ।

भावानुवादः—(जैनदर्शन) यदि सर्वव्यापी ईश्वर ही संसार की सृष्टि करता है, तो उसकी व्याप्ति के कारण अन्य पदार्थों के लिए संसार में स्थान नहीं रह जायेगा । यदि आप ज्ञान की अपेक्षा उसे सर्वग मानोगे तो हम भी वैसा ही मानते हैं, किन्तु वैसा मानने पर वेद की मान्यता से विपरीत पड़ता है, क्योंकि वह शरीर की अपेक्षा से ही उसे व्यापक मानता है ।

अतिदूरभवश्च वर्तते, अनुमानेन न सिद्धिमेष्यति ।
नहि वेदनिदानसाधनम् विपरीताच्च विरोधकारणात् ।।५४।।

अन्वयः—(तस्य सर्वज्ञता) अनुमानेन नसिद्धिम् एष्यति । (यतः) स अति दूरभवः वर्तते । अत्र विषये विपरीतात् विरोधकारणात् च वेदनिदानसाधनम् नहि ।

भावानुवादः—ईश्वर की सर्वगतता की सिद्धि अनुमान से नहीं हो सकती । वह ईश्वर अत्यन्त दूर है । उससे सम्बद्ध लिंग का सर्वज्ञत्व रूप लिंगी के साथ सम्बन्ध का ग्रहण नही हो सकता है । तथा परस्पर विपरीत तथा विरोधात्मक होने से वेद भी साधन नही हो सकता है ।

निगमागममूलसाधितो, भवतीशः कथनं न साधकम् ।
निजनिर्मितवेदबाधनात्, निजसिद्धिः कुत एव साध्यताम् ।।५५।।

अन्वयः—ईशः निगमागममूलसाधितः भवति । इति कथनं न साधकम् । निजनिर्मितवेदवाधनात्निजसिद्धिः कुत एव साध्यताम् ।

भावानुवादः—ईश्वर की सिद्धि वेदादिशास्त्रों के द्वारा भी नहीं की जा सकती है । ईश्वर द्वारा प्रणीत वेदो से भला ईश्वर की सिद्धि कैसे की जा सकती

है ? क्योंकि महात्मा स्वयं अपने गुणों की प्रशंसा स्वयं नही करते हैं ।

(जैनः)—

**अपरं नहि सिद्धिमेष्यति, कुरुते वेदचयं निराकृतिः ।**
**कथनं तव वादवादिनः, ननु वर्णाश्च भवन्ति देहिनः ।।५६।।**

अन्वयः—अपरम् तव वादवादिनः (पूर्वपक्षस्य) निराकृतिः वेदचयम् कुरुते इति कथनम् सिद्धिम् नहि एष्यति । ननुवर्णाः च देहिनः एव भवन्ति । (ननु निराकृतेः) ।

भावानुवादः—दूसरी बात यह है कि ईश्वर कर्तृत्ववादी कहते हैं कि "निराकार ईश्वर वेदों का निर्माण करता है । उसी से सिद्धि होती है । यह कथन भी सिद्ध नहीं होता है · क्योंकि वेद वर्णात्मक है और वर्ण देहधारी से ही उत्पन्न होते है । क्योंकि उच्चारणस्थान शरीरधारी में ही सम्भव हैं ।

**परनिर्मितवेदशासनात्, मतसिद्धिर्न भवेन्निरामया ।**
**लघुबोधनकस्य निर्मितौ, परिनिष्ठानमहो न जायते ।।५७।।**

अन्वयः—परनिर्मितवेदशासनात् (तव) निरामया मतसिद्धिः न भवेत् । लघुबोधनकस्य निर्मितौ अहो परिनिष्ठानं न जायते ।

भावानुवादः—यदि नैयायिक कहें कि ईश्वर को सिद्ध करने वाला आगम दूसरे का बनाया हुआ है तो यदि वह पुरुष सर्वज्ञ है तो ईश्वर के द्वैत का प्रसंग आता है । यदि असर्वज्ञ है तो दोषयुक्त होने से उसके वचनों पर विश्वास नही हो सकता है । इससे आपके मत की निर्दोष सिद्धि नहीं हो सकती है ।

**स्ववशोऽपि विभुर्न सेत्स्यति, दयनैकागमदिष्टगौरवः ।**
**सुखदुःखमयस्य सर्वथा, जगतः केवलमेव सर्जनात् ।।५८।।**

अन्वयः—दयनैकागमदिष्टगौरवः सुखदुःखमयस्य जगतः सर्वथा केवलम् एव सर्जनात् सविभुः स्ववशः अपि न सेत्स्यति ।

भावानुवादः - दयालु के रूप में आगम में वर्णित गौरव वाला ईश्वर यदि सुख सम्पदाओं से परिपूर्ण जगत् को न बनाकर सुखदुःख से परिपूर्ण बनाता है तब वह दयालु कहां रह गया ? यदि प्राणियों के कर्मानुसार बनाता है तो उसके स्वाधीनत्व का ही लोप हो जायेगा ।

**जगतोऽस्ति विचित्रताऽखिला, कृतकर्मानुगता समर्थिता ।**
**मतमेव यदा च धारितम् घटकुट्यां च विभातमागतम् ॥५९॥**

अन्वयः—(जैनः) जगतः अखिला विचित्रता कृतकर्मानुगता समर्थिता अस्ति । यदि इदं मम मतम् एव च धारितम् । (तदा) भवतः घटकुट्याँ च विभातम् आगतम् !

भावानुवादः—संसार की विचित्रता ईश्वर कृत न मानकर यदि कर्म जन्य स्वीकार करते है; तो जैन मत को ही मानते हैं । तब तो "घट् कुट्यां प्रभातम्" न्याय प्रसग उपस्थित हो गया । जैसे कोई चुंगी के भय से रात भर भटकने के बाद मार्ग न मिलने पर प्रातःकाल चुंगी चौकी पर ही आ जाता है, वैसे ईश्वरकर्तृत्व न सिद्ध करके आपने भी हमारा ही कर्मप्रवाद का मत स्वीकार कर लिया ।

**यदि नित्यगुणोस्ति सर्जकः, सततं कार्यमसौ करोति च ।**
**नहि कार्यसमाप्तिसम्भवः अकृतोऽसौतु विधातुमक्षमः ॥६०॥**

अन्वयः—(जैनः) यदि सर्जकः (ईश्वरः) नित्यगुणः (अस्ति) । तदा असौ च सतत कार्य करोति । (तर्हि) तस्य कार्यसमाप्तिसम्भवः नहि । यदि असौ अकृतः तु वदाकिमपि कार्यम् विधातुम् अक्षमः अस्ति ।

भावानुवादः—(जैनदर्शन) यदि आपका ईश्वर नित्य है । तब वह यदि लगातार कार्य करता है, तो उसके कार्य की समाप्ति कभी नहीं होगी । यदि आप यह कहोगे कि वह कार्य करता ही नहीं है, तो वह कुछ भी कार्य करने में असमर्थ होने से जगत की सृष्टि कैसे कर सकता है । यह दोष भी ईश्वरकर्तृत्व वादी के मत मे आता है ।

जगदीश्वरनिर्मितं न चेद् कथमत्रेदृशसद्व्यवस्थितिः ।
निजकर्मकृते समादरात्, ननु जीवोऽस्ति विधातुमीश्वरः ॥६१॥

अन्वयः—ईश्वरनिर्मितं जगत् न चेत् (तदा) अत्रइदृशसद्व्यवस्थितिः कथम् । निज-कर्मकृतेः समादरात् ननु जीवः विधातुम् ईश्वरः (अस्ति) ।

भावानुवादः—(ईश्वरवादी) यदि ईश्वर से निर्मित जगत् को नहीं माना जायेगा तो ऐसी पूर्ण रूप से व्यवस्था नहीं हो सकती है । (जैन) तृणादि के कर्ता ईश्वर के न होने पर भी वहां पूर्ण व्यवस्था दिखाई देती है । इसलिए जीव को कर्त्ता स्वीकार करना चाहिये । वह कर्मों के उपादान से जगत् का निर्माण निमित्त रूप से करता है ।

## अवसाने आर्यावृत्तम्:-

जगदुद्भवलयकारी, स्वयं विहारी च सच्चिदानन्दः ।
कर्त्तुं मकर्त्तुं शक्तो नित्यः कोऽपीश्वरो नास्ति ॥६२॥

अन्वयः—(जैन) जगदुद्भवलयकारी स्वयं विहारी सच्चिदानन्दः नित्यः कर्त्तुम् अकर्त्तुम् च शक्तः कः अपि ईश्वरः च न अस्ति ।

भावानुवादः—संसार के निर्माता, संहर्ता, विहरण शील, सत्, चित्, आनन्द सब कुछ करने वाला अन्यथा भी निर्माता नित्य सदा स्थायी कोई ईश्वर नहीं है । जैसा नैयायिक ईश्वर को सिद्ध करते हैं । वैसा कोई ईश्वर सिद्ध नहीं होता है । इसलिए जगत्कर्ता ईश्वर की सिद्धि नहीं होती है । इसका विस्तारपूर्वक वर्णन ऊपर किया जा चुका है ।

श्रीमज्जवाहरयशोविजयाभिधाने,
नानेशसच्चरणयोः शरणावधावे ।
श्री चन्द्रमौलिकविनिर्मितसत्प्रबन्धे.
पूर्णोविभोर्निरसनात्मकसर्गएषः ॥६३॥

अष्टादशः सर्गः समाप्तः ।

## अथैकोनविंशः सर्गः—

### "अनेकान्तवादात्मकः"

उपजातिवृत्तम्:—

**वीरेण स्वप्ना विविधाश्च दृष्टाः, फलैर्युताः केवलबोधपूर्वम् ।**
**पुंस्कोकिलं चित्रविचित्रपक्षम्, विलोक्य तावत्प्रतिबुद्ध आसीत् ॥१॥**

अन्वयः—वीरेण केवलबोधपूर्वम् फलैर्युताः विविधाः च स्वप्नाः दृष्टाः । (तेषु) चित्रविचित्रपक्षं पुंस्कोकिलं विलोक्य तावत् प्रतिबुद्धः आसीत् ।

भावानुवादः—भगवान् महावीर ने केवलज्ञान होने से पहले अनेक (१०) विविध प्रकार के स्वप्न देखे । उनमें से चित्रविचित्रपंख वाले पुंस्कोकिल के स्वप्न को देखकर प्रतिबुद्ध हुए ।

**स्याद्वादरूपस्य विकासजातम्, प्रावर्ततास्मिन्भुवने ततश्च ।**
**प्रतीकभूतं च ददर्श पूर्वं समन्वयं, युक्तिपरम्परायाः ॥२॥**

अन्वयः—पूर्वं युक्तिपरम्परायाः समन्वयं प्रतीकभूतं च स्वप्नं ददर्श । ततः च स्याद्वादरूपस्य विकासजातम् अस्मिन् भुवने प्रावर्तत ।

भावानुवादः—भगवान् ने सर्वप्रथम युक्ति परम्परा के समन्वय रूप स्याद्वाद का प्रतीक पुंस्कोकिल स्वप्न में देखा । उसके बाद इस जगत् में स्याद्वाद सिद्धान्त का प्रतिपादन किया ।

**प्राणस्वरूपः समयो विशिष्टः संवर्ततेऽसौ जिनदर्शनस्य ।**
**नैकान्तवादोऽपि च कथ्यतेऽसौ, जिनागमाभ्यासविबुद्धबोधैः ॥३॥**

अन्वयः—असौ (स्याद्वादः) जिनदर्शनस्य प्राणस्वरूपः विशिष्टः समयः अस्ति । असौ जिनागमाभ्यासविबुद्धबोधैः नैकान्तवादः अपि च कथ्यते ।

